University of Mysore

Oriental Research Institute Publications

SANSKRIT SERIES No. 93

GENERAL EDITOR

SRI H. R. RANGASWAMY IYENGAR, M.A.,

*Superintendent, Oriental Research Institute, Mysore*

श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम्

# आपस्तम्बीयं श्रौतसूत्रम्

(द्वितीयसंपुटम् ६–८ प्रश्नाः)

# THE ŚRAUTA SŪTRA OF ĀPASTAMBA

WITH

## THE BHĀṢYA OF DHŪRTASWĀMI

AND

## THE VṚTTI OF RĀMĀGNICIT

Vol. II (Praśnas 6–8)

EDITED BY

VIDWAN T. T. SRINIVASAGOPALACHARYA,

*First Resident Pandit, Oriental Research Institute, Mysore*

---

MYSORE:

PRINTED BY THE SENIOR ASST. DIRECTOR, GOVT. BRANCH PRESS

1954

Price: Rs. ~~8-0-0~~ 8/55

University of Mysore

Oriental Research Institute Publications
SANSKRIT SERIES No. 93

GENERAL EDITOR
SRI H. R. RANGASWAMY IYENGAR, M.A.,
*Superintendent, Oriental Research Institute, Mysore*

श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम्

# आपस्तम्बीयं श्रौतसूत्रम्

(द्वितीयसंपुटम् ६–८ प्रश्नाः)

# THE ŚRAUTA SŪTRA OF ĀPASTAMBA

WITH

## THE BHAṢYA OF DHŪRTASWĀMI

AND

## THE VṚTTI OF RĀMĀGNICIT

Vol. II (Praśnas 6–8)

EDITED BY
VIDWAN T. T. SRINIVASAGOPALACHARYA,
*First Resident Pandit, Oriental Research Institute, Mysore*

MYSORE:
PRINTED BY THE SENIOR ASST. DIRECTOR, GOVT. BRANCH PRESS
1953

॥ श्रीः ॥

नमः परब्रह्मणे सर्वयज्ञसमाराध्याय.

# आपस्तम्बश्रौतसूत्रद्वितीयसंपुटप्रस्तावना

श्रीमान् यो मधुकैटभाख्यदितिजावाम्नायपाटच्चरौ
हत्वाऽऽहृत्य च तान् समस्तनिगमान् स्रष्ट्रे समन्वग्रहीत् ।
व्याख्याचिह्नवराब्जचक्रविलसत्कोशोल्लसत्पाणिकं
पद्मस्थं हयकन्धरं कमलयाऽऽश्लिष्टं तमीडीमहि ॥

ऋग्यजुस्सामरूपाय ब्रह्मनिःश्वसितात्मने ।
अनाद्यन्ताय निगमपुरुषाय नमोनमः ॥

यज्ञदेहयजुश्शाखाकल्पसूत्रप्रवर्तकः ।
सकलाम्नायविज्ञीयादापस्तम्बो महामुनिः ॥

कल्पसूत्रनिगूढार्थप्रकाशनविचक्षणाः ।
भाष्यवृत्त्यादिकर्तारो जयन्तु सुधियां वराः ॥

अयि भोस्सुधीमणयः सुविदितमेवैतत्प्राच्यपरिज्ञानलालसानां विपश्चिदपश्चिमानां विश्वेषामपि तत्रभवताम्, यत्किल सकलपुरुषार्थावबोधनैदंपर्येण प्रवृत्तः ऐहिकामुष्मिकश्रेयस्साधकपरमात्मसमाराधकबहुविधयज्ञेतिकर्तव्यतापरब्रह्मस्वरूपाद्यवबोधकः पूर्वोत्तरकाण्डद्वयात्मकोऽनन्यसामान्यमहिमा गैर्वाणवाण्यश्चितश्चाकृत्रिमो वेदनामा ग्रन्थराशिर्नवनवोन्मिषद्बहुविधभाषाप्रबन्धप्रचुरेऽप्यस्मिन् काले विराजत इति ।

## वेदशब्दार्थः

सोऽयं वेदशब्दः—

"वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दत, तद्वेदस्य वेदत्वम्" (तै.-सं.-१-४-२०)

'वेदेन वेदिं विविदुः पृथिवीम्' (तै. ब्रा. ३-३-९-६९).

इत्यादिभिर्निर्वचनश्रवणात्,

'विद्यते लभ्यतेऽनेनेति करणे घञ्'

इति, 'पुरुषार्थानां वेदयिता वेद उच्यते' (तै. सं. भ. भा. ३-३-४-७) इति च भट्टभास्करमिश्रभाषणात्,

'व्युत्पाद्यते च वेदशब्दो विदन्त्यनन्यप्रमाणवेद्यं धर्मलक्षणमर्थं यस्मादिति वेदः' (म. स्मृ. मे. भा. २-६).
इति मनुस्मृतौ मेधातिथिभाष्यदर्शनात्,

'विदन्त्यनेन धर्मं वेदः' (अमर. टी. क्षीर. १-५-३).
इत्यमरव्याख्यातृक्षीरस्वाम्युक्तेः,

'विदन्ति धर्मादिकमनेनेति वेदः' (अमर. टी. सर्वा. १-५-३).
इत्यमरव्याख्यातृसर्वानन्दोक्तेः

'विदन्त्यनेन धर्मं वेदः'
इत्यभिधानचिन्तामणौ (अभि. चि. १०६ पु). हेमचन्द्रेणाभिधानाच्च ज्ञानार्थकाद्विद्धातोः करणे घञा निष्पन्नो ज्ञानसाधनमाचष्ट इति पर्यवस्यति। तत्र च प्रत्यक्षादिज्ञानसाधनानां लोकत एव सिद्धत्वान्न तत्र वेदाख्यशब्दराश्यपेक्षाऽऽवश्यकीत्यलौकिककर्मब्रह्मज्ञानसाधनमेव वेदशब्देनाभिप्रेतमिति निर्धार्यते। अत एव ह्युक्तमभियुक्तैः—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥

इति। एतदभिप्रायेणैव विष्णुतत्त्वनिर्णये प्रथमपरिच्छेदे श्रीमदानन्दतीर्थमुनिभिरप्युक्तम् "नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति तस्मादाहुर्वेदा इति पिप्पलादश्रुतिः" इति।

अत एव च पूर्वमीमांसासूत्रकृता जैमिनिमहर्षिणा प्राधान्यतोऽलौकिकश्रेयस्साधककर्मप्रतिपादकपूर्वकाण्डव्याख्यानार्थं प्रवृत्तेन 'अथातो धर्मजिज्ञासा' (पू. मी. सू. १-१-१) 'चोदनालक्षणोऽर्थो धर्मः' (पू. मी. सू. १-१-२) इत्यादि सूत्रितम्। तथैवोत्तरमीमांसासूत्रप्रणेत्रा भगवद्बादरायणमहर्षिणाऽप्युत्तरकाण्डरूपोपनिषत्प्रतिपाद्यब्रह्मस्वरूपादिप्रकाशनाय 'अथातो ब्रह्मजिज्ञासा' (उ. मी. सू. १-१-१) 'शास्त्रयोनित्वात्' (उ. मी. सू. १-१-३) इत्यादि सूत्रितम्।

## वेदस्य सामानान्यतो विभागः

सोऽयं वेदः—'पूर्वं भगवता व्यासेन जगदुपकारार्थमेकीभूय

स्थिता वेदा व्यस्ताः शाखाश्च परिच्छिन्नाः' इति तैत्तिरीयसंहितायां भट्टभास्करमिश्रभाषणात्,

'वेदं तावदेकं सन्तमतिमहत्त्वाद्दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः–सुखग्रहणाय व्यासेन समाम्नातवन्तः' (दु-नि १-२०) इति निरुक्तौ दुर्गसिंहोक्तेः,

एको वेदश्चतुर्धा तु तैः कृतो द्वापरादिषु।
(वि. पु. ३-३-२०)

इति विष्णुपुराणे स्मरणाच्चाभिन्नशरीरो दुरधिगमो मन्दप्रज्ञैरिति विचिन्त्य—

त्रेतादौ सत्वसंकोचाद्रजसि प्रविजृम्भिते। (५१ श्लो)
अपान्तर[1]तमा नाम मुनिर्वाक्संभवो हरेः॥ (५३ श्लो)
उद्भूत्तत्र धीरूपमृग्यजुस्सामसंकुलम्। (५८-श्लो)
विष्णुसंकल्पसंभूतमेतद्वाच्यायनेरितम्॥ (५९ श्लो)
(अहिर्बुध्न्यसंहिता ११ अध्या)

अपान्तरतमा नाम सुतो वाक्संभवः प्रभोः। (३९ श्लो)
तेन भिन्नास्तदा वेदा मनोः स्वायंभुवेऽन्तरे॥ (४१ श्लो)
अपान्तरतमाश्चैव वेदाचार्यस्स उच्यते।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन॥ (६६ श्लो)
(म. भा. शा. ३५९ अध्या)

इत्यादिप्रमाणानुरोधेन त्रेतादौ प्राचीनगर्भापरनामधेयेन अपान्तरतमोनाम्ना ततः कलिद्वापरसंधौ च—

[2]प्रायेण मुनयस्सर्वे स्वार्थसाधनतत्पराः।
द्वैपायनस्तु [3]भगवानेको भूतहिते रतः।
(इतिहाससमुच्चये ७ श्लो)

इति प्रशंसितमाहात्म्येन द्वैपायनापराह्वयेन भगवद्बादरायणमहर्षिणा च संघातात्मना स्थितस्यास्य वेदस्य ऋग्यजुस्सामाथर्वभेदेन चतुर्धा विभाग आकलितः। एवं विभजनादेव हि व्यस्यतीति व्यास इति व्युत्पत्त्या वेदविभागकर्तुर्व्यास इत्यन्वर्थं नामधेयमिति सुप्रतीतम्॥

---

[1] तपा–पा. [2] प्रायशो मुनयस्सर्वे केवलात्महिते रताः।–पा.
[3] भगवान् सर्वभूतहिते रतः–पा.

## चतुर्वेद्यां त्रयीशब्दप्रवृत्तिः

'अस्मिंश्च वेदाख्यशब्दराशौ त्रिविधशब्दरीतिदर्शनात्समुदितोऽयं त्रयीशब्देनापि व्यपदिश्यते। त्रिविधा ह्यत्र शब्दरीतिः परिदृश्यते-पादबद्धऋग्रूपा गीत्यात्मकसामरूपा गद्यात्मकयजूरूपा चेति। यद्यपि यजुस्संहितायामपि तत्र तत्र ऋच उपलभ्यन्ते, तथाऽपि मल्लग्रामनीत्या यजुषां भूयस्तया तथा व्यपदेश इति ज्ञायते। ईदृशरीतित्रितयस्य प्रत्येकमृगादावसत्त्वेन ऋक्त्रयी यजुस्त्रयीत्यादिव्यवहाराभावेन क्वचिदुपलम्भेऽपि वा हस्तादौ शरीरव्यवहारवद्भाक्ततया वेदसंघात एवायं त्रयीशब्दो मुख्यः प्रवर्तते। अत एव (शब्दादिवर्गे ३ श्लो) नामलिङ्गानुशासने—

'स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी।'

इत्यत्र त्रय इत्येतस्य प्रदर्शितऋगाद्याख्यशब्दरीतित्रयविशिष्टा इत्यर्थोऽभ्युपेयः। वेदशब्दो हि ऋगादिचतुष्टयसाधारण इत्यविप्रतिपन्नम्। अत एव पूर्वं 'श्रुतिः स्त्री वेद आम्नायस्त्रयी' इति वेदशब्दपर्यायान् संगृह्य 'धर्मस्तु तद्विधिः' इत्युक्तं दृश्यते॥

एतेन ऋग्यजुस्सामाख्यवेदत्रयस्यैव त्रयीपदव्यपदेश्यत्वं नाथर्ववेदघटितस्येति वदन्तस्समाहिताः। त्रयीशब्दस्य अनुपदोक्तशब्दरीतित्रितयविशिष्टाभिधायकतया अथर्ववेदघटितवेदसमुदायेऽपि त्रयीशब्दप्रवृत्तौ बाधकाभावात्। अत एव च भगवता जैमिनिमहर्षिणाऽपि सूत्रितम् 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' (पू. मी. सू. २-१-३५) 'गीतिषु सामाख्या' (पू. मी. सू. २-१-३६) 'शेषे यजुश्शब्दः' (पू. मी. सू. २-१-३७) इति।

अनेन 'आदौ त्रयाणामेव वेदानां प्रामाण्यमासीत्, ब्राह्मणादिषु त्रयी विद्येति व्यवहारात्। ततश्चतुर्थस्य प्रामाण्यं साधितम्, इति नव्यविमर्शस्य नावकाशः। ब्राह्मणादिषु श्रूयमाणस्य त्रयीशब्दस्यानुपदोक्तरीत्या शब्दरीतित्रैविध्याभिप्रायकतयाऽथर्ववेदघटितवेदसमुदायविषयकत्वस्याव्याहतत्वादित्यलं विस्तरेण।

## वेदशब्दपर्यायाः

विना पुस्तकपाठं गुरुभ्य एव श्रोतव्यतयाऽभ्यसनयितयाऽ-

ध्येतव्यतया चायं वेदः श्रुत्याम्नायस्वाध्यायादिशब्दैरपि व्यपदिश्यते।

## वेदनित्यत्वादिकम्

अश्रूयमाणकर्तृकत्वादस्मर्यमाणकर्तृकत्वाद्ब्रह्मनिःश्वसिततया श्रूयमाणत्वात्क्वचित्क्वचिदार्षत्वश्रवणस्य प्रवचनदर्शनादिनोपपत्तेर्जनिश्रवणस्य प्रकाशेनान्यपर्याच्च कृत्स्नस्यास्य वेदस्य नित्यत्वापौरुषेयत्वे एव मीमांसकादयस्सङ्गिरन्ते।

ननु वेदानां वर्णसङ्घातरूपत्वाद्वर्णानां चानित्यत्वस्यानेकदार्शनिकाभिमतत्वात्कथं वेदानां नित्यत्वमिति चेत्परिहृतमेतत् सर्वतन्त्रसंकटप्रशमनविशङ्कटमतिभिः श्रीमद्वेदान्ताचार्यैर्न्यायपरिशुद्धौ प्रथमाध्यायेऽक्षपाददर्शनस्य वेदान्ताविरोधसमर्थनप्रकरणे 'समाननामरूपत्वाच्च' इत्याद्याक्षपादसूत्राशयप्रकाशनपूर्वकं 'अर्थाभिप्रायेण प्रतियुगं प्रकाश्यमानसमानानुपूर्वीकत्वाभिप्रायेण च नित्यत्वोक्तेरविरोधः' इति। श्रूयते च तथैव 'धाता यथापूर्वमकल्पयत्' इत्यादि। अतस्सिद्धमेतत्प्रतिकल्पमेकरूपमेव नित्यं वेदराशिं भगवान् प्रकाशयतीति।

## संहिताब्राह्मणादिना विशेषतो वेदविभागः

इत्थमृगादिना चतुर्धा विभक्तोऽप्ययं वेदः प्रत्येकं संहिताब्राह्मणारण्यकोपनिषद्भेदैश्चतुर्धा विभक्तो दृश्यते। यद्यपि संहितायामपि ब्राह्मणभागस्तथा ब्राह्मणेऽपि मन्त्रभागश्श्रूयते, तथाऽपि संहितायां मन्त्रभागबाहुल्यात्संहितेति ब्राह्मणे ब्राह्मणभागबाहुल्याद्ब्राह्मणमिति च व्यपदेश इति ज्ञायते। आरण्यकोपनिषदां च ब्राह्मण एवान्तर्भावतात्पर्येण 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आ-परि-सू. १-३३) इत्यापस्तम्बमहर्षिणा सूत्रितम्।

## कल्पसूत्रावतरणम्

तमेनं वेदराशिं समवलम्ब्य एतत्पूर्वभागात्मककर्मकाण्डप्रतिपाद्यानां नित्यनैमित्तिककाम्यभूतश्रौतस्मार्तयज्ञानामितिकर्तव्यताप्रपञ्चनाय बहवो मुनयः कल्पसूत्रग्रन्थानुपकल्पयांचक्रुः।

तेषु चान्यतमेन निखिलागमसर्वस्ववेदिनाऽऽपस्तम्बमहामुनिना आपस्तम्बकल्पसूत्राख्यो महान् कल्पसूत्रप्रबन्धो निरमायि।

## आपस्तम्बकल्पसूत्रभागाः, तत्प्रतिपाद्यसङ्ग्रहश्च

तदिदं कल्पसूत्रं श्रौतसूत्रं गृह्यसूत्रं पितृमेधसूत्रं धर्मसूत्रं शुल्बसूत्रमिति षड्भिर्भागैर्विभक्तं दृश्यते। अत्र केचन रुद्रदत्तादयः परिभाषासूत्रभागं श्रौतसूत्रान्ते चतुर्विंशप्रश्नरूपं मन्यन्ते। धूर्तस्वाम्यादयो बहवस्तु तस्य कल्पसूत्रादिमभागतां सङ्गिरन्ते। तथैव परिभाषाप्रश्नस्य प्राथम्यसमर्थनार्थं परिभाषाप्रश्नस्य व्याख्यारूपे कपर्दिभाष्ये वक्ष्यमाणसर्वकर्मसाधारणत्वात्परिभाषायाः प्रथममेव कथनं समीचीनमित्यभिप्रायेण 'तदिदं व्याख्यानं सर्वकर्मशेषत्वादादावेव प्राप्तं सत्' इत्युक्त्वा श्रौतसूत्रान्ते करणे तत्समनन्तराभिधीयमानाचारगृह्यकर्मस्वस्य प्राप्तिर्न स्यादित्याशयेन 'अन्ते कृतं कथं नु नामाचारगृह्यकर्मस्वपि प्राप्तं स्यात्' इति भाषितं दृश्यते।

ततश्चायमत्रापस्तम्बीयकल्पसूत्रार्थक्रमस्संगृह्यते। यथा--तत्रादौ परिभाषाप्रश्ने—सर्वयज्ञकर्मसाधारणपरिभाषा प्रवरो हौत्रं च निरूप्यते।

ततस्त्रयोविंशतिप्रश्नपरिमिते श्रौतसूत्रभागे आदितस्त्रिषु प्रश्नेषु दर्शपूर्णमासौ, चतुर्थे—याजमानं, पञ्चमे—अग्न्याधेयपुनराधेये, षष्ठे—अग्निहोत्राग्न्युपस्थाने, सप्तमे—निरूढपशुबन्धः, अष्टमे—वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाख्यानि पञ्च चातुर्मास्यपर्वाणि, नवमे—चातुर्मास्यप्रायश्चित्तानि, दशमैकादशद्वादशेषु—अग्निष्टोमप्रातस्सवने, त्रयोदशे—माध्यंदिनतृतीयसवने, चतुर्दशे—उक्थ्यषोडश्यतिरात्राप्तोर्यामैकादशिनीचातुर्होत्रपञ्चहोत्रषड्ढोत्र--सप्तहोत्रादयः सोमप्रायश्चित्तं च, पञ्चदशे प्रवर्ग्यः, षोडशसप्तदशयोः—अग्निचयनम्, अष्टादशे—वाजपेयराजसूये, एकोनविंशे—सौत्रामणिकौकिल्यौ सावित्रनाचिकेतचातुर्होत्रवैश्वसृजानि काम्याः पश्विष्टयश्च, विंशे—अश्वमेधपुरुषमेधसर्वमेधाः, एकविंशे—द्वादशाहो गवामयनमुत्सर्गिणामयनं च, द्वाविंशे—एकाहा अहीना-

स्सवाश्च, त्रयोविंशे—सत्राणीत्येतानि श्रौतानि यज्ञकर्माणि निरूप्यन्ते।

ततः प्रश्नद्वयपरिमिते गृह्यसूत्रे स्मार्तपाकयज्ञादिप्रदर्शनपरे गार्ह्याणि कर्माण्यभिधीयन्ते।

तदन्वेकप्रश्नात्मके पितृमेधसूत्रे—पुत्रादिभिः पितृमरणानन्तरकर्तव्याऽन्त्येष्टिरभिधीयते।

तदनन्तरं च प्रश्नद्वयात्मके धर्मसूत्रे सामयाचारिका धर्मा निरूप्यन्ते।

अन्ते चैकप्रश्नात्मके शुल्वसूत्रे—तत्तत्कर्मोपयोगिवेद्यादिनिर्माणक्रमोऽभिधीयते। अग्निचयनप्रश्नात्पूर्वोऽयं शुल्वप्रश्न इति केचिदभिप्रयन्तीति।

## एतत्कल्पसूत्रावान्तरभागानामत्र मुद्रितानां निर्देशः

एतत्कल्पसूत्रादिमप्रश्नगतो यः कर्मसामान्यपरिभाषाभागः स इत एव संस्थातो बहोः कालात्पुरैव आपस्तम्बश्रौतपरिभाषासूत्रनाम्ना कपर्दिहरदत्तभाष्याभ्यां सह संमुद्र्य प्रकाशितः। तथा गृह्यसूत्रात्मकोऽपि भागः श्रीसुदर्शनार्यभाष्येण सह आपस्तम्बगृह्यसूत्रनाम्ना प्रकाशितः। तथैव धर्मसूत्रभागोऽपि हरदत्तप्रणीतयोज्ज्वलाख्यया वृत्त्या सह आपस्तम्बधर्मसूत्रनाम्ना प्रकाशितः।

शुल्वप्रश्नभागोऽपि कपर्दिकरविसुन्दरराजाह्वयैस्त्रिभिः प्रणीतया व्याख्यात्रय्या सार्धं आपस्तम्बशुल्वसूत्रनाम्ना प्राकाशि।

तथा श्रौतसूत्रभागोऽपि प्रथमप्रश्नप्रभृति पञ्चमप्रश्नान्तो धूर्तस्वामिभाष्येण तद्विवृतिरूपया कौशिकरामाग्निचित्प्रणीतया वृत्त्या साकमितः पूर्वमेव आपस्तम्बश्रौतसूत्रनाम्ना प्रकाशिते प्रथमे संपुटे प्राकाश्यमनायि। तदिदानीं द्वितीये संपुटे तदुपरितनं अग्निहोत्रपशुबन्धचातुर्मास्यानामितिकर्तव्यताप्रकाशनपरं षष्ठप्रश्नप्रभृत्यष्टमप्रश्नान्तं भागमपि धूर्तस्वामिभाष्यतद्विवृतिरूपरामाग्निचिद्वृत्तिभ्यां सहैव संमुद्र्य प्रेक्षावद्भ्यस्समुपहरामः।

## भाष्यवृत्तिकृतोर्धूर्तस्वामिरुद्रदत्तयोर्मतिभेदसूचनम्

एतच्छ्रौतसूत्रविवरणविषये धूर्तस्वामिरुद्रदत्तयोस्तत्र तत्र मतिभेदो दृश्यते। यथा—अग्निहोत्रिणः प्रवासविधिप्रकरणे ११५ तमपुटे 'नवरात्रवास्तौ वा पुनरेत्यैकामुषित्वा प्रयास्यन् जुहुयात्' (आ. श्रौ. ६ प्र २२ खं. ६ सू) इति सूत्रे धूर्तस्वामिना नवरात्र-पदस्य प्रदर्शनार्थत्वतात्पर्येण 'चतूरात्रवास्तावपि पुनरेकामुषित्वा प्रयास्यन् जुहोति' इति भाषितम्। रुद्रदत्तेन तु तदिदं धूर्तस्वामि-भाष्यं 'प्रदर्शनार्थमेतत्, पञ्चावरादिकल्पेष्वपि चतूरात्रादिवास्तौ पुनरेत्येत्यादि योजयन्ति तदयुक्तम्। प्रदर्शनार्थत्वे प्रमाणाभावात्। तथा सत्यष्टरात्रवास्तौ पुनरेत्य द्वे उषित्वेत्यादिप्रदर्शनप्रसङ्गाच्च' इत्यादिना प्रतिक्षिप्तम्।

तथा १४८ तमे पुटे 'तस्यास्सप्तदश सामिधेन्यः' (आ. श्रौ. ६ प्र. ३१ खं ४ सू) इति सूत्रे धूर्तस्वामिना 'साप्तदश्यस्य पुनर्विधा-नान्नाज्यानीरित्युपदेशः' इत्युपदेशपक्षः प्रदर्शितः। तत्र रुद्रदत्तेन तु अज्यान्यादेर्ग्रहणतात्पर्येण 'अज्यान्यादेस्सर्वस्यापि विशेषस्य प्रदर्शनार्थम्' इति तत्प्रतिपक्ष एव प्रदर्शितः।

तथैव १६२ तमे पुटे 'यं कामयेताप्रतिष्ठितस्स्यादित्युक्तम' (आ. श्रौ. ७ प्र १ खं १८ सू) इतिसूत्रे धूर्तस्वामिना 'आरोहं तस्मै वृश्चेत्' इति ब्राह्मणश्रूयमाणारोहपदस्य णमुलन्तताभिप्रायेण 'आरोहं आरुह्य यच्छिद्यते' इत्युक्तमित्यभिप्रेत्य रुद्रदत्तेन 'आरोह-मिति णमुलन्तमिति केचित्; तदयुक्तम्—एष वै वनस्पतीनामप्रति-ष्ठित इति प्रतिष्ठितं वृक्षाधिरूढ इति लिङ्गात् स्वरवशाच्च। अत एव चोक्तं सूत्रकृता समे जातमशाखजं चेति, इति ग्रन्थेन आरोहपदस्य णमुलन्तताभिप्रायको धूर्तस्वामिभाष्यग्रन्थः खण्डितो दृश्यते।

एवं ५४३ तमे पुटे—'एतान्येव द्विः' (आ. श्रौ. ८ प्र २२ खं १३ सू) इति सूत्रे धूर्तस्वामिना पञ्चसांवत्सरिकाणां चातुर्मास्यानां द्विरभ्यासेन दशवार्षिकतासिद्धिरित्युपदेशश्च इत्यभिप्रेत्य 'उपदेश एतान्येव द्विरिति, दशापि लभ्यन्ते' इत्युक्तम्। तत्रैव रुद्रदत्तेन तु 'दशवार्षिकता न सिध्यति, अवचनात्' इति तद्विपरीतमभिहितं दृश्यते।

इत्थं तत्र तत्र बहुत्र धूर्तस्वामिरुद्रदत्तयोराशयभेदो दृश्यत इति तत्सर्वं विमर्शकैर्विमर्शनीयमिति दिङ्मात्रं सूचयित्वा विस्तरभयाद्विरम्यते ।

## एतद्ग्रन्थपरिशीलनसौकर्योपकल्पनम्

अत्रान्ते प्रेक्षावतां सौलभ्यार्थमेतत्संपुटपरिदृश्यमानानामापस्तम्बश्रौतसूत्राणामकारादिवर्णक्रमानुरोधिनी सूचनी न्यवेशि ।

तथाऽऽदौ श्रौतसूत्रतद्भाष्यतद्वृत्तिगता विषयाश्च विषयसूचन्यां नातिविस्तरं यथामति समगृह्यन्त । धूर्तस्वामिभाष्ये तद्वृत्तौ चोपात्तानां ग्रन्थतत्कर्तृनाम्नां चाकारादिक्रमेण सूचनी निरदेशि ।

मुद्रिताया अपि रुद्रदत्तवृत्तेरधुना दौर्लभ्यात्सोऽपि रुद्रदत्तवृत्तिग्रन्थोऽत्र यथासूत्रं तत्रतत्राधस्तात्समयोजि । एतत्सूत्रभाष्यवृत्तितत्प्रणेत्रादिविषये वक्तव्यांशस्सर्वोऽपि प्रथम एव संपुटे निरूपित इति न पुनस्तन्निरूपणमपेक्षितमिति विरम्यते ।

## एतद्ग्रन्थसंशोधनायावलम्बिता एतत्संस्थागता आदर्शकोशाः

I. सूत्रपाठस्य—2299, 2682, 3758, 4451 संख्याङ्कितास्तालकोशाः

A 429, C 1442 संख्याङ्कितौ काकलकोशौ

II. धूर्तस्वामिभाष्यस्य—B 11, B 12, C 1369 संख्याङ्किताः काकलकोशाः

2320, 2690 संख्याङ्कितौ तालकोशौ

III. धूर्तस्वामिभाष्य-रामाग्निचिद्वृत्त्योः—1128, 2280 4346, संख्याङ्कितास्तालकोशाः

A 549 संख्याङ्कितः काकलकोशः

IV. रुद्रदत्तवृत्तेः—एष्याटिक्संस्थया कल्कत्तानगर्यां देवनागरलिप्यां मुद्रितः कोशः

## उपसंहारः

इत्थं निर्दिष्टादर्शकोशावलम्बनेनास्मिन् द्वितीये संपुटे धूर्तस्वामिभाष्यरामाग्निचिद्वृत्तिभ्यां सह षष्ठप्रश्नप्रभृत्यष्टमप्रश्नान्तस्यापस्तम्बश्रौतसूत्रभागस्य मुद्रणं संसाधितम् ।

प्रायश इदानीं यज्ञानुष्ठानस्य तदवबोधकग्रन्थानां च प्रचारवैरल्यात् तत्तद्यज्ञेतिकर्तव्यतापरिज्ञानमान्द्याच्च यथामति परिशोधितेऽप्यस्मिन्नास्माकीनेनानवधानादिना सीसकाक्षरयोजकादीनामनवधानेन च संभावितान् प्रमादान् क्षमन्तां मोदन्तां च गुणैकग्राहिणस्सहृदया याज्ञिका विपश्चित्प्रवराश्चेति सप्रश्रयमभ्यर्थ्य प्रस्तावनामेनामुपसंहरामः ॥

वाजिरूपधरो वेदान् ब्रह्मणे योऽदिशत्पुरा ।
सर्वयज्ञसमाराध्यस्सर्वात्मा स प्रसीदतु ॥

जयतु निगमवाणी ब्रह्मनिश्श्वासरूपा
जयतु तदनुबन्धी कल्पसूत्रप्रपञ्चः ।
जयतु तदवगम्यं कर्म यज्ञाभिधेयं
जयतु च बहुयज्ञैरिज्यमानो मुकुन्दः ॥

महीशूरनगरी
ता. २२-५-१९५३

इति सप्रश्रयं प्रार्थयते
सहृदयविद्वद्वशंवदः
तिरु. तिरु. श्रीनिवासगोपालाचार्यः
महीशूरराजकीयप्राच्यविद्यासंशोधनसंस्था-
प्रधानपण्डितः.

# आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्य-रामाग्निचिद्वृत्त्यो-विषयसूचनी

## षष्ठः प्रश्नः १–१५३ पृष्ठानि

### प्रथमः पटलः—प्रथमा खण्डिका

द्वितीया खण्डिका

## तृतीया खण्डिका



A*

विषयः पृष्ठसंख्या

चतुर्थी खण्डिका



इति प्रथमः पटलः

---

अथ द्वितीयः पटलः—पञ्चमी खण्डिका

इति द्वितीयः पटलः

———

## अथ तृतीयः पटलः—नवमी खण्डिका

विषयः पृष्ठसंख्या

पञ्चदशी खण्डिका

इति तुर्यः पटलः

---

अथ पञ्चमः पटलः—षोडशी खण्डिका

विषयः पृष्ठसंख्या

एकोनत्रिंशी खण्डिका

---

एकत्रिंशी खण्डिका

इति अष्टमः पटलः

समाप्तष्षष्ठः प्रश्नः

---

सप्तमः प्रश्नः १५५-३७८ पृष्ठानि

प्रथमः पटलः

प्रथमा खण्डिका

B*

---

## द्वितीया खण्डिका

विषयः पृष्ठसंख्या



---

तृतीया खण्डिका



इति प्रथमः पटलः

---

विषयः पृष्ठसंख्या



---

## सप्तमी खण्डिका

---

## नवमी खण्डिका

---

## दशमी खण्डिका



---

## एकादशी खण्डिका

इति तृतीयः पटलः

---

अथ चतुर्थः पटलः

द्वादशी खण्डिका



---

त्रयोदशी खण्डिका

इति चतुर्थः पटलः

---

अथ पञ्चमः पटलः

चतुर्दशी खण्डिका

---

षोडशी खण्डिका

एकोनविंशी खण्डिका



विंशी खण्डिका

---

एकविंशी खण्डिका

---

## त्रयोविंशी खण्डिका

विषयः पृष्ठसंख्या



———

## चतुर्विंशी खण्डिका

इति सप्तमः पटलः

---

## अथ अष्टमः पटलः

### पञ्चविंशी खण्डिका

---

## षड्विंशी खण्डिका

---

## सप्तविंशी खण्डिका

---

इति अष्टमः पटलः

समाप्तस्सप्तमः प्रश्नः

---

विषयः                                                                 पृष्ठसंख्या

पशुबन्धहौत्रं मैत्रावरुणीयं च



———

## अष्टमः प्रश्नः

प्रथमः पटलः—प्रथमा खण्डिका

---

## द्वितीया खण्डिका

———

## तृतीया खण्डिका

———

चतुर्थी खण्डिका

इति प्रथमः पटलः

---

D*

---

## षष्ठी खण्डिका

विषयः पृष्ठसंख्या

———

## सप्तमी खण्डिका

---

अष्टमी खण्डिका

---

## एकादशी खण्डिका

---

## द्वादशी खण्डिका

—-—

## चतुर्दशी खण्डिका

---

## पञ्चदशी गण्डिका

## षोडशी खण्डिका

इति चतुर्थः पटलः

———

अथ पञ्चमः पटलः—सप्तदशी खण्डिका

---

अष्टादशी खण्डिका

विषयः पृष्ठसंख्या

एकोनविंशी खण्डिका



इति पञ्चमः पटलः

---

अथ षष्ठः पटलः—विंशी खण्डिका

यज्ञानुष्ठानवैरल्यात्समग्राहि यथामति ।
अत्रानुक्तं दुरुक्तं वा क्षमन्तामिह याज्ञिकाः ॥


इति विज्ञापयिता—
सहृदयविद्वज्जनवशंवदः
तिरु. तिरु. श्रीनिवासगोपालाचार्यः,
मैसूरु विश्वविद्यालयसंबन्धि-
प्राच्यविद्यासंशोधनसंस्था-
प्रधानपण्डितः

श्रीः

# अशुद्धसंशोधनम्

---

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 4 | 21 | क्लृप्त्या | क्लृप्त्या |
| 4 | 25 | नित्यवि | नित्यव |
| 5 | 21 | कार्थः | कारार्थः |
| 7 | 27 | कृतस्या | कृतस्स्या |
| 9 | 13 | बह्वभि | बह्वन्यभि |
| 11 | 6 | राग्नीं | राग्नी |
| 11 | 24 | हर्ति | तर्हि |
| 12 | 16 | सवर्पु | सर्वपु |
| 15 | 23 | णत । इ | णत इ |
| 15 | 24 | द्वेशा | द्देशा |
| 16 | 11 | वर | वरा |
| 16 | 21 | स्त्वेऽव | स्त्वेव |
| 16 | 26 | चन | चनं |
| 19 | 20 | दोग्द्ध्यु | दोग्ध्यु |
| 19 | 20 | प्रागुदीचीं | प्राचीं |
| 21 | 5 | गतश्श्री | गतश्रीः |
| 26 | 3 | सिध्य | सिद्ध्य |
| 36 | 11 | मृध्रु | मृध्रु |
| 36 | 23 | न्नयेत्य | न्नयेदित्य |
| 36 | 25 | राभ्य | रभ्य |
| 36 | 26 | र्वानू | र्वान् |
| 38 | 5 | आद्धथ | अद्धय |
| 38 | 18 | यावनो | यावानो |
| 41 | 20 | स्तता | स्तां ता |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 41 | 24 | वंविाधा | वंविधा |
| 42 | 16 | द्वीव | द्वीव |
| 43 | 3 | उम | उप |
| 44 | 11 | धृत्त्यै | धृत्यै |
| 45 | 25 | दाह | दान्मह |
| 45 | 25 | न्मित्यंथः | मित्यर्थः |
| 46 | 4 | सुप | सुव |
| 46 | 19 | घ्यङ्ग | द्व्यङ्ग |
| 47 | 21 | क्रान्वा | क्रान्त्वा |
| 48 | 9 | न्वेऽति | न्वेति |
| 48 | 24 | श्वतो | श्र्वंतो |
| 49 | 2 | तवा | तव्या |
| 49 | 21 | हुता | हुतौ |
| 50 | 3 | कंप | कम्प |
| 50 | 5 | तृन् | तृन् |
| 56 | 2 | पीणां | र्पीणां |
| 57 | 25 | ग्न्योपि | ग्न्योरपि |
| 59 | 16 | क्लृप्त | क्लृप्त |
| 60 | 25 | ङ्त्वा | ङ्क्त्वा |
| 61 | 20 | दास्था | दाः स्था |
| 62 | 6 | नेद्रं | नेन्द्रं |
| 64 | 25 | हात्रं | होत्रम् |
| 64 | 26 | हतिः | हुतिः |
| 65 | 23 | मेन्त्र | मन्त्रे |
| 65 | 23 | सर्क्षेत् | सूर्क्षेत् |
| 65 | 23 | तावैतव | तावतैव |
| 66 | 18 | फलेऽ | फले |
| 70 | 5 | रुदेन | रुत्सेकः |
| 70 | 9 | भूताम | भूतानाम |
| 70 | 22 | पिचृय | पिच्य |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 71 | 17 | पेधे—का | पे--का |
| 72 | 10 | त्रिय | त्त्रिय |
| 72 | 15 | ,, | ,, |
| 74 | 23 | पृत्रो | पुत्त्रो |
| 76 | 9 | मान्त्रा | मन्त्रा |
| 77 | 16 | उत्ता | उत्तरा |
| 77 | 22 | ङ्कुख | ङ्मुख |
| 77 | 23 | अेत्र | अत्रो |
| 80 | 1 | खं-८-४ | खं-१६-१० |
| 80 | 19 | प्रातारने | प्रातरवने |
| 82 | 19 | बहुर्व | बहुव |
| 83 | 5 | शदि | शादि |
| 85 | 6 | पेक्ष | वेक्ष |
| 86 | 13 | र्मन्त्रे | र्मन्त्रै |
| 86 | 19 | त्तुल्यस्यया | त्तुल्यस्स्या |
| 87 | 20 | ग्निपा | ग्निपा |
| 88 | 21 | दत्वा | दत्त्वा |
| 88 | 22 | ,, | ,, |
| 89 | 12 | ,, | ,, |
| 91 | 10 | कर्तुं | त्कर्तुं |
| 92 | 16 | दरे | देर |
| 92 | 16 | ण्यापेदत्तिः | ण्योपपत्तिः |
| 93 | 20 | प्वात्स्व | प्घस्त्व |
| 94 | 14 | सौव | सौप |
| 96 | 2 | मीय | मयि |
| 96 | 11 | तरां | तरं |
| 89 | 4 | शिरा | शिखा |
| 101 | 27 | तन्त्रय | तत्त्रय |
| 103 | 1 | स्स | सप्त |
| 103 | 2 | ग्रयुप | ग्न्युप |

F*

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 103 | 17 | णाप | णोप |
| 103 | 21 | बुध्या | बुद्ध्या |
| 103 | 25 | वाधै नश्चाह | बोधायनश्चाह |
| 104 | 3 | याच्छन्ति | यच्छन्ति |
| 105 | 4 | लान | लान् |
| 105 | 10 | तत्पुन्ना | त उत्पन्ना |
| 106 | 18 | अग्नीनू | अग्नीन् |
| 107 | 3 | तत्य | तस्य |
| 107 | 15 | तृह | गृह |
| 107 | 23 | वराणे | वरुणे |
| 108 | 7 | तं मे | तन्मे |
| 109 | 22 | पोषित | प्रोषित |
| 110 | 24 | तेपु कल्पेपु | तेपु कल्पेपु |
| 111 | 7 | ऊजं | ऊर्जं |
| 111 | 7 | मेर्धा | मेधा |
| 111 | 18 | गृत | घृत |
| 111 | 18 | सुामधा | सुमना |
| 111 | 23 | समना | सुमना |
| 113 | 3 | वाम् | वाह्यम् |
| 113 | 17 | त्साया | त्सायै |
| 118 | 16 | स्तोष्व | स्तोष्प |
| 119 | 18 | यतं | यं ते |
| 120 | 17 | ष्टाथ | ष्टार्थ |
| 122 | 20 | रवदेश | स्वदेश |
| 129 | 15 | ककेपा | ककपा |
| 129 | 23 | दद्रि | दध्रि |
| 130 | 17 | तुपो | (वृ) तुषो |
| 130 | 24 | विभू | विभु |
| 131 | 17 | वोज | बीज |
| 137 | 17 | दित्येरत् | दित्येतत् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 139 | 3 | व्यभू | व्यम् |
| 139 | 9 | कायः | कायाः |
| 141 | 10 | त्वऽऽह | त्वाऽऽह |
| 141 | 20 | मका | माका |
| 142 | 1 | [खं २९ | [खं ३० |
| 143 | 1 | ,, | ,, |
| 143 | 17 | ग्रायणे | ग्रयणे |
| 144 | 1 | [खं २९ | [खं ३० |
| 146 | 14 | विघी | विधी |
| 147 | 4 | म्नाय | म्नाय |
| 148 | 22 | संमवे | संभवे |
| 149 | 2 | मध | मधु |
| 149 | 15 | बभ्नुः | बभ्रुः |
| 150 | 17 | मास्या | र्मास्या |
| 151 | 20 | प्रपे | प्रैपे |
| 152 | 20 | इात | इति |
| 155 | 3 | शुन्वध | शुबन्ध |
| 155 | 23 | वेदव | वदेव |
| 156 | 5 | पादे | पदे |
| 157 | 13 | होणतां | होतॄणां |
| 157 | 14 | पूण | पूर्ण |
| 157 | 16 | क्षिप्य | क्षिप्य |
| 158 | 13 | आगन्य | अग्न्य |
| 159 | 14 | युपा | यूपा |
| 159 | 21 | धा—हितेन | धा—पशुः |
| 159 | 24 | भाव | भावे |
| 160 | 3 | यदा—चैवेति | यदा हीतेन |
| 160 | 3 | जुेहा | जुहो |
| 162 | 26 | वृरू | वृक्षरू |
| 164 | 8 | वोस्प | वोपस्प |

| पृष्टे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 166 | 22 | पादनं | पादानं |
| 168 | 26 | रत्नि | रत्नि |
| 169 | 7 | रात्नि | रत्नि |
| 176 | 19 | देरति | देरिति |
| 177 | 22 | ३८ | ४० |
| 177 | 24 | ४० | ४१ |
| 178 | 11 | ४१ | ४२ |
| 179 | 2 | ४२ | ४३ |
| 179 | 10 | ४३ | ४४ |
| 179 | 19 | दश | दिश |
| 182 | 7 | पृर्वं | पूर्वं |
| 185 | 22 | म्याि | म्याग्नि |
| 186 | 16 | अग्रेः | अग्नेः |
| 187 | 19 | दश | देश |
| 190 | 17 | प्रस्तरः प्रस्तरः | प्रस्तरः |
| 192 | 2 | कमर्प्र | कर्मप्र |
| 193 | 1 | द्विती | तृती |
| 195 | 1 | ,, | ,, |
| 197 | 1 | ,, | ,, |
| 199 | 1 | ,, | ,, |
| 201 | 1 | ,, | ,, |
| 202 | 16 | आज्यं | (वृ) आज्यं |
| 202 | 18 | मत्तेः | पत्तेः |
| 207 | 23 | यूप | यूप |
| 208 | 16, 17 | अवसान | आवासन |
| 210 | 2 | ,, | ,, |
| 210 | 6 | अञ्जमो | अञ्ज्मो |
| 210 | 11 | कर्माणि | कार्याणि |
| 210 | 12 | अग्रादार | अग्रत क्षार |
| 210 | 20 | मक्ता | मक्त्वा |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 211 | 14 | क्ष्यऽते | क्ष्यते |
| 215 | 1 | प्रथमः | तृतीयः |
| 217 | 20 | रोगादि | अङ्गतो वा विरुज्येत रोगादि. |
| 217 | 20 | ष्टार्थः | ष्टार्थं |
| 220 | 23 | धौवा | ध्रौवा |
| 222 | 3 | विलेऽङ्क्ता | विलेऽङ्क्त्वा |
| 227 | 21 | जुहे | जुह्वे |
| 232 | 2 | निवार्हः | निर्वाहः |
| 240 | 13 | दज्या | दाज्या |
| 240 | 21 | क्षिते | क्षते |
| 248 | 12 | पापसु | पासु |
| 248 | 22 | लोपक्ष | लापेक्ष |
| 249 | 24 | त्तमे | तमे |
| 253 | 7 | प्रन | पुन |
| 256 | 15 | त्यनुनू | त्यनू |
| 259 | 19 | न्त्रेपू | न्त्रेपु |
| 259 | 21 | हार | हाकार |
| 259 | 21 | इत्युक्ता | इत्युक्त्वा |
| 259 | 21 | हारा | हाकारा |
| 259 | 22 | पुरस्तके चित्पश्चद्धो | पुरस्तात्केचित्पश्चाद्धो |
| 259 | 23 | मप | मुप |
| 259 | 25 | दातः। इति | दात इति |
| 259 | 27 | लम्पम् | लुम्पन् |
| 261 | 2 | म्निभ्यां | म्निभ्यां |
| 261 | 3 | ष्वेति | ष्येति |
| 261 | 5 | वक्षट् | वषट् |
| 262 | 19 | निमा र्मु | निर्मासु |
| 263 | 10 | र्थात्स्द्धिं | र्थात्सिद्धं |
| 263 | 18 | देव | दैव |
| 264 | 21 | शष्वे | शेष्वे |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 264 | 25 | पेवै | पैव |
| 266 | 2 | जिह्वावक्षोयकृद्वत्यौ | जिह्वावक्षोयकृद्वक्यौ |
| 266 | 7 | वक्षनादि | वक्षआदि |
| 266 | 19 | म्रदीथो | म्रदीयो |
| 266 | 22 | उधस्था | ऊधस्स्था |
| 267 | 4 | कूरु | कुरु |
| 267 | 5 | ,, | ,, |
| 267 | 8 | निर्ल्लेषी | निर्ल्लेपी |
| 267 | 15 | विपुषो | विप्रुषो |
| 267 | 16 | पणीक्ष्य | प्रणीक्ष्य |
| 267 | 17 | शमित्र | शामित्र |
| 267 | 24 | पर्यास्य | पर्यास्त |
| 267 | 25 | निघा | निधा |
| 367 | 25 | कूभ्यां कृत्स्व | कुम्भयां कृत्स्व |
| 268 | 12 | त्वदाव | त्वादौ |
| 268 | 15 | हाभ्य | हाभ्या |
| 268 | 21 | पत्रा | पात्रा |
| 268 | 27 | मवै | मेवै |
| 269 | 12 | पशामिति | पशाविति |
| 269 | 24 | रिष्ट | रिष्ठ |
| 270 | 4 | ,, | ,, |
| 270 | 6 | स्विष्ट | स्विष्ट |
| 270 | 10 | मप्य | मप्य |
| 270 | 26 | विष्ट | पिष्ठ |
| 271 | 7 | निष्ठ | तिष्ठ |
| 271 | 22 | न्तारीय | न्तरीय |
| 271 | 26 | परीग्न | पराग्नि |
| 272 | 7 | मार्नन | मार्जन |
| 272 | 7 | णाङ्गिः | णाङ्गं |
| 272 | 7 | घत | वात |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 272 | 9 | त्याहः | त्याह |
| 272 | 12 | र्थत्वात् | र्थत्वात् उपदेशः पृषदाज्य-गतस्य । उपयमनमधस्ता-द्धारणम् । |
| 272 | 19 | मार्जाय | मार्जयि |
| 272 | 25 | मेक्षण | भक्षणे |
| 273 | 3 | भाष्यास्था | भाष्यस्था |
| 273 | 16 | वक्तृ | पक्तृ |
| 273 | 17 | शत | श्रुत |
| 274 | 10 | सत्वे | सत्त्वे |
| 274 | 20 | प्रावृ | प्रवृ |
| 274 | 25 | मैन्त्रैः | मैन्त्रैः |
| 275 | 5 | विंशि | विंशि |
| 275 | 5 | कूम्भ्या | कुम्भ्यां |
| 276 | 4 | कूम्भीं | कुम्भीं |
| 276 | 9 | होष्म | होष्म |
| 276 | 18 | ध्ययँ | ध्वर्युं |
| 276 | 19 | बध्वा | बद्ध्वा |
| 276 | 25 | रज्वा | रज्ज्वा |
| 277 | 24 | यऽव | याऽव |
| 278 | 4 | नभ्इति | नमिति |
| 278 | 25 | छिस | छिन |
| 279 | 22 | त्त्रधं | त्त्रैधं |
| 279 | 26 | छित्वा | छित्त्वा |
| 279 | 26 | खण्ढं | खण्डं |
| 279 | 28 | ऽयं | तोऽयं |
| 280 | 21 | कृतेसु | कृतेषु |
| 280 | 25 | पड्म | पड्भ्यः |
| 281 | 18 | द्वययबा | द्वयभा |
| 281 | 18 | यूदशद्वा | यूपशब्दा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 281 | 20 | यूः | यूषः |
| 281 | 24 | ध्यूध्री | ध्यूध्री |
| 282 | 14 | भिन | छिन |
| 283 | 22 | तानानवदा-नी | तान्यनवदानी |
| 283 | 23 | यया | यथा |
| 284 | 7 | वनः | वानः |
| 284 | 23 | इशप्दो | इशब्दो |
| 286 | 7 | ह्वामा | ह्वामौ |
| 288 | 23 | सहघ्नी | सहाघ्नी |
| 288 | 24 | वनष्टे एक | वनिष्ठ्वेक |
| 288 | 24 | वत्तशि | वत्तस्तदाऽवशि |
| 289 | 22 | नन्तभा | नन्तर्भा |
| 282 | 25 | हेतु | होतु |
| 281 | 4 | छित्वा | छित्वा |
| 294 | 22 | णमपि | णामपि |
| 303 | 3 | क्कृर्तृ | क्कर्तृ |
| 303 | 20 | पून | पुन |
| 303 | 24 | ष्टार्था | ष्टार्थाः |
| 304 | 23 | स्याय | स्थाय |
| 305 | 2 | विन्ध्या | बन्ध्या |
| 320 | 23 | प्रपो | प्रयो |
| 321 | 4 | चत्री | चैत्री |
| 327 | 19 | दरे | देर |
| 328 | 10 | विद्य | विध्यु |
| 329 | 23 | ग्रथ | प्रथ |
| 334 | 18 | नम | नाम |
| 334 | 21 | वींप | वींषि |
| 339 | 24 | वजि | वाजि |
| 341 | 21 | पष्टं | पृष्टं |
| 341 | 23 | द्वास्त्रा | द्वासना |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 346 | 19 | घिकः | धिकः |
| 347 | 11 | विः, रजु | विरजु |
| 347 | 20 | सवैं | सर्वं |
| 348 | 6 | ष्टादि | ष्टादि |
| 348 | 10 | णाय | णानां |
| 349 | 5 | षड्विंशी | द्वितीया |
| 349 | 25 | ष्यात् | प्यात् |
| 349 | 26 | रणा | राणा |
| 350 | 5 | शष | शेप |
| 350 | 18 | भानो | मानो |
| 350 | 21 | सा मे | (भा) सा मे |
| 351 | 27 | शास्त | शास |
| 351 | 6 | स्राव | स्राव |
| 351 | 25 | तने | तेनै |
| 353 | 20 | वजि | वाजि |
| 359 | 26 | व्रतीनि | व्रतानि |
| 362 | 19 | र्वास्य | र्मास्य |
| 363 | 17 | स्त्युतु | स्त्यृतु |
| 364 | 15 | पौण | पौर्ण |
| 365 | 5 | भसयोः | मसयोः |
| 374 | 8 | तल्यि | तील्य |
| 374 | 14 | म्रध्रिः | म्रीध्रः |
| 381 | 3 | क्रेम | क्रमे |
| 382 | 2 | लोक | काले |
| 383 | 18 | म्रथामि | म्रथमि |
| 386 | 7 | मथम् | मर्थम् |
| 387 | 22 | स्वात् | त्वात् |
| 393 | 17 | हर्वींषि | हर्वींषि |
| 399 | 10 | तिरति | तिरिति |
| 401 | 11 | ११२२ | १९२२ |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 405 | 10 | मेन्थ्यौ | मैन्थ्यौ |
| 406 | 3 | प्रयादि | प्रयाजादि |
| 407 | 14 | ाधका | धिका |
| 413 | 12 | श्रडो | श्रेडा |
| 419 | 13 | थत्र | यत्र |
| 419 | 22 | त्पन्ये | त्यन्ये |
| 428 | 21 | प्रागह्य | प्रगाह्य |
| 435 | 4 | वयन | वयव |
| 436 | 21 | अप | आप |
| 43[illegible] | 17 | हताम | हतमि |
| 442 | 15 | अप | उप |
| 446 | 3 | दयन | दयेन |
| 446 | 3 | यागे | यागो |
| 446 | 19 | तवा | तत्वा |
| 449 | 4 | प्रणातीध | प्रणीताध |
| 452 | 6 | मत्रं | मन्त्रं |
| 456 | 5 | धारि | घारि |
| 457 | 22 | सर्वार्थे | सर्वार्थं |
| 463 | 14 | आपर्या | अपर्या |
| 464 | 22 | द्यामा | द्यमा |
| 466 | 2 | दर्वी | दर्वीं |
| 466 | 25 | मित्यू | मित्यु |
| 471 | 6 | .... | इति धूर्तस्वामिभाष्ये अष्टमे प्रश्ने तृतीयः पटलः ' इति पठनीयम् । |
| 471 | 8 | नाम | नाना |
| 474 | 7 | भवात | भवति |
| 474 | 12 | मशन | मर्शन |
| 484 | 21 | दग्घा | दग्धा |
| 496 | 15 | २९०३ | २१०३ |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 499 | 22 | प्वात्तां | प्वात्तां |
| 506 | 6 | सुक्तयः | स्वक्तयः |
| 506 | 6 | तास्तु | तासु |
| 507 | 6 | अतिमतो | आ तमितो |
| 512 | 17 | सामष्ट | समिष्ट |
| 518 | 2 | दर्शोत | देशात् |
| 519 | 22 | तस्याञ्जाला | तस्याश्चाञ्जला |
| 519 | 22 | सपि | साऽपि |
| 520 | 16 | च्छदे | च्छिदे |
| 526 | 8 | द्व्याहादौ | द्वयहादौ |
| 526 | 12 | पणि | पाणि |
| 528 | 2 | श्वताशुयुक्ते | श्वताऽशुक्ता |
| 541 | 13 | रीक | रिक |
| 541 | 22 | शुस | शुना |
| 541 | 25 | न्ननाले | न्नन्तराले |

———

# आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्य-रामाग्निचिद्वृत्त्योः दृश्यमानानां ग्रन्थकर्तृ-ग्रन्थनिर्देशनां सूचनी.

---

| पुटसंख्या | | निर्देशाः |
|---|---|---|
| 89, 92, 109, 110 इत्यादि | | अन्ये (भा वृ) |
| 120 | ,, | आपस्तम्बः (भा वृ) |
| 13 | ,, | आश्वलायनः (भा) |
| 59, 75, 88, 97, 98 | ,, | केचित् (भा वृ) |
| 365, 366, 367 | | कपर्दिस्वामी (वृ) |
| 106 | | गुहदेवस्वामी (वृ) |
| 4 | | छन्दोगश्रुतिः (वृ) |
| 84 | | छन्दोविचितिः (भा) |
| 366 | | ज्योतिश्शास्त्रम् (वृ) |
| 170 | | निगमः (भा) |
| 27 | | बह्वृचब्राह्मणम् (वृ) |
| 58, 111 | ,, | बह्वृचाः (भा) |
| 220 | | भवदासः (भा) |
| 13, 71, 146, 150, 184 | ,, | भारद्वाजः (भा) |
| 66, 142, 349 | ,, | मीमांसकाः (भा वृ) |
| 61, 169 | ,, | वाजसनेयिनः (भा वृ) |
| 150 | | वार्तिककारः (वृ) |
| 365 | | वैष्णवं पुराणम् (वृ) |
| 22 | | शैलालिनः (भा) |
| 13, 209 | ,, | हिरण्यकेशी (भा) |

---

श्रीमते हयग्रीवाय नमः

श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम्

# आपस्तम्बश्रौतसूत्रम्

## अथ षष्ठः प्रश्नः

(सू) [1]अग्निहोत्रं व्याख्यास्यामः ॥ १ ॥ ११९३ ॥

[अग्निहोत्रशब्दप्रवृत्तिनिमित्तं प्रमाणं च]

(भा) अग्निहोत्रमिति कर्मनामधेयम्; [2]अग्नेर्यत्र सायमाहुतिः प्रथमेति । तस्य[3] निर्वचनम्;—'स एतद्भागधेयमभ्यजायत यदग्निहोत्रं तस्मादग्निहोत्रमुच्यते' इति । तद्वक्ष्याम इत्यधिकारः ॥

[तद्गौणार्थता]

[4]तत्साधनेऽप्यग्निहोत्रशब्दः । यस्याग्निहोत्रं दुह्यमानं स्कन्दतीति [5] । अग्नेर्हुतादजनीति [6]गौरग्निहोत्रमुच्यते ॥

[तस्य सायंप्रातराहुतिद्वयसाधरण्याविरोधः]

(वृ) आग्नेर्य-थमेति — अग्निहोत्रशब्दस्य उभय[7]कालहोमनाम-[8]धेयत्वेऽपि प्रवृत्तिनिमित्तमात्रमग्नेर्यत्र सायमाहुतिरिति ॥

---

[1] अग्न्याधेयानन्तरमग्निहोत्रं व्याचिख्यासुरधिकारं दर्शयति (रु). [2] अग्नेः होत्रमास्मिन्निति होमे अग्निदेवतासंबन्धात् (रु). [3] निर्व-ङ. [4] क्वचिद्द्रव्यवचनोऽपि (रु). [5] न्दतीति । गौरप्याग्नि-क. [6] गौरप्यग्नि-ख. ग. घ. [7] कालवार्तिहो-घ. [8] धेयवत्त्वेऽपि-ख.

[निर्वचनलभ्यश्शब्दार्थः]

तस्य निर्व–मुच्यते इति—'[1]सोऽग्निरबिभेत्' इत्युपक्रम्य 'स एतद्भागधेयमभ्यजायत यदग्निहोत्रमिति। अग्नये होत्रं होम इति अग्नये द्रव्यत्यागो यस्मिन् साङ्गप्रधानकर्मणि ॥

[भाष्ये अधिकारपदार्थः]

तद्व–कार इति— वक्ष्यमाणधर्मविधानार्थः प्रकरणोपक्रमः।

तत्सा–तीति—तत्साधने पयस्यग्निहोत्रशब्दः।

[अग्निहोत्रपदेन गोर्निर्देशस्थलम्]

अग्नेर्हु–च्यते—'तेषां हुतादजायत गौरेव' इत्युपक्रम्य 'अग्नेर्हुतादजनि' 'इत्युक्त्वा' 'गौर्वा अग्निहोत्रं इति गौरप्यग्निहोत्रमुच्यते। क्वचित् 'यस्याग्निहोत्र्युपसृष्टा निषीदति' इत्यादिषु ॥ ११९३ ॥

(सू) [2]अधिवृक्षसूर्ये [3]आविस्सूर्ये [4]वा धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय गार्हपत्यमभिमन्त्रयते सुगार्हपत्य इति। अथैनं [5]बोधयति उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते संसृजेथामयं च। अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदतेति ॥ २ ॥ ११९४ ॥

[सौत्रकालनिर्देशविवरणं, उपवेषपदार्थश्च]

(भा) वृक्षाणामुपर्येव सूर्यांशवः न पृथिव्यां सोऽधिवृक्षसूर्यः।

---

[1] सोऽग्नि–त्रमिति इत्यन्तो भागः छ.–पुस्तके न दृश्यते. [2] सूर्यशब्देन रश्मिलक्षणा। भूमेरुत्थिता रश्मयः अधिवृक्षमेव निविशन्ते यस्मिन् काले (रु). [3] प्राच्यां दिशि आविर्भूता रश्मयो यस्मिन् काले सः। एतदभिप्रेत्योक्तम् उद्यत्सु रश्मिषु दशहोत्रेति (रु). [4] यस्य वोभावनुगतौ यस्य वाऽग्निभिरग्नीन् इत्यादिवत् समुच्चयार्थो वाशब्दः. [5] बोधयति–प्रादुष्करोति। उद्बुध्यस्वाग्न इति मन्त्रोच्चारणमेव बोधनमित्यपरम (रु).

[1] आविश्शब्दः प्रकाशवाची । प्रकाशो यत्र [2] सौरो दृश्यते स काल आविस्सूर्यः [3] । [4] तस्मिन् धृष्ट्यादानादि । उपवेषशब्दः उद्घाटनार्थे काष्ठे वर्तते । न [5] संस्कृत एव । मिश्रयोरप्यमग्योर्गार्हपत्याभिमन्त्रणम् । उपदेशो धृष्टिनिवृत्त्यर्थं गार्हपत्यग्रहणम् ॥

[अभिमन्त्रणे विशेषः गार्हपत्यपदकृत्यं च]

[अनपेक्षितमपि कार्यमेव बोधनम्]

उद्घाटितस्यापि [6] बोधनं नित्यवत् । अतो निर्मथिते लौकिके च कृते उपावरोहणे न निवर्तते ।

[तत्रोपदेशपक्षः]

उपदेशोऽर्थात् स्थगितस्योद्घाटनं बोधनं च । अतस्तदुद्घाटिते निवर्तते । धृष्ट्यादानं तूद्धरणार्थत्वात्क्रियते । अन्यार्थमुद्धृत [7] आहवनीये उद्धरणार्थत्वात् धृष्ट्यादानादि सर्वं निवर्तते ॥

(वृ) **अधि-र्यः**—कालः ।

**आविः प्रका-दृश्यते**—रश्मिभिरनभिभूतमण्डलः ।

[सूत्रे अग्निहोत्रकालपूर्वावधिमात्रनिर्देशः]

**सकाल-दानादि**—अभिनिम्रोके प्रायश्चित्तविधानादुत्तरावधिर्गम्यते । प्रागवधिरत्रोच्यते कालस्य ॥

---

[1] आविः-प्रकाश-क. ख. ग. घ. ङ. च. अहः प्र-छ. [2] सूर्यो-क. घ. ङ. विरश्मिस्सूर्यो-ज. [3] र्यः कालः-ग. [4] केचित्त्वित्यादिना सायंविहरणविकल्पपक्षमनूद्य निरस्यति रुद्रदत्तः. [5] संस्कृतयोरेवेत एव-ङ. [6] मन्त्रेण बोधनम्-क. ख. ग. घ. ङ. च. छ. ज. धनञ्ञ-ङ. ज. [7] हवनीये दृष्ट्वा-र्तते. उद्धरणार्थत्वात्-ङ. [7] केचित्तु आविस्सूर्य इत्यपि सायंविहरणस्य कालविकल्प इति मन्यन्ते ; तदयुक्तम् ; वक्तव्यस्य प्रातर्विहरणकालस्यानेनावगमात् । अतोऽन्यस्यावचनात् अन्यथाप्रातर्विहरणकालस्यानैयत्यप्रसङ्गात् । प्रायश्चित्तवचनात् प्रायश्चित्तवचनादेवतत्कल्पने विहरणेऽप्यवक्तत्वापत्तेः अतो यथोक्त एव सूत्रार्थः । न विद्युदसि ; दर्विहामेत्वात् (रु).

[प्रातः प्रणयनकालः]

प्रातः प्रणयनस्य तु उषस्यारभ्यार्धोदयपर्यन्तम् ; आधाने तथा दर्शनात् । अभ्युदये प्रायश्चित्तदर्शनात् । अभ्युदयः कृत्स्नमण्डलदर्शनं सूर्यस्य : 'अर्धोदिते सूर्य आहवनीयमादधाति । उदिते ब्रह्मवर्चसकामस्य' इति सूत्रकारवचनात् । 'असौ वा आदित्य उद्यन् हिंकारः उदितः प्रस्ताव इति छन्दोगश्रुतेश्च ।

[उदितप्रायश्चित्तव्यवस्था]

अतः अर्धोदये नाभ्युदितप्रायश्चित्तम् ॥

[अभिमन्त्रणे विशेषोपपादनम्]

**मिश्र–न्त्रणम्**—आहवनीयादिमिश्रितेऽपि गार्हपत्यमात्रमभिसंधाय मन्त्रेण वीक्षणम् । मन्त्रलिङ्गादेव सिद्धे गार्हपत्यमभिमन्त्रयत इति विधानात् ॥

[गार्हपत्यपदस्य धृष्टिनिवर्तकत्वोपपत्तिः]

**उपदेशो–ग्रहणम्**—'रक्षसः पार्ष्णिं दहाहिरसि बुध्नियः' इत्यग्निलिङ्गस्यापि मन्त्रस्य तत्संसर्गमात्रेणोपवेषे दर्शनात् तद्वदत्रापि न [1]प्राप्नोत्विति ॥

[नित्यवद्बोधनपर्यवसानम्]

**उद्घाटित–वत्**— भस्मादिभिरप्रच्छन्नस्य ज्वलतोऽपि विभक्त[2]स्यापि बोधनम् नित्यवदाम्नानात् । [3]क्वचिन्मन्त्रेण बोधनम् नित्यवदिति पाठः । तस्यार्थः—क्लृप्तायामपि चितौ [4]चितिक्लृप्तयाभिमर्शनवत् ॥

**अतोनिर्म—निवर्तते**—उद्घाटनं बोधनं च ।

**उपदेशो–निवर्तते**—द्वयम् ।

**धृष्ट्यादा–त्क्रियते**—उद्धरणार्थत्वात् ॥ ११९४ ॥

---

[1] प्राप्नोतीति–**च.** [2] क्तस्य–**च.** [3] क्वचित् बोधयन्नित्यवदिति–**घ.**
[4] चित्याभि–**च.**

(सू) [1]उद्धरेत्येव सायमाह यजमानः । उद्धरेति प्रातः ॥ ३ ॥ ११९५ ॥

[अवधारणाशयः]

(भा) उद्धरेत्येवेत्यवधारणात् कालद्वयेऽप्युच्यते । [2]यदाऽपि न प्रातरग्निमुप[3] च नावरोहेदिति स्वयं होमे च । इतरथा न प्र(दी)तीयेतात्मनोऽनुज्ञा । उद्धरेत्येवेति—उद्धरेत्याहैवेत्यन्वयः ॥

[अवधारणाशयविवरणम्]

(वृ) उद्धरेत्य–होमेचेति—एतत्पक्षाश्रयणेन सर्वयाजमाननिवृत्तिः । यदा प्रातः काले तदाऽप्युद्धरणप्रैषो वक्तव्यः ॥

उद्धरेत्ये–त्यन्वयः—[4]एवं च स्वयंहोमे वक्तव्य इत्येवमर्थमवधारणम् ॥

इतरथा–नुज्ञा—स्वयमात्मानमनुजानीया[5]दित्युन्नयनप्रैष उक्त्वा[6]दिह न प्राप्नोतीत्यभिप्रायः ॥ ११९५ ॥

(सू) [7]सहस्रं तेन कामदुघोऽवरुन्धे ॥ ४ ॥ ११९६ ॥

(भा) कामदुघः—यद्यदिच्छ(ति)न्ति तत्तद्दुहन्ति । तासां लाभोऽवरोधः

[कामधुगवरोधोक्त्याशयः पक्षभेदेन]

अर्थवाद इति न्यायः । इतरथा मन्त्रानित्यता स्यादिति । उपदेशः कामनायां नित्यं प्रातरनुज्ञेति ॥

---

1 उद्धरेतिद्विरुक्तिर्वैचित्र्यार्था । उद्धरेत्यनुज्ञामात्रं यजमान आहोद्धरणमन्त्रमध्वर्युरित्येवकार्थः । स्वयं जुह्वदपि स्वयमात्मानमनुजानीयादिति न्यायेन वा । भिन्नक्रमोवाऽन्वयः आहैवेति (रु) यदान प्रा–ख. 2 पचरावरो–छ. 3 त तेनानुज्ञाविषयेण परामर्शद्वारेण लक्षितलक्षणयाऽग्निहोत्रं परामृश्यते स्तूयते च (रु). 4 स्वयंहोमे–घ. स्वयंवक्तव्य इत्येवम–ज. 5 दित्युत्पन्नयन–ज? 6 दिहनप्राप्नो–घ. 7 इदं भाष्यं न दृश्यते–क. छ.

[अर्थवादत्वपक्षाशयः]

(वृ) कामदुघः-तास्यादिति—काम्यत्वे फलेच्छायां सत्यामेव मन्त्र इति नित्यवदाम्नान [1] विरुध्यते ॥

[उपदेशपक्षाशयः तत्र सूत्रस्वारस्यञ्च]

उपदेश-रनुज्ञेति—अस्यार्थः—उद्धरेत्ये[2]वाह यजमान इत्येतावतोभयकालेऽप्यनुज्ञायां [3] सिद्धायां सायंग्रहणेन तत्रैव नियतायां [4] कामधुक्कामस्य प्राप्त्यर्थमुद्धरेति प्रातरिति वचनमिति । अस्मिन् पक्षे एवकारः स्वयंहोमार्थ एव न पुनः सर्वयाजमाननिवृत्तिपक्षेऽपि प्राप्त्यर्थम् [5] ॥ ११९६ ॥

(सू) वाचा त्वा होत्रा प्राणेनोद्गात्राऽध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दिव्यैर् ऋत्विग्भिरुद्धरामीति गार्हपत्यादाहवनीयं ज्वलन्त[6]मुद्धरति ॥ ५ ॥ ११९७ ॥

(भा) उद्धरति-उद्गृह्णाति ॥

उद्ध-ह्णाति—[7] ज्वलन्तम् [8] ॥ ११९७ ॥

(सू) भूर्भुवस्सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वांश्चकार । अह्ना यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मात् इति उद्ध्रिय

---

[1] निरुध्येत-ज. [2] त्येतावतोभयकाले. [3] यां सायंग्रहणेन-ज. [4] याः-ज. [5] र्थः-ज. [6] 'उद्धरेत्युद्गृह्णाति' इति द्वितीयसूत्रे कामदुघ इत्येतद्विवरणात्प्राक्-च. ङ. कोशयोर्दृश्यते नन्येषु । उत्तरत्र स्वयं इध्माहरणविधानानुरोधेन उद्ग्रहणमध्वर्युकर्तृकमेवेति निश्चीयते । अतः नायं द्वितीयसूत्रेस्थेन यजमानपदेनाप्यर्हतिसंबन्धम् । अतो नायं पाठस्स्यात्; भाष्यवृत्तिविरोधाच्च । स्वयं होममध्ये चास्यात्रानुपयोगः मन्त्रविरहात् । अनेककोशानुसारात्तु लेखदोषं संभावयामः. [7] प्रज्वाल्यैवोद्धरतीति रुद्रदत्तः. [8] न्तमग्निम्-ग.

माणमभिमन्त्रयते यजमानस्सायम् । राञ्या यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति [1] प्रातः ॥ ६ ॥ ११९८ ॥

[सायंप्रातर्मन्त्रयोर्भेदः]

(भा) सर्वो मन्त्रः प्रातरपि । रात्र्या यदेन इत्येतावान् विकारः ।

[विशिष्टे सूत्रकारविनियोगादप्राप्तिशङ्कापरिहारः]

(वृ) प्रातरपीति—'रात्र्या यदेनः कृतमस्ति पापं सर्वस्मान्मोद्धृतो मुञ्च तस्मात् इति प्रातः' इत्येकदेशस्य सूत्रकारेऽ[2]ण विनियोगात् प्रातःकाले 'भूर्भुवस्सुवरुद्ध्रियमाणमुद्धर पाप्मन' इत्यादेरप्राप्तिशङ्कायां सर्वो मन्त्रः प्रातरित्याह ; सर्वस्यैकत्वात् । 'राञ्या यदेन' इत्यादि सूत्रकारोपादानं विकारमात्रप्रतिपादनार्थम् । [3] तदाह ;–[4]राञ्या–कार इति ॥ ११९८ ॥

(सू) अग्निपतयेऽग्नये मे विद्धि अग्निपतयेऽग्नये मे मृड । अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । तयाऽनन्तं काममहं जयानि प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ[5]स्वाहा ॥ ७ ॥

प्रथमा खण्डिका

---

[1] प्रातस्तु एतस्यैव मन्त्रस्य राञ्या यदेनः इत्येतावानेव विकारः (रु).
[2] णोपादानात्–घ. [3] तथा चाह–ज. [4] रात्रिया–घ. ज [5] एतदन्तमेकं सूत्रं रुद्रदत्तीये दृश्यते संख्यानिर्देशात् । रुद्रदत्तेन च किमप्यस्मिन् सूत्रे नोक्तम् । स्वाहान्तेनानेन मन्त्रेण किमपि कर्म न विधीयते पृथक् । प्रयोगकारा अपि उत्तरसूत्रे निदधामीत्यन्तं प्रतिष्ठापनार्थं दर्शयन्ति । बङ्गलवेङ्कयनाम्ना मुद्रापिते आधानपञ्चके तु स्वाहान्तं मन्त्रं प्रदर्श्य आहवनीयसमीपं गत्वेति लिख्यते । न त्वनुग्राहकमत्र दृश्यते । किंतु उद्धृतं आहवनीयं गृहीत्वा हरन् आहवनीयस्य पुरस्तात्परिक्रम्य अग्निपतये इत्यादि प्रयोगवाक्यं दृश्यते । अग्निहोत्ररक्षामणौ अनन्तरं गृहीत्वैनमुद्धृतं दक्षिणा हरन् । इत्युपक्रम्य स्थापयेदग्निपतये इत्याद्यैस्तत्र पावकम् । इति विशिष्टस्य प्रतिष्ठापनशेषत्वोक्ता । किंकृतस्यात्सूत्रभेद इति चिन्तनीयम् । एवं तत्र तत्र.

(सू.) अग्ने सम्राडजैकपादाहवनीय दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय। पृथिव्यास्त्वा मूर्धन्त्सादयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामीति पुरस्ता[1]त्परिक्रम्योदङ्मुखः प्रत्यङ्मुखो वा सायमायतनेऽग्निं प्रतिष्ठापयति प्राङ्मुखः प्रातः॥ ॥ १ ॥ ८ ॥ १२०० ॥

(भा) पुरस्तादाहवनीयस्य [2] गत्वा प्रत्यङ्मुख उदङ्मुखो वा स्थापयति। न तु पुरस्ताद्गच्छति प्रातः॥

न तु पुर–प्रातरिति––प्राङ्मुख इति वचनात्॥ १२००॥

(सू.) स्वयं यजमान [3] इध्मानाहरति विश्वदानीमाभरन्तोऽनातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषामेत्येतया ॥ २॥ ९॥ १२०१ ॥

[सूत्रमवधारणपरम्]

(भा) [4] यजमान एव स्वयमाहरतीध्मान् अग्न्यायतनमग्न्यगारात्। न नेदिष्ठी। उपदेशोऽध्वर्युपत्नीभ्यामाहरणप्रतिषेध इति॥

[अरण्यादाहरणानवसरपक्षः]

आहरती–अग्न्यगारात्––अग्न्यगाराद्गृहीत्वा अग्न्यायतन समीपमाहरति। नारण्यात् [5]अशक्यत्वा[4]दस्मिन् काले [6]

[7]न नेदिष्ठी—इध्मानाहरति।

---

[1] न पुरस्तात्परिक्रमणं प्रातः (रु). [2] इदं पदं न दृश्यते घ–पुस्तके. [3] नत्वन्येनाहारयति (रु). [4] यजमान एव. [5] त्वात् काले–घ. [6] काले नियम इति–ज. [7] न नेदिष्टेत्युपदेशः–क. ङ. त्र. छ. न नेदिष्ठीत्युपदेशः–घ. ज. न नेदिष्टे–ख.

[संभावितकर्तन्तरत्वप्रतिषेधपरत्वपक्षः]

**उपदेशो-षधे इति**;—अस्यार्थः ;—विश्वदानीमा भरन्त इति मन्त्रगताद्बहुवचनादिध्माहरणे बहुकर्तृसंयोगावगतेरध्वर्य्वादिभिस्सह यजमानस्याहरणप्राप्तौ स्वयंशब्दस्तत्प्रतिषेधार्थ इति ॥ १२०१ ॥

(सू) [1]**यदग्ने यानि कानि चेत्येताभिः पञ्चभिः प्रतिमन्त्रमग्निषु [2]महत इध्मानादधाति ॥ ३ ॥ ॥ १० ॥ १२०२ ॥**

[इध्माधाने मन्त्राः प्रतीध्मम् ; तत्र हेतुश्च]

(भा) एकैकमिध्मं मन्त्रेणा[3]दधाति । आहवनीये वर्षिष्ठमित्येकवचनात् ॥

[एकवचनतदर्थगमकतोपपत्तिः]

**एकैक-वचनादिति**--महत इध्मानिति बहुवचनं बह्वभिप्रायेण नैकैकाग्नीध्माभिप्रायेण । इतरथा वर्षिष्ठानित्येव ब्रूयात् ॥ १२०२॥

(सू) **आहवनीये [4]वर्षिष्ठम् ॥ ४ ॥ ११ ॥ १२०३ ॥**

[वर्षिष्ठपदार्थः]

(भा) वर्षिष्ठो गुरुतरः । सर्वतो विस्तीर्णः ।

[वर्षिष्ठपदंबह्वर्थकमिति पक्षः]

उपदेशो बहवः ; दारूणीति लिङ्गात् ॥

[वर्षिष्ठपदस्य बह्वर्थकत्वहेतुविवरणम्]

**उपदे-लिङ्गादिति**--अस्यार्थः—बहव इध्मा आधेयाः

---

[1] इदमपि याजमानमेव सत्याषाढभरद्वाजयोर्मतानुसारात् (रु).
[2] यावन्तस्समिन्धनार्थायालं तावतः (रु). [3] णाम्नावा—क. ङ. च. छ. णाम्नावाधीयते—ज [4] यथाऽन्येभ्यो वर्षिष्ठं भवति तथा (रु).

यदग्ने[1]यानिकानिचेतिमन्त्रे दारूणी[2]ति दारूणां बहुत्वदर्शनात् ॥ आहवनीये वर्षिष्ठामित्यधिकं [3]निदधात्याहुतिधारणार्थम् ॥ १२०३ ॥

(सू) यथाऽऽहितास्ते[4]नानुपूर्व्येण आहवनीयाद्वा प्रक्रम्य ॥ ५ ॥ १२ ॥ १२०४ ॥

[इध्माधाने क्रमे मति भेदः]

(भा) प्रक्रमः—आरम्भः। आहवनीयात्प्रक्रमेऽपि यथाऽऽहितास्तथेतरेषां क्रमः। केचित्पञ्चेध्मान् प्रतिमन्त्रमेकैकस्मिन् ॥

[आहवनीयात्प्रक्रमोक्तेराशयः]

(वृ) **आहवनी–क्रमः इति**—इतरेषां क्रमस्य क्लृप्तत्वात्।

**केचित्व–कस्मिन्निति**—एताभिः पञ्चभिः प्रतिमन्त्रमग्निषु महत इध्मानिति प्रत्यग्नि पञ्चसङ्ख्या सम्बध्यत इति ॥ १२०४ ॥

(सू) [5]तथाऽग्निराधेयो यथाऽऽ[6]हुतिर्न व्यवेयात् ॥ ॥ ६ ॥ १३ ॥ १२०५ ॥

[अच्छिद्रमिध्माधानम्]

(भा) तथाऽग्निः कर्तव्यो बलवान्। आधेयश्चाच्छिद्र इध्मः। तस्मिन् यथा आहुतिर्हुता हित्वा[7]ग्निं भूमिं न प्राप्नोति ॥

[योगविभागेन सूत्रविवरणम् उपदेशपक्षे तदयोगश्च]

(वृ) **तथाग्निरा – लवान् इति**—तथाऽग्निराधेयो यथाऽऽहुति[8]रित्यत्र तथाऽग्निरित्येकं सूत्रम्। कर्तव्यो बलवानित्यध्याहृत्य व्याख्यानम्। आधेया यथाऽऽहुतिर्न व्यवेयात् इत्यपरं सूत्रम्; अस्यार्थः—

---

[1] यानीतिमन्त्रे–घ. [2] णीतिलिङ्गात् दा–घ. [3] विदधा–घ. च.
[4] आहवनीयप्रक्रमेऽपि इतरेषां यथाऽऽधानमेव क्रमः (रु) [5] तथाग्निरुन्मुखार्चिर्विधातव्यो यथेध्मस्योपरि दत्ताऽऽहुतिं इध्मो न व्यवेयात् न व्यवदध्यात् (रु) [6] हुतीर्न–च. [7] ग्निं वि मिं न छ. ? [8] रन्यत्र–ख ?

आधेयश्चाच्छिद्र इध्मस्तस्मिन् यथा आहुतिर्हुता हित्वाग्निं भूमिं न प्राप्नोतीति। आहुतिरग्निं हित्वा यथा भूमिं न प्राप्नुयात् तथा वर्षिष्ठ आधेयः। उपदेशपक्षे अन्यत्र निरन्तरमिध्माधानं कर्तव्यमिति इदानीमग्नेराधेयत्वाभावात् तथाऽग्निराधेय इत्येकं सूत्रं न भवति ॥ १२०५॥

(सू) **नान्त[1]राग्नी संचरति ॥ ७ ॥ १४ ॥ १२०६ ॥**

[अग्निमध्ये सञ्चारनिषेधमतिभेदौ]

(भा) पूर्वोऽनुगत इत्युत्तरत्र वचनात् गार्हपत्याहवनीययोरेवान्तरा गमने प्रतिषेधः। उपदेशस्सर्वत्र प्रतिषेधः[3] अविशेषवचनात् ॥ १२०६॥

(सू) **[4]यदि पूर्वोऽनुगतः सञ्चर्यम्। [5]पश्चा(द्धि) हि स [6]तर्हि गतः ॥ ८ ॥ १५ ॥ १२०७॥**

[अन्तरा सञ्चाराभ्यनुज्ञापि कदाचित्]

(भा) पश्चा हि स गत इति हेतुवचनात्। यत्रावक्षाणेभ्यो मन्थनं तत्राहवनीयो गार्हपत्यं न गच्छति। तत्रानुगमनेऽपि न सञ्चार्यम् सञ्चरणे सर्वप्रायश्चित्तम् यत्र नान्यत्प्रत्यक्षम् ॥

(वृ) **पूर्वोऽनुगत इति**—पूर्वेषां दक्षिणाग्न्यादीनामपि प्रदर्शना[7]र्थम् ॥

[पश्चाहीत्याद्युक्तहेतूपपत्तिः]

**पश्चाहि-वचनादिति**—गार्हपत्यगमनं सर्वेषामित्यभिप्रायः। तथाहि गार्हपत्यगतानां पञ्चानां समारोपणं तस्माद्विहरणं चोपपद्यते ॥

---

[1] अग्नी इति गार्हपत्याहवनीयौ गृह्येते प्राधान्यात्। तथा उत्तरसूत्रे व्यक्तत्वाच्च (रु). [2] स्सर्वप्रति–घ. [3] प्रतिषेधोवा–ङ. च. ज. [4] पूर्वस्मिन् ध्रियमाणेऽपराग्न्यनुगतावसञ्चरणार्थं वचनम्। अन्यथातदानर्थक्यात्। अत्रैवार्थवादं दर्शयति इत्यवतारयति (रु) [5] पश्चाद्धि–ङ. च. [6] र्हिर्ति तस्मिन्काले सोऽग्निः पश्चाद्गार्हपत्ये स्वयोनौ हि गतः। तेनसञ्चर्यमिति (रु). [7] नम्–घ.

[उक्तहेतुसाफल्योपपत्तिः]

**यत्रावक्षा-चर्यम्**—अत एव सोमे आग्नीध्रप्रणयनोत्तरकालं शालामुखीयानुगतौ प्रणयनविधानात् पश्चाद्गमनाभावादवक्षाणाभावे भस्मनाऽरणिं संस्पर्श्य मन्थनमेव न प्राजहितात्प्रणयनम् ॥ १२०७॥

[सञ्चरणे प्रायश्चित्तस्य मानसिद्धता]

**सञ्चरणे-प्रत्यक्षम्**—पुरुषश्चाऽनो रथो वेत्युपदिष्टम् ॥

**(सू) कामं[1] हुते सञ्चर्यमित्येके ॥ ९ ॥ १६ ॥ १२०८॥**

[सूत्रोक्ताभ्यनुज्ञाशयः]

**(भा)** [2]हुते तु लौकिकत्वादग्ने[3]रकर्माङ्गत्वा[4]न्नायं नियमः । अप्रत्यवायः । सञ्चरणे वर्जितेऽभ्युदयः तस्यातिक्रमे प्राणायामः । नियमातिक्रमे चान्यस्मिन् ॥

[सूत्रोक्ताभ्यनुज्ञाशयविवरणम्]

**(वृ) हुते लौ-नियमः**--कामं हुते सञ्चर्यमित्यस्मिन् पक्षेऽयमभिप्रायः ;—होमे कृते कार्याभावादग्नेर्लौकिकतुल्यत्वात् सञ्चरणप्रतिषेधादिनियमो नास्तीति । प्राग्घोमात्कर्माङ्गत्वं सवपुरुषाणां प्रतिषेधात्पुरुषार्थश्च । अतो लौकिकवैदिकयोरन्तरा गमने कर्मदोषाभावादप्रत्यवायः ॥

[सामान्यनिषेधाशयः अतिक्रमे प्रायश्चित्तं च]

**सञ्चरणे-चान्यस्मिन्निति**—धर्मशास्त्रे[5] केषुचिद्दोषेषु आतमितोः प्राण[6]मायच्छेदित्युक्त्वा नियमातिक्रमे चान्यस्मिन्निति प्राणायामो

---

[1] अजस्रविषये साङ्गाद्धोमादुत्तरकालमन्तराग्न्योरयं सञ्चरणविकल्पः । प्रणयनकल्पेऽपि प्रधानहोमादुत्तरकालमिति केचित् (रु) [2] हुतेलौ-क. ख. घ. ङ. छ. ज. [3] दग्नेः कर्मान-क. च. छ. दग्नेः कर्माङ्ग-च. [4] न्नानियमः-क न्ननियमः-ख. ग. न्नान्यनियमः-च. छ. दनियमः-घ. ज. [5] शास्त्रेषु-ख. ग. [6] मायच्छेतेत्युक्ता ?

नियमातिक्रमदोषपरिहारार्थत्वेनोक्तः । अत्र च न प्रतिषेधसञ्चरणयोस्तुल्यो विकल्पः दोषफलसंशये न तत्कर्तव्यमिति स्मरणात् ॥ १२०८ ॥

(सू) [1]नक्तमाहवनीयं धारयति ॥ १० ॥ १७ ॥ १२०९ ॥

[सायंप्रातः प्रतिष्ठापनविध्यविरोधेन नक्तधारणोपपत्तिः]

(भा) [2]होमद्वयार्थं प्रणेष्यामीति[3] [4]सङ्कल्पं कृत्वा [5]नक्तधारणम् । विकल्पश्चायं प्राङ्मुखः प्रातरिति वचनात् ॥

[नक्तधारणे होमद्वयार्थसङ्कल्पोपपत्तिः]

**होमद्व—धारणमिति**—नक्तधारणस्य दृष्टार्थत्वाय प्रातर्होमोऽपि तस्मिन्नेवाग्नौ होतव्यः । अतः सायं प्रणयनकाले होमद्वयार्थं सङ्कल्पः । अतः पक्षहोमेऽपि प्रथममेव सर्वहोमसङ्कल्पः ॥

[धारणवैकल्पिकत्वोपपत्तिः]

**विकल्पश्चायमिति**—नक्तधारणपक्षः ॥

**पाङ्मुखः-चनात्**—यद्यपि नक्तमाहवनीयमिति नित्यवद्विधानम्॥

नित्यो गतश्रियो ध्रियते ॥ ११ ॥ १८ ॥ १२१० ॥

[गतश्रीधार्यविशेषः मुनिमतभेदाश्च]

गतश्रियः आश्वपदिक[6] एवाहवनीयो धार्यते[7] दक्षिणाग्नि सभ्यावसथ्याः[8] पुनःपुनः [9]यद्यपि मथित्वाऽऽहित इत्युपदेशः । नित्यधारणं सभ्यावसथ्ययोरिति [10]भरद्वाजमतिः हिरण्यकेशिमतिश्च । आश्व-

---

1 सायंप्रातर्होमयोः पृथक्प्रणयनं सायं प्रत्यगुदङ्मुखत्वविकल्पः । प्रातः प्राङ्मुखत्वं चोक्तमधिवृक्षसूर्येत्यादिना । इदानीं सायमुपक्रम्य प्रातरपवर्गिहोमद्वयमेकं कर्मेत्येकमेव प्रणयनमुच्यते । बोधायन कात्यायन भरद्वाजसंमतमिदम् इति रुद्रदत्तः ॥ 2 प्रातर्होम–ङ. 3मीतिकृत्वा सङ्कल्पम्–ङ. मीत्युक्त्वासम्–**च.** 4सङ्कल्पः नक्तधारणम्–**च.** 5 नतधारणम्–ङ. 6 क आहवनी–**ज.** 7 नित्यो गतश्रिय इतिवचनात् श्रियः। दक्षिणा–**ख. च.** दक्षिणा–ख. च. 8थ्ययोः–**क. ख.** 9यदि न मथित्वा–**ज.** यदि माथित्वा–ङ. 10नित्यंगतश्रियो धार्यत आयुष्कामस्य वेति सत्याषाढ भरद्वाजयोर्मतमिति । सर्वेऽपि नित्या इत्याश्वलायनमतमिति ॥ बोधायनस्य तु अगतश्रियोऽपि पक्षे नित्यास्सर्वे इति मतमिति रुद्रदत्तः ॥

लायनमतिस्तु सर्वेषु पक्षेषु आधानात्प्रभृति सर्वे गतश्रियो धार्याः

[दक्षिणाग्न्यादीनां पुनः पुनराहरणोपपत्तिः]

**गताश्रिय–त्युपदेश इति**—अन्वाहार्यपचनस्य यदि मथित्वाऽऽहित इति नित्य[1]धारणस्य वक्ष्यमाणत्वात् हेत्वविशेषात् । सभ्यावसथ्ययोर्नित्यधारणे प्राप्तेऽपि नित्यो गत[2]श्रियः आहवनीयमात्रधारणविधानात् । तस्य मथित्वाऽऽहितानामपि दक्षिणाग्न्यादीनां पुनः पुनर्योनित आहरणमित्युप[3]देशः इति ॥

[भरद्वाजाद्युक्तधारणं सर्वविधाधानसिद्धस्यापि]

**नित्यधारणं–धार्या इति**—सोमपूर्वाधानादिष्वपि ॥१२१०॥

**[4] नित्यं गार्हपत्यम् ॥ १२ ॥ १९ ॥ १२११ ॥**

[गार्हपत्यं सर्वो धारयेत् । अनुगतौ मन्थनम् धार्याणाम्]

पुनर्नित्यवचनात्[5] अगतश्रियोऽपि गार्हपत्यस्य[6] नित्यधारणम् । दक्षिणा[7]ग्नेश्च मथित्वाऽऽहितस्य । [8]धार्याणामनुगतानामवक्षाणेभ्यो मन्थनं भस्मनाऽ[9]र(णिं)णी संस्पृश्य[10] वा अनुगमने[11]न यो[12]र्नि [13] गच्छन्ति [14] नित्यधार्या यावज्जीवम्[15] ॥

[गार्हपत्याहवनीयभिन्नाग्नीनां स्वयोनेरुत्पत्तिः]

योनित [16] उत्पत्तिरितरेषां[17]धार्याणामपि । यदि गार्हपत्य आहव- [18] नीयो [19]वेति द्वयोरेव नियमात् ॥

---

1 योध्रियत इतिगतश्रियः–घ. च. 2 देशपक्षः. 3 गतश्रीरगतश्रीश्च सर्व एव नित्यं गार्हपत्यं धारयन्ति 4 पुनर्नित्यग्रहणात्(रु). 5 त् अत्रगताश्रि–क. गतश्रियोऽपि–च. 6 पत्यधारणम्–ङ. 7 र्यात्मामनु–छ ? 8 णाग्नेर्म–घ. 9 संस्कृश्य मथितं वा–ङ. 10 रणीं संस्पृश्यं वा–च. छ. ज. 11 नेयो–छ. 12 च्छति–ङ. 13 वमिति–क. ङ. ज. 14 नित्याधार्या–क. छ. 15 नतेयो –छ. ज. 16 त्पत्तिं इतरेषा–ङ. 17 र्यमाणानामपि–. ज. च 18 नीयौ-वा–क. वा ? 19 वानुगच्छेदितिद्वयो--ख. च.

[धार्याणामिति बहुवचनोपपत्तिः]

पुनर्नित्यव-वमिति—धार्याणामि[1]ति बहुवचनं व्यक्तिभेदाभिप्रायेण ॥

योनित-णामपि—आहवनीयगार्हपत्यव्यतिरिक्तानाम् ॥

यदिगार्ह-नियमात्—अव[2]क्षाणा[3]दुत्पत्तिनियमात्॥ १२११॥

[4]तथाऽन्वाहार्यपचनं यदि मथित्वाऽऽहितो भवति ॥ १३ ॥ २० ॥ १२२२ ॥

[5]यद्याहार्योऽहरहरेनं दाक्षिणत आहरन्ति ॥१४॥ ॥ २१ ॥ १२१३ ॥

[अधारणपक्षे तत्सम्पत्तिप्रकारः]

अहरहः—सायं प्रातः । दक्षिणस्माद्देशादाहरन्ति लोके यजमानाः ॥ [6]नक्तधारणे आहवनीये दक्षिणाग्न्यादीनामाहार्याणामग्नीनां धारणमेककर्मत्वात् । केचिदाहवनीय [7]स्यैवेतिवचनात् धारणम् ॥

[अहरहराहरणपक्षतदन्यपक्षयोर्विवरणम्]

(वृ) अहरहः-कर्मत्वादिति—अग्निप्रणयनकर्मैकत्वात् तस्य च प्रधानभूताहवनीयप्रयुक्तत्वात् आहवनीयधारणे इतरेषां प्रण[8]यनासम्भवात् धारणमेव तेषामपि ॥

केचिदा-वचनात्—इतरेषां प्रणयनमेव ॥ १२१२-१३ ॥

---

[1] मितिव्यक्तिभेदा-छ. [2] दुत्पत्ति-घ. [3]क्षाणोत्पत्ति-छ. [4] आधानकाले यदि दाक्षिणाग्निर्मथित्वा आहितः तमपि सर्वे नित्यमेव धारयेयुः. [5] यदि तदानीमाहार्यस्तदा योनित आहरन्ति । बहुवचनमविवक्षितम्. अहरहः—काले काले; अहरहरग्निहोत्रमितिवत् दक्षिणत । इति दाक्षिणाग्न्यायतनानुवादः दाक्षिणस्माद्देशादाहरणनियम इति के चित् (रु). [6] मनक्तधारणे-क. [7] स्यैव वचनात्-क. च. स्यैव-घ. [8] यनसम्-छ ?

[आहरणेऽपि व्यवस्था]

(सू) उपवसथ एवैनमाहरेयु[1]र्नवावसान एवैनमाहरेयुरिति वाजसनेयकम् ॥१५॥ २२॥ १२१४॥

द्वितीया खण्डिका ॥

---

(भा) उपवसथे[2] अग्नयन्वाधानकाले पक्षे पक्षे अवसानं [3]स्थानम् । नवमवसानं नवावसानम् । अवसाना[4]न्तरेण अन्यस्याहरणम् ॥

[नवावसानाहरणप्रकारः मतिभेदश्च]

उपव–पक्षे—आहरेयुः । यावदौपवसथ्यं धारणम् ।

अवसानं स्थानं नवावसानम्—यथावसानमाहरणम् या यावरणाम् । यत्र यत्र प्रयाणा[5]वस्थानं तत्रतत्राहरणम् ॥

अवसा–हरणमिति—पुनर्धारणम् । यावन्नवमवसानं दक्षिणाग्नेः प्रणयनमाहवनीयमुद्धृत्य अन्यहस्ते प्रदाय निधाय वा ; आधाने तथा दृष्टत्वात् । यथाऽऽहितास्तेनानुपूर्व्येणेति क्रमनियमात् । उपदेशस्तु आहवनीयमायतने प्रतिष्ठाप्य दक्षिणाग्न्याहरणम् । सूत्रकारेणाहवनीयप्रणयनात्पश्चादहरहरेनं दक्षिणत आह[6]रतीति वचनात् ॥ १२१४ ॥

(सू) [7]परिसमूहनेनाग्नीनलं[8]कुर्वन्ति ॥ १ ॥ २३ ॥ ॥ १२१५ ॥

---

[1] वासार्थं देशान्तरप्राप्तिरवसानम् । स्थानं वा श्रौतलिङ्गात् । सभ्यावसथ्ययोस्त्वेऽवमुत्पादनावचनादाधानसंपादितानामग्नीनां स्वतोऽनुद्वासितव्यत्वाच्च नित्यधारणमेव युक्तमिति केचित् ; तदयुक्तम् ; नित्यधारणानुक्रमणवैयर्थ्यापत्तेः । अर्थायेत्यादिना अधार्येषु न्यायव्युत्पादनात् । प्रणयनशब्दस्योत्पत्तिप्रदर्शनार्थत्वात् । शामित्रादेरपिधारणापत्तेश्च । अत आपस्तम्बस्य नेष्टं तत् । तस्मान्न धार्यौ सभ्यावसथ्यौइति रुद्रदत्तः. [2] सथ्येऽग्नय–ज. [3] स्थापनम्–छ. [4] न्तरे- च. छ. ज. [5] वसदनम्. [6] रन्तीति–घ. छ. [7] परिसमूहनं परितो मार्जनम् (रु). [8] बहुवचन पत्न्यध्वर्युयजमानानामन्यतमप्राप्तयर्थम् (रु).

[अलङ्कारस्वरूपम् तत्करणे विशेषश्च]

(भा) परिसमूहनं–[1]परितस्समूहनं [2]शोधनमित्यर्थः। मण्डनमलङ्करणम्। कुर्वन्तीति बहुवचनाद्यजमानः पत्नी चाध्वर्योस्सहायावलङ्करणे मन्त्रवर्जम्

[पत्नीयजमानसहकारितविशेषहेतुः]

(वृ) परिस–र्जमिति—परिसमूह[3]नेन समूह्यालङ्कुर्वन्ति मन्त्रवर्जमिति पत्नीयजमानयोरध्वर्योस्सहायमात्रत्वात् प्रधानभूताध्वर्योरेव सम[4]ग्रक-मलङ्करणं तत्काण्डोक्तत्वाच्च ॥ १२१५ ॥

(सू) पुरस्तादलङ्कारास्सायमुपरिष्टादलङ्काराः प्रातः॥ ॥ २ ॥ २४ ॥ १२१६ ॥

(सू) एतद्वा विपरीतम्। उभयतोऽलङ्कारास्सायं तथा प्रातरित्येके ॥ ३ ॥ २५ ॥ १२१७ ॥

(सू) अग्ने गृहपते शुन्धस्वेति गार्हपत्यं अग्ने वह्ने शुन्धस्वेति दाक्षिणाग्निमग्ने सम्राट् शुन्धस्वेत्याहव-नीयं अग्ने सभ्य शुन्धस्वेति सभ्यमग्ने परिषद्य शुन्धस्वेत्यावसथ्यम् ॥ ४ ॥ २६ ॥ १२१८ ॥

(भा) पुरस्ताद्धोमादलङ्कारा[5] येषां ते इमे पुरस्ता[6]दलङ्काराः। अस्मि-न्नेव [7]काले समिन्धनादि। उपरिष्टादलङ्काराः दीदिहीत्युपसमि[8]न्धना-त्परतः पूर्वतुल्यत्वात् ॥

---

[1] हनं शोधनमित्यर्थः–च. [2] सर्वतस्स–ख; घ. छ. ज. ङ. [3] नेन सहा–घ. तत्र यद्यपि उपरिष्टाद्धोमादलङ्कारः तदाऽपि उपरितन समिन्धनादनन्तर-मिष्यते। पूर्वालङ्कारे तथा दर्शनात्। स च उभयत्र पाणिना। परिसमूहेन समूहन्येति वचनात् (रु). [4] त्रकानुष्ठानम्–ख. घ. [5] रो येषां–घ. छ. क. ख. [6] दलंका . . . र . . माः.–क. [7] काले उपरिष्टा–क. ङ. च. छ. ज. [8] समिन्धनादुपरिष्टात् उपरिष्टादलङ्काराः–ख. [9] न्धाना–छ.

**उपरिष्टा – ल्यत्वात्**—समिन्धनोत्तरकालभावितयाऽऽम्नातत्वात् ।

(सू) [1] **उदगग्रैः प्रागग्रैश्च दर्भैस्तृणैर्वाऽग्नीन् परिस्तृणा त्यग्निमग्नी वा ॥ ५ ॥ २७ ॥ *११९ ॥**

[परिस्तरणे पक्षभेदः]

(भा) सर्वेषां परिस्तरणम् । न[2] सभ्यावसथ्ययोरित्युपदेशः ॥

[सर्वपरिस्तरणपक्षस्योपपत्तिः]

(वृ) **सर्वेषां परिस्तरणमिति**—अग्नीनाम् । अग्नीन् परिस्तृणाती-[3]त्यविशेषात् । सभ्यावसथ्ययोर्होमाभावेऽपि वचनात् स[4]र्वाग्निव्यापि संस्कारस्यैव होमाङ्गतां । [5]यथा अवरा[6]ग्निक होमाभावेऽपि बह्वग्नि-परिस्तरणम् । न च त्रिषु होमपक्षे बह्वग्निपरिस्तरणमिति व्यवस्था ; अग्निद्वयपरिस्तरणपक्षाऽनुपपत्तेः ॥

[उपदेशपक्षसम्मता युक्तिः]

**न सभ्यावसथ्ययोरित्युपदेश इति**—परिस्तरणस्याग्निसंस्कार-द्वारेण होमाङ्गत्वाद्धोमरहितेषु न कर्तव्यमिति ॥ १२१९ ॥

(सू) [7] **खादिरस्स्रुवो वैकङ्कत्यग्निहोत्रहवणी बाहु-**

(वृ) **मात्र्यरत्निमात्री वा ॥ ६ ॥ २८ ॥ १२२० ॥**

[अग्निहोत्रार्थं स्रुवस्यैष्टिकादन्यत्वम्]

(भा) [8] पुनस्स्रुवविधानादन्य [9] एवाग्निहोत्रा[10]र्थस्स्रुवः ॥

**पुनस्स्रु–स्रुवः**—ऐष्टिक[11]स्रुवस्य खादिरत्वे सिद्धेऽपि खादिर स्स्रुव इति पुनर्वि[12]धानात् ॥ १२२० ॥

---

1 व्याख्यातं प्रागुदगग्रत्वम् । अग्निमित्याहवनीयो गृह्यते होमार्थत्वात् । परिस्तरणतृणानि दूर्वादयः (रु). 2 न च स–छ. 3 त्यविशेषवचनात्–घ. 4 र्वाग्निसंस्कारस्यैवपि हो ?–छ. 5 यथाआदराग्निकहो–ख. 6 ग्निहोम–घ, छ. 7 अन्य एवाग्निहोत्रस्रुवः पुनर्विधानात् (रु). 8 अन्यस्रुव–ज. 9 र्थम्–क. 10 ययाऽग्निहोत्रं क्रियते सा स्रुगग्निहोत्रहवणी (रु). 11 स्रुवस्वखादित्वे ?–छ. 12 नादन्य एवाग्निहोत्रार्थस्स्रुवः–घ.

(सू) प्रसृता[1] कृतिरार्य[2] कृताग्निहोत्रस्थाल्यूर्ध्व [3] कपा-
लाऽचक्रवर्ता भवति ॥ ७ ॥ २९ ॥ १२२१ ॥

(भा) प्रसृताकृतिः—हस्ताग्रतुल्या । ऊर्ध्वकपाला—उर्ध्वानि [5] यस्य कपालानि न वक्राणि । अचक्रवर्ता–चक्रे त्वपरिवर्ता चक्रभ्रमणेन विना [6] हस्तेन कृता ॥ १२२१ ॥

(सू) दक्षिणेन विहारमग्नि[7] होत्री तिष्ठति तां यजमानोऽ-
नुमन्त्रयते इडाऽसि व्रतभृदहं नावुभयोर्व्रतं चरि-
ष्यामि सुरोहिण्यहं नावुभयोर्व्रतं चरिष्यामीड
एहि मयि श्रयस्वेर एह्यदित एहि गौरेहि श्रद्ध
एहि सत्येन त्वाह्वयामीति ॥ ८ ॥ ३० ॥ १२२२ ॥

[अग्निहोत्रधेनु स्वरूपे विशेषः]

(भा) अग्निहोत्री—धेनुर[8] ग्निहोत्रार्था । सा च [9] सुरोहिणी मन्त्र-लिङ्गात् ॥

(वृ) मन्त्र लिङ्गादिति—सुरोहिण्यहन्नाविति ॥ १२२२ ॥

(सू) अथ वेदिदेशमभिमृशतीयमसि तस्यास्तेऽग्नि-
र्वत्सः सा मे स्वर्गं च लोकममृतं च धुक्ष्वेति ॥
॥ ९ ॥ ३१ ॥ १२२३ ॥
पूषासीति दक्षिणतो वत्समुपसृज्य [10] प्राचीमा-
वृत्य दोग्ध्युदीचीं प्रागुदीचीं वा ॥ १० ॥ ३२ ॥
॥ १२२४ ॥

---

[1] असंकुचितबिला। [2] आर्यैस्त्रैवर्णिकैः कृता । [3] अतिर्यग्वृत्तकपाला नचक्रभ्रमणेन निर्मिता (रु). [4] इदं न दृश्यते–क. [5] स्याः–घ. ङ. च. छ. [6] हस्तेनैव–घ. [7] अग्निहोत्रधेनुः (रु). [8] होत्रहोमार्था–घ. [9] सुष्ठुरोहिणी–क. ख. घ. च. छ. [10] दक्षिणतो गोः वत्समुपसृज्य यथा प्राची भवति तथा पर्यावृत्य दोग्धि (रु).

(भा) दक्षिणतो गोर्वत्सो विमुच्यते। प्रदक्षिणमावर्तयित्वा पुनः प्राची स्थाप्य[1]ते।

दक्षि–च्यते––दक्षिणत इत्यस्य उत्तरापेक्षत्वात्। प्रकृतगोर्दक्षि[2]णपार्श्वत इति।

प्रदक्षि–प्यते—गौर्वत्सेनोपसृष्टा ॥ १२२४ ॥

(सू) **न शूद्रो दुह्यात् ॥ ११ ॥ ३३ ॥ १२२५ ॥**

**असतो वा एष संभूतः यच्छूद्रः ॥ १२ ॥ ३४ ॥**
**॥ १२२६ ॥**

(भा) असत [3] अधः प्रदेशात्–पादतः ॥

अस–दतः—असतो वा एष संभूतः इत्यधोभागस्या[4] प्रशस्तत्वात् पादतो जा [5]तस्यासत्संभूतत्वम् ॥ १२२६ ॥

(सू) **दुह्याद्वा ॥ १३ ॥ ३५ ॥ १२२७ ॥**

**[6]यदेव गार्हपत्येऽधिश्रयति पवयत्येवैनत् ॥ १४ ॥**
**॥ ३६ ॥ १२२८ ॥**

(सु) **अग्निहोत्र[7]स्थाल्या दोहनेन च दोग्धि**
**॥ १५ ॥ ३७ ॥ १२२९ ॥**

तृतीया खण्डिका.

---

[1] प्यंत। असंबोधः—प्रदेशात्यालम्बः इत्यधिकं दृश्यते–ङ. [2] णता ? छ. [3] असाधोः प्रदेशात्–ख. च. [4] स्याशस्तत्वा–ख. [5] तस्य शूद्रस्या–ख. छ. [6] नन्विदानीमेवोक्तमसतो वा इत्यादि; न चात्र सान्नाय्यवदुत्पवनेन शुद्धिः अग्निहोत्रमेव न दुह्याच्छूद्रः तद्धि नोत्पुनन्ति इति हि ब्राह्मणम्? तत्राह (रु). [7] अतोऽनुज्ञायते शूद्र इति भावः। उभयत्राधिकरणस्य करणत्वविवक्षया तृतीया (रु).

(भा) स्थाल्या दोहनेन च दुह्यते ॥

स्थाल्या–ते—प्रथमं स्थाल्या ॥ १२२९ ॥

(सू) [1] पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीस्स्यात्। अपरौ दुह्यात्कनिष्ठस्य कानिष्ठिनेयस्य यो वाऽनुजावरो यो वा बुभूषेत् ॥ १ ॥ ३८ ॥ ॥ १२३० ॥

[2] न स्तनान् संमृशति ॥ २ ॥ ३९ ॥ १२३१ ॥

[प्रतिषेध्य संमर्शनस्वरूपम्]

(भा) प्रस्रवनार्थं[3] स्तनस्पर्शनं प्रतिषिध्यते ॥ अशक्यत्वाद्दोग्धु-[4] मस्पृशता ।

प्रस्र–ध्यते—न स्तनान् संमृशतीति सजलस्पर्शनं प्रतिषिध्यते ॥ १२३१ ॥

(सू) [5] यथोपलम्भं [6] नित्ये कल्पे दोग्धि ॥ ३ ॥ ॥ ४० ॥ १२३२ ॥

(भा) यथोपलम्भं—अनियमेन । [7] पूर्वापराविति नियमो नास्ति दोहनस्य ॥ १२३२ ॥

(सू) [8] पूर्ववदुपसृष्टां दुह्यमानां धाराघोषं च यजमानोऽनुमन्त्रयते ॥ ४ ॥ ४१ ॥ १२३३ ॥

[9] अस्तमिते दोग्धि ॥ ५ ॥ ४२ ॥ १२३४ ॥

---

[1] पूर्वापराविति स्तननिर्देश इहेति विशेषः इति रुद्रदत्तः. [2] प्रस्रवणार्थं न स्तनानभिमृशतीत्यर्थः (रु). [3] र्थस्तन–घ. [4] मनुपस्पृशताम्–ङ. [5] योयः स्तनः हस्तप्राप्तस्तम् दोग्धि नतु पूर्वापरादिनियमः (रु). [6] नित्ये दोहनकल्पे. [7] पूर्वौ पराविति–घ. [8] पूर्ववत्—सान्नाय्यवत् (रु). [9] अत्र दोहनस्याऽस्तमयात्परत्वानियमात् पूर्वभाविनः समिन्धनादेः प्रागस्तमयादनुमतिस्सूचिता भवतीति रुद्रदत्तः.

[अस्तमयानन्तरदोहविध्याशयः]

(भा) अस्तमिते नियमः। अस्तमिते उद्धरणस्य प्रायश्चित्तविधानात्। समिदाधानादेस्त्वनियमः अस्तमितेऽनस्तमिते वा ॥

(वृ) अस्तमिते–धानादिति—प्रागस्तमयादुद्धरणम्। समिदाधानादेस्त्वनियमः मध्यवर्तिनः ॥ १२३४ ॥

(सू) [1]अभ्रस्तमिते होतव्यम् ॥ ६ ॥ ४३ ॥ १२३५ ॥

(भा) [2]अभ्रस्तमिते [3]ईषदस्तमिते होमः कार्यः ॥ १२३५ ॥

(सू) समुद्रो वा एष यदहोरात्रस्तस्यैते गाधे तीर्थे यत्सन्धी [4]तस्मात्सन्धौ होतव्यमिति शैलालिब्राह्मणं भवति ॥ ७ ॥ ४४ ॥ १२३६ ॥

[सन्धौ होमविधेरभिप्रायः]

(भा) समुद्रतुल्योऽहोरात्रः। तस्य गाधे तीर्थे यत्सन्धी तयोश्शक्यमवस्थातुम्। [5]तदन्यदगाधम् गाधे हुतं न नाशमुपयाति ॥ अगाधे नाशमुपयाति ।तस्मात्सन्धौ होमः कार्यः। शैलालिनो नाम शाखिनः।

(सू) [6]नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम् ॥ ॥ ८ ॥ ४५ ॥ १२३७ ॥

---

[1] अभ्रः- सद्यः। अस्तमितमात्रे दोहनादि प्रतिपद्य होमः कार्यः. [2] अन्तर–? ते वा–ख. [3] ते–ईषदस्तमिते हो–क. [4] सन्धीनाम सायं प्रातः सूर्यनक्षत्रयोरन्यतरस्यास्तमयादारभ्यान्यतरोदयावधिकालौ। यथा सन्ध्योपासनकालं नियच्छता गौतमेनोक्तं 'सज्योतिष्याज्योतिषो दर्शनात्' इति। संधी इति द्विवचनात्प्रातस्सन्धिरपि स्तुतो भवति (रु). [5] तदगाधम्? [6] सायं चैतेऽपि त्रयो होमकालाः संधिना साकं विकल्प्यन्ते। नक्षत्रं दृष्ट्वा प्रथमनक्षत्रदर्शने प्रदोषे प्रथमयामे निशायां द्वितीययामे (रु).

[नक्षत्रदर्शनादिपदविवक्षिताः कालाः]

(भा) एकमपि नक्षत्रं दृष्ट्वा द्वितीयो होमकालः । प्रदोषः—सर्वेष्वूदितेषु । निशा—यस्यां निशेरते भूतानि । एते चत्वारः सायं होमकालाः ।

**एकमपि—कालः**—तदा संधावेवोपसादनान्तं कृत्वा कर्तव्यम् ।

**निशा—तानि**—रात्रौ द्वितीयो यामः ।

**एते—कालाः**—चत्वारोऽपि मुख्यकालाः इत्येवमर्थं अनुक्रमणादेव सिद्धे चत्वारः काला इति पुनर्वचनम् ॥ १२३७ ॥

**(सू) [1] उषस्युपोदयं समयाविषिते उदिते वा प्रातः ॥**
**॥ ९ ॥ ४६ ॥ १२३८ ॥**

[उष आदिपदार्थस्वरूपम्]

(भा) उषाः—यस्यां प्रकाशो भवति तमोहानिः । समीपे[2] आदि-[3]त्योदयो यस्य स उपोदयः कालः । समयाविषितः—अर्धोदितः तदाऽङ्गानि पूर्वम् । उदयादारभ्य[4] उदिते यावत्सङ्गवम्[5] । सङ्गच्छन्ते गावो यदा दोहनार्थं तृणा[6]दनाय गताः स सङ्गवः । सङ्गवान्तः [7]प्रातःकालः आश्वलायनमतात् ॥ १२३८ ॥

**(सू) [8] यदु[9]दिते जुहोत्यग्निष्टोमं तेनावरुन्धे यन्म-**
**ध्यन्दिने जुहोत्युक्थ्यं तेनावरुन्धे यदपराह्णे**

---

[1] प्रातरप्येते स संधिकाश्चत्वारो होमकालाः ; उषसि—प्राच्यां जातप्रकाशायाम् । उपोदये उदयात्पूर्वस्मिन् समये पूर्वतः प्रातस्सन्धिस्तत्रेत्युक्तं भवति । समया विषिते—ईषदाविर्मण्डले सूर्ये । तत्र प्रदोषान्तो होमकालः । सङ्गवान्तः प्रातरित्याश्वलायनः (रु). [2] दयस्य स उ-च. [4] रभ्ययावत्स—ख. ग. [5] त्सङ्गवः—ख. घ. च. त्सङ्गवंगच्छन्ते—ङ. [6] णादानाय—घ. [7] प्रातिरित्याश्वलायन वचनात्—घ. ञ. [8] आपदिकालान्तराणामप्यनुग्राहकं ब्राह्मणदर्शयति. [9] उदिते-पूर्वाह्णे इत्यर्थः । रात्रिपर्यायैः क्रत्वधिकारादतिरात्रो लक्ष्यते । एतेषु कालेषु जुह्वदेतैर्यज्ञैरिष्टवान् भवतीति । एवं च सर्वमहः सर्वा रात्रिर्होमकाल इत्युक्तं भवति । भरद्वाज्योऽप्याह (रु).

जुहोति षोडशिनं तेनावरुन्धे यत्पूर्वरात्रे जुहोति प्रथमं तेन रात्रिपर्यायमाप्नोति यन्मध्यरात्रे जुहोति मध्यमं तेन रात्रिपर्याय माप्नोति यदपररात्रे जुहोति जघन्यं तेन रात्रिपर्यायमाप्नोति ॥ १० ॥ ॥ ४७ ॥ १२३९ ॥

[सङ्गवात्परकालस्यापद्ग्राह्यकालता]

(भा) यदु[1]दिते सङ्गवात्परतो [2]जुहोतीत्यापद्धोमकालः ।
यदु–द्धोमकालः—पूर्वेषामेव मुख्यत्वात् ॥
ये रात्रिपर्यायास्त्रयोऽतिरात्रे तानाप्नोति ॥ १२३९ ॥

(सू) [3]स न मन्येत सर्वेष्वेतेषु कालेषु होतव्यम्; आपदि हुतमित्येव प्रतीयादिति विज्ञायते ॥११॥ ॥ ४८ ॥ १२४० ॥

[स्वस्थस्य तु न तात्कालानुज्ञा]

(भा) [4]एतेषु च यज्ञाभिहितेषु होमं [5]कुर्वन् आर्तौ आपदि न कर्म त्यजति न यज्ञलाभं चिन्तयेत् एतेषु कालेषु [6]स्वस्थः ॥

[आपदिगौणकालपरिग्रहेऽपि न मुख्यत्यागप्रायश्चित्तम्]

यदाऽऽर्तावापदि जुहोति तदा हुतमित्येव[7] प्रत्यवगन्तव्यम् । न तदा अग्निहोत्रकाला[8]तिपातप्रायश्चि[9]त्तानि । होम[10]कालस्सङ्कल्पयितव्यः कर्मादौ ॥

---

[1] दितं सं–ङ. [2] द्धोमः–ङ. च. ज. [3] न चैवं पूर्वोक्तैः कालैस्सहैषां तुल्यविकल्पता भ्रमितव्येत्याह–स नमन्येतेत्यादि । सोऽयं प्रतिपत्ता नैवं मन्येत सर्वेऽमी होमकाला इति । किंतु आपदि अगत्यां एषु कालेषु हुतमपि हुतं भवतीत्येतावदेव प्रतीयादित्यर्थः (रु). [4] एतेषु यज्ञाभिहितेषु च–क. तेषु च–क. [5] कुर्वन्नार्तावापदि–ङ.ज. यज्ञविहितेषु–घ. [6] स्वस्थ इति–क. यदावाऽऽर्तौ वाऽऽपदि–क. यदि वा–ङ. [7] त्येव प्रतीयात्–प्रत्यवगन्तव्यम्–घ. [8] तिपात्तिप्रा–क. [9] त्तम्–ख, ज. [10] कालसंक–ङ.

[स्वस्थस्य कर्मकालः आपत्पदार्थश्च]

(वृ) एतेषु–स्वस्थ इति—स्वस्थ एतेषु न कुर्यात्। पूर्वोक्तेष्वेव कुर्यात् यदा तथा हुतमित्येव प्रतीयात् ॥

दुर्भिक्षे राष्ट्रसंबाधे [1]देहनित्यात्ययादिषु।
इति आपल्लक्षणम् ॥

[होमकालसङ्कल्पावश्यकत्वम्]

न तदा–र्मादौ इति—सन्ध्यादिकालानां वैकल्पिकत्वात् प्रयोगाङ्गकालविशेषसङ्कल्पः सन्धौ होष्यामीत्यादिः ॥ १२४० ॥

किमर्थं काल इति चेत् —

(सू) [2]यो होमकालस्सोऽङ्गानाम् ॥ १२ ॥ ४९ ॥
॥ १२४१ ॥

चतुर्थी खण्डिका ॥

---

[अङ्गानां प्रायोऽनुष्ठानकालः]

(भा) [3]यस्मादङ्गानामपि स एव कालो विहरण[4]वर्जानाम्।

[उपदेशमते विशेषः]

उपदेशस्समिदाधानपरिस्तरणदोहनानि सायं[5]होमे होमकाले न कृतानीति प्रातर्होमेऽप्येषामनियम इति ॥

---

[1] देहे नित्या–छ. नित्यदेहान्ययोरित्यापल्लक्षणम्–घ. [2] सर्वेष्वप्युक्तेषु कालभेदेषु यतमास्मिन् प्रधानं चिकीर्षति ततमास्मिन्नेवाङ्गान्यपि कर्तव्यानि न तु कालान्तरे। विहरणं तु वचनात् प्रागुदयास्तमयाभ्यां क्रियते (रु). [3] अङ्गानामपि स–ङ. [4] वर्ज ?–ङ. [5] होमकाले–घ. ङ.

[विहरणवर्जानामित्यत्र हेतुः]

(वृ) यस्मादङ्गा-वर्जानाम्—तत्कालेऽनुष्ठानसिध्यर्थं कालविशेष-सङ्कल्पः। विहरणं तु प्रागुदयास्तमयात् ॥

[प्रातर्होमे परिस्तरणाद्यनियमसिद्धिप्रयोजनम्]

होमकाले-मनियम इति-—अत एव समिदाधानादेः प्रातः-कालेऽप्यनियमप्रतिपादनात् प्रणयनस्य होमकालात्पूर्वकालत्वमेवेति प्रागुदयादेव प्रणयनम्। यस्मादङ्गानामपि स एव कालो विहरण-वर्जानामित्यविशेषनिर्देशोपपत्तिः। एवमुभयकालेऽनुद्धृतप्रायश्चित्तोप-पत्तिः ॥ १२४१ ॥

इति श्रीमदापस्तम्बश्रौतसूत्रभाष्ये श्रीधूर्तस्वामिविरचिते
रामाग्निचिद्वृत्तिभूषिते षष्ठे प्रश्ने प्रथमः पटलः.

---

(सू) [1] पत्नीवदस्याग्निहोत्रं भवति ॥ १ ॥ ५० ॥
॥ १२४२ ॥

[नित्यपत्नीसम्बन्धाभिप्रायकत्वं सूत्रस्य]

(भा) पत्नी यस्मिन् विद्यते तदिदं [2] पत्नीवत्। अस्य यजमानस्य अग्निहोत्रं भवतीति वचनात्। अवियोगोऽग्निहोत्रेण पत्न्याः ॥

[अन्यथा सूत्रवैयर्थ्यम्]

इतरथा स्व आयतने पत्न्युपविशतीत्यनेनैव सिद्धं पत्नीवत्त्वम्।

[सूत्रेऽस्येति पदप्रयोजनम्]

अस्येति वचनात् न नेदिष्ठीपत्नी; मृतपत्न्येव [3] कर्म करोति ॥

---

[1] सन्निहितपत्नीकं भवति। [2] उत्तर सूत्रेणैव सिद्धे पत्नीवद्वचनाद्यजमान-स्यैव कर्मणि स्वाम्यं न पत्न्या इति ख्यापितं भवति। तच्च दर्शितमेव प्राक् (रु).
[2] पत्नीकर्म करोति–क. मृतपत्न्येति? कर्म–च. [3] कर्माणिक–ख. घ.

(वृ) पत्नीवत्—कर्म।

इतरथा—यद्यवियोगपरता नास्त्यस्य तदा।

[अपत्नीकाग्निहोत्रपरबह्वृचश्रुत्याशयः]

स्व आ—वत्त्वमिति—अतः पत्नीवदस्येति वचनादपत्नीकस्याग्निहोत्रेऽनधिकारः। बह्वृचब्राह्मणे तु 'तदाहुरपत्नीकोऽप्यग्निहोत्रमाहरेदिति' विधानं अजस्रपटलोक्तदारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयं[1] कुर्यादित्येतद्विषयम्। तच्च[2] व्याख्यातं सामर्थ्यादग्निहोत्रार्थमपीति॥

[सूत्रे अस्येति पदप्रयोजनविवरणम्]

अस्येति—करोतीति—अस्यार्थः—पत्नीवदग्निहोत्रमित्येतावता सिद्धेऽप्यस्येति वचनात् न नेदिष्ठिनः स्वपत्न्या सहाग्निहोत्रप्रयोगो भवतीति ज्ञाप्यते। कस्मिन् क्रतौ तस्याः प्राप्तिः? प्रवृत्तसत्राणां कस्य[3]चित् मध्ये मरणे तन्नेदिष्ठिनं तत्स्थाने दीक्षयित्वा तेन सह सत्रसमापनं विहितम्। एवं च कुण्डपायिनामयने मासमग्निहोत्रानुष्ठाने नेदिष्ठिनः पत्न्या सह प्रयोगः प्राप्तः तथा मा भूत् मृतपत्न्यैव सह कर्तव्यमित्येवमर्थमस्येति वचनम्; तस्याः पूर्वमेवाधिकृतत्वात् नेदिष्ठिमात्रस्य प्रतिनिधित्वात्॥ १२४२॥

(सू) स्व आयतने पत्न्युपविशति ॥ २॥ ५१॥
॥ १२४३॥

[पत्नीस्थाने मतिभेदः]

(भा) स्वमायतनं पत्न्याः दर्शपूर्णमाससिद्धम्। देशाद्दक्षिणत उदीचीति। केचित्तु पश्चाद्गार्हपत्यस्य प्राचीमुपवेश[4]यतीह; तस्मात्पश्चात्प्राची पत्न्यन्वास्ते[5] इत्यनुवादात्॥

---

[1] धेयमित्येत—ख. छ. [2] व्याख्यानम्—छ. [3] चिन्मरणे—छ.
[4] शयन्ती—क. [5] इति सिद्धवदनुवादात्—ख.

[भाष्यस्थपक्षयोरभिप्रायः]

(वृ) स्वमायतनं-उदीचीति ;—यत्पश्चात्प्राच्यन्वासीतेत्यादिना गार्हपत्यपश्चाद्देशानिन्दां कृत्वा देशाद्दक्षिणत उदीचीति सन्नहनदेशाद्दक्षिणदेशो विहितः । तस्मादन्वासनस्थानं स्वमायतनम् ॥

केचित्तु-नुवादात् —सामान्यदेशोऽयम् ॥

(सू) अपरेणाहवनीयं दक्षिणातिक्रम्योपविश्य यजमानो विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति मयि श्रद्धेत्यप आचामति ॥ ३ ॥ ५२ ॥ ॥ १२४४ ॥

[आचमने विशेषः]

(भा) आचामति-भक्षय[1]त्यप उपविष्टः ॥

पश्चाच्छौचार्थमाचमनम् ।

(सू) ऋतं त्वा सत्येन परिषिञ्चामीति सायं परिषिञ्चति सत्यं त्वर्तेन परिषिञ्चामीति प्रातः । आहवनीयमग्रे अथ गार्हपत्यम् । अथ दक्षिणाग्निं अपि वा गार्हपत्यमाहवनीयं दक्षिणाग्निं यथा वाऽऽहितः ॥ ४ ॥ ५३ ॥ १२४५ ॥

(भा) सभ्यावसथ्ययो[2]र्न परिषेकः ; त्रयाणामनुक्रमणात् ॥

सभ्या-णात् —क्रमविधाने ॥ १२४५ ॥

(सू) यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीति गार्हपत्यात्प्रक्रम्य संततामुदकधारां स्रावयत्याहवनीयात् ॥ ५ ॥ ५४ ॥ १२४६ ॥

---

[1] यत्यथ–ङ. [2] नसभ्यावसथ्ययोः परिषेकः–क. ख. घ. ङ. च.

[धारास्रावणे मन्त्रोच्चारणकालः]

(भा) अस्याम[1]पि धारायामादिसंयोगो मन्त्रेण ॥

[परिभाषाया एतदानुकूल्यम्]

**अस्यामपि–न्त्रेण**—आघारे धारायां चेति साहचर्याद्धोमात्मकधारायामेवादिसंयोग इति शङ्कायामाह ;—

**अस्यामपीति**—धारात्वाविशेषात् ॥ १२४६ ॥

**(सू) धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय भूतकृतस्स्थापोढं जन्यं भयमपोढाः सेना अभीत्वरीरिति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य [2]व्यन्तान् गार्हपत्येन कृत्वा सगरास्स्थेत्यभिमन्त्रय जपत्यग्नय आदित्यं गृह्णाम्यह्ने रात्रिमिति सायम् । आदित्यायाग्निं गृह्णामि रात्र्या अहरिति प्रातः ॥ ५ ॥ ॥ ६ ॥ १२४७ ॥**

[व्यन्तकरणानन्तरजपेमतिभेदः]

(भा) व्यन्ताः—अपेताः[3] । गार्हपत्यायतनात् बहिरपोह्य उदक् [4]स्थापयित्वा अग्नये सूर्यायादित्यं गृह्णाम्यह्ने रात्रिं[5] आदित्यायाग्नयेऽग्निं गृह्णामि रात्रिया अहरित्ये[6]वं केचित् संसृष्टहोमे[7] ; तदनुपपन्नम् ; सूर्यायाग्निमित्यपरिपाठात् । अतो नो[9]हः परश्च ॥

---

[1] स्या अपि–ङ. [2] व्यन्तान्-गार्हपत्यस्याग्नेरन्ताद्विगतान् –बहिरायतनाद्गतानित्यर्थः-(रु). [3] पोह्याः–घ. I पेता आयतनाद्बहिर–ङ. पेताआयतनाद्बहिर्–ज. [4] प्रापयित्वा–ज. [5] रात्रि ?–ड. [6] त्येवां केचित् ? ड. [7] होमे कुर्वन्ति–ख. घ. [8] केन्चित् ; संसृष्टहोमे तदनुपपन्नम्–ज. केन्चित् संसृष्टहोमेकुर्वन्ति ; तदनुपपन्नम्–घ. [9] नोहः परश्च–घ. ज. नोहपरश्च ? ङ.

[व्यन्तकरणेमानम्। वाचनिकंक्वाचिन्मध्येऽधिश्रयणम्]

गार्ह–यित्वेति—यन्मध्येऽग्नेरधिश्रयेदिति दोषवचनाद्बहिरायतनादपोहनम्। सान्नाय्यस्य तु गार्हपत्ये श्रपणविधानादायतन एवोदङ्नयनम्॥

[अपरिपाठादिति हेतूपपादनम्]

(वृ) अग्नये–पाठादिति—अग्नये सूर्यायाग्निमिति परिपाठप्रसङ्गात् तदभावात्॥

[परत्रानूह हेतुः]

अतो नोहः परं च—परत्र च नोहः प्रकृतित्वात्॥१२४७॥

(सू) इडायाः पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व। ये ग्राम्याः पशवो विश्वरूपा विरूपास्तेषां सप्तानामिहरन्तिरस्तु। रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति तेष्वग्निहोत्र[1]मधिश्रयति ॥७॥ ॥५६॥ १२४८॥

पञ्चमखिण्डका॥

---

[अधिश्रयणासिद्धिः]

(भा) जातवेदो हविरिति गार्हपत्याभिधानात्॥

[भष्योक्तहेतूपपत्तिः]

जातवेदो–धानात्—इडायाः पदमित्याधिश्रयणमन्त्रत्वात् जातवेदो हविरिदं जुषस्वेति जातवेदश्शब्देन गार्हप[2]त्यस्य संबुद्ध्याऽभिधानात्। प्रातर्होमेऽग्निदेवताभावेपि नोहः॥ १२४८॥

(सू) रेतो वा अग्निहोत्रम्। न सुशृतं कुर्याद्रेतः कूलयेन्नोऽशृत[3]मन्तरेवैव स्यात् ॥१॥५७॥ ॥१२४९॥

(भा) [4]कूलयेत्—दहेत्। रेतः नो शृतमन्त[5]रैव स्यात्।

---

[1] दोहनस्थमपि पयोग्निहोत्रस्थाल्यामानीयतामाधिश्रयति (रु). [2] त्यसंबुद्धय–घ. [3] दहेत् नो अश्रृतं भवति यथा अन्तरा—मध्य एव श्रृताश्रृतयोर्भवति तथैवस्यात् (रु). [4] अन्तरा इव एवस्यात्–ख. घ. ङ. ठ. कुलायंदहे ? ङ.

नोशृत-स्यात्—शृताशृतामित्यर्थः ॥ १२४९ ॥

(सू) [1]समुदन्तं होतव्यम् ॥ २ ॥ ५८ ॥ १२५० ॥

[समुदन्तत्वविवरणम्]

(भा) [2]समुदन्तं—समुद्गतान्तम् । समन्ततः फेनस्योद्गानात् मध्ये यदा नोत्तिष्ठति फेनः । एवं लक्षणं [3]शृताशृतम् ॥ १२५० ॥

(सू) उदन्तीकृत्य [4]प्रतिषिच्यम् ॥ ३ ॥ ५९ ॥ ॥ १२५१ ॥

(भा) उदन्तीकृत्य—उद्गतान्तमेव कृत्वा प्रतिषेकोऽपि कार्यः तृण वेक्षणं कृत्वा ॥ १२५१ ॥

उदन्ती—कृत्वा—यदा एकदेशे फेनोद्गमः ।

[प्रतिषेककर्तव्यताहेतुः]

तत उत्तरं [5]दोहनं क्षालनमित्यादिविधानात् ॥ १२५१ ॥

(सू) अप्रतिषेक्यं स्यात्तेजस्कामस्य ब्रह्मवर्चसकामस्य पाप्मानं [6]तुस्तूर्षमाणस्याथो सर्वेभ्यः कामेभ्योऽथो यः कामयेत वीरो म आजायेतेति ॥ ४ ॥ ६० ॥ १२५२ ॥

(भा) [7]तुस्तूर्षमाणः पाप्मानं यः [8]पश्चान्नेतुमिच्छति । अप्रति[9]षेके कामाः । आज्येन [10]तण्डुलैरोदनेनेति तस्य काम्यानि वाचनिकानि ॥

---

[1] अन्तेषु समुद्गतः फेनो यस्य न मध्ये तत्समुदन्तम् । तावन्मात्रेण शृतं होतव्यम् (रु). [2] इदं हेतुवाक्यं न दृश्यते—ङ. [3] णं श्रुतम् ? ङ. [4] यदोदन्तं भवति तदा प्रतिषिच्यम् प्रतिषेक्यम् । उपरिष्टादब्बिन्दुक्षेपः प्रतिषेकः । तत्प्रकारश्चानन्तरमेववक्ष्यते । (रु). [5] दोहनामित्यादि—घ. [6] तुस्तूर्षमाणस्येत्युकारो बाहुलकम्; तिस्तीर्षमाणस्येत्यर्थः पाप्मानं जिघांसत इति यावत् वीरः पुत्रः । यस्यैवं कामानुसारादित्थं होमं वक्ष्यति । पयसितु नित्यः प्रतिषेकः । (रु). [7] तुस्तूष—ज. [8] पश्चान्ने—च. पश्चान्ने प्रच्छादयितु—ज. [9] तण्डुलैरिति—क. च. ज. [10] षेक्ये—च. ज.

[तुस्तूर्षमाणपदार्थः].

(वृ) तुस्तूर्ष–मिच्छति—तरणमतिक्रम्य पुरोगमनम् । पाप्मानं तीर्त्वा स्वस्य पश्चात्परित्यज्य पुरोगन्तुमिच्छीत यः ॥

अप्रतिषेक्ये कामाः—य [1]एते [2]तेजस्कामादयः तेषां प्रतिषेको न कर्तव्यः ॥

आज्येन–निकानि—तस्य तेजस्कामादेः । काम्यानि

[नित्याधिकारे तण्डुलहोमोपपत्तिः]

द्रव्याणि वाचनिकानीति तेजस्कामादेः प्रतिषेकनिवृत्त्युपदेशात् तेषामाज्यादिद्रव्योपदेशात् आज्यादीन्यपि काम्यसाधनानि । अत एव नित्याधिकारिणोऽप्युपात्तदुरितक्षये[3]च्छाया अविरोधात्तण्डुलहोमोऽपि युज्यते ॥ १२५२ ॥

(सू) [10] अग्नरधिश्रितं वा ॥ ५ ॥ ६१ ॥ १२५३ ॥

(भा) ईषदधिश्रितं वा प्रतिषिच्यते ॥

ईषद्–च्यते—इति ;—अग्नरधिश्रितं वेति सूत्रस्यार्थः ॥

[उदन्तीकृतेषदधिश्रितयोः प्रतिषेकयौगपद्यायोगपरिहारः]

अधिश्रयणानन्तरं वा प्रतिषेकः । [4]उदन्तीकृत्येत्यनेन विकल्पः ॥१२५३॥

(सू) अदब्धेन त्वा चक्षुषाऽवेक्ष इति [5] तृणेन ज्वलतावेक्षते ॥ ६ ॥ ६२ ॥ १२५४ ॥

[ज्वलत्तृणेनावेक्षणे मानम्]

(भा) तृणेन ज्वलतोपरि द्योत[6]यति यथा दीप्तिः प्राप्नोति हविः । अभिद्योतयति अभ्येवैनद्धारयतीति । [7] अवेक्षते हविः ॥

---

[1] एतेतेज–ख. [2] तेजस्कामादयः–घ. [3] येच्छया–क. येच्छया क्षपणेच्छया–घ. [4] उदन्तीकृत्य प्रतिषेकयमधिश्रितमात्रं वेत्यर्थः (रु). [5] तृणेनोपगृहीतेन हविरभिद्योतयन्नवेक्षते । तृणाग्नेः प्रतिसर्गवचनादुत्सर्गः (रु). [6] यते–च. ज. [7] अभ्यवेक्षे हविः–ङ.

(वृ) दीप्तिः--हविः—[1]ज्वालां प्राप्नोति हविः ।

[अभिद्योतनादिश्रुतेरवेक्षणकार्यसिद्धिः]

'अभिद्यो-क्षते हविः—अभिघारणसंस्तवात् ज्वलताऽवेक्षते इत्युक्तेऽभिद्योतनेनाभि[2]घार्यमाणनिर्देशाद्धविस्स्पृष्टज्वालया प्रकाशितं हविरवेक्षते ॥ १२५४ ॥

(सू) [3]दोहनसंक्षालनं स्रुव आनीय हस्ते माविनैषमिति तेन प्रतिषिञ्चत्यपां वा स्तोकेन ॥ ७ ॥ ॥ ६३ ॥ १२५५ ॥

[यथा तथा वा प्रतिषेकनिषेधः]

(भा) यदाऽप्यपां स्तोकेन तदाऽपि स्रु[4]वेण प्रतिषेकः ।

[स्रुवेणैवेति नियमहेतुः]

(वृ) यदा-प्रतिषेकः—संक्षालनतुल्यधर्मत्वात् ॥ १२५५ ॥

(सू) उद्भवस्थोदहं प्रजया प्र पशुभिर्भूयासम् । हरस्तेमा विगादुद्यन् सुवर्गो लोकस्त्रिषु लोकेषु रोचयेति [5]पुनरेवावेक्ष्यान्तरितं रक्षोऽन्तरिता अरातयोऽपहता व्यृद्धिरपहतं पापं कर्मापहतं पापस्य पापकृतः पापं कर्म यो नः पापं कर्म चिकीर्षति प्रत्यगेनमृच्छेति त्रिः पर्यग्नि कृत्वा घर्मोऽसि रायस्पोषवनिरिहोर्जं दृंहेति [6]वर्त्म कुर्वन् प्रागुद्वासयत्युदक् प्रागुदग्वा ॥ ८ ॥ ६४ ॥ १२५६ ॥

---

[1] ज्वाला-घ. [2] घारणनि-घ. [3] दोहनं क्षाल्यते येन तदुदकं केवलं वोदकलेशं स्रुवेणाक्षिपति (रु). [4] वेणैव-घ. [5] पुनरेवेति--पूर्ववत्तृणेन ज्वलतेत्यर्थः (रु). [6] वर्त्म कुर्वन्--कर्षन् (रु).

(सू) [1]न वर्त्म करोतीत्येके ॥ ९ ॥ ६५ ॥
॥ १२५७ ॥

(सू) इह प्रजां पशून् इ॰हेति त्रिर्भूमौ [2]प्रतिष्ठाप्य सुभूतकृतस्स्थ प्रत्यूढं जन्यं भयं प्रत्यूढास्सेना अभीत्वरीरिति गार्हपत्येऽङ्गारान् प्रत्यूह्य ॥ १० ॥
॥ ६६ ॥ १२५८ ॥

षष्ठी खण्डिका ॥

---

(भा) वर्त्म–मार्गः । यदा न वर्त्म तदोत्क्षिप्योत्तार्यते त्रिः प्रतिष्ठाप्यते यत्रोन्नयनं करिष्यति पुनः प्रक्षेपः [3]पर्यूहनम् ॥

(वृ) वर्त्ममार्गः--रिष्यतीति—अपरेण गार्हपत्यं उन्नयनदेशेऽभितरामिति वक्ष्यमाणत्वाद्गार्हपत्यस्य देश उन्नयनस्य पश्चादुन्नयनस्य देशान्तरविधानान्न तत्र त्रिः प्रतिष्ठापनम् ॥ १२५८ ॥

(सू) देवस्य त्वा सवितुः प्रसव इति स्रुक्स्रुवमादाय प्रत्युष्ट॰ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्यारिष्टौ यजमानः पत्नी चेति संमृश्य हिरण्ययाष्टिरस्यमृतपलाशा स्रोतो यज्ञानामित्यग्निहोत्रहवणीमभिमन्त्र्य ओमुन्नेष्यामि हव्यं देवेभ्यः पाप्मनो यजमानमिति सायमाह ओमुन्नयामीति प्रातः ॥ १ ॥ ६७ ॥
॥ १२५९ ॥

---

[1]उद्धृत्योद्वासयत इत्यर्थः (रु). [2]अवरोप्याग्निहोत्रं यत्रोन्नयनमिच्छन्ति तत्र प्रतिष्ठापयति । स्रुक्स्रुवयोरादानमन्त्रस्यावृत्तिः एकलिङ्गत्वात् । प्रतितपनसंमर्शने तु तन्त्रेण विभवत्वात् (रु). [3]प्रत्यूहः–घ.

(भा) देवस्य त्वेत्येकवचनात् प्रतिद्रव्यं मन्त्रावृत्तिः[1] । स्रुक्स्रुवयोः सहादा[2]नमित्युपदेशः । प्रतितपनसंस्पर्शने युगपत् ॥

[स्रुक्स्रुवसहादानप्रतितपनसंस्पर्शनयौगपद्यहेतुः]

(वृ) स्रुक्-पदेश इति—स्रुक्स्रुवमिति तन्त्रेण विधानात् ॥
प्रतित-पत्—तन्त्रेण संभवात् ॥ १२५९ ॥

(सू) **हविर्देवानामसि मृत्योर्मेऽभयं स्वस्ति मेऽस्त्वभयं मे अस्त्वित्युपांशूक्त्वोमुन्नयेत्युच्चैरनुजानाति । अपचारे यजमानस्य [3]स्वयमात्मानमनुजानीयात् ॥**
**॥ २ ॥ ६८ ॥ १२६० ॥**

(भा) [4]अपचारः—कर्म[5]ण्यभावः ॥

[स्वयंहोमेऽनुज्ञानावश्यकता]

स्वयंहोमेऽप्यात्मानं याचतेऽनुज्ञाप्यते च [6]संस्कारार्थत्वात् [7]नान्यावबोधनार्थम् ॥

[उक्तानुज्ञानावश्यकत्वोपपत्तिः]

(वृ) पुरुषसंस्कारार्थत्वादिति—अनुज्ञानेन संस्कृतपुरुषस्योन्नयनकर्तृत्वात् ।

नान्यावबोधनार्थम्—इदं प्रेक्षणम् अनुजानातीति वचनात् ॥ १२६० ॥

(सू) **उन्नीयमान उभौ वाचं यच्छत आहोमात्**
**॥ ३ ॥ ६९ ॥ १२६१ ॥**

---

[1] वृत्तिः । सहादान–ज. [2] नमुपदेशः–घ. [3] अनेनैवन्यायेन स्वयं होमेप्यात्मानुज्ञा यजमानस्य व्याख्याता भवति (रु). [4] अपचारः–असान्निधिः–ख ग. [5] ण्यभावः असन्निधानं यजमानस्य तदाध्वर्युरात्मानमनुजानीयात्–घ. [6] पुरुषसम्–ख. ग. [7] इदं वाक्यं–ज —पुस्तके न दृश्यते.

(सू.) न चाभि[1]मीलते तिष्ठति च यजमानः ॥ ४ ॥
॥ ७० ॥ १२६२ ॥

(भा) न चाभिमीलते आहोमादेव यजमानः ।

(वृ) न चाभि–मानः—अवध्यन्तरानुपादानात् ।

[स्थानावधिः]

स्थानं तु यावदुन्नयनम्[2] ।

(सू) उन्नीत उपविशति ॥ ५ ॥ ॥ ७१ ॥ १२६३ ॥

(भा) [3]इति विधानात् ।

(सू) [4]चतुरुन्नयति ॥ ६ ॥ ७२ ॥ १२६४ ॥

(सू) यं[5]कामयेत पुत्राणामयमृध्नुयादिति तं प्रति-
पूर्णमुन्नयेत ॥ ७ ॥ ७३ ॥ १२६५ ॥

[उन्नयनेकाम्यकल्पाः].

(भा) यस्य पुत्रस्यर्धिमिच्छति तं पुत्रं प्रति [6]चित्ते कृत्वा [7]पूर्ण–
पूर्णस्रुव उन्नीयते ॥

(सू) [8]यदि कामयेत ज्येष्ठतोऽस्य प्रजाऽर्धुका
स्यादिति पूर्णं प्रथमस्रुन्नयेत्तत ऊनतरमूनतरम् ।

---

[1] नमीलयेच्चक्षुः आहोमात्तिष्ठति च। स्वयं होमेऽपि तिष्ठन्नेवोन्नयति । आसीन इत्यपरं विबाधमान आर्तिज्यं बलीय इति न्यायात् (रु). [2] नमेव–क. ग. [3] इदं–क. न दृश्यते. [3] चतुरर्वात्तिन इति शेषः । पञ्चमं जमदग्नीनामित्युत्तरत्र वचनात् इत्याह (रु). [4] यजमानपुत्राणांमध्ये यतममध्वर्युः कामयेतायमृद्धिशीलस्स्यादिति तं प्रतिपूर्णमुन्नयेत्स कथितोभवति । तत्समानस्थानं स्रुवमितरेभ्यः पूर्णमुन्नयेत्यर्थः (रु). [5] पुत्रंकृत्वा–घ. [6] पूर्णस्रुव–घ. [7] यदिज्येष्ठोज्येष्ठ ऋद्धस्स्यादिति कामयेत तदा प्रथमादारभ्य क्रमात् स्रुवान् ह्रासयेत्। यदि पुनः कनिष्ठः कनिष्ठ इति तदा प्रथमादाराभ्य क्रमाद्वर्धयित्वात्यन्तं पूर्णमुन्नयेत् । यदि सर्वे समवीर्या इति तदा सर्वान् समानुन्नयेत्। सर्वेचैतेऽध्वर्योर्यजमानाभिप्रायं विदुषः कामाः। तत्काम्यत्वात्कामानाम्। यथोक्तं याजमाने कामानां क्रमनम् इति (रु).

**कनिष्ठत इत्येतद्विपरीतम् । सर्वे समावद्वीर्या इति समम् ॥ ८ ॥ ७४ ॥ १२६६ ॥**

(भा) [1]ज्येष्ठतः—ज्येष्ठादारभ्य । ज्येष्ठस्य [2]महत्यृद्धिः [3]ऊनतर ऊनतरोऽन्येषाम् ॥

[कामयितरिपक्षभेदः].

[4]अस्य यजमानस्येति व्यपदेशात् । अध्वर्युकाम इत्युपदेशः । यजमानं कामयमानमध्वर्युरनुकामयत इति न्यायः । विपरीते त्वन्त्यः पूर्णः । समावद्वीर्याः—तुल्यवीर्याः ।

**अन्येषाम्**— [5]कनिष्ठकानाम् ।

[उक्तपक्षयोरुपपत्तिः]

**यस्य यजमानस्य—त्युपदेशः इति**—अङ्गफलानामपि यजमानार्थत्वात् अस्येति व्यपदेशाच्च ॥

**यजमानं—न्याय इति**—यजमानस्य फलकामिनः फलप्राप्तेरिति न्यायः ।

**विपरीतेत्वन्त्यः-पूर्ण इति**—प्रथमं न्यूनम् । ततः किञ्चित्पूर्णम् ।

**समा—वीर्याः**—सर्वान् पूर्णानुन्नयति सर्वे हि पुण्या राद्धाः इति ॥ १२६६ ॥

(सू) [6]**यथोपफलम्भं नित्ये कल्प उन्नयति ॥ ९ ॥ ॥ ७५ ॥ १२६७ ॥**

सप्तमी खण्डिका.

---

[1] ज्येष्ठोऽप्रथः ? ज. [2] महान्वृद्धिः—ज. [3] ततऊन—ज. [4]यस्य—ख. ग. ज. [5] कनिष्ठानाम् । अस्य पुत्राणामितिव्यतिरेकविभक्तिदर्शनात्—छ. [6] कामाभावे यथासंभवमुन्नयति (रु).

(भा) यथोपलम्भं यथा कामम् ; अनियमेन । अजमदग्नीनां[1] च भूरि[2]डेति विकल्पः ॥

(वृ) अजमदग्नीनां भूरिडादि विकल्प इति—जमदग्नीनां भूरिडेति नान्वयः । आद्भ्य[3]श्च त्वौषधीभ्यश्चेति पञ्चमं जमदग्नीनामित्यन्वयः । तेषां पञ्चावत्तित्वात् । अतो भूरिडेत्यादि सर्वेषां विकल्पः ॥ १२६७ ॥

(सू) [4]अग्नये च त्वा पृथिव्यै चोन्नयामीति प्रथमं वायवे चत्वान्तरिक्षाय चेति द्वितीयं सूर्याय च त्वा दिवे चेति तृतीयं चन्द्रमसे च त्वा नक्षत्रेभ्यश्चेति चतुर्थम् ॥ १ ॥ ७६ ॥ १२६८ ॥

(सू) अद्भ्यश्च त्वौषधीभ्यश्चेति पञ्चमं जमदग्नीनाम् ॥ ॥ २ ॥ ७७ ॥ १२६९ ॥

(सू) [5]भूरिडा भुव इडा सुवरिडा करदिडा पृथगिडेति वा प्रतिमन्त्रम् ॥ ३ ॥ ७८ ॥ १२७० ॥

(सू) पशून् मे यच्छेत्यपरेण गार्हपत्यमुन्नयनदेशेऽ[6]भितरां वा सादयित्वा गार्हपत्ये हस्तं प्रताप्य [7]संमृशति सजूर्देवैः सायंयावभिः सायंयावनो देवाः स्वस्ति संपारयन्तु पशुभिस्संपृचीय प्रजां दृꣳहेति सायम् । सजूर्देवैः प्रातर्यावभिः प्रातर्यावाणो देवाः स्वस्ति संपारयन्तु पशुभिस्संपृचीय प्रजां दृꣳहेति प्रातः ॥ ४ ॥ ७९ ॥ १२७१ ॥

---

[1] ग्नीनामपिभू—छ. [2] रिडादिर्वि—ख. ग. रिडावि—छ. [3] द्भयश्चेति पञ्चमं—घ. [4] उन्नयतीत्यन्वयः । उत्तरतः स्थाल्या स्रुवमासाद्येत्याश्वलायनः (रु). [5] अत्रापि जमदग्नीनां पञ्चमो मन्त्रः (रु). [6] अभितरामिति सन्निकर्षे गार्हपत्यस्येत्यर्थः. [7] स्रुग्गतम् स्थालीगतं चेति कल्पान्तरकाराः (रु).

(भा) अभितराम्—गार्हपत्यस्यातिसन्निकृष्टम् ॥

(वृ) अभित-कृष्टम्—अपरेण गार्हपत्यमुन्नयनदेशे इत्यन्वयः। ततोऽप्यतिसन्निकृष्टदेशे वा[1] ॥ १२७१ ॥

(सू.) दशहोत्रा चाभिमृश्य पालाशीं समिधं प्रादेशमात्रीमुपरि धारयन् गार्हपत्यस्य समया[2]र्चिर्हरति ॥ ५ ॥ ८० ॥ १२७२ ॥

(भा) समयार्चिः—समीपेनार्चिषः ॥ १२७२ ॥

(सू.) उर्वन्तरिक्षं वीहीत्यु[3]द्द्रवति ॥६॥८१॥१२७३॥

(भा) उर्वन्तरिक्षं वीहीति गमनमन्त्रः ॥

(सू.) उद्द्रवन् दशहोतारं [4]व्याचष्टे ॥ ७ ॥ ८२ ॥ ॥ १२७४ ॥

(सू.) समं [5]प्राणैर्हरति ॥ ८ ॥ ८३ ॥ १२७५ ॥

(सू.) स्वाहाग्नये वैश्वानरायेति मध्यदेशे [6]नियच्छति ॥ ९ ॥ ८४ ॥ १२७६ ॥

[नियमनस्वरूपे मतिभेदः]

(भा) मध्यदेशे विहारस्य नीचैर्यच्छति । केचिद्भूमिं प्रापयन्ति । इयं वा अग्निर्वैश्वानर इति ॥

[पक्षयोरुभयोराशयः]

(वृ) केचित् नर—इति—वाक्यशेषान्तरे भूमेर्वैश्वानरत्वेन निर्देशात् । स्वाहाग्नये वैश्वानरायेति च मन्त्रलिङ्गात् भूमिप्राप्तिरिति केचित् । स्वमते तु अन्यत्र वाक्यशेषाभावान्नीचैःकरणमात्रमेव ॥ ॥ १२७६ ॥

---

[1] देशे—ख. ग. [2] तथा समिधं स्रुचं चाध्याधिगार्हपत्यं हुत्वेत्याश्वलायनः (रु). [3] उद्द्रवति—गच्छति (रु). [4] व्याचष्टे—जपति (रु). [5] समनासिकया हरतीत्यर्थः (रु). [6] विहारस्य मध्यदेशे निगृह्णाति (रु).

(सू) वाताय त्वेत्युद्गृह्णाति ॥ १० ॥ ८४ ॥ १२७७ ॥

(सू) उपप्रेत संयतध्वं मान्तगात भागिनं भागधेया-त्सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यज-मानं च धेह्युपप्रेतमुपभूर्भुवस्सुवरायुर्मे यच्छे-त्यपरेणाहवनीयं दर्भेषु [1]सादयति ॥ ११ ॥ ८५ ॥ ॥ १२७८ ॥

अष्टमी खण्डिका

---

(भा) दर्भेषु सादनं कूर्चे उपसादनीये तस्य धारणम् । उन्नयनदेश उपावहरणीयम् । न वा उन्नयनदेशे दर्भेषु सादनम् । दर्भेषु सादयती-त्यवचनात् ॥

इति श्री धूर्तस्वामिभाष्ये षष्ठे प्रश्ने द्वितीयः पटलः.

---

[धारणे प्रमाणम्]

(वृ) दर्भेषु-धारणम् -- यावज्जीवं पा(पवि)त्रवत्तस्य परिधानीये कर्मणि विनियोगदर्शनात् ॥

उन्नयन-णीयम् —कूर्चं निधाय तस्मिन्नुन्नीय सादयित्वा तेनोपावहरणम् । तस्यापि धारणं यावज्जीवम् । परिधानीये पत्त उपाव-हरणीयं कूर्चमिति विनियोगदर्शनात् ॥

[3] नवा-त्यवचनात् —सादनमात्रनिवृत्तिः उपावहरणं तु कूर्चेनैव तस्य विनियोगदर्शनात्परिधानीये ॥ १२७८ ॥

इति श्रीधूर्तस्वामिभाष्यवृत्तौ रामाग्निचिता विरचितायां षष्ठे प्रश्ने द्वितीयः पटलः.

---

1 पुनः प्राणसममुद्गृह्णाति (रु). 2 पूर्वत्रापरत्र च कूर्चे सादयतीति बोधायनः (रु). 3 योगात्-घ. 4 एतद्विवरणम् ;-नीये इत्यन्तम्-ख. पुस्तके न दृश्यते.

(सू.) यस्याग्ना[1]वुद्ध्रियमाणे हूयते वसुषु हुतं भवति। निहितो धूपायन् शेते रुद्रेषु। प्रथममिध्ममर्चिरालभते आदित्येषु। सर्व एव सर्वश इध्म आदीप्तो भवति विश्वेषु देवेषु। नितरामर्चिरुपावैति लोहिनीकेव भवतीन्द्रे हुतं भवति। अङ्गारा भवन्ति तेभ्योऽङ्गारेभ्योऽर्चिरुदेति प्रजापतावेव। शरोऽङ्गारा अध्यूहन्ते ततो नीलोपकाशोऽर्चिरुदेति ब्रह्माणि हुतं भवति॥ १॥ १॥ १२७९॥

[अग्न्यवस्थाभेदेन होमफलभेदाः]

(भा) उद्ध्रियमाणे नाहवनीयः प्रतिष्ठाप्यते। धार्यते [2] त्वन्येनाहवनीयस्योपरि। [3] शुन्धनपरिस्तरण [4] लोपः। सर्वमन्यत्। धूपायन् शेते [5] धूमायन्नास्ते न ज्वलति। मन्त्रक्रमेणेध्मः प्रक्षि[6]प्यते। यः प्रथमः प्रक्षिप्तः तमर्चि[7]रालभते गृह्णाति। उपदेशः प्रथम[8] मिध्मं यदार्चिर्गृह्णाति तदा होमः। सर्व एवेध्मः—सर्वेषु प्रदेशेषु प्रदीप्तः। नितराम्—नीचै [9] स्तराम्। अर्चिरुपावैति—[10] उद्गच्छति [11]लोहिनीका इव—[12]इवेत्यवधारणम्। शरो भस्म। तदध्यूहन्ते गृह्णन्ति[13]। तस्मिन् नीलोपकाशो नीलवर्णः उत्तिष्ठति॥

---

[1] यैस्त्वाहवनीयायतनस्योपरि ध्रियमाणे इति व्याख्यातम्; तैः भूर्भुवस्सुवरुद्ध्रियमाणमभिमन्त्रयते। यस्याग्निरुद्धृत इत्यादावपि तथा व्याख्यातव्यमित्यास्त तावत् (रु). उद्धरण[1]सधूमत्व[2] प्रथमज्वालाकाष्ठसंबन्ध[3]सर्वेन्धनदीप्ति[4] लोहितवदवस्थान[5]दीप्त्युपरिनिर्गमन [6] अङ्गारोपरिभस्मस्थिति[7]नीलप्रकाशाग्न्युद्गमनरूपास्सप्तावस्था इह स्तूयन्ते न तु तदवस्थे होमः उद्धरणावस्थायां होमासंभवात्। अतः एवंविधानेकावस्थावत्यग्नौ हुतं सर्वास्वेव देवतासु हुतमित्यभिप्रायः; इति व्याचष्टे रुद्रदत्तः. [2] तेऽन्येना-ख. ग. [3] गूढनेति-क. पु पाठः. [4] स्तरणस्य लोपः ?-ज. [5] धूपयान्-न. छ [6] प्यन्ते-ख. ड. [7] रारभते-ज. [8] मध्यमेकमिध्मम्-ड. छ. ज. [9] स्तरम्-छ. [10] उपगच्छति-ङ. ज. उपागच्छति-छ. [11] लोहिनी लोहिनीका इवेत्यवधारणात्-ज. [12] लोहाविनीकेव इवेत्यप-छ. [13] न्ति भस्म-छ.

[तत्तत्कल्पेषु हेत्वपेक्षितांशपूरणादि]

(वृ) उद्ध्रिय-स्योपरि—आहवनीयदेश एव होमस्य युक्तत्वात्। उद्ध्रियमाण इति तद्देश उपरि ध्रियमाणे न गार्हपत्यादुद्ध्रियमाणे।

शुन्धनपरिस्तरणलोपः—भूमावप्रातिष्ठितत्वात्।

सर्वमन्यत्—[1] इध्माधान परिषेकादि।

धूपायन्शेते धूमायन्नास्ते--आयतने निहितो यदा धूपायन्नास्ते॥

न ज्वलति—अस्मिन् पक्षे सर्वं क्रियेत नाभिज्वलयति। तदा होमः॥

मन्त्र-प्यन्ते—प्रथममिध्ममिति दर्शनात्।

यः प्र-लभते-होमः—युगपत् क्षिप्तानामपि क्रमेणार्चिरालम्भे प्रथमालब्धस्य प्रथममिति निर्देशः।

सर्व एवे-त्यवधारणम्—इवशब्द एवशब्दार्थः ॥ १२७९॥

(सू) [2] यदङ्गारेषु व्यवशान्तेषु लेलायद्वीव भाति तद्देवानामास्यं तस्मात्तथा होतव्यम् यथाऽऽस्येऽपिदधात्येवं तदिति विज्ञायते ॥२॥२॥ ॥ १२८०॥

[होमेस्वपक्षः]

(भा) व्यवशान्तेषु—अर्चिर्विरहितेषु। [3]लेलायद्दीप्यमानमिव [4] भाति तद्देवानामास्यम्—मुखम्। तथाभूतेऽग्नौ होतव्यम्। यथा मुखे क्षिपति एवं लक्षणं तस्मिन् हुतम्॥ १२८०॥

---

[1] क्रियेत इध्मा—छ. [2] अवस्थेयं दर्शपूर्णमासयोरेवव्याख्याता तत्रापि नित्या च तथाऽऽदरश्च दर्शितोऽस्या देवतास्यत्ववचनात् (रु). [3] लेलायद्दीप्यमानं—ज. लेलायन्दीप्यमान इव—ङ. [4] विभाति—ङ. छ.

(सू.) विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति [1]होष्यन्नप उमस्पृश्य [2]पालाशीं समिधमादधा-त्येकां द्वे तिस्रो वा ॥ ३ ॥ ३ ॥ १२८१ ॥

[उपस्पर्शनकालः समिधां स्वरूपादित-दाधानविषयमतिभेदश्च]

(भा) होष्यन्नप उपस्पृशेदिति ब्राह्मणोपदिष्टस्य कालनियमः । [3]सर्वास्समिधः पालाश्यः पुनर्विधानात् । एकैवोपरि धार्यते धारणकाले सर्वासाम [4]विधानात् । अतो धारणं हविस्संस्कारः । यजुषा समिदनुग्रहात् । यदा तूष्णीमुत्तराऽऽहुतिः तदा नियता द्वितीया समित् । [5] उत्तराहुतिश्च [6]तस्यामेव । समित्त्रये सर्वासु [7]पूर्वाहुतिः । केचित्सोमयाजिनो द्वितीया अग्निचितस्तृतीयेत्याहुः ॥

[उपस्पर्शनकालनियमोपपत्तिः]

होष्यन्न-नियमः—(अपामुपस्प [8]र्शनस्यादौ प्राप्तस्यास्मिन् काले[9] [10]नियमः । ) [11]तथा वृष्टिरसीत्यपि सर्वान्ते प्राप्तं प्रतिकृष्यते [12]हुत्वा उप[13]स्पृशेदिति ॥

[समिधां पालाशत्वसाधनविवरणम्]

सर्वास्स-धानात्—उपरिधारणे पालाशीविधाने [14]सत्यपि पुनर्विधानात्तिसृणामपि पालाशीत्वम् ॥

---

[1] होष्यन्नित्यनेन होष्यन्नप उपस्पृशेदिति ब्राह्मणं व्याचष्टे। तत्रकालो विवक्षित इति. [2] पुनः पालाशवचनात्सर्वाः पालाश्यः ; (रु). [3] सर्वासामपि स्रुचा धारणमुक्तं हिरण्यकेशिना (रु). [4] मपि विधानात् ?–क. [5] कुण्डलितं–छ. पुस्तके न दृश्यते. [6] तस्याम्–क. ङ छ. ज. [7] पूर्णाहुतिः–क. [8] दर्शनादौ–ग. छ. [9] कुण्डलितं–घ पुस्तके न दृश्यते. [10] कालनियमः–छ. [11] तदा–छ. [12] हुत्वाप उप ? छ. [13] स्पृश्येति घ. छ. [14] त्यपीह–घ. छ.

[द्वितीयसमिन्नियमोपपत्तिः]

**यदा-समित्**—अस्यार्थः—यजुषान्यामाहुतिं जुहोति उभे एव समिद्वती आहुती जुहोतीति निर्देशात् यदा तूष्णीमुत्तराहुतिः तदा द्वितीया समिन्नियता ॥

[तस्यामेवेत्यंशविवरणम्]

**उत्तरा-मेवेति**—अथ कस्यां समिधि द्वितीयामाहुतिं जुहोतीत्युत्तराहुतेरपि समिदपेक्षितत्वात् यजुषा समिदनुग्रहाभावात् अदृष्टार्थत्वाय तस्यामेवोत्तराहुतिः ।

[आहुतिद्वयाधारसमित्संख्या पक्षभेदः]

**समित्र-हुतिः**—आहुतीनां धृत्यै अथो अग्निहोत्रमेवेध्मवत्करोतीति वाक्यशेषात्समित्त्रयस्योपरि पूर्वाहुतिः । उत्तराहुतिरपि सयजुष्कपक्षे [1] समित्पूर्वार्धे । अयजुष्कपक्षे द्वितीयस्यामेव समिधि ॥

[द्वितीय तृतीय समिधोर्मतिभेदहेतुः]

**केचित्सो-त्याहुः**—कर्मभूयस्त्वे समिद्भूयस्त्वं युक्तम् न तुल्यविकल्पः इति इष्टकाव्यपदेशान्मन्त्रे तृतीयस्याग्निचित्सम्बन्धः ॥ १२८१ ॥

**(सू) एषा ते अग्ने समिदिति । हिरण्ययं त्वा वंशं स्वर्गस्य लोकस्य सङ्क्रमणं दधामीति द्वितीयाम् । रजतां त्वा हरितगर्भामग्निज्योतिषमाक्षितिं कामदुघां स्वर्ग्यां स्वर्गाय लोकाय रात्रिमिष्टकामुपदधे तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति सायं तृतीयाम् । हरिणीं त्वा रजतगर्भां सूर्यज्योतिषमक्षितिं कामदुघां स्वर्ग्यां स्वर्गाय लोकायाहरिष्टकामुपदधे इति प्रातः ॥ ४ ॥ ४ ॥ १२८२ ॥**

नवमी खण्डिका

---

[1] समित्सुपू-छ. [2] यायामेव-छ.

(सू.) समिधमाधाय प्राण्या[1]पान्य निमील्य वीक्ष्य हुत्वा ध्यायेद्य[2]त्कामस्स्यात् ॥ १ ॥ ५ ॥ १२८३ ॥

(भा) प्राणनमुच्छ्वासः ऊर्ध्वो वायुरपाननम् । निमीलनं—स्थगनमक्ष्णोः । विविधमीक्षणं—वीक्षणम् ॥

[समिदाधानपूर्वक्रमः ततः कर्तव्यक्रमश्च]

गृहीत्वा स्रुचमेतानि करोति । आश्रुतप्रत्या[3]श्रुतान्येतानि कृत्वाभिक्रमणं व्याहृतिजपो होष्यतः । ततः प्रधानाहुतिः ध्यानम् ॥

[अपाननपदार्थः]

(वृ) ऊर्ध्वो—ननम्—[4]बाह्यवायोरूर्ध्वनयनम् ॥

[कर्तव्यानां स्रुग्ग्रहणपूर्वकत्वेमानम्]

गृहीत्वास्रु—न्येतानीति—प्राणो वा अग्निहोत्रस्याश्रावितमितिनिर्देशात् स्रुचं गृहीत्वाऽऽश्राव[5]णादीनि ; प्रयोगदर्शनात् । प्राणनादीनामपि स्रुचं गृहीत्वा प्रयोगः ॥

[ध्यानात्पूर्वमभिक्रमणोक्त्याशयः]

कृताभि—ष्यतः— पाठक्रमादर्थक्रमस्य बलीयस्त्वात् कृत्वाऽभिक्रमणमिति ध्याना[6]त्पूर्वमपकृष्य व्याख्यातम् ॥

[ध्याने कर्ता]

ततःप्र—ध्यानम्—ध्यानमाध्वर्यवम् । यत्कामो यजमानः तद्ध्यानम् ॥ १२८३ ॥

(सू) हुत्वा [7]महदभिवीक्षते ॥ २ ॥ ६ ॥ १२८४ ॥

---

[1] अपाननं निश्वासः (रु). [2] यत्कामस्स्याद्यजमानस्तदध्वर्युर्ध्यायेत् यथापुत्रोऽस्यास्त्विति. [3] श्रुतसंस्तुतान्येतानि—ज. [4] बाह्यवायोः—घ. छ. [5] णादि प्र—घ. [6] त्पूर्वमित्यप कृष्यव्याख्या—घ. छ. [7] हुत्वा तदेव हुतं महद्ध्यायिष्टमभिवीक्षत इत्यर्थः । अथवा पूर्वाहुत्यर्थं प्रमादाहद्धुत्वातदेवाभिवीक्षते प्रायश्चित्तार्थन्मित्यर्थः (रु).

[सूत्रमहदर्थः तदनन्तरकर्म हुत्वेति पुनरुक्तिफलम्]

(भा) महदाकाशः। अस्मिन्महत्य[1]र्णवे इति लिङ्गात्। तस्य वीक्षणम् ततो लेपनिमार्गादि। हुत्वेति पुनर्वचनात् समन्य हुत्वा भूर्भुवस्सु- परित्युपस्थानं [2]वीक्षणान्तं कृत्वा क्रियते ॥ १२८४॥

(सू) आदीप्तायां [3]जुहोति श्यावायां वा यदा वा समतीतार्चिर्लेलायतीव। धूपायत्यां ग्रामकामस्य ज्वलत्यां ब्रह्मवर्चसकामस्य अङ्गारेषु तेजस्कामस्य ॥ ३॥७॥१२८५॥

(भा) आदीप्ता—ज्वलिता। श्यावा—[4]श्यामभावमा[5]पन्ना गतार्चिर्वा समित्। ज्वलत्यां नित्ये कामः॥

[ज्वलितायां होमे भाष्यस्थविशेषविवरणम्]

(वृ) ज्वल-कामः—आदीप्तायां जुहोतीति नित्यवद्विधानात्। ज्वलत्यां ब्रह्मवर्चसकामस्येति फलेच्छायां सत्याम्; तस्यामवस्थायां नित्यानुष्ठानादेव फलसिद्धिः अनि[6]च्छतोऽपीति केचित्॥

गतार्चिर्वा—यदा वा समतीतार्चिरि[7]स्यायमर्थः॥

(सू) द्व्यङ्गुले मूलात्स[8]मिधमभिजुहोति ॥ ४॥८॥ ॥१२८६॥

[समिदुपरिहोमे विशेषः]

(भा) मूलादारभ्य द्व्यङ्गुले॥

(वृ) मूला-ङ्गुले—अतीते जुहोति न मूले मूलादिति पञ्चमी- निर्देशात्॥ १२८६॥

---

[1] र्णवेअन्तरिक्षे भवा अधीतिलिङ्गात्—ख. ग. [2] वीक्षणं कृत्वा—ङ.
[3] समिधस्त्वायास्तिस्रोऽवस्थानित्याः। शेषाः काम्याः। तत्र श्यावा श्यामीभूता(र).
[4] श्यावभाव—ज. [5] पन्नासमिद्गतार्चि—ख. ग. घ. [6] च्छातोऽपि—ख. ग.
[7] तस्यार्थः—ख. ग. घ. [8] समिदमभि समिधि (र).

(सू) [1] अभिक्रामं सायं जुहोत्यवक्रामं प्रातः ॥ ५ ॥
॥ ९ ॥ १२८७ ॥

[अभिक्रमावक्रमपदार्थौ]

(भा) अभिक्रामं—अभिक्रम्याभिक्रम्य आहवनीयस्य [2] समीपम् ; अवक्रामं अवक्रम्यावक्रम्य पश्चात्सरणम् ॥ १२८७ ॥

(सू) उभयत्र वाऽभिक्रामम् ॥ ६ ॥ १० ॥ २८८ ॥

(भा) उभयत्र—उभयोः कालयोः ॥

(सू) भूर्भुवस्सुवरिति [3] होष्यन् जपति ॥ ७ ॥ ११ ॥
॥ १२८९ ॥

[पुनर्होष्यत्पदकृत्यम्]

(भा) होष्यन्निति पुनर्वचनं अर्थकृत्यप्रतिषेधार्थम् ॥

(वृ) होष्य-धार्थम्—होष्यन्नप उपस्पृश्येति प्रकृतेऽपि होष्यन् जपतीति पुनर्वचनम् ॥ १२८९ ॥

(सू) अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायमग्निहोत्रं
जुहोति सूर्यो ज्योतिस्सूर्यस्स्वाहेति प्रातः ॥ ८ ॥
॥ १२ ॥ १२९० ॥

(सू) संसृष्टहोमं [4] वा अग्निर्ज्योतिर्ज्योतिस्सूर्यस्स्वा-
हेति सायम् सूर्यो ज्योतिर्ज्योतिरग्निस्स्वाहेति प्रातः॥
॥ ९ ॥ १३ ॥ १२९१ ॥

---

[1] अग्निं प्रतिक्रान्त्वा सायमग्नेः प्रतीपं क्रान्त्वा प्रातः (रु). [2] समीपे—ङ.
[3] होष्यन्निति पुनर्वचनं अवश्यकृत्यैरप्यव्यवायार्थम् (रु). [4] कुर्यादिति शेषः। संसृष्टेन मन्त्रेण होमः—संसृष्टहोमः। संसृष्टाभ्यां देवताभ्यां वा (रु).

(सू) इषे त्वेति स्रुङ्मुखा[1]दवाचीनं सायं लेपमव-
माष्टर्यूर्जे त्वेति । ऊर्ध्वं प्रातः ॥१०॥१४॥१२९२॥

(भा) अवाचीनं—पश्चिमापवर्गम् । अवमार्ष्टि—गृह्णाति । हुतशेषा-

[सूत्रोक्तावमार्जनप्रकारः प्रकारान्तरसंभवश्च]

दधोमुखेन हस्तेन ऊर्ध्वं प्रागपवर्गमुत्तानेन हस्तेन । यदा त्वन्यैर्द्रव्यै-र्होमः तदा [2] पार्श्वाद्बिलाद्वा गृह्णाति ॥

(वृ) अवाचीनं —[3]प्रकृतत्वात् ॥ १२९२ ॥

(सू) ओषधीभ्यस्त्वौषधीर्जिन्वेऽति बर्हिषि लेपं
निमृज्य वर्चो मे यच्छेति स्रुचं सादयित्वा अग्ने
गृहपते मा मा संताप्सीरात्मन्नमृतमाधिषि प्रजा
ज्योतिरदब्धेन त्वा चक्षुषा प्रतीक्ष इति गार्हपत्यं
प्रतीक्ष्य भूर्भुवस्सुवरित्युत्तरामाहुतिं [4] पूर्वार्धे समिधि
जुहोति तूष्णीं वा ॥ ११ ॥ १५ ॥ १२९३ ॥

[लेपनिमार्गस्रुक्सादनं एकत्र]

(भा) बर्हिष्युपसादनीये क्षिपति । तस्मिन्नेव स्रुक्सादनम् । प्रतीक्षणं

[प्रतीक्षणे विशेषः समित्परिग्रहमतिभेदः]

गार्हपत्याभिमुखेन पूर्वस्मिन् भागे समिधि । यदैका समित् [5] समित्त्रयं वा । समिद्द्वयपक्षे उत्तराहुत्यर्था द्वितीया समित् । [6] प्रथमायां पूर्वाऽऽ-हुतिः ॥ ९६ ॥

(वृ) प्रतीक्षणम्—प्रतिशब्दोपादानात् ॥ १२९३ ॥

दशमीखण्डिका

———

[1] अवाचीनमग्रादारभ्याबिलात् । तद्विपरीतमूर्ध्वम् । तण्डुलादिभिर्होमे पार्श्वतो मार्जनं सामर्थ्यात् (रु). [2] पश्चाद्बिलाद्वा—घ. [3] इदं ख. ग. घ. पुस्तकेषु न दृश्यते. [4] पूर्वार्धेऽग्नेस्समिधि जुहोति (रु). [5] त्रयस्य वा—ख. ग. रु. [6] पूर्वाहुतिः प्रथमायाम्—ख. ग. छ.

(सू.) [1]न समिदभिहोतव्या इत्येके ॥ १ ॥ १६ ॥ ॥ १२९४ ॥

[[2]समिदनभिहोमे आहुतिदेशादिविशेषः]

(भा) [3]न वा समिदभिहोतव्या पूर्वस्मिन्नेवाग्नेर्भागे आहुतिः ॥

(वृ) न समिदभि--न समिदभिहोतव्या इत्यस्मिन् पक्षे एका समित्सु च उपरि धार्यते संस्कारार्थं हविषःक्षिप्यते चाहवनीये । तस्यां मूलात् द्व्यङ्गुले पूर्वाहुतिः । अग्नेः पूर्वार्ध उत्तराहुतिः । केचिद्धोमद्वयं न समिधीति[4] ॥ १२९४ ॥

(सू.) [5]वर्षीयसीमुत्तरामाहुतिं हुत्वा भूयो भक्षायावशिनष्टि ॥ २ ॥ १७ ॥ १२९५ ॥

(भा) वर्षीयसी—बह्वी पूर्वस्याः । भक्षार्थं तु तस्या अपि बहु ।

(सू.) यं कामयेत पापीयान् स्यादिति भूयस्तस्य पूर्वं हुत्वोत्तरं कनीयो जुहुयात् ॥ ३ ॥ १८ ॥ ॥ १२९६ ॥

(भा) कनीयः—अल्पीयः पूर्वस्माद्धोमात् ॥ १२९६ ॥

(सू.) [6]हुत्वा स्रुचमुद्गृह्य रुद्रमृडानार्भव मृडधूर्तनमस्ते अस्तु पशुपते त्रायस्वैनमिति त्रिस्स्रुचाग्निमुदञ्चम[7]तिवल्गयति ॥ ४ ॥ १९ ॥ १२९७ ॥

[हुत्वापदकृत्यं उद्गूहणवलगनस्वरूपं च]

(भा) हुत्वेति पुनर्वचनं सवार्थम्; इतरथा भूयस्यामेव पूर्वाहुतौ स्रुच

---

[1] न वा समि–ख. ग. घ. ङ. [2] न समिदभिहोतव्योत्तराहुतिः । तदाऽपि पूर्वार्ध एव होमः (रु). [3] न वा पूर्वस्मिन्नेवाग्नेर्भागे आहुतिः न समिदभिहोतव्या इत्यस्मिन् पक्षे–ख. ग. [4] धीति एकेषां मते–ख. ग. [5] पूर्वाहुतेर्भूयस्युत्तराऽऽहुतिः ततोऽपि भूयान् भक्षार्थशेषः (रु). [6] हुत्वेत्येतदसंदेहार्थम् । असति हि तस्मिन् वचने उत्तरं कनीयो जुहुयात् स्रुचमुद्गृह्येत्यप्यन्वयः प्रतीयेत(रु) [7] अतिवल्गयति—कम्पयति ज्वालाम् (रु).

उद्गूहणं स्यात्। ऊर्ध्वमुत्क्षेपणमुद्गूहणम्। अतिवल्गनं—अतिकम्पनम्; यथाग्निरुद्गच्छति तथा कंपयति ॥ १२९७ ॥

(सू) [1] पूर्ववल्लेपमवमृज्य [2] प्राचीनावीती स्वधा पितृभ्यः पितृन् जिन्वेति दक्षिणेन [3] वेदिं भूम्यां लेपं निमृज्य प्रजां मे यच्छेति स्रुचं सादयित्वा वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामिति हुत्वाऽप उपस्पृश्य [4] अन्तर्वेदि [5] स्रुक्। अथाङ्गुल्यापादाय पूषासीति लेपं प्राश्नात्यशब्दं कुर्वन्नतिहाय दतः॥५॥ २०॥ १२९८॥

[अवमार्गादौ प्राचीनावीते मतिभेदः हुत्वेति पदकृत्यं च]

(भा) लेपावमा[6]र्गेऽपि प्राचीनावीती पित्र्यर्थत्वात्। निमार्गे [7] प्राचीनावीतं सिद्धम्। पूर्ववत्—पूर्वेण तुल्यम्; यथा सायंकाले प्रातश्च पूर्वाहुतौ कृतो निमार्गः। दक्षिणेन वेदिदेशाददूरेण दक्षिणतः। उपदेशो यज्ञोपवीत्येव [8]निमार्गं कृत्वा प्राचीनावीती दक्षिणेन वेदिं निमार्ष्टि। [9] हुत्वेति पुनर्वचनात् भवतं न इत्युपस्थानम् वारुण्यर्चा [10]-[11] होमो दाक्षिणेत्ये [12]तानि कर्माणि वृष्टयन्ते। अन्तर्वेद्यवस्थितायां स्रुचि एकयाऽङ्गुल्या गृह्णाति। अतिहाय दतः—परित्यज्य दन्तान् प्राश्नाति।

---

[1] पूर्वाहुतिवत्—(रु). [2] अविस्मरणार्थं लेपमार्जनोत्तरकालार्थं वेदमुच्यते (रु) [3] इति वेदिदेशो लक्ष्यते वेद्यभावात् (रु). [4] इति होष्यन्नप उपस्पृश्येत्यनेन व्याख्यातः (रु). [5] क्रियाविशेषणम्—यथान्तर्वेदि स्रुग्भवति न त्वात्ता तथेत्यर्थः। वाक्य भेदेन वा योजना—अन्तर्वेदि स्रुग्भवति अथाङ्गुल्यापादायेति। अङ्गुल्या ययाकयाऽपि अनामिकयेतितु कात्यायनः॥ अतिहाय अतीत्य (रु). [6] र्गोऽपि प्राचीनावीतिना—ख. [7] र्गेऽपि प्रा—घ. छ. ख. ग. [8] निमार्गे—ङ. [9] लेपावमार्गौ—च. [10] इषेत्वेति पुन ? च. [11] होमः एकहायनो दक्षिणे—ख. घ. च. [12] त्यतानि वृष्टयन्ते—ङ.

(वृ) निमार्गे–सिद्धम्–'ता जाताः पितरो विषेणालिम्पन्' इत्युपक्रम्य 'तेभ्य एतद्भागधेयं प्रायच्छन् यद्धुत्वा निमार्ष्टि' इति लेपनिमार्गस्यापि पित्रर्थता ॥

उपदेशो–निमार्ष्टि—अस्यार्थः—'प्राचीनावीतिना प्रसव्यम् इत्येव पित्रर्थत्वाल्लेपावमार्गप्रभृति प्राचीनावीतित्वे प्राप्ते पूर्ववल्लेपमवमृज्य प्राचीनावीती दक्षिणेन वेदिमिति पुनः प्राचीनावीतग्रहणं क्रमार्थमिति ॥ १२९८ ॥

(सू) अप [1] आचम्यैवं पुनः [2] प्राश्याचम्य बर्हिषोपयम्य उदङ्ङावृत्योत्सृप्य गर्भेभ्यस्त्वा गर्भान् प्रीणीह्याग्नेयं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये। आत्मसनि प्रजासनि पशुसन्य भयसनि लोकसनि वृष्टिसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धेहि रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेत्युदग्दण्डया प्राग्दण्डया वा स्रुचाऽऽचामति ॥ ६ ॥ २१॥ १२९९ ॥

एकादशी खण्डिका.

———

(भा) अपामाचमनं भक्षणम्। शौचार्थं पश्चादाचमनम्। पुनश्च प्राशनं लेपस्य आचमनं चापां शौचार्थं च पश्चात्। बर्हिषि तृणान्य पाक्त[3]तान्यधस्ताद्धार्यन्ते। उदङ्मुखः पर्यावर्तते प्रसव्यमुत्सृप्य तत उदग्गत्वा गर्भेभ्यस्त्वेति भक्षयति स्रुचैव ॥

---

[1] अप आचम्येति प्राश्याचम्येति च अपां भक्षणविधिः न तु शौचार्थाचमनानुवाद इति केचित् (रु). [2] बर्हिषोपयम्य स्रुचाचामतीत्यन्वयः (रु). [3] त्यतान्यधस्ताद्धार्यन्ते च.

[आचमनस्य अत्र सूत्रेषु सर्वत्र भक्षणरूपता]

(वृ) **अपामाचमनं भक्षणम्**—सूत्रोक्तं सर्वत्राचमनं भक्षणम्।

**शौचार्थं पुनराचमनम्**—स्मार्तम्।

**तृणान्य-र्यन्ते**—तृणानीति जात्याख्यायामेकस्मिन् बहुवचनम् ॥ १२९९ ॥

(सू) [1]**सौर्यं हविरिति प्रातर्मन्त्रं संनमति ॥ १ ॥**
**॥ २२ ॥ १३०० ॥**

[मन्त्रसन्नामे पक्षभेदः]

(भा) [2]सूर्यः प्रजामिति संनमति। आग्नेयं सौर्यं हविस्सूर्योग्निः प्रजा[3]मिति संसृष्टहोमे। अग्निः प्रजामित्यविकार इत्युपदेशः।

(वृ) **सूर्यः-नमति**—सौर्यं हविरित्युपादानस्य प्रदर्शनार्थत्वात्।

**आग्नेयं-पदेशः**—प्रातर्होमेऽपि यावदुक्ता[4]विकार एवेति ॥ ॥ १३०० ॥

(सू) **द्विः स्रुचं निर्लिह्याद्भिः पूरयित्वोच्छिष्टभाजो जिन्वेति [5]पराचीनं निनीयाचम्याग्रेणाहवनीयं दर्भैरग्निहोत्रहवणीं प्रक्षालयति ॥ २ ॥ २३ ॥**
**॥ १३०१ ॥**

[निर्लेहनादिकर्मक्रमः]

(भा) भक्षयित्वा द्विः जिह्वयाऽवलेहनम्। उच्छिष्टभाज इत्युच्छिष्टं पराचीनमनिवर्तयन् पुरस्तान्निनयति। पश्चादाचामति। प्रक्षाल्य दर्भैः पुनराचमनम्।

(वृ) **भक्ष-न्निनयति**—उच्छिष्टोऽनाचान्त एव।

**पश्चादाचामति**—निनीय शेषं भक्षयति।

---

[1] सौर्यं हविरित्येतत् सूर्यः प्रजामित्येतत्प्रदर्शनार्थम् सूर्यः प्रजा-मित्येव बोधायनः संसृष्टहोमे चोभयं भवति यथाऽऽग्नेयं सौर्यं हविरिति (रु). [2] सौर्यं हविस्सूर्यः-च. [3] मित्यविकार उपदेशः च. [4] क्त्वविकार-ख. ग. घ. [5] पराचीनमनावृत्यासकृदेवापो निनीयतत आचामति न तु भक्षणानन्तरम् (रु).

**प्रक्षा–चमनम्**—शौचार्थम् । स्वाहाकारप्रदानेषु भक्षोऽपि विद्यत इत्यपरमिति भरद्वाजः ॥ १३०१ ॥

**(सू) [1]न मांसधौतस्य देवा भुञ्जत इति विज्ञायते ॥ ३ ॥ २४ ॥ १३०२ ॥**

[हस्तेन क्षालननिषेधस्सर्वत्र]

(भा) मांसधौतम्—हस्तधौतम् । तत् प्रतिषिध्यतेऽन्यत्रापि । निवर्तमानः प्रदक्षिणमेति ॥

(वृ) **मांस–त्रापि**—न मांसधौतस्य देवा भुञ्जत इति देवानर्हत्वेन सिद्धवदनुवादात् सर्वत्र प्रतिषेधः ॥

[प्राशित्रक्षालनसाधनमन्यदपीष्यते]

कर्ममध्ये होमपात्रादिषु हस्तप्रतिषेधादन्येनापि येन शक्यते तेनापि प्रक्षालनं लभ्यते ॥

**निवर्त—मेति**—उदङ्ङावृत्तौ निवर्तमानः प्रदक्षिणं निवर्तते, दक्षिणा पर्यावर्तत इति श्रुतेः । अतो दर्भैरग्निहोत्रहवणीमित्यस्मात्पूर्वं उदग्गत एवोदङ्मुखः करोति ॥ १३०२ ॥

**(सू) अद्भिस्स्रुचं पूरयित्वा सर्पेभ्यस्त्वा सर्पान् जिन्वेति प्रातिदिशं [2]व्युत्सिच्य सर्पान् पिपीलिका जिन्व सर्पेतरजनान् जिन्व सर्पदेवयजनान् जिन्वेति तिस्रस्स्रुच उत्सिच्य चतुर्थीं पूरयित्वा**

---

1 यद्धि पात्रं मांसधौतं–हस्तधौतं भवति तस्मिन् सम्भृतं हविः न देवा भुञ्जते । अतो दर्भैरेव प्रक्षालयेत् । अत एव वचनादन्यत्रापि हविर्धारणार्थानि पात्राणि न हस्तेन क्षालयितव्यानि (रु). त्रापि इदं प्र

2 विभागेनोर्ध्वसेको व्युत्सेकः। स्वहस्तेन भवति स्रुचा दुश्शकत्वात् । तथोर्ध्वायामपि दिशि भवति, पूर्णपात्रव्युत्सेके तथा दर्शनात् । स्रुचः—स्रुक्परिमिता आपः ; पत्न्यनेकत्वे शेषमञ्जलिषु विभज्य निनयति ॥ (रु).

पृथिव्याममृतं जुहोमि स्वाहेत्यपरेणाहवनीयं निनीय शेषं पत्न्या अञ्जलौ गृहेभ्यस्त्वा गृहान् जिन्वेति ॥ ४ ॥ २५ ॥ १३०३ ॥

[व्युत्सेके करणं उत्सेकपदार्थः]

(भा) व्युत्सेको हस्तेन स्रुचा वा प्रतिदिशम् । उत्सेकः [1] ऊर्ध्वसेकः ॥

[अञ्जलिनिनयने पत्नीविषये पक्षभेदः]

[2]गृहतृप्तेर्मुख्याया अञ्जलौ निनयनम् । प्रति[3]पत्न्युपदेशः ॥

[गृहपदार्थविवक्षाभेदेन मतिभेदस्योपपत्तिः]

(वृ) व्युत्से-दिशम्—स्रुच आहवनीयस्य वा प्रतिदिशम् ॥

गृहत्-नयनम्—गृहान् जिन्वेति बहुवचनादगारभिप्रायः कर्माभिप्रायो वा गृहशब्दो न पत्न्यभिप्राय इति मुख्याया अञ्जलौ ॥

प्रतिपत्न्युपदेशः— गृहशब्दस्य संनिहितपत्नीवचनत्वाभिप्रायेण बहुवचनं पाक्षिकानुवादः ॥ १३०३ ॥

(सू) यदि पत्नी [4] नानुष्याद्देवानां पत्नीभ्योऽमृतं जुहोमि स्वाहेति पत्न्यायतने निनयेत् ॥ ५ ॥ ॥ २६ ॥ १३०४ ॥

[पत्न्यसन्निधाने कार्यं पत्नीपदार्थे विशेषश्च]

(भा) यदि पत्नी न भवेत्; पत्नीनामायतनं पत्न्यायतनम् । देवपत्नी नामपरेण गार्हपत्यम् । तत्र निनयनं ‘ देवानां पत्निया समदं दधीतेति ’ यजमानपत्न्या इत्युपदेशः ॥

(वृ) यदि-वेत्—असन्निहिता आर्तवादिना, नापत्नीकाग्निहोत्राभिप्रायेण, पत्नीवदित्युक्तत्वात् ॥

---

1 ऊर्ध्वं सेकः—छ. 2 गृहपतेर्मु—छ. गृहतृप्तर्मु ? ज 3 त्नीत्युप—क.
4 नानुष्यात्—नान्वासीना स्यात् पूर्ववदनालम्भुकत्वादिना (रु).

[पत्न्यायतनपदविवक्षितदेशः]

पत्नीना–त्नीनाम्—पत्न्यायतने निनयेदिति देवपत्नीनामायतने गार्हपत्यस्य पश्चाद्देशे ॥

[गार्हपत्याद्पपरेण निनयनोपपत्तिः]

'यत्पश्चात्प्राच्यन्वासीत' इत्युक्त्वा 'देवानां पत्निया समदं दधीत' इति पश्चादन्वासने देवपत्नीस्पर्धादर्शनात् देवानां पत्नीभ्योऽमृतमिति मन्त्रलिङ्गाच्च । तत्रापरेण गार्हपत्यदेशे निनयनम् ॥

[उपदेशपक्षे हेतुः]

यज–देशः—सन्निहितत्वात् 'देशाद्दक्षिणत उदीच्यन्वास्ते' इत्यस्मिन् देशे ॥ १३०४ ॥

(सू) [1] अपरं स्रुच्यानीय विप्रुषां शान्तिरसीत्युन्नयनदेशे निनीयाहवनीये स्रुचं प्रताप्य हस्तोऽवधेयो हस्तो वा प्रताप्य स्रुच्यवधेयः ॥ ६ ॥ २७ ॥ ॥ १३०५ ॥

(भा) हस्तः क्षेप्तव्यः स्रुचि प्रतप्तायां प्रताप्य वा हस्तं स्रुचि क्षिपति ॥

(सू) तयोदगुद्दिशति सप्तर्षिभ्यस्त्वा सप्तर्षीन् जिन्वेति ॥ ७ ॥ २८ ॥ १३०६ ॥

द्वादशी खण्डिका ॥

———

(भा) [1]तया हस्त[2]संमृष्टया स्रुचा स[3]व्यावृत उदङ्मुख उद्दिशति ॥

---

1 अपरमुदकमिति शेषः । स्रुग्घस्तयोः प्रतापने विकल्पः । अवधानं तत्रोभयत्र हस्तस्यैव ॥ (रु). 2 संस्पृष्टया–च. 3 व्याहृत–ख. ग.

तमूष्माणं सप्तर्षिभ्यस्त्वेति स्रुचा । [1] तेन सप्तर्षीणां हि तृप्तिः । पश्चात्प्रदक्षिणमावर्तते । अन्यत्राप्यनेनैव [2] निदर्शनेन ॥ १३०६ ॥

इति श्रीमदापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये
षष्ठे प्रश्ने तृतीयः पटलः ॥

---

[पश्चादित्यादिभाष्योपपत्तिः]

(वृ) तेन–र्तते—[3] दक्षिणा पर्यावर्तत इति श्रुतेः ॥

अन्यत्रा–नेन—अन्यत्रापि यत्र प्रसव्यमावृत्तं तत्र प्रदक्षिणमावर्तनम् । 'स्वमेव वीर्यमनुपर्यावर्तते आदित्यस्यैवावृतमनुपर्यावर्तते' इति साधारणलिङ्गत्वात् ॥

इति श्रीरामाण्डारवृत्तौ षष्ठेप्रश्ने
तृतीयः पटलः ॥

---

(सू) **अग्ने गृहपते परिषद्य जुषस्व स्वाहेति स्रुवेण गार्हपत्ये जुहोत्येकां द्वे तिस्रश्चतस्रो[4]वा ॥**
॥ १ ॥ १ ॥ १३०७ ॥

(सू) **अग्नये गृहपतये रयिपतये पुष्टिपतये कामायान्नाद्याय स्वाहेत्येतामेके समामनन्ति ॥ २ ॥**
॥ २ ॥ १३०८ ॥

---

[1] तया—तथायुक्तहस्तया स्रुचा उदङ्मुखस्तमूष्माणं सप्तर्षीनुद्दिश्य मुञ्चति (रु) [2] दर्शनेन—ख. ग. [3] श्रुतिरियं भाष्ये दृश्यते—च. [4] आहुतीरिति शेषः । तच्चशेषादेवस्थालीगताज्जुहोति । द्रव्यान्तरावचनात् । तथैतस्मादेवाग्निहोत्रशेषादिति भरद्वाजः । ततश्च शेषकार्यत्वादासां न प्रयोजकत्वमिति सिद्धं भवति (रु).

(सू) समभ्युच्चयवदेके[1] ॥ ३ ॥ ३ ॥ १३०९ ॥

[होममन्त्रव्यवस्था]

(भा) [2]प्रथमेन द्वितीयेन वा गार्हपत्ये[3] होमः । यदा समुच्चयः तदा प्रथमेन होमद्वयम् । तथा द्वितीयेन ।

(वृ) तथा द्वितीयेन—होमद्वयम् ।

(सू) अग्नेऽदाभ्य परिषद्य जुषस्व स्वाहेति स्रुवेणान्वाहार्यपचने जुहोत्येकां द्वे तिस्रश्चतस्रो वा ॥ ॥ ४ ॥ ४ ॥ १३१० ॥

(सू) [4]अन्नपतेऽन्नस्य नो देहीति द्वितीयाम् ॥ ५ ॥ ॥ ५ ॥ १३११ ॥

(भा) अन्नपत इति द्वितीयाऽन्वाहार्यपचने नित्या । पूर्वेण त्वितराः ॥ ॥ १३११ ॥

(वृ) पूर्वेण त्वितराः—अन्वाहार्यपचने जुहोत्येकां द्वे तिस्रश्चतस्रो वा । प्रथमेनैव प्रथमा । द्वितीया अन्नपत इति नियम्यते । हुत्वाऽन्वाहार्यपचने लेपप्राशनम्[5] ॥ १३११ ॥

(सू) [6]अप्राश्य वाऽपरयोः ॥ ६ ॥ ६ ॥ १३११ ॥
आहवनीये होमो नापरयोः ॥ ७ ॥ ७ ॥ ॥ १३१२ ॥

[लेपप्राशनहोमयोः क्रमव्यवस्था]

(भा) [7]अप्राश्य वा यदा होमः आहवनीय एव होमः । तदा प्राशनादि कृत्वा सप्तर्षिभ्यः ॥ ७ ॥

---

1 अस्मिन्पक्षेद्वाभ्यां सकृत् द्विर्वा होमः (रु). 2 प्रथमे द्वि–च. 3 पत्यहोमः–क. घ. ङ. 4 द्वित्वादिकल्पे द्वितीयामनेन मन्त्रेण जुहोति । ततोऽन्याः पूर्वेण (रु). 5 आहवनीयहोमानन्तरमेववाऽपराग्न्योपि जुहुयात् (रु). 6 इदमपि कल्पान्तरम् (रु). 7 अप्राश्य यदा–ङ.

(वृ) अप्राश्य-र्षिभ्यः — अप्राश्यापरयो[1]र्होमपक्षेऽपि होमानन्तरं प्राशनादि कृत्वा सप्तर्षिभ्यस्त्वेति ॥ १३१२ ॥

(सू) यदाऽऽहवनीये हुत्वाऽपरयोर्जुहुयात् यथा स्वर्गाल्लोकात्प्रत्यवरोहेत्तादृक्तदिति विज्ञायते ॥ ॥८॥८॥ १३१३॥

(सू) [2]सर्वे वा एते होमार्था आधीयन्ते—चतस्रो गार्हपत्ये जुहोति[3] चतस्रोऽन्वाहार्यपचने द्वे आहवनीये दश संपद्यन्ते दशाक्षरा विराट् विराजा यज्ञस्संमित इति बह्वृचब्राह्मणं भवति ॥ ९॥ ॥९॥ १३१४ ॥

(सू) दीदिहि दीदिदासि दीदायेत्येषोऽग्न्युपसमिन्धन आम्नातः ॥ १० ॥ १०॥ १३१५॥

(सू) [5]दीदिहि दीदिदासि दीदाय दीद्यासं दीद्यस्वेति वा प्रतिमन्त्रम् ॥ ११ ॥ ११ ॥ १३१६ ॥

[दीदिहीत्यादिष्वग्न्युपसमिन्धनत्वपक्षभेदः]

(भा) दीदिहीत्युपसमिन्धनं बह्वृचमते[6]। चतस्रो नित्याः [7]अपरयोरुपसमिन्धनो[8]मन्त्रः । इन्धनं दीपनं क्रियते दीदिहीति । पञ्चानामग्नीनां शाखान्तरे आम्नायते दीदिहि दीदिदासि दीदाय दीद्यासं दीद्यस्वे[9]त्येभिर्वा पञ्चभिः प्रतिमन्त्रमेकैकस्याग्नेरिन्धनम् ॥

---

1 र्होमेऽपि–घ. 2 किमसौ निन्दितत्वादनादरणीय एवापराग्निहोमः ? नेत्याह (रु) 3 एवं होमोऽपि शाखान्तरे श्रूयते अतो यथाकामी होमयोरिति भावः । बाह्वृच्येतु अपराग्न्योश्चतस्र आहुतयो नियताः (रु). 4 सर्वेषामग्नीनामेष एवोपसमिन्धने मन्त्रः (रु). 5 पञ्च वैते मन्त्राः पञ्चानामेकैकस्य न स्युः (रु). 6 मतेन -घ. ङ. च. 7 अपरयोपस ?—च. 8 समिन्धानो–ङ. 9 त्येतैः पञ्चभि–च.

[आहुतिप्राधान्ये मतिभेदः]

(वृ) **दीदिही–क्रियते**—द्वयोरपि चतस्रश्चतस्रः । 'दश संपद्यन्ते' इत्याहवनीयहोमतुल्यनिर्देशात् । अपराग्निक[1]होमानामपि नित्यत्वम् । अत एव सर्वेषां प्रधानत्वमिति केचित् । स्वमते तु 'एष वा अग्निहोत्रस्य स्थाणुः यत्पूर्वाहुतिः' इति वचनात् पूर्वाहुतिरेव प्रधानम् । अन्यासामङ्गत्वमिति ॥

[मन्त्रस्योपसमिन्धनत्वम्]

उपसमिन्धने मन्त्रः अनेनोपसमिध्यत इति मन्त्र उपसमिन्धन आम्नातः । इन्धनं दीपनं क्रियते दीदिहीति ॥ १३१६ ॥

(सू) **यथाऽऽहितास्तेनानुपूर्व्येणाहवनीयाद्वा [2]प्रक्रम्य ॥ १२ ॥ १२ ॥ १३१७ ॥**

[अग्निसमिन्धने क्रमः]

(भा) आहवनीयादपि प्रक्रमे पुनर्गार्हपत्यादि ॥

(वृ) **आहवनी –– पत्यादि** — आहवनीयदक्षिणाग्निसभ्यावसथ्या इति क्रमः । आधाने क्लृप्तक्रमत्वात् ॥ १३१७ ॥

(सू) **अन्तर्वेद्यपो निनीय ॥ १३ ॥ १३ ॥ १३१८ ॥**

॥ त्रयोदशी खण्डिका ॥

———

(भा) वेद्यन्त[3]रन्तर्वेदिदेश [4]इति गृह्यते । तत्रापां निनयनम् ॥

[निनयने समुचितो देशः]

(वृ) **वेद्यन्त – यनम्**—शाखान्तरेऽन्तरशब्दाद्वा तस्मादाहनीयसमीपे निनयनं युक्तम् ॥ १३२८ ॥

---

[1] राग्निहो–घ. [2] उपसमिन्ध इति शेषः (रु). [3] वेद्यन्तमन्वेंदि–घ. ङ. [4] इह गृ–च.

(सू) पूर्ववदग्नीन्[1] परिषिञ्चति न धाराम् ॥ १ ॥
॥ १४ ॥ १३१९ ॥

[परिषेचने धारानिषेधफलम्]

(भा) धाराप्रतिषेधः परिषेकाङ्गत्वाद्धारायाः; अतः यदा [2] अग्निना-सहाग्निहो[3]त्रेण चानुद्रवणम्। तदा कूर्चे [4]स्थानम्।

[धाराया अवसरः]

आहवनीयस्य[5] कृते परिषेचने [6]धारा क्रियते ॥

(वृ) धाराप्र – रायाः — अतः अस्मादेव प्रतिषेधात्परिषेकाङ्गत्वं धारायाः।

यदा–द्रवणम्—बहुविदुद्धरणे।

तदा–नम्—हविषः। आहवनीयस्य स्थापने च कृते परि-षेचने[7] धारायां च कृतायां क्रियते ॥ १३१९ ॥

(सू) अपिप्रेरग्ने स्वां तनुवमयाद्द्यावापृथिवी ऊर्ज-
मस्मासु धेहीत्यग्निहोत्रस्थाल्यां [8]तृणमक्त्वाऽनुप्रह-
रति ॥ २ ॥ १५ ॥ १३२० ॥

सा ह्यग्निहोत्रस्य [9]संस्थितिः ॥ ३ ॥ १६ ॥
॥ १३२१ ॥

[अग्निहोत्रावधौ मतिभेदाः]

(भा) तृणप्रहरणेन वाऽग्निहोत्रसमाप्तिः उदकनिनयनेन वा। अथ वा

---

[1] स्रावयतीति शेषः। अस्मादेव प्रतिषेधाज्जानीमः परिषेचनाङ्गं धारेति। तेन बहुविदुद्धरणेऽर्वाक्परिषेचनाद्भवति (रु). [2] ग्निना च स–घ. [3] त्रेण सहानु–च. [4] स्थापितम्–ङ. स्थापनम्–च. [5] स्थापने कृते परि–च. [6] चनधारायां च कृतायां क्रियते–च. [7] धारायां च कृतायां क्रियते–घ. [8] अग्निहोत्रसाधनार्थाद्बर्हिष एकं तृणमादायाग्निहोत्रस्थाल्यामक्त्वाऽऽहवनीयेऽनुप्रहरति (रु). [9] तृण-प्रहरस्यैव स्तुतिरियम्। यथा दर्शपूर्णमासयोः बर्हिः प्रहरणेन संस्था भवति। एव-मग्निहोत्रस्यापीति (रु).

यावज्जीवान्ते तृणप्रहरणम्। [1] यदा वा जीर्णो वाजसनेयिमतेन विरमणमग्निहोत्रस्य करोति।

(वृ) तृणप्र–यनेन वा—सर्वाग्निहोत्रेषु प्रयोगसमाप्तिरुभयथा।

[तृतीयपक्षेऽवधिनिर्देशः]

अथवा-करोति— [2] तत्रान्तिमे होमे तृणप्रहरणम् पूर्वेषु स्थालीप्रक्षालनमेव।

(सू) न [3] बर्हिरनुप्रहरेत्। असंस्थितो वा एष यज्ञो यदग्निहोत्रं इत्युक्तम् ॥ ४ ॥ १७ ॥ ॥ १३२२ ॥

[बर्हिःप्रहरनिषेधहेतुसार्थक्यम्]

(भा) 'असꣳस्थितो वा एष यज्ञः यदग्निहोत्रम्' इति [4] हेतुवचनात्। अतो बर्हिःप्रहरणं न कर्तव्यम्। यत्र त्वस्य संस्था तत्र [5] कर्तव्यमिति हेतोरर्थवत्ता [6] ॥

(सू) अग्निहोत्रस्थालीं प्रक्षाल्याक्षितमाक्षित्यै जुहोमि स्वाहेत्युन्नयनदेशे निनयति अन्तर्वेदि वा ॥ ५ ॥ ॥ १८ ॥ १३२३ ॥

वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम् अप्सु श्रद्धेत्यप [6] आचम्य यजमानोऽन्तर्वेदि मार्जयते अन्नादास्थान्नादो भूयासं यशस्स्थ यशस्वी भूयासं श्रद्धास्स्थ श्रद्धिर्षीयेति ॥ ६ ॥ १९ ॥ ॥ १३२४ ॥

---

[1] यदा जीर्णो वा वाज–च. [2] अत्रान्तिमे–छ. [3] शाखान्तरे तु न बर्हिरनुप्रहरेदिति प्रकृत्य असꣳस्थित इत्यादिना अनुप्रहरणं निन्दित्वा तस्मान्नानुप्रहृत्यमित्युपसंहृतम्। अतो वैकल्पिकं तृणप्रहरणमिति भावः (रु). [4] होतुर्वचनादितो ?–ग. [5] तत्र प्रहर्तव्य–घ. वत्त्वात्–घ. [6] आचम्य भक्षयित्वा। मार्जयते हस्तं–प्रसार्य तस्मिन्नप आसिञ्चति। (रु) हस्तेऽप आसेचयते तन्मार्जनमित्याश्वलायनः

(भा) वृष्टिरसीति भक्षणमपाम् । अन्तर्वेदिदेशेऽवस्थितो[1] द्वाभ्यां मार्जनं करोति ॥ १९ ॥

(वृ) वृष्टि–मपाम्—करोति यजमानः पूर्ववत् ॥ १३२४ ॥

(सू) आपो[2] ह श्लेष्म प्रथमं संबभूव येन धृतो वरुणो येन मित्रः । येनेंद्रं देवा अभ्यषिञ्चन्त राज्याय तेनाहं मामभिषिञ्चामि वर्चस इति शिरस्यप आनयते ॥ ७ ॥ २० ॥ १३२५ ॥

[मार्जनयोः क्रमे पक्षान्तरम्]

(भा) किं पुनस्त[3]त्? .... वर्चस इति शिरस्य[4]पामानयनम् । एतन्मार्जनं व्याख्यातम्[5] । उपदेशः कृत्वा पूर्वेण मार्जनमुत्तरेण शिरस्यपामानयनं कुर्वन्ति ' इति करणं पूर्वत्र कृतमिति ॥

(वृ) एतन्मा–तम्—इडामार्जनेन ॥

[पक्षयोराशयः]

उपदे–त्रकृतमिति—श्रद्धिषीयेतीतीतिकरणात् कार्यभेदावगतेः पूर्वेणान्तर्वेदि मार्जयित्वाऽऽहवनीयोत्तरेण शिरस्यपामानयनमिति । स्वमते तु मन्त्रभेदपरिज्ञानार्थमितिकरणमिति ॥ १३२५ ॥

[अग्निहोत्रे विशेषाः ; तत्र पशुकामीये]

(सू) [6]द्वयोः पयसा पशुकामस्य जुहुयात् ॥ ८ ॥ ॥ २१ ॥ १३२६ ॥

(भा) द्वयोः पयसा होमे ॥ १३३६ ॥

(सू) अग्निहोत्रस्थाल्या [7]पूर्वां दोग्धि दोहनेनोत्तराम् ॥ ९ ॥ २२ ॥ १३२७ ॥

---

[1] स्थिते–च. [2] अनयाऽपश्शिरस्यानयते चावभृथार्थम् । तथा च श्रुतिः। अपोनिनयति अवभृथस्यैव रूपमकारिति (रु). [3] स्तद्वर्चस–च. [4] स्यप आन–च. [5] इदं न दृश्यते–च. [6] अथाग्निहोत्रे काम्यान् कल्पानाह–द्वयोः । गवोरिति शेषः (रु). [7] पृथगुभाभ्यामुभे दुह्यात्, न तु पूर्ववत् समुच्चिताभ्याम् (रु).

[याजमानावृत्तिः अभिमन्त्रणामर्शनयोरूहे प्रतिभेदश्च]

(भा) इति क्रमेण दोहनाद्याजमानावृत्तिः । नाभिमन्त्रणवेद्यभिमर्शनयोरूहः । उह इत्युपदेशः ॥

[अनूहपक्षोपपत्तिः]

(वृ) द्वयोः प-रूहः—तयोः क्रमेण कर्तव्यत्वेऽपि इडाऽसीति जात्यभिप्रायेणैकवचनत्वोपपत्तेः इयमसीत्यपि वेदिपरत्वात् तयोस्तन्त्रप्रयोगेऽप्यनूहः । वत्सोपसर्गादि पर्यायेण । अथवा गोरभिमन्त्रणप्रभृतिक्रमेणानुष्ठानाभिप्रायेणानूहोपदेशः ॥

[ऊहपक्षाशयः]

ऊह इत्युपदेशः—यद्यपि पशुकामप्रयोगो गुणाविकृतः ; तथापि इडादिशब्दानां गोपरत्वात्तद्भेदे समवेताभिधानायोह इत्युपदेशः ॥ १३२७॥

( सू ) आधिश्रित्य पूर्वमुत्तरमानयति ॥ १० ॥ २३ ॥
॥ १३२८ ॥

[दोहाधिश्रयणे विशेषः]

(भा) अधिश्रित्याग्निहोत्रस्थालीमुत्तरस्याः पश्चादानीयते । नित्ये त्वग्निहोत्रस्थाल्यां दोहनगतं प्रक्षिप्य सहाधिश्रयणम् । अग्निहोत्रस्थाल्या दोहनेन च दोग्धीति यद्यपि पृथक् ॥

(वृ) आधिश्रित्या-पृथक्—पात्राभ्यां दोहनम् । तथाऽपि तेष्वग्निहोत्रमधिश्रयतीत्यितावन्मात्रोपदेशात् ॥ १३२८॥

[पशुज्वरशान्तिकामनायाम्]

( सू ) यस्य [2] रुद्रः पशून् शमायेतैतयैवावृता द्वयोः
पयसा सायंप्रातर्जुहुयात् ॥ ११ ॥ २४ ॥
॥ १३२९ ॥

---

[1] पूर्वं दुग्धमग्निहोत्रस्थालीगतं पूर्वमधिश्रित्य तस्मिन्नुत्तरं दुग्धमानयति (रु).

[2] रुद्रः-ज्वरः । शमायेत-शमयेत्-हन्यात् एतयैवावृता—उक्तेन दोहप्रकारेण (रु).

(भा) एतयैवावृता—एतयैव क्रियया ॥

[कामनाकालः, नास्य नित्यादन्यरूपत्वम्]

इह सायंप्रातर्नियमात् पूर्वत्रैकस्मिन् होमे कामः । पयसैव नित्यमग्निहोत्रं नाग्निहोत्रान्तरम् । एवं [1] सर्वद्रव्येषु कामः ॥

(वृ) एतयै–यया —अग्निहोत्रस्थाल्यां पूर्वां इत्यादिकया ॥

इहसा–कामः—सायंहोममात्र एव कामः ॥

[द्वयोः पयसेत्यादेः गुणफलविधित्वम्]

पयसै–त्रम्—तत्रैव धर्मोपदेशात् । नित्याग्निहोत्र एव कामः ।

नाग्नि–न्तरम्—काम्यम् । द्वयोः पयसा नित्याग्निहोत्रे क्रियमाणे फलकामस्य फलसिद्धिः तस्यैव गुणकामरूपत्वात् ॥

एवं–कामः—गुणकामः । दध्नेन्द्रियकामस्येत्यादिष्वपि नित्याग्निहोत्रे द्रव्यविशेषेण क्रियमा[2]णेऽपि फलसिद्धिः ॥ १३२९ ॥

[कृतेऽपि नैमित्तिके पशुक्षयानुवृत्तौ पूर्वाहुतौ विशेषः]

(सू) तच्चेद[3]तिहन्यात् सजूर्जातवेदो दिव आपृथिव्या अस्य हविषो घृतस्य वीहि स्वाहेति सायंप्रातराज्येन जुहुयात् ॥ १२ ॥ २५ ॥ ॥ १३३० ॥

[आहुत्योर्मन्त्रविशेषश्च]

(भा) [4] तच्चेदिति अकामकृतमपि हन्यादेव पशून् रुद्रः ॥

[कृते कर्मणि फलानिष्पत्तिनिदानम्]

पूर्वाधर्माद्यजमानस्य पशूनां चायुषः क्षयात् ॥

सजूर्जातवेदा इति पूर्वाहुतिः ॥

---

[1] सर्वत्र द्रव्ये-क. ख. ग. घ. ङ. [2] णे फल–छ [3] सायंप्रातर्हुतमतीत्य पुनश्चेद्रुद्रो हन्यात् ततस्सायंप्रातराज्येन हविषाऽग्निहोत्रं जुहुयात् । सजूरिति मन्त्रेण पूर्वाहुतिः । जातवेदसं हविरितिचोहः. [१]. [4] तच्चेकाम ?–च.

आग्नेयं जातवेदसं हविः प्रजननम् अग्निर्जातवेदाः [1] प्रजामित्येवमुभयत्र। अन्यद्[2] विकृतम् ॥

[नैमित्तिककरणेऽपि फलानिष्पत्तिहेतुः]

(वृ) तच्चेदित्यकाम-क्षयात् —अस्यार्थः ; यद्यपि यस्य रुद्रः पशून् शमायेतेति निमित्तत्वेन श्रवणात् पशुमरणहेतुभूतदोषपरिहारार्थता तत्कामनाश्रवणाभावेऽपि नैमित्तिकस्य कर्मणः प्रतीयते ; तथाऽपि तस्मिन् कामतः कृते कर्मणि दोषपरिहारार्थे संजातेऽपि तदतिक्रम्य यजमानपूर्वजन्मकृताधर्मबलवत्तया पुनरपि पशूनां मारणं भवत्येव[3]। तथा पशूनामपि पूर्वजन्मकृतायुष्यादृष्टनाशाच्च पुनरपि मरणं भवेत् अतो ज्वरादिभिः पुनर्मरणपरिहारार्थं नैमित्तिकान्तरमु[4]पपद्यते सजूर्जातवेदा इति।

हन्यादेवेति —[5] अस्याक्षरार्थस्तु ;—अकामतः कृतं कर्मातिक्रम्य हन्यादेवेति।

[अस्मिन् कल्पे देवता]

सजूर्जा-हुतिः—वैकृतोपदेशस्य प्रधानार्थत्वात् उभयकालेऽप्यग्निर्जातवेदा देवता।

आग्नेयं जा-भयत्र—होमे ॥

[पुनः पशुक्षयानुवृत्तौ विशेषः अथाप्यशान्तौ विरतिश्च]

(सू) [6] अनारमत्यग्ने दुश्शीर्ततनो जुषस्व स्वाहेति

---

[1] प्रजां बहुलामि—घ. [2] दधिकृ—ख. ग. [3] वत्येवं पशू—छ. [4] मुच्यते—घ. मुपदिश्यते—छ. [5] अक्षरा—घ. [6] पुनरप्यविरमति रुद्रे द्वादशाहमनेन. मन्त्रणाज्येनैव जुहुयात्। ततः परमप्यनुपरमे न सर्श्वेत्—नाद्रियेत कर्मतावैतत्वकृतेन स्वयमारंस्यति। न चेदारंस्यति प्रबलादृष्टप्रयुक्तत्वान्नैतादृशेन कर्मणाऽसौ शक्यारमण इत्यालोच्य अनुगुणमारभेत। न च कर्मानर्थक्यम्! भवान्तरेऽपि फलदानोपपत्तेः (रु).

द्वादशाहमाज्येन हुत्वा तत ऊर्ध्वं न सूर्क्षेत् ॥
॥ १३ ॥ २६ ॥ १३३१ ॥

चतुर्दशी खण्डिका

———

(भा) अनारमति रुद्र-सजूरित्यस्मिन् होमे कृतेऽपि [1]पुनर्यदि मरणं भवेत् पशूनां ज्वरादिना अग्ने दुश्शीर्ततनो इति पूर्वाहुतिः ।

[कालद्वयवर्तिकर्मसमुदायोऽग्निहोत्रशब्दार्थः]

आग्नेयमुभयत्र सायमुपक्रमं प्रातरपवर्गमग्निहोत्रं सूत्रकाराणां मतम् । सायमादिकामो द्रव्यनियमश्च ।

मीमांसकनां तु कर्मनामैवाग्निहोत्रमिति न समुदायस्य । तेषां

[मीमांसकपक्षः तत्पक्षे सायमुपक्रमत्वानियमः]

यस्मिन् कस्मिन् वा होमे आरम्भः ।

[विरमणवचनस्याशयः]

न सूर्क्षेत्-न कुर्यादादरं पुनश्शमनार्थं कर्मकर्तुमिति शेषः ।

[पूर्वकर्मणाऽनिष्टफलमतिः]

महानधर्मः पशुक्षयकरस्तीक्ष्णाभिसन्धिर्मया कृत इति ।

[प्रतिषिद्धानुष्ठानजमनिष्टफलम्]

अधर्मफलेऽनापि शास्त्रलक्षणेन भवितव्यम् ।

[शान्तिकर्मनैरर्थक्यपरिहारः]

न कर्मानर्थक्यम् [2] अप्रमादकृतो ह्यधर्मः अल्पो वा तस्य प्रतिबन्धनं करोति तत्कर्म ? सजात्यन्तरे फलं प्रयच्छति ।

---

[1] पुनः पुनः–ख. ग. [2] कृतो ह्यधर्मः–ख.

[1] धर्मोऽपिचेन्महताधर्मेणाभिभूतो जात्यन्तरे [2] पशूनां मरणं नियच्छति । एवंसर्वत्र काम्येषु । रुद्रो-ज्वरः । हरणं-शमनम् [3]॥

[कर्मसमुदायपरत्वसमर्थनं सायमुपक्रमत्वादिच]

(वृ) **सायमुप-नियमश्च**—अस्यार्थः ;—यत्सायं जुहोति रेत एव तत्सिञ्चति प्रैव प्रातस्तनेन जनयति' इति सायं रेतस्सेकपूर्वकं प्रातः [4] कालीनेन जनयतीति दर्शनात् । उभयकालवर्तिकर्मसमुदायस्यैककार्योत्पादकत्वम् । ततश्च कालद्वयवर्तिकर्मसमुदायवचनत्वादग्निहोत्रशब्दस्योभयकालवर्तिप्रयोगसङ्कल्पं सायंकाले कृत्वा पश्चात्कालभेदेन प्रयोगभेदसङ्कल्पः । किंच आधानानन्तरं सायंकालोप [5]निपातादग्निहोत्रमारप्स्यमान इत्युक्त्वाऽथ सायमग्निहोत्रं जुहोतीति सूत्रकारवचनाच्च सायमुपक्रमत्वम् । अतः सायंकाले कामसङ्कल्पो दध्यादिद्रव्यनियमश्च ।

[सायंहोमनामधेयतापक्षाशयः]

**मीमांस-यस्येति,**—अस्यार्थः ;—' तस्मादग्नये सायं हूयते सूर्याय प्रातः ' इति तुल्यवदुत्पत्तेः कर्मभेदात् । ' यदग्नये च प्रजपतये च सायं जुहोति ' इत्यग्निदेवतासंबन्धेन प्रवृत्तिनिमित्तेन सायंहोमनामधेयमग्निहोत्रशब्दः। प्रातर्होमेऽपि संसृष्टहोमेऽग्निदेवतासंबन्धेन प्रकृतिनिमित्तेन अग्निहोत्रशब्दः कर्मनामधेयम् । ततश्चोभयोः प्रत्येकनामधेयत्वे तन्त्रानिर्देशात् अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिना अधिकारसंबन्धावगमादन्योऽन्यनिरपेक्षत्वात् ।

**न सूर्क्षेत्-र्थे कर्म**—द्वादशाहादूर्ध्वम् ।

---

[1] धर्मोऽपि चायमिह महता धर्मेणाभिहृत इति-ज. धर्मोऽपि चेह-च. [2] रे अमारणं पशूनां करोति-ज. [3] मारणं शमनम् ?-च [4] कालेन-छ. कालेऽनेन-ग. [5] पनीताग्नि-छ.

**न कुर्या-कर्म**—कर्तुमिति शेषः ।

[शान्तिकर्मणाप्यपरिहार्यानिष्टसंभवः शान्तिकफलं च]

यस्मात्—

**महान्-कृत इति**—तीक्ष्णः अभिसन्धिर्यस्याधर्मस्य स तीक्ष्णाभिसन्धिः । उग्राभिसन्धि[1]पूर्वकृतो धर्मः पशुक्षयं करोति । शमनार्थे कर्मणि कृते किमिति पुनः क्षयः ? इत्याशङ्क्याह—

**अधर्मफ — वितव्यम्** —अनर्थफलाभिस[1]न्धिरहितमपि प्रतिषिद्धं कर्म पूर्वजन्मकृतमेव गोमरणादिप्रत्यवायं जनयत्येव ।

एवमपि ;—

**न कर्मान-तिबन्धनम्** ;— [2]अप्रमादकृतः बुद्धिपूर्वं कृतः अल्पो हि तस्य प्रतिबन्ध[3]नं तत्कर्म-शान्तिकर्म करोति । बुद्धिपूर्वं कृतस्य महतो [4]ह्यधर्मस्य बलवतो न प्रतिबन्धनसमर्थं शान्तिकर्म । पूर्वजन्मकृतेन महताऽधर्मेण पुनः पुनर्म्रियमाणेषु कृतस्य शान्ति कर्मणः [5]फलासाधनत्वादानर्थक्यमिति चेन्न—

**सजात्यन्त-च्छति**—सधर्म[6]श्शान्तिकरो जात्यन्तरे [7]स्वफलं साधयति । शास्त्रीयस्य कर्मणोऽवश्यं फलसाधनत्वात्कालनियमाभावात् ।

**धर्मोऽपि-नियच्छति**—यद्यपि धर्मोऽपि शास्त्रलक्षणत्वात्फलसाधकः ; तथाऽपि प्रबलाधर्माभिभूतत्वात् जन्मान्तरे पशूनां मरणाभावं करोत्येव ।

[अन्यत्रातिदेशः]

**एवं सर्वेषु काम्येषु**—दृष्टफलेषु शान्तिकर्मसु इह जन्मनि फलानुत्पत्तौ जन्मान्तरे फलोत्पत्तिसंभवादविरोधः ॥

---

[1] न्धिपूर्व कृ—छ. [2] प्रमादकृतः अबुद्धिपूर्वं कृतः—घ. छ. [3] न्धनं करोति—घ. [4] प्यधर्मस्य—घ. [5] फलसाध ?—ख. ग. [6] श्शान्ति करोति—ख. ग. छ. [7] फलं सा—ख. ग.

(सू) पयसा[1] पशुकामस्य जुहुयात् दध्नेन्द्रियकामस्य यवाग्वा ग्रामकामस्यौदनेनान्नाद्यकामस्य तण्डुलैरोजस्कामस्य । बलकामस्येत्येके । मांसेन यशस्कामस्य सोमेन ब्रह्मवर्चसकामस्य आज्येन तेजस्कामस्य ॥ १ ॥ २७ ॥ १३३२ ॥

[पयोहोमे विशेषः इन्द्रियादिशब्दार्थश्च]

(भा) पयसि नित्ये कामः । इन्द्रियं शुक्रम् । [2]ग्रामो भूमिप्रदेशः[3] । केचित्तु ग्रामकूट[4]कं ग्राम इत्याहुः । अन्नकामोऽन्नाद्यकामः । [5]केचिद्भोक्तृ शक्तिम् । परस्य येन सहते[6]वीर्यं स ओजो गुणः । बलं प्राणः । यशः ख्यातिः । ब्रह्मणा[7]ख्यातिर्ब्रह्मवर्चसम् । [8]तेजोदीप्तिः

[पयोहोमे नित्य एव कामनेत्यत्र मानम्]

(वृ) पयसि नित्ये काम इति—रौद्रं गवि दक्षिणत उपसृजति इत्यादिदोहधर्माणां [9]नित्यवदुपदेशात् आश्वलायनेन पयसा नित्यहोम इति वचनाच्च पयसा पशुकामस्येति नित्यकर्मसाधनभूते पयसि पशुकामः ।

**अन्नकामः**—ओदनेनान्नकाम इत्यर्थः ।

**केचिद्भोक्तृशक्तिम्**—अन्नाद्य[10]माहुः ॥

(सू) प्रतिषेकं यवागूं श्रपयति ॥ २ ॥ २८ ॥ ॥ १३३३ ॥

---

[1] पयसो नित्यस्यैव सति कामे फलवचनम् । अन्ये सर्वे गुणकामा इति शेषः (रु). [2] न ग्रामो -घ. [3] देशः ; तत्कामः–च. [4] कुटं ग्रा–च. [5] केचन भोजनशक्तिः–ङ. च. [6] ते तेजः ओजस्सगुणः–क. तेजसःओजो–च. ङ. [7] णः–ख. ग. च. ब्राह्मणख्या–क. ङ. [8] दीप्तादीप्तिः–क. [9] वत्प्रत्यक्षोपदेशात्–ख. वत्प्रक्षेप ?–ग. [10] द्यमित्याहुः–ख. ग.

(भा) प्रतिषेकं—प्रतिषिच्य प्रतिषिच्य पुनः पुनरुदकेन [1]यवागूश्रपणम् ॥

(वृ) प्रतिषेकमिति—क्रियासमभिहारे णमुल् प्रत्ययात् पुनःपुनरुदेन प्रतिषेकः ॥

(सू) [2]शृतां यजुषा प्रतिषिञ्चति ॥ ३ ॥ २९ ॥
॥ १३३४ ॥

(भा) यथा[3] लक्षणं पाक उक्तोऽग्निहोत्रस्य न श्रृतं कुर्यादिति। [4]तथाभूतामपां स्तोकेन[5] प्रतिषिञ्चति हरस्त इति ॥ १३३४ ॥

(सू) एवं मांसम् ॥ ४ ॥ ३० ॥ १३३५ ॥

(सू) [6]नाज्यं प्रतिषिञ्चति हरस्ते मा विनैषामिति
द्वे दर्भाग्रे प्रत्यस्यत्येकं वा ॥ ५ ॥ ३१ ॥
॥ १३३६ ॥

[प्रतिषेधप्रतिषेधाशयः मानं च]

(भा) युगपद्दर्भाग्रे प्रतिषेकप्रत्याम्नायः। श्रृतं हि तदिति वचनात्।
॥ १३३६ ॥

(सू) न दध्यधिश्रयति शृतं हि तत्। न प्रतिषिञ्चति
प्रतिषिक्तं हि तदातञ्चनेनेति विज्ञायते ॥ ६ ॥
॥ ३२ ॥ १३३७ ॥

[पाकरहितदध्यादेः प्रतिषेकप्रतिषेधस्याशय उपदेशमतं च]

(भा) [7]गृहे श्रृतेन दध्ना होमः क्षिप्तातञ्चनेन[8]। दध्यादीनां पाक-

---

[1] यवागूं श्रपयन् तूष्णीमुदकेन प्रतिषिच्य श्रपयति (रु). [2] ततश्श्रृतां सतीं पुनर्यजुषा हरस्तेमाविनैषमित्यनेन प्रतिषिञ्चतीत्यर्थः (रु). [3] था श्रृतं लक्षणम्–ङ. श्रृतां यथा–च. [4] यथा भू–च. [5] स्तोकेन हरस्त इति-च. [6] आज्यं न प्रतिषिञ्चति तत् स्थाने तु दर्भाग्रे प्रत्यस्यति (रु). [7] गृहश्रृतेन–ख. ग. [8] नेन च-च.

प्रतिषेधादेव पाकवर्तिनामपि निवृत्तौ सिद्धायां प्रतिषेकप्रतिषेधादभिद्योतनपर्यग्निकरण भूमिप्रतिष्ठापनादीन्यदृष्टार्थानि दध्यादिष्वपि कर्तव्यानीति दर्शयति । उक्तं च भरद्वाजेन 'यदन्यदधिश्रयणात्प्रतिषेकाच्च तत्सर्वं भवतीति'। न तथोपदेशः ।

(वृ) **न तथोपदेश इति ;**—द्रव्यान्तराणां पयोविकारत्वाभावान्न दध्यधिश्रयतीत्यधिश्रयणग्रहणं सर्वपाकोपलक्षणार्थमिति ॥

(सू.) [1]एवं तण्डुलानोदनं सोमं च ॥७॥३३॥ ॥१३३८॥

[2]आज्येन तण्डुलैरोदनेन सोमेन वा जुहुयाद्यस्याप्रतिषेक्यं स्यात् ॥८॥३४॥१३३९॥

[3]आज्येन तेजस्कामः संवत्सरं जुहुयाद्द्वादशाहं वा ॥९॥३५॥१३४०॥

[तेजस्क.महोमे कामनायां विशेषः तद्विवरणं च]

(भा) [4]अप्रतिषेक्यं तेजस्कामादीनाम् । तेषां नाज्यादिषु कामः । सायं होमे द्रव्योत्पत्तिकाले द्रव्यकामः । संवत्सरे त्वेककामः ।

(वृ) **अप्रतिषेधे–कामः,**—प्रतिषेकाभावात्तेषां आज्येन तण्डुलैरोदनेनेति [5]अप्रतिषेकनिमित्तमात्रे द्रव्यस्य विधानान्न तेजस्का[6]मनादिराज्यादिषु । सायंहोमे द्रव्योत्पत्तिकाले द्रव्यकाम इति ।

---

[1] एवं—नाधिश्रयति न प्रतिषिञ्चतीत्यर्थः । अधिश्रयणप्रतिषेधादेवाप्रतिषेके सिद्धे पुनस्तत्प्रतिषेधात्ततोऽन्येषां श्रपणसहभुवां ज्वलताऽवेक्षणादीनामनिवृत्तिः । तथा च दध्यादि प्रकृत्य भरद्वाजः ; यदन्यदधिश्रयणात् प्रतिषेचनादि सर्वं तत्क्रियत इति (रु). [2] यस्य तेजस्कामादेरप्रतिषेक उक्तः स एतेषामप्रतिषेक्याणामन्यतमेनैव जुहुयान्न तु पयोयवाग्वादिना प्रतिषेक्येण । तत्र त्वाज्यादिगुणकामा न भवन्ति (रु) [3] फलवैषम्यं तु कालयोः कर्मवैषम्यादनुसन्धातव्यम् (रु). [4] प्रतिषेक्यम् ?–**च.** [5] प्रतिषेक ?–**ख ग.** [6] स्कामादिराज्यादिषु कामः–**छ.**

**सायं–काम इति**—यज्ञाङ्गादौ यज्ञकाममिति न्यायात्।

**संवत्सरे त्वेककाम इति**—आज्येन तेजस्कामस्संवत्सरं जुहुयादिति संवत्सरहोमेनैकः कामः साध्यते तथा।

(सू.) [1]**न राजन्यस्य जुहुयात्** ॥ १० ॥ ३६ ॥ ॥ १३४१ ॥

**होमकाले [2]गृहेभ्यो ब्राह्मणायान्नं प्रहिणुयात्तेनो-[3]हैवास्य हुतं भवति** ॥ ११ ॥ ३७ ॥ १३४२ ॥

[राजन्यस्याग्निहोत्रविरहेऽपि तत्फलसिद्धिः]

(भा) द्वादशाहे च धार्यन्तेऽग्नयः क्षत्रियस्य। होमप्रत्याम्नायो गृहपकमन्नम्। नान्यत आनीतं दीयते ब्राह्मणार्थम्। तेनास्य हुतं भवति। [4]उह एव निपातो ब्राह्मणे ॥ १३४२ ॥

(वृ) **द्वाद–ग्नयः**— आज्यहोमेन। न [5]तुल्यविकल्पः। अभ्यासभूयस्त्वे फलभूयस्त्वात् यथा कर्माभ्यास [6]इति सत्रे धार्यन्तेऽग्नयः क्षत्रियस्य। नित्यहोमस्थाने ब्राह्मणभोजनविधानात् प्रणयनाभावात् सूत्रान्तरेऽजस्रधारणाच्च। गतश्रीवन्नित्यं धार्यते।

**होमप्र–णार्थम्**—गृहेभ्य इति वचनात्।

**तेना–वति**—दानेन।

**उहए–ह्मणे**—तेनोहैवास्येति ब्राह्मणपाठः। निपातानामानर्थक्येऽपि न दोषोऽर्थवादवत् ॥

---

[1] राजन्यस्याग्निहोत्रनिषेधेऽपि गतश्रीत्वादाहवनीयो नित्यो धार्यते (रु). [2] गृहेभ्य इत्यनेन गृहे पाक्यतामन्नस्य दर्शयति। होमकाले गृहेभ्योऽपाकृष्यान्नं ब्राह्मणाय प्रहिणुयात् प्रदिशेत्। उ. ह. इति निपातसमुदायः प्रसिद्धौ। तेनैवास्य हुतं भवति—स होमप्रत्याम्नाय इत्यर्थः (रु). [3] सत्याषाढः पर्वण्यग्निहोत्रं कण्ठत एवाह। [4]निपाता. [5] न तु विकल्पः–घ. छ. [6] इतिस्मृतेः। धार्यन्ते नित्य–छ.

(सू) [1] नित्यमग्न्युपस्थानं वाचयितव्यः ॥ १२ ॥
॥ ३८ ॥ १३४३ ॥

[अग्न्युपस्थानशब्दार्थे पक्षभेदः]

(भा) [2]नित्यं–यत्पक्षे पक्षे भवति तत् नान्यद्भवति । यथा प्रथममग्न्युपस्थानं तद्वाचयितव्यो नित्यकालमध्वर्युणा, समिदाहरणादिमार्जनान्तमित्युपदेशः । उप[3]स्थानमात्रं न्यायः ॥

[भाष्येनित्यपदार्थविवरणे विशेषः]

(वृ) नित्यं–द्भवति—पुरस्तादग्नीहोमीयया पूर्वपक्ष इत्यादि पक्षभेदेन यद्व्यवस्थितं तद्वर्जयित्वा ।

[राजन्येन वाचयितव्यपक्षयोराशयः]

यथा–र्युणा—उपप्रयन्त इत्येतद्वाचयितव्यो नित्यकालमध्वर्युणा राजन्यः ।

समिदा–देशः—होमाभावात्समिदादिनिवृत्तावपि [4]मन्त्रान्तप्रयोगसंभवात्सर्वयाजमानोपलक्षणार्थ उपस्थानशब्दः ।

उपस्थान न्याय इति— सर्वोपस्थान[5]वाचनं पाक्षिकस्यापि नित्यमग्न्युपस्थानं वाचयितव्य इति संबन्धः ।

(सू) [6]यो वा सोमयाजी सत्यवादी तस्य जुहुयात् ॥
॥ १३ ॥ ३९ ॥ १३४४ ॥

(भा) उभयगुणस्य [7]हूयते ॥

[अस्तिराजन्यस्यापि नित्याग्निहोत्रम्]

(वृ) उभय–ते—सोमयाजी सत्यवादी च राजन्यो यदि तस्य जुहुयादेव । न ब्राह्मणान्नदानम् ।

---

[1] अग्न्युपस्थानं तु मन्त्रमध्वर्युणाकाले काले वाचयितव्यः (ङ). [2] इदं न दृश्यते–च [3] स्थापन–ङ. [4] तन्मात्राङ्गप्र–घ. [5] वाचने–छ. [6] य एवमुभयगुणो राजन्यस्तस्य जुहुयाद्वा । [7] भूयते ?–च.

(सू.) [1]अहरहर्यजमानः स्वयमग्निहोत्रं जुहोति ॥
॥ १४ ॥ ४० ॥ १३४५ ॥

[नित्याग्निहोत्रविधौ स्वयंशब्दार्थः]

(भा) अहन्यहनि सायंप्रातः ॥ स्वयम्—साङ्गं उदकाहरणादिभिस्सह ॥

[अहरहः स्वयंशब्दयोर्भावः]

(वृ) अहन्यह–भिस्सह—नैकस्मिन् काले। प्राप्तकाल एव उभयकालकर्तव्यत्वादग्निहोत्रस्य। यजमान इति सिद्धेऽपि स्वयंग्रहणादेषोदकाद्याहरणमपि स्वयमेव।

(सू.) [2]पर्वणि वा ॥ १५ ॥ ४१ ॥ १३४६ ॥

[पर्वणि वेति विधेः पर्यवसानम्]

(भा) पर्वाणि वा पर्वसन्धौ ॥ अन्येष्वनियमो होतुः ॥

(वृ) पर्वसन्धौ—सन्धिमदहोरात्रे।
अन्येषु—अहस्सु ॥

(सू.) [3]ब्रह्मचारी वा जुहुयाद्ब्रह्मणा हि स परिक्रीतो भवति। क्षीरहोता वा जुहुयाद्धनेन हि स परिक्रीतो भवतीति बह्वृचब्राह्मणम् ॥ १६ ॥ ४२ ॥
॥ १३४७ ॥

पञ्चदशी खण्डिका ॥

———

[1] अथ अग्निहोत्रस्य कर्तृविकल्पानाह: अहरहर्नि-त्यम् (रु).
[2] अपर्वणि तु वक्ष्यमाणो ब्रह्मचार्यादिरित्यर्थः तथा; च आश्वलायनः. पर्वणि स्वयं जुहुयादपर्वणि त्वनियम इत्यपरम्। तथा च कात्यायनः (रु). [3] ब्रह्मचार्यत्रान्तेवासी गृह्यते ब्रह्मणा हि स परिक्रीत इति लिङ्गात्। बोधायनश्चाह पुत्रोऽन्तेवासी वेति। योऽग्न्याधेय एवार्त्विक्त्वेन परिगृहीतः स क्षीरहोता धनेन हि स परिक्रीत इति लिङ्गात्। हारीतश्चाह योऽस्याग्नीनाधत्ते स क्षीरहोता। द्वयमप्येतन्मतमाश्वलायनस्य। अपर्वण्यपीत्यपरम्। अविशेषात् शाखान्तरीयविधित्वाच्च। तत्र प्रथमो वा शब्दो वैचित्र्यार्थः। याजमानेन सह विकल्पार्थो वा (रु).

[ब्रह्मचारिपदार्थः होमे पक्षान्तरं क्षीरहोतृपदार्थमतिभेदश्च]

(भा) यो वोत्तरत्रोच्यते ब्रह्मचारी[1]-यस्याध्यापनं करोति। स जुहोति। स हि ब्रह्मणा परिक्रीतः। पर्वण्यपि केचित्। क्षिरहोता-यस्याग्निहोत्राय प्रथमं [2]दुग्ध्वा गौर्दीयते। अग्निहोत्रशेषक्षीरभृत इति केचित्। [3]अन्येन येनकेनचिद्धनेन भृत इति केचित्।

इति श्रीमदापस्तम्बश्रौतधूर्तस्वामिभाष्ये
षष्ठे चतुर्थः पटलः ॥

---

(वृ) **ब्रह्मचार्यादिः**—ब्रह्मचारी वेति विकल्पवचनात्। पर्वणि वेत्यस्मिन् पक्षे अन्येष्वनियत[4]कर्तृता।

**स हि-क्रीतः**—स हि ब्रह्मणा वेदेन परिक्रीतः।

[भाष्यदर्शितपक्षेषु हेतवः]

**पर्वण्य-चित्**—ब्रह्मचारी वेत्यविशेषण विकल्पाभिधानात्। पर्वण्यपि यजमानेन विकल्पः। अन्यत्रापीति केचित्।

**क्षीर-र्दीयते**—यां प्रथमां अग्निहोत्राय दोग्धीति अग्निहोत्र[5]शेषमात्रवृत्त्युपजीवनार्थं यो होमं करिष्यति सः।

**अग्निहो-चित्**—धनेन हि स परिक्रीत इति धनमात्रनिर्देशादस्मिन् पक्षे क्षीरहोतेति शब्दो धनमात्रपरि[6]क्रयोपलक्षणार्थः। तत्पक्षे गोरपि परिक्रयद्रव्यत्वात्पयसा होमं[7]संभवात्।

इति श्रीरामाग्निचित्कृतायाम् धूर्तस्वामिभाष्यवृत्तौ
षष्ठे प्रश्ने चतुर्थः पटलः.

---

[1] ब्रह्मचार्यादिः-ख. ग. [2] दुग्धागौ-ख. ग. घ. दुग्धन्दी-च. [3] अन्नेन-छ. [4] कर्तृकताऽपि-ख. ग. घ. [5] इदं न दृश्यते-छ. [6] परिक्रियोप-घ. [7] वाऽदिति-ख. ग.

[उपस्थानाधिकारफलम्]

(सू) [1]अग्न्युपस्थानं व्याख्यास्यामः ॥ १ ॥ १ ॥
॥ १३४८ ॥

(भा) अग्न्युपस्थानाधि[2]काराद्यान्युत्तरत्रो[3]च्यन्ते [4]समिदाधानादीनि [5] तदङ्गं नाग्निरुपस्थेय इत्यत्र तेषामप्यक्रिया । उपदेश उद्ध[6]रत्येवमादि [7] याजमानमुपस्थानाङ्गम् तस्योपस्थान प्रतिषेधे प्रतिषेधः । अग्न्युपस्थानं जपतीत्यत्र सर्वस्य जपः ॥

[मान्त्राणामुपस्थानाङ्गताहेतुः]

(वृ) अग्न्युप–क्रिया—' उपस्थेयोऽग्नी ' इत्युपक्रम्य ' मनुष्यायेन्वै योऽहरहराहृत्याथैनं याचति ' इति श्रवणात् सर्वप्रत्यगाशिषां याचनारूपाणां उपस्थानाङ्गता ।

[याजमाननिवृत्तेरधिकारफलत्वोपपत्तिः]

उप षेधः—न प्रातरिति प्रातःकाले उपस्थाने प्रतिषिद्धे सर्वयाजमाननिवृत्त्यर्थं[8] उपस्थानाधिकार इति ।

अग्न्युप–स्य जपः—प्रवसतस्सर्वस्य जप इत्युपदेशः ॥

(सू) [9]उपतिष्ठत इति चोद्यमाने आहवनीयमेवोपतिष्ठेत । वचनादन्यम् ॥ २ ॥ २ ॥ १३४९ ॥

[उपस्थाने विशेषः तद्विवरणं च]

(भा) उपतिष्ठत इति[10] सामान्यचोदनायां यत्राऽप्यन्योऽधिकृतः

---

[1] अधिकारप्रदर्शनं मुखग्रहणार्थं अग्न्युपस्थानवदत्र समिध इत्यादौ विशिष्टकर्म सम्प्रत्ययार्थं च (रु). [2] धिकाराणाद्या ? पा [3] च्यते?–क. ङ. [4] तानि-समि–ख. ग. घ. समाधानादीनि–ङ. धानादमा–क. [5] दीन्यपितानि–ज. [6] रत्येव–ग. [7] यजमान ? क. ग. ङ. [8] निवृत्तिः [9] अस्मिन्नधिकारे अविशेषितायामुपस्थानचोदनायां आहवनीयमेवोपतिष्ठेत वचनादन्यं गार्हपत्यादिकम् (रु). [10] इति चोद–ख.

तत्राप्याहवनीयस्य । वचनादन्यस्योपस्थानम् । अन्यत्र त्वन्तरेणापि वचनं एकस्योक्तं सर्वेषां भवति । [1]यथाऽग्नेस्तृणान्यपचिनोतीति तृणापचयनं सर्वेषाम् ॥

(वृ) उपतिष्ठत–धिकृत––गार्हपत्यमुपतिष्ठते गृहान् प्रेक्षते पशून् वेत्यादि ।

तत्राप्याहवनीयस्य––उपस्थानं प्राजापत्यतृचाादिभिरित्येवमर्थं आहवनीय[2]मुपतिष्ठेतेति वचनम् ।

वचना–नम्––द्विपदाभिर्गार्हपत्यमुपतिष्ठते इत्यादिषु ।

अन्यत्रत्व–पां भवति––अन्यत्रेत्युपस्थानव्यतिरिक्तकर्मणि एकस्योक्तं सर्वेषां भवति ।

यथा अग्ने–नं सर्वेषाम्––अग्नीनाम् । एकवचनचोदितमपि

(सू) [3]उत्तरामाहुतिमुपोत्थाय कवातिर्यङ्ङिवोपतिष्ठेत ॥ ३ ॥ ३ ॥ १३५० ॥

[उपस्थान एवान्यो विशेषः]

(भा) उत्तामाहुतिं हुतां प्रति अग्निसमीपे उपोत्थानमुपस्थानम् । कवातिर्यङ्ङिव-ईषात्तिर्यङ्ङिव ॥ १३५० ॥

(वृ) उत्तरामा–स्थानम्––उत्तरामाहुतिमुपोत्थायेति न संबन्धः आहुतेरुपस्थानासंभवात् । [4]तत उत्तरामाहुतिं हुतामित्यन्वयः । अग्नि-[5]समीप उपस्थानमिति चाध्याहारः ॥

---

[1] यदाग्ने–ग. [2] मेवोपति–ग. [3] उत्तरामाहुतिं प्रति आहवनीयसमीपे उत्थायेत्यर्थः । ईषत्तिर्यङ्मुखस्सन् अग्निं प्रति ईषदाभिमुखः स्थितस्सान्निति यावत् । अत्रोपोत्थानवचनात् अन्यत्रासीनाविधावासीन एवोपतिष्ठते (रु). [4] अत उ–ग. [5] पमुप–ग.

[कवातिर्यक्तु स्वरूपे प्रामाणिकसंमतिः]

कवातिर्यङ्ङिव–ईषत्तिर्यङ्ङिव———पार्श्वेनोपस्थानमित्यर्थः भवस्वामिमतात् ॥

(सू.) उपप्रयन्तो अध्वरमिति [1]षड्भिः ॥ ४ ॥ ४ ॥ ॥ १३५१ ॥

अग्नीषोमाविमं सुम इति सप्तम्या पूर्वपक्षे । [2]ऐन्द्राग्न्या सप्तम्याऽपरपक्षे ॥ ५ ॥ ५ ॥ १३५२ ॥

(भा). इन्द्राग्नी रोचना दिव इत्यपरपक्षे सप्तमी । [3]सप्तम्याष्टम्येति[4] च सङ्ख्याविरोधात् अष्टाभिरेवोपस्थानम् ॥ १३५२ ॥

(सू.) दधिक्राव्णो अकारिषमित्युभय[5]त्राष्टम्या- ॥ ६ ॥ ६ ॥ १३५३ ॥

ममाग्ने वर्चो विहवेष्वस्त्विति चतस्रः [6]पुरस्ता- दग्नीषोमीयायाः पूर्वपक्षे । तथैन्द्राग्न्याअपरपक्षे ॥ ॥ ७ ॥ ७ ॥ १३५४ ॥

---

[1] आहवनीय मुपतिष्ठत इति शेषः (र). [2] उभावामिन्द्राग्नी इत्यनया ; प्रकरणात् ; एवमेव सत्याषाढः । तस्मात् पूर्वासु षट्सु पठिता सैव पुनरावर्तनीया (रु). [3] सप्तमी अष्टम्येति–ङ. सम्या अष्ट–क. [4] ति सङ्ख्या–छ. [5] उभयोः पक्षयोः (रु). [6] सप्तम्याश्च पुरस्ताच्चतस्र एता उपस्थानार्थाः स्युरित्यर्थः । जपार्था एता नोपस्थानार्थाः इति केचित् । तदयुक्तम् ; उपस्थानाधिकारात् । प्रातरवनेके चतस्रोऽग्नीषोमाविमं सुम इत्येषेत्यत्रोपस्थानार्थ- तायाः व्यक्तत्वात् । ममाग्ने वर्चो विहवेष्विति जपित्वेति क्वचिद्विशेषप्रदर्शनाच्च ॥ तथा चतसृभिरुपतिष्ठेतेत्येव सत्याषाढभरद्वाजौ ॥ तत्र त्वादितः षड्भ्योऽनन्तरमेताश्च- तस्र उक्त्वा ततोऽग्नीषोमीयैन्द्राग्न्यौ पक्षवशादेकादश्यौ नियम्येते ॥ ततो दधिक्राव्ण इति द्वादश्येत्यनुक्तिः पर्यनुयोज्या विचित्रत्वात्सूत्रक्रियायाः (रु).

[ममाग्न इत्यादेरनुपस्थानार्थत्वे हेतुः]

(भा) 'ममाग्ने वर्च' इति चतस्रो (जपित्वा) जपति । प्रत्यगाशिषो मन्त्रान् जपत्यकरणानिति परिभाषितत्वात् । पुरस्ताच्चतसृभिरिति तृतीयया निर्देशाच्च नोपस्थानमाभिः ॥

(वृ) ममाग्ने–पितत्वात्—ममाग्ने वर्च इति चतसृणां उपप्रयन्त इति षट्का[1]नन्तरनिवेशेऽपि सप्तम्याष्टम्येति करणनिर्देशादुप[2]स्थानमन्त्रेषु सप्तमीत्वमष्टमीत्वं च निर्दिश्यते । अतश्च ममाग्न इति चतस्रो जपति । प्रत्यगाशिषो मन्त्रान् जपत्यकरणानिति परिभाषितत्वात् ॥ ॥ १३५४ ॥

[भाष्ये जपित्वेति पदप्रयोजनम्]

(वृ) पुरस्ताच्च–नमाभिः—चतसृभिः । किं तु जप एव । प्रातरवनेके तु ममाग्ने वर्चो विहवेष्वस्त्विति चतस्र इत्येतावतापि [3]जपत्वे सिद्धे जपित्वेति वचनं प्रातरवनेकेन प्रातरुपस्थेय इति कृत्स्नस्योपस्थाने विनियो[4]गार्थम् ॥

(सू) अग्न आयूंषि पवस इति षड्भिः संवत्सरे [5]संवत्सरे सदा वा ॥ ८ ॥ ८ ॥ १३५५ ॥

(भा) यदा षड्भिराग्निपावमानीभि[6]स्संवत्सरे संवत्सरे [7]उपस्थानम् तदा संवत्सरान्ते संवत्सर एव तदुपस्थानं नियम्यते वीप्सावचनस्यार्थवत्त्वाय ॥

यदापि सदा तदाऽपि न [8]मासनियमः पूर्वपक्षेऽपरपक्षे इति नियमात् ॥ १३५५ ॥

[वीप्सासाफल्योपपादनम्]

(वृ) यदा त्वाय––संवत्सर इत्येतावत्युक्ते प्रथमसंवत्सर एव

---

[1] नन्तरंनि ग. [2] स्थानाकरणम्–ग. [3] जपे–छ. [4] गात्–ग. [5] प्रतिसंवत्सरं सकृत्सकृदेताभिराहवनीयमुपतिष्ठते सदा अहरहर्वा–(र). [6] नीभिस्संवत्सर उपस्थानसंवत्सरान्त एव–च. [7] नं संवत्सरान्त एव–क. ग. [8] मासानिय–ङ.

प्राप्नोति। सर्वदा प्राप्तौ संवत्सरग्रहणमनर्थकम् । वीप्सायां सत्यां प्रतिसंवत्सरमावृत्त्या संवत्सरान्त एव सकृत्सकृदिति गम्यते ।

[मासान्त उपस्थानविरहोत्र उपपत्तिः

**यदा-नियमात्**—अस्यार्थः—मासनियम इति संवत्सरवन्न मासान्त उपस्थानम् । संवत्सरवन्मासस्याचोदितत्वात् । 'षड्भिरुत्तराभिरुपतिष्ठते द्वादश संपद्यन्ते' इति उपप्रयन्त इत्यादिभिस्समानविधानात् । सदाशब्दविरोधाच्च । अतः प्रत्यहमाग्निपावमानीभिरुपस्थानं सदापक्षे मासनियम इत्यग्नीषोमीयायाः पूर्वपक्षे ऐन्द्राग्न्या[1] अपरपक्ष इति पक्षभेदेन प्रतिमासं व्यवस्थयोपस्थानसिद्ध्यर्थः ॥

(सू) **पवमानहवींपि [2]वा संवत्सरे संवत्सरे निर्वपेदेतासां स्थाने ॥ ९ ॥ ९ ॥ १३५६ ॥**

[पवमानहविषां दक्षिणापूर्वकल्पनाविरोधश्च]

(भा) पवमानहवींष्यन्वाहार्यदाक्षिणानि समानतन्त्राणि एतासां स्थाने केचिच्छतमानदक्षिणानि पूर्ववदिहापि हविषामुक्तत्वात् । तानि च सदापक्षे न लभ्यन्ते ॥ १३५६ ॥

(वृ) **पवमान-भ्यन्ते**—अन्वाहार्यदक्षिणानीति अधानप्रकरणे शतमानोपदेशात् । नानातन्त्रत्वविधानाभावात्समानतन्त्राण्येव ॥

**केचिच्छत-क्तत्वात्**—तासां शतमानदक्षिणात्वात् ।

**तानिच-भ्यन्ते**—पुनस्संवत्सरवचनात् ॥

(सू) **आयुर्दा अग्न इति सिद्धमा[3]चित्रावसोः ॥ १० ॥ ॥ १० ॥ १३५७ ॥**

(भा) आयुर्दा अग्न इति सिद्धमुभयोः पक्षयोः [4]नित्यत्वेन ।

---

[1] ग्नापर ग. [2] अथवा नैताभिरुपतिष्ठेत किंतु प्रत्याम्नायत्वेन संवत्सरे पवमानहवींषि समानतन्त्राणि निर्वपेत्–(रु). [3] चित्रावसुशब्देन तदादिमन्त्रो लक्ष्यते । आयुर्दा इत्यादि अशीयेत्यन्तो मन्त्रः । पूर्वमन्त्रचतुष्टयं सिद्धमुपस्थाने न तत्र कश्चिद्विशेषः (रु). [4] निर्वर्तत्वेनेति–ग.

(वृ) आयुर्दा–त्वेन—सिद्धवचनं संवत्सरपक्षे[1] सदापक्षे च प्राप्त्यर्थम् ॥

(सू.) [2] त्रिश्चित्रावसुना सायमुपतिष्ठते त्रिरर्वाग्वसुना प्रातरर्वाग्वसो स्वस्ति ते पारमशीय ॥ ११ ॥ ११ ॥ ॥ १३५८ ॥

[उपस्थानयोर्विशेषः उपदेशमतं च]

(भा) अर्वाग्वसुना प्रातरिति वचनादेतदेवोपस्था[3]नं चित्रावसोः स्थाने अर्वाग्वसुना कृतेन प्रातरि[4]ति लभ्यते [5]परिपाठात् अर्वाग्वसोः पुनर्नार्वाग्वसुमात्रं प्रातः । उपदेशो यस्मिन् अर्वाग्वसुः प्रातरवनेके तदे[6]वेदं कृत्वा नियम्यते प्रातरिति ।

[भाष्यदर्शितप्रथमपक्षोपपत्तिः]

(वृ) आवार्ग्व-त्रंप्रातः—अस्यार्थः—उपप्रयन्त इ[7]त्युपस्थानमध्यवर्ति चित्रावसोः स्थाने अर्वा[8]ग्वसोर्विधानादस्योपस्थानस्य प्रातरपि प्राप्तिः । [9]प्रातरवनेकेन च विकल्प्यते । न चार्वाग्वसुना प्रातरिति यावदुपात्तं अर्वाग्वस्वित्येतावन्मात्रं प्रातरर्वाग्वसोस्स्वस्ति ते पारमशीयेति परिपाठात् ॥

[उपदेशपक्षाशयः]

उपदेशो–प्रातरिति—यस्मिन् प्रातरवनेके त्रिरर्वाग्वसुः पठ्यते स प्रातारनेकः त्रिरर्वाग्वसुनेत्यनेनोपलक्ष्यते प्रातःकाले इदमुपस्थानं कृत्वा स प्रातरवनेको नियम्यते ॥

---

[1] पक्षे च–ग. [2] इति करणोऽन्ते द्रष्टव्यः इत्यर्वाग्वसुना प्रातरिति । अर्वाग्वसुवचनं च प्रसङ्गात्प्रातरवनेकार्थं नत्वास्मिन्नेवोपस्थाने प्रातर्विशेषप्रदर्शनार्थम् । सायङ्काल एवास्य नियम इष्यमाणत्वात् । भरद्वाजसंमतिरत्रैव (रु). [3] स्थाने–ग. [4] तरपि–क. तरसि–ग. [5] अपरिपाठात्–च. [6] तदेवकृत्वा–ङ. तदेवं कृत्वा–च. [7] त्यग्न्युप–ग. [8] ग्वाहिर्वि–ग. [9] प्रातरवनेके इत्यारभ्य यस्मिन् प्रातरवनेके इत्यन्तो लुप्तः–ग. किन्तु ‘तदेवेदं कृत्वा नियम्यते प्रातरिति इति मूलमात्रं अयथातथं सङ्कलितं दृश्यते–ग.

(सू) [1] इन्धानास्त्वा शतं हिमा इत्युपस्थाय इन्धानास्त्वा शतं हिमाः। अग्ने समिदस्याभिशस्त्या मा पाहि सोमस्य समिदसि परस्पा म एधि यमस्य समिदसि मृत्योर्मा पाहीति चतस्रस्समिध एकैकस्मिन्नाधाय संत्वमग्ने सूर्यस्य वर्चसा गथा इत्यनुवाकशेषेणोपस्थाय वयं सोमव्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तो अशीमहीति मुखं विमृष्टे ॥ ॥ १२ ॥ १२ ॥ १३५९ ॥

षोडशी खण्डिका ॥

---

[इन्धानाइत्यादिमन्त्रकार्यम्]

(भा) इन्धानास्त्वेत्या[2]दिसप्तपदा समिदाधानेऽपि पुनः। गार्हपत्यादि[3] पञ्चस्वपि चतस्रश्चतस्रः द्वितीया[4]द्याः। यजुर्भिः मुखं स्पृशति सर्वतः।

(वृ) इन्धाना–पुनः—सैव प्रयोज्या।
गार्हप–तस्रः—अग्निषु[5] समिधः।
यजुर्भि–र्वतः—विमृष्ट इत्युपसर्गनिर्देशात् ॥

(सू) संपश्यामि प्रजा अहमिति [6]गृहान् प्रेक्षते ॥ १ ॥ १३ ॥ १३६० ॥

(भा) यजमाने गृहे च बहुवचनम् ॥ १३६० ॥

(वृ) यज–चनम्—गृहान् प्रेक्षते इति ॥

---

[1] इन्धानास्त्वेत्यनया सप्तपदयर्चा प्रथममाहवनीयमुपस्थाय पुनरनया परैश्च त्रिभिर्यजुर्भिरेकैकत्राग्नौ चतस्रश्चतस्रस्समिध आदध्यात् (रु). [2] त्याद्याप्तपदाधानेऽपि–ङ. त्यादिष्टा समिदाधा–छ. त्यादिष्टया सप्तपदास–च. [3] दिषुप–छ. दिपञ्चपाग्निषु–ख. [4] द्याः अद्भिर्मुखम्–ख. ग. [5] षुन्वत ? समिध–छ. [6] गृहमेव गृहाः (रु).

(सू) अम्भस्स्थाम्भो वो भक्षीयेति [1] गोष्ठमुपतिष्ठते ॥ २ ॥ १४ ॥ १३६१ ॥

(भा) उपस्थानमुपस्थितेन सर्वत्र ॥

[उपस्थानदेशादि]

(वृ) उप–र्वत्र—उपस्थेयसमीपस्थितेनोपस्थानम् सर्वत्र उपशब्द-प्रयोगात् । भूरादित्यवाय्वाकाशदिशां तदभिमुखेन । इन्द्रादीनामूर्ध्व-मुखेन ॥

(सू) रेवतीरमध्वमित्यन्तराग्नी तिष्ठन् जपति ॥ ३ ॥ ॥ १५ ॥ १३६२ ॥

(सू) संहितासि विश्वरूपीरिति [2] वत्समभिमृशति ॥ ॥ ४ ॥ १६ ॥ १३६३ ॥

[वत्साभिमर्शनेव्यवस्था]

(भा) अग्निहोत्रधेनोर्वत्सालम्भः यदि पयसा होमः; इतरथा यं कञ्चित् ।

(वृ) यदिपयसाहोमः—यत्किञ्चिद्द्रव्यान्तरहोमे यस्याः कस्याश्चि॰द्वत्सालम्भः ॥

(सू) [3] संहितासि विश्वरूपेति वत्साम् ॥ ५ ॥ १७ ॥ ॥ १३६४ ॥

(भा) विश्वरूपा मोर्जेति वत्सायां विकारः ॥ १३६४ ॥

(सू) भुवनमसि सहस्रपोषं पुषेति वा [4]वत्सम् ॥ ६ ॥ ॥ १७ ॥ १३६५ ॥

---

[1] गो समूहो गोष्ठं न तु गोस्थानम् अम्भो वो भक्षीयेति लिङ्गात् (रु). [2] वत्सं यं कञ्चिदभिमृशत्यविशेषात् । अग्निहोत्र्या वत्समित्येव तु बोधायनः (रु). [3] तेनैव वत्सामप्यभिमृशति । विश्वरूपेति तु विकारः (रु). [4] वत्समितिवचनान्न वत्सायामयं मन्त्रः (रु).

उपत्याऽग्ने दिवेदिव इति तिसृभि[1]र्गायत्रीभिर्गार्हपत्यमुपतिष्ठते अग्ने त्वं नो अन्तम इति चतसृभिश्च द्विपदाभिः ॥ ७ ॥ १८ ॥ १३६६ ॥

[द्विपदोपस्थाने विशेषः]

(भा) द्विपदास्ववसानप्रयोगो नास्ति ; समास एव। उपचरणीयासु द्विपदात्वं नेष्यत इति छन्दोविचितिवचनात् ।

(वृ) उपचरणीयासु---प्रयुज्यमानासु ॥

(सू) सनो बोधि श्रुधीहवमुरुष्याणो अघायतः समस्मादित्येषा [2]चतुर्थी भवति ॥ ८ ॥ १९ ॥ ॥ १३६७ ॥

ऊर्जा वः पश्याम्यूर्जा मा पश्यतेति गृहान् प्रेक्षते पशून् वा ॥ ९ ॥ ९ ॥ १३६८ ॥

महित्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्ष वरुणस्य। न हि तेषाममा चन नाध्वसु वारणेष्वा । ईशे रिपुरघशंसः । ते हि पुत्रासो अदितेश्छर्दिर्यच्छन्त्यजस्रम् । विदाशुषे वार्याणीति प्राजापत्येन तृचेनो[3]पतिष्ठते ॥ १० ॥ २० ॥ ॥ १३६९ ॥

[तृचविशेषेणोपस्थाननियमः]

(भा) प्राजापत्यतृचेनोपस्थानमाहवनीयस्यैव ।

(वृ) प्राजाप-स्यैव—अन्यस्यानुपादानात् ॥

---

[1] गायत्रीभिर्द्विपदाभिरिति ब्राह्मणानुकरणार्थम् तद्व्याख्यानार्थं वा (रु).
[2] द्विपदेति शेषः (रु). [3] आहवनीयमितिशेषः (रु).

(सू.) यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभि-रन्वीक्षेत । [1]स्वस्त्येव पुनरागच्छतीत्ययज्ञसंयुक्तः कल्पः ॥ ११ ॥ २१ ॥ १३७० ॥

[काम्यसंयुक्तेऽन्वीक्षणेविशेषः]

(भा) स्वस्ति पुनरागच्छेदिति सङ्कल्पितेन पश्चात्स्थितेनावेक्षणम् ।

(वृ) स्वस्तिपुन--पेक्षणम्--- अनु[2]शब्दप्रयोगात् । संकल्पितेनेति कर्तरि निष्ठा ॥

(सू) मा नश्शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते । यो रेवान्यो अमीवहावसुवि-त्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः । परिते दूडभोरथोऽस्मा॑ँअश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ १२ ॥ २२ ॥ १३७१ ॥

सप्तदशी खण्डिका.

---

[दशभिरुपस्थाने विशेषः]

(भा) मानश्शंस इति दशभिराहवनीयस्यैव ॥

(सू) तत्सवितुर्वरेण्यं सोमानं स्वरणं मित्रस्य चर्षणीधृतः प्रसमित्र कदाचन स्तरीरसि कदाचन-प्रयुच्छसि परित्वाऽग्ने पुरं वयमित्यु[3]पस्थाय ॥१॥ ॥ २३ ॥ १३७२ ॥

---

[1] योन्यं प्रवत्स्यन्तं कामयेत अनामयमेवायं पुनरागच्छेदिति स तं प्रस्थितमेतेन तृचेनान्वीक्षेत । स स्वस्त्येव पुनरागच्छति । सर्वार्थश्चायं कल्पो न यजमानस्यैव (रु). [2] अनुकल्पप्र?--छ. [3] आहवनीयमितिशेषः (रु).

[1] निमृदोऽसि न्यहं तं मृद्यासं योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति दक्षिणस्य पदः पार्ष्ण्या निमृद्नीयाद्यदि पापीयसा स्पर्धेत प्रभूरसि ग्राहं तमभिभूयासं योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति दक्षिणतः पदो निगृह्णीयाद्यदि सदृशेन। अभिभूरस्यभ्यहं तं भूयासं योस्मान् द्वेष्टि यं च वयं द्विष्म इति प्रपदेन यदि श्रेयसा ॥ २ ॥ २४ ॥ ॥ १३७३ ॥

(भा) पार्ष्णिः—पादस्यापरो भागः। तया [2]निमर्दनं भूमेः। [3]स्पर्धा-परस्परविवादः [4] दक्षिणतः—दक्षिणेन पादभागेन। निगृह्णीयात्—निपीडयेत् भूमिम्। सदृशस्तुल्यगुणः। [5]प्रपदं [6]पादाग्रं तेन निपीडयत्यभिभूरसीति। यद्याधिकगुणेन स्पर्धा [7]सर्वैर्मन्त्रैर्युगपत्सर्वलोकानामुपस्थानम्॥

(वृ) यदि पापीयसा स्पर्धा प्रभूरसीति।

(सू.) पूषा मा पशुपाः पातु पूषा मा पथिपाः पा तु
पूषा माऽधिपाः पा तु पूषा माऽधिपतिः पा तु

---

[1] काम्योऽयं प्रयोगः यदि पापीयसा आत्मनो हीनर्धिना स्पर्धेत; न किलायमस्मत्तुल्यस्यादिति तदा दक्षिणस्य पदः पार्ष्ण्या पश्चिमभागेन निमृद्नीयात्—निपीडयेद्भूमिम्। यदि सदृशेन स्पर्धेत; कथं किलायमस्मत्तुल्यस्सं वृत्त इति दक्षिणस्य दक्षिणेन भागेन निगृह्णीयात् निपीडयेत्। यदि श्रेयसा—स्फीतर्धिना स्पर्धेत; धिगयं मदधिकः पाप इति प्रपदेन—पदाग्रेण निगृह्णीयात्। एवं कृते सस न्यक्कृतो भवतीति भावः (रु). [2] विमर्दनं—घ. [3] यदि पापीयसा स्पर्धा—घ. [4] दक्षिणेन पदेन दक्षिणतः—घ. [5] यदिश्रेयसास्पर्धेत प्रपदं—घ. यदि सदृशेन स्पर्धेत प्रभूरसीति दक्षि—घ. [6] पदाग्रम्—छ. [7] तसर्वैर्मैत्रे ?—छ.

इति लोकानुपस्थाय प्राची दिगग्निर्देवताग्निं स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । प्रतीची दिक् सोमो देवता सोमं स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । उदीची दिङ्मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु यो मैतस्यै दिशोऽभिदासति । इयं दिगादितिर्देवताऽदितिं स ऋच्छति यो मैतस्यै दिशोभिदासतीति यथालिङ्गं दिश उपस्थाय ॥१॥ २५ ॥ १३७४ ॥

अष्टादशी खण्डिका

———

(भा) दिशस्त्वेकैक[1]स्या यथालिङ्गम् ॥ २५ ॥

(वृ) प्राच्याद्याः प्राचीदिगित्यादिभिः ।

(सू.) अग्नीनुपसमाधाय धर्मो मा धर्मणः पातु विधर्मो विधर्मणः पात्वायुश्च प्रायुश्च चक्षुश्च विचक्षुश्च प्राङ्चावाङ् चोरुग उरुगस्य ते वाचा वयं संभक्तेन गमेमहीत्युप [2]स्थाय अग्न आयूंषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते ॥ १ ॥ ॥ २६ ॥ १३७५ ॥

---

[1] स्या उपस्थानं यथा—ङ. [2] लोकोपस्थानमेकैकस्यैकेन मन्त्रेण एकलिङ्गत्वात् चतुर्थी विकल्पार्थः । उपसमाधानम् काष्ठैरुपसमिन्धनम् । धर्मो मेत्याहवनीयस्योपस्थानम् (रु).

[धर्मो म इत्याद्युपस्थाने मतिभेदः]

(भा) अग्नीन्[1] वलवतः करोतीन्धनैः। धर्मो मेत्याहवनीयस्यैव। केचित् सर्वेषामुपस्थानं अधिकृतत्वात्।

[धर्मोम इत्याद्युपस्थानस्य साधारण्ये हेतुः]

(वृ) केचि--तत्वात्——यद्यपि आहवनीयमेवोपतिष्ठेतेत्युक्तम्। तथाऽप्यग्नीनुपसमाधाय धर्मो मेत्यादिनोपस्थायेति समानकर्तृकत्वादुपसमाधानोपस्थानयोः अग्नीनिति साधारणो निर्देश इति केचित्

(सू.) [2]अग्ने गृहपत इति च। पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्य ॥२॥ २७॥ ॥ १३७६ ॥

[3]यत्किञ्चाग्निहोत्री कामयेत तदग्नीन् याचेत उपैनं तन्नमतीति विज्ञायते ॥३॥ २८॥ ॥ १३७७॥

[फलकामानायां कालः]

(भा) अग्निहोत्रमस्यास्तीत्यग्निहोत्री। स कृत्वोपस्थानं इष्टं कामं याचेत यदिच्छति॥

(सू) [4]उपस्थेयोग्नी ३ नोंपस्थेया ३ इत्युक्तम् ॥४॥ ॥ २९॥ १३७८॥

[अनुपस्थानहेतुपरश्रुत्यर्थः]

(भा) मनुष्यायाहरहरन्नमाहृत्य दत्वा पश्चादेनं याचति। स एनं क्रोधयति याच्ञया। देवानामन्नं दत्वा क एनानुपस्थानेन याचिष्यति

---

[1] ज्वलतः क–क. [2] व्याख्यातोऽयं याजमाने (रु). [3] अग्न्युपस्थानान्ते यजमानोऽभिमतमर्थमग्नीन् याचेत। सोऽर्थोऽस्य स्वयमागच्छति–(रु). [4] एवमुपस्थानमुक्त्वा तस्यानित्यत्वमपि दर्शितं ब्राह्मणे। तदिदानीं दर्शयति; ब्राह्मणे उपस्थानं निन्दित्वा निषिध्य ततः प्रशंसा पुरस्सरमुक्तं तस्मादुपस्थेय इति। तेनैवं विहितनिषिद्धमुपस्थानं वैकल्पिकमितिभावः (रु).

[उपस्थानातिरिक्तं कार्यमेव]

अतो नोपस्थानम्। अन्यत्तु सर्वं उद्धरेत्यादि मार्जनान्तम्।

[उपस्थान परश्रुत्यर्थः]

आशिषे आशीरर्थम्। यजमानो यजते एषा च निष्ठा आशीरग्नीनामुपस्थानम् अत उपस्थातव्यम्। प्रजापतिना पशवस्सृष्टाः ते चाहोरात्रे प्रविष्टाः ते छन्दोभिरुपस्थानमन्त्रैर्लब्धाः अन्योऽपि यस्तै-रुपस्थानं करोति स्वयमेव पित्र्यं प्राजापत्यं पशुजातं [1] याचते। जामि पुनरुक्तदोषः न तत्रास्ति योऽहन्यहन्युपस्थानं करोति।

[अनुपस्थानदृष्टान्ते हेतुसंगमनम्]

(वृ) मनुष्याय-च्चया—अस्यार्थः—उपस्थेयोऽग्निर्नोपस्थेया इति ब्राह्मणव्याख्या। मनुष्यायाहरहरन्नादिकं दत्वा यः स्वाभिलषितं प्रार्थ-यते स तु तस्मै क्रुध्यति किं पुनर्देवा इति।

देवाना-नोपस्थानम्—होमेन देवानाराध्य आशीर्भिरुप-स्थानेन याचते देवताक्रोधप्रसङ्गात् नोपस्थेय इत्युपस्थानप्रतिषेध इति॥

अन्यत्-नान्तम्—याजमानम् कर्तव्यम्। आशिषे वै कं यजमानो यजत इत्यादिरर्थः;

आशिषे-जते—यजमानो हि स्वप्रयोजनार्थं यजते।

एषा च निष्ठा—पारमार्थिकी स्थितिः।

आशी-स्थानम्—प्रार्थनात्मकम्। यजमानो ह्याशिषे देवता-व्यतिरिक्तं कं यजते?

अत उपस्थातव्यम्—तस्मादुपस्थेयः। उपस्थानेनाशीः-प्रार्थनं कुर्यादेव।

[उपस्थानविकल्पसिद्धितदभावपक्षौ]

अत्रोपस्थेयो नोपस्थेय इति विहितप्रतिषेधाद्विकल्प इत्यन्ये।

---

[1] याचयति-क.

स इन्वै तमुपार्छतीत्युत्तरविधिप्रशंसार्था निन्दा तस्मादुपस्थेय इति विधिरित्यन्ये । सैव निष्ठा ; प्रजापतिः पशूनसृजतेति वाक्यशेषात् ।

**प्रजापतिना-पशुजातं याचते**—उपलभते इति । प्रजापतिः प्रजा असृजतेति सर्वेषां प्रजापतिसंतानत्वात् स्वमेव पित्र्यमित्युच्यते ॥

[उपस्थानमहिमा]

**जामिपु-करोति**—अहन्यहन्येकरूपफलाशासनेऽपि पुनरुक्तदोषाभावः । पुनः पुनरुपस्थाने पुनः पुनः कृत्स्नफलसिद्धेः नानाकर्मभिः स्वर्गादिसिद्धिवत् ॥

(सू) [1] **नक्तमुपतिष्ठते न प्रातः** ॥ ५ ॥ ३० ॥ ॥ १३७९ ॥

(भा) प्रातरुपस्थानवर्जमन्यद्याजमानम् ॥ ३० ॥

[न प्रातरिति निषेधे भवस्वामितदन्यपक्षौ]

(वृ) **पातरु-मानम्**—भवस्वामिमतिस्तु नक्तमुपतिष्ठते न प्रातरित्यत्र वाक्यभेदभयात् न प्रातरित्यनुवादः प्रातःकाले उपस्थेयोऽग्नीर्नोपस्थेया इति विकल्पप्राप्तस्यानुपस्थानस्यानुवाद इति । सूत्रकारमतिस्तु रात्रावेवोपस्थानं करोति प्रातरुपस्थानवर्जं सर्वं याजमानमन्यत्करोतीत्युक्तं नक्तमुपतिष्ठते न प्रातरिति ॥

(सू) [2] **न प्रातरग्निमुपचनावरोहेन्न प्रातराहिताग्निश्च न मन्येतेति वाजसनेयकम्** ॥ ६ ॥ ३१ ॥ ॥ १३८० ॥

---

[1] अथोपस्थानकल्पेऽपि सायमेवोपस्थानं न प्रातरित्युक्तं ब्राह्मणे ; तदपि दर्शयति — एवं च यथोक्तमेतदुपस्थानं न प्रातःकाले इति सिद्धं भवति । अत एवोत्तरकल्पे सायंप्रातरिति वक्ष्यति । सुव्यक्तं चैतत् सूत्रान्तरेषु (रु).

[2] अथ शाखान्तराभिप्रायेण याजमानान्तरस्यापि प्रातर्निवृत्तिं दर्शयति : च नेति निपातोऽप्यर्थे । प्रातरग्निमपि नोपगच्छेत् । आहिताग्निरस्मीति च न मन्येत का कथा याजमानेष्वित्यर्थः (रु).

[क्वचिदुपावरोहणादिनिषेधतद्विवरणे]

(भा) अथवा प्रातःकाले उपावरोहे[1]च्चन नाग्नि (निमित्त)म् । अतः सर्वयाजमाननिवृत्तिरस्मिन् पक्षे । यदाऽप्याहिताग्निरस्मीत्यात्मानं न मन्यते तदा प्रातराहिताग्निव्रतान्यपि न करोति । [2]अहुते न भोक्तव्यमित्यादीनि ।

(वृ) न प्रातरग्निमुपचनावरोहेदिति सूत्रस्यार्थः—

अथवा – निमित्तम्—उपचनावरोहेदित्यस्योपशब्दस्य अवरोहेदित्यनेनान्वयः । अग्निमित्यग्निनिमित्तमित्यर्थः । अग्निनिमित्तं किञ्चित्कर्तुं नोपावरोहेच्चन यजमानः न प्रातःकालेऽग्निसमीपं गच्छेदिति ।

अतः सर्व–स्मिन्पक्षे—न प्रातराहिताग्निश्चन मन्यतेत्यस्यार्थः ।

यदाऽप्या–करोति—प्रातःकाले यदा वाजसनेयिमतमाश्रित्य आहिता[3]ग्निरपि नास्मीति मन्यते तदा आहिताग्नित्वनिमित्तव्रतान्यपि न कर्तव्यानि ।

अहु–[4]दीनि—तत्राप्यनृत[5]वचनं प्रतिषिद्धमेव । प्रागप्याधानात् अनृतात्सत्यमुपैमीत्येवमादीनां प्रवृत्तत्वात् ॥

(सू) [6]भूर्भुवस्सुवस्सुप्रजाः प्रजया भूयासं सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैरित्येवोपतिष्ठेतेति वाजसनेयकम् । भर्तु वश्शकेयं श्रद्धा मे मा व्यगादितिवा ॥ ७ ॥ ३२ ॥ १३८१ ॥

[उपस्थाने वाजसनेयिनां मतम्]

(भा) एवोपतिष्ठेतेत्यवधारणात् सर्वाग्न्युपस्थाननिवृत्तिः । अनेन त्वाहवनीयस्यैवोपस्थानम्[7] ।

---

[1] त् उपचना–क. [2] हुतेन भो–घ. [3] ग्निरस्मीति ?–घ. [4] दीनि; –अनृत–घ. [5] वदनं–छ. [6] इमावपि कल्पौ सायंकालिकावेव; उत्तरत्र सायं प्रातर्ग्रहणात् । एवकारः सर्वेतरोपस्थानतन्त्रनिवृत्त्यर्थः (रु). [7] नं यदि करोति सायम्–क.

(सू) वात्सप्रेणैव सायंप्रातरुपतिष्ठत इत्येके ॥ ८ ॥
॥ ३३ ॥ १३८२ ॥

[तत्रैव पक्षान्तरम्]

वात्सप्रस्य सायंप्रातर्नियमात् ॥ भूर्भुवस्सुवः भर्तुं वश्शकेयमिति सायमेवोपस्थानम्[1] । न लभ्यते प्रातराभ्यामुपस्थानामिति । अन्ये त्वाहुः; [2]वात्सप्रेण कृत्वोपस्थानं यदि करोति प्रातः । ततो वात्सप्रेणैव कर्तव्यं न प्रातरवनेकेनान्येन वेति ।

(वृ) एवोप-न मिति—वात्सप्रस्य कालद्वयपरामर्शात् भूर्भुवस्सुवस्सुप्रजा इति भर्तुं वश्शकेयमित्येतयोरन्यतरकालसम्बन्धे प्रथमभावित्वात्सायंकाल एव ।

[वात्सप्रेणोपस्थाने मतान्तराशयविवरणम्]

अन्येत्वा–नेनवेति — अस्यार्थः; वात्सप्रेणैवेत्यवधारणस्य नायमर्थः वात्सप्रस्यैवोभयकालान्वय इति । किन्तर्हि? वात्सप्रेण सायमुपस्थाने कृते प्रातरुपस्थाने पक्षे वात्सप्रेणैवोपस्थानं कर्तव्यम् न प्रातरवनेकेनेति। अतो भूर्भुवस्सुवरित्यादरेप्युभयकालसाधारण्योपदाचिः ।

(सू) [3]गोपूक्तेनाश्वसूक्तेन वा ॥ ९ ॥ ३४ ॥ १२६३ ॥

एकोनविंशी खण्डिका

---

[तत्रैव पक्षान्तरं तद्विवरणं च]

(भा) [4]तथोत्तराभ्याम् । यदा तु पुनः पूर्वैरुपस्थानैः सायम् यदि

---

[1] ने ङ. [2] वात्सप्रं–दिवस्परीत्यनुवाकः सूत्रब्राह्मणप्रसिद्धेः । तच्च सायं प्रातर्ग्रहणात् प्रातरपि प्रातरवनेकेन विकल्पते पूर्ववदेवकारार्थः । यदा सायमुपस्थानं वात्सप्रेण तदा प्रातरपि तेनैवेत्येवकारार्थ इत्यपरम् (रु). [3] गोपूक्तिना अश्वसुक्तिना च दृष्टं साम । तथा छन्दोगप्रसिद्धेः । आगावो अग्मन्नित्यनुवाकः गोपूक्तम् । यदक्रन्दः इत्यनुवाकःअश्वसूक्तमित्यन्ये । तयोश्चाद्यमाग्नेयं सौर्यमितरत् । अतस्सायंप्रातर्व्यवतिष्ठेते । [4] अथोत्त–ख. ग.

करोति प्रातस्तदा [1]तैरेव प्रातरवनेकेन चोपस्थानं करोतीति । दिवस्परीत्यनुवाको वात्सप्रः । गोषूक्तमागावो अग्मन्निति उपेदमुपपर्चनान्तम् । अश्वसूक्त-यदक्रन्द इति त्रयोऽनुवाकाः षट्त्रिंशदृचः । क्रमैरत्यक्रमीरिति षट्त्रिंशी ।

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये षष्ठे प्रश्ने
पञ्चमः पटलः.

---

तथोत्तराभ्यामिति—गोषूक्ताश्वसूक्तयोः वात्सप्रतुल्यता ।

यदापुनः – करोतीति – यदा पुनः पूर्वैः—वात्सप्रात्पूर्वतरैः [2]सायमुपस्थानं तदा यदि करोति प्रातः न प्रातरिति निषिद्धस्य वैकल्पिकत्वात्प्रातरुपस्थानपक्षे तैरेव प्रातरवनेकेन वोपस्थानम् ।

इति श्रीरामाग्निचित्कृतायां धूर्तस्वामिभाष्यवृत्तौ
षष्ठे प्रश्ने पञ्चमः पटलः.

---

(सू) [3]प्रातरवनेकेन प्रातरुपस्थेयः ॥ १ ॥ १ ॥
॥ १३८४ ॥

(भा) प्रातरवनेको नामधेयमुपस्थानस्य प्रातःकाले यस्मिन् प्रक्षालनं हस्तयोः; तेन प्रातरेवोपस्थानं न सायम् । अपां पत इति प्रतिषिञ्चति सर्वमन्त्रान्तेन सङ्ख्यायुक्तत्वात् ।

(सू) अधिश्रित उन्नीयमाने वा ममाग्ने वर्चो विहवेष्वस्त्विति चतस्रो जपित्वा अपां पते योऽपां

---

[1] वोपस्थानं तैरेव प्रातरवनेकेन वा करोति–छ. प्रातरवनेकेनवोप–घ.
[2] सायं तदा. पा. [3] प्रातरवनेको नाम शाखान्तरीयमुपस्थानम् प्रातःकालसम्बन्धात् हस्तावनेजनसम्बन्धाच्च (रु).

भागस्स त एष [1] प्रतिपिक्ता अरातयः प्रतिपिक्ता अरातयः प्रतिपिक्ता अरातय इति त्रिर्भूमौ प्रतिपिच्य, कालाय वां जैत्रियाय वामौद्धोत्रियाय वामन्नाद्याय वामवनेनिजे सुकृताय वाम्। इदमहं दुरश्नन्यां निष्पावयामि भ्रातृव्याणां सपत्नानामहं भूयासमुत्तमः अपां मैत्रादिवोदकमिति [2] हस्तौ प्रक्षाल्य श्रियं धातर्मयि धेहि श्रियो माऽधिपतिं कुरु। विशामीशानो मघवेन्द्रो मा यशसा नयदिति जपित्वाऽथ[3] व्युष्टा देवजाता वीड्डु छपथ जम्भनीः। आपो मलमिव प्राणिजन्नस्मत्सु शपथाँ अधीत्याचम्य [4] इन्द्रियावतीमद्याहं वाचमुद्यासं [5] दीर्घ प्राणोऽच्छिन्नोऽदब्धो गोपाः। [6] अजस्रं दैव्यं ज्योतिः सौवर्णं चक्षुः [7] सुश्रुतौ कर्णौ देवश्रुतौ कर्णौ [8] केशा बर्हिः। [9] शिखा प्रस्तरो[10] यथास्थानं कल्पयध्वं शं हृदयायादो मा मा हासिष्टेति यथालिङ्गमङ्गानि संस्पृश्य ॥ २ ॥ २ ॥ १६८५ ॥

विंशी खण्डिका.

---

[1] प्रतिपिक्ता अरातय इति प्रत्यभ्यासं भूमावप आसिञ्चति। अभ्यस्तरूपनिर्देशः प्रतिप्रतिषेकं मन्त्रावृत्त्यर्थोऽसर्वमन्त्रावृत्त्यर्थश्च। [2] हस्तावनेजनमदृष्टार्थम् (रु). [3] अथव्युष्टा इत्याचमनमपांभक्षणम् (रु). आथर्वणसंहितायां तु 2 काण्डे ७ सूक्ते 1मो मन्त्रः–'अघद्विष्टा देवजाता वीरुच्छपथयोपनी। आपो मलमिव प्राणैक्षीत् सर्वान् मच्छपथाँ अधि' इत्याम्नायते [4] इन्द्रियावतीमित्यास्यसंमर्शनम् (रु). [5] दीर्घप्राण इति नासिकायाः (रु). [6] अजस्रमिति चक्षुषः (रु). [7] सुश्रुताविति कर्णयोः (रु). [8] केशा इति केशानाम् (रु). [9] शिखा इति शिखायाः (रु). [10] यथास्थानमिति हृदयस्य (रु).

(सू.) [1]वर्चोऽसि वर्चो मयि धेह्यायुष्कृदायुः पत्नी स्वधा वो गोप्त्र्यो मे स्थ गोपायत मा रक्षत माऽत्मसदो मे स्थ मा नः कश्चित्प्रघान्मा प्रमेष्म ह्युपप्रत्त मुपभूर्भुवस्सुवरायुर्मे यच्छतेति सर्वानुपस्थाय उत्तरेणानुवाकेनाहवनीयं [2]घर्मा जठरान्नादं मामद्यास्मिन् जने कुरुतमन्नादोऽहमद्यास्मिन् जने भूयासमनन्नादस्स योऽस्मान् द्वेष्टि। कवी मातरिश्वाना पशुमन्तं मामद्यास्मिन् जने कुरुतं पशुमानहमद्यास्मिन् जने भूयसमपशुस्स योऽस्मान् द्वेष्टि। यमाङ्गिरसा यशस्विनं मामद्यास्मिन् जने कुरुतं यशस्व्यहमद्यास्मिन् जने भूयासमयशास्स योऽस्मान् द्वेष्टि। अग्ने यो नो अन्तिशपति यश्च दूरे समानो अग्ने अरणो दुरस्युः। वैश्वानरेण सयुजा सजोषास्तं प्रत्यञ्चं सन्दह जातवेदाः। अग्ने यत्तेऽर्चिस्तेन तं प्रत्यर्च योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते शोचिस्तेन तं प्रतिशोच योऽस्मान् द्वेष्टि यं च वयंद्विष्मोऽग्ने यत्ते तपस्तेन तं प्रतितप योऽस्मान् द्वेष्टि यंच वयं द्विष्मोऽग्ने यत्ते हरस्तेन तं प्रतिहर योऽस्मान् द्वेष्टि यं च वयं द्विष्मोऽग्ने यत्ते तेजस्तेन तं प्रतितितिग्धि योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ १ ॥ १ ॥ १३८५ ॥

एकोनविंशी खण्डिका.

---

[1] वर्चोऽसीत्यादिना सर्वानग्नीनुपस्थाय तत उत्तरामाहुति मुपोत्थाय (रु).

[2] घर्मा जठरेत्यादिनेहैकग्नेदित्यन्तेनानुवाकेनाहवनीयमुपस्थायेतिवक्ष्यमाणेन संबन्धः (रु).

(सू) अग्ने रुचां पते नमस्ते रुचे रुचं मीय धेहि । [1]अर्वाग्वसो स्वस्ति ते पारमशीयार्वाग्वसो स्वस्ति ते पारमशीयार्वाग्वसो स्वस्ति ते पारमशीय । [2]तन्तुरसि ततो मा च्छित्था असौ स्वस्ति तेऽस्त्वसौ स्वस्ति तेऽस्त्वसौ स्वस्ति तेऽस्त्विति पुत्राणां नामानि गृह्णाति त्रिस्त्रिरेकैकस्य। स्वस्ति वोऽस्तु ये मामनुस्थ षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चापश्चौषधयश्चोक्चं सूनृता च । यथा ह तद्वसवो गौर्यं चित्पदिपितामंमुञ्चता यजत्राः । एवोष्वस्मन्मुञ्चता व्यंहः प्रतार्यग्ने प्रतरां न आयुः । वयस्सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धिचक्षुर्मुमुग्ध्यस्मान्निधयेऽव बद्धान् । अग्न अयूंषि पवसे दधिक्राव्णो अकारिषमिति [3]द्वे ममाग्ने वर्चो विहवेष्वस्त्विति चतस्रोऽग्नीषोमाविमं सुम इत्येषा । तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि । अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् । न मिनन्ति स्वराज्यम् ॥ १ ॥
॥ १ ॥ १३८६ ॥

द्वाविंशी खण्डिका.

---

1 तत्र त्रिरर्वाग्वसुना प्रातरिति प्रागुक्ताभ्यासप्रदर्शनमर्वाग्वसोस्वस्तीति (रु)
2 तन्तुरसीत्येतत्पुत्रेपुत्रेऽभ्यावर्तते तत्राभ्यस्तरूपनिर्देशः प्रतिषेकवद्व्याख्येयः (रु).
3 द्वे इति दधिक्राव्णो अकारिषम् आदधिक्रा इत्यनयोर्ग्रहणम् (रु).

(सू.) अद्या नो देव सवितः प्रजावत्सावीस्सौभगम् । परादुःष्वप्नियं सुव । विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्म आसुव । अनागसो अदितये वयं देवस्य सवितुस्सवे । विश्वावामानि धीमहि । स हि रत्नानि दाशुषे सुवाति सविता भगः । तं चित्रं भागमीमहे । वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीस्सौभगम् । वामस्य हि क्षयस्य देवभूरेरयाधिया वामभाजस्स्याम । दीक्षा तपो मनसो मातरिश्वा बृहस्पतिर्वाचो अस्याः स योनिः । वेदांसि विद्या मयि सन्तु चारवोऽग्नीषोमा यशो अस्मासु धत्तम् । अग्निर्येन विराजति सोमो येन विराजति सूर्यो येन विराजति विराड्येन विराजति तेनाहं विश्वतस्परि विराज्यासमिहैकवृदित्युपस्थाया[1]ग्नेस्तृणान्यपचिनोति । तेजस्वी ह ब्रह्मवर्चसी भवतीति विज्ञायते ॥ २ ॥ ५ ॥ १३८७ ॥

त्रयोविंशी खण्डिका

---

[प्रतिषेके पक्षद्वयम् तत्तन्मन्त्रैः करणीयेषु विशेषश्च]

(भा) अपां पत इति प्रतिषिञ्चति सर्वमन्त्रान्तेन संख्यायुक्तत्वात् । केचिन्मन्त्रे मन्त्रे सेकः । द्विवचनत्वान्मन्त्रस्य युगपत्प्रक्षालनं

---

1 अग्नेस्तृणान्यपचिनोति । यान्यग्नीनां परिस्तरणतृणानि तानि तेभ्यः स्वयमपोहति । नाध्वर्युः । प्रकरणात् प्रातरवनेक एवायं नियमः अन्यत्राध्वर्युरेव परिसमूहनकाले अपोहति (रु).

हस्तयोः कालाय वामिति । अहर्व्युष्टा इति भक्षणमपाम् । इन्द्रियवतीमिति मुखं स्पृशति यत्र नोच्छिष्टो भवति । दीर्घप्राण इति नासिकाम् । अजस्रामित्यक्षिणी । सुश्रुताविति कर्णौ । केशा इति केशान् । शिरा प्रस्तर इति शिखाम् । यथास्थानमिति हृदयम् । वर्चोऽसीति सर्वाग्नीन् । उत्तरामाहुतिं [1]हुतामुपोत्थायोत्तरेणानुवाकेनाहवनीयमुपतिष्ठते । तन्तुरसि ततो माच्छित्था देवदत्त स्वस्ति तेऽस्तु तन्तुयज्ञदत्त स्वस्ति तेऽस्तु - एवमावर्तते पुत्रे पुत्रे । तन्तुरादि स्वस्ति वोऽस्तु ये मामनुस्थत्येकास्मिन्नप्यानिवृत्तिः । [2]पुत्रद्रव्यगुणत्वाल्लिङ्गस्य, अग्न अयूंषि पवसे दधिक्रा, वृण्ण इत्येते ; एवं द्वे । केचित् दधिक्रावृण्ण आदधिक्रा इति द्वे कुर्वन्ति । इहैकवृदित्युपस्थानान्ते तृणापचयनं यजमानस्येति । यत्करोत्युपस्थानं तस्यान्ते सायमपि । उपदेशः प्रातरवनेक एवेति । अन्यत्राध्वर्युणा शु[3]न्धनैस्सह । तैरेव तृणैः परिस्तरणं पुनः पुनः अपचयस्यार्थवत्त्वाय । अन्यैरन्यैरितिन्यायः । परिस्तरणानां प्रतिपाद्यत्वादन्तकाले ॥ तेजोऽस्यास्तीति तेजस्वी ॥

इति धूर्तस्वामिभाष्ये षष्ठे प्रश्ने षष्ठः पटलः

———

[प्रतिषेके पक्षद्वयाशयः]

(वृ) **अपांपत–क्तत्वात्**—पात्रप्रोक्षणादिवत् सकृन्मन्त्रेण द्विस्तूष्णीमिति न्यायात् ।

**केचि–सेकः**—कर्तव्य इति मन्त्रत्रयेण क्रियात्रयस्य कर्तव्यत्वादेकमन्त्राणि कर्माणीति । ' अपां पत इत्यादेरनुषङ्गं केचित् । अपां पते योऽपां भागः स ते एष प्रतिषिक्ता अरातय इति प्रथमम् । एवमन्यदपीति ।

---

[1] हुत्वोपो–ग. [2] पुत्रे द्रव्यलिङ्गस्येति–ग. [3] शोधनै–छ.

[तत्तन्मन्त्रैः करणीयेषु विशेषविवरणादि]

द्विवच-वामिति—द्व्यर्थवचनात्।

अहन्युं-मपाम्—शौचार्थं पश्चादाचमनम्।

इन्द्रिय-भवति—मुखे यत्र देशे स्पृष्टे[1] नोच्छिष्टो लोमवत्प्रदेशा[2]वोष्ठयोः।

दीर्घप्राण इति-सर्वाग्नीन्—सर्वाग्नीनामुपस्थानं कृत्वा--

उत्तरामाहुतिं-पतिष्ठते—उत्तरामाहुतिमुपोत्थाय कवातिर्य-ङ्ङित्याहवनीयोपस्थानकालस्य कालद्वयसाधारणत्वात्। प्रातःकाले पूर्वानुवाकस्य प्रतिकर्षविधानादुत्तरानुवाकेन उत्तरामाहुतिमुपोत्थायाहवनीयोपस्थानम्।

तन्तुरसि मा-लिङ्गस्येति—लिङ्गग्रहणं संख्योपलक्षणार्थम्। अत एकस्मिन्नपि पुत्रे स्वस्ति वोऽस्त्वित्यस्यानिवृत्तिः पुत्रान्तरगतफलाशासनपरत्वान्मन्त्रस्य पुत्रबहुत्वादिविवक्षा।

अग्न आ-द्वे—द्वयोरुपादानात्। द्विशब्दनिर्देशो ममाग्ने वर्चो विहवेष्वस्त्विति चतस्र इति पूर्वाभ्यां सह चतुष्टयशङ्का भवेदिति।

केचिद्द-वन्ति—द्विशब्दोपादानमेव प्रयोजनवदिति।

इहैक ब्रु-मानस्य—उपस्थायाग्नेस्तृणान्यपचिनोतीति समानकर्तृकत्वावगतेः।

यत्करो-सान्ते—वात्सप्रादि। तस्यान्ते तृणापचयनम्।

सायमपि—उपस्थानान्ते।

उपदे-कएवेति—तदानन्तर्यात्। पूर्वत्र चानुपदेशात्।

अन्यत्रा-स्सह—प्रातरवनेकादन्यप्रयोगेषु नोपस्थानान्ते तृणापचयनम्। तदोपरितनशुन्धनकाले तृणानां परिसमूहनमित्युपदेशः।

---

[1] स्पृष्टो-छ. [2] ओष्ठयोः-छ.

तैरेव–वच्वाय—दृष्टार्थत्वादपचयस्य [1] निरिष्टकदोषो नास्ति।

अन्यैरन्यै–काले—कृतप्रयोजनतया परिस्तरणानां प्रतिपाद्यत्वादपचयस्य तृणसंभरणार्थत्वाभावात्कर्मान्तकाले प्रतिपत्तेस्तदङ्गत्वोपपत्तेः। [2]प्रतिपादिततृणानां कर्मान्तसाधनत्वासंभवादन्यैः परिस्तरणम्।

तेजो–स्वी—नित्यतृणाप [3] चयने फलसिद्धिः।

इति श्रीकौशिकेन रामाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ
षष्ठे प्रश्ने षष्ठः पटलः.

---

(सू) [4]प्रवत्स्यन् संप्रेष्यत्यग्नीन् समाधेहेति ॥ १ ॥
॥ १ ॥ १३८८ ॥

(भा) प्रव [5]त्स्यन् प्रवासं करिष्यामीति संप्रेष्यति अग्निहोत्रे होतारमग्नीन् समाधेहीति। विहरणं कृत्वा तेन कृतेषु बलवत्सु—

(वृ) प्रवत्स्यन्–मीति—संकल्पितवान् यजमानः।

(सू) ज्वलत उपतिष्ठते ॥ २ ॥ २ ॥ १३८९ ॥
[6]पशून् नश्शंस्य पाहि तान् नो गोपायास्माकं पुनरागमादित्याहवनीयम्। प्रजां नो नर्य पाहि तां नो गोपायास्माकं पुनरागमादिति गार्हपत्यम्। अन्नं नो बुध्नय पाहि तन्नो गोपायास्माकं पुनरागमादित्यन्वाहार्यपचनम् ॥ ३ ॥ ३ ॥ १३९० ॥
अन्तराग्नी तिष्ठन् जपति इमान् नो मित्रावरुणा

---

1 अतिरेक ? ग. 2 पन्नतृ–घ. 3 चये फला–छ. 4 ग्रामान्तरे रात्रिवासः प्रवासः तं करिष्यन्नग्नीन् समाधेहीति विहृत्य प्रज्वलयेत्यग्निहोत्रहोतारं परिकर्मिणं प्रेष्यति (रु). 5 त्स्यन् प्रवासः–क. त्स्यन् प्रवस्स्यान्–छ. 6 उपतिष्ठत इत्यनुषङ्गः (रु).

**गृहान् गोपायतं युवम्। अविनष्टानविहृतान् पूषैनानभिरक्षत्वास्माकं पुनरागमादिति ॥ ४ ॥ ४ ॥ ॥ १३९१ ॥**

**[1] पूर्ववद्विराट्क्रमैरुपस्थायाशित्वा प्रवसथमेष्यन्नाहाग्नीन् समाधेहीति ॥ ५ ॥ ५ ॥ १३९२ ॥**

[अशनगौर्वापर्यमुपस्थानयोः]

(भा) विराट्क्रमैरुपस्थायाशनम्। ततो गमिष्यामीत्येवं पुनरुपस्थानं प्रज्वलताम्।

[उपस्थाने पक्षान्तरतन्निरासौ प्रवासात्परमग्नित्यागश्च]

केचिदाहुः—यदाऽशित्वा गच्छति तदैवमुपस्थानम्। अनशितस्य तु गच्छतः पूर्वमिति ; तदनुपपन्नम् ; आगतोपस्थानेऽप्युपस्थानद्वयदर्शनात्। गमनमन्त्रो वाग्यमनं च तेषां न प्राप्नोत्यनशितस्य गच्छतः। अतः उपस्थायाशनं पुनरुपस्थानं गमनम्। गते यजमानेऽग्नीनां त्यागः[2]अधार्याणाम् ॥ ५ ॥

(वृ) **विराट्क्र–ज्वलताम्**—गमिष्यामीति सङ्कल्पे कृते ॥

[केचिदित्युक्तपक्षाशयः]

**केचित्–पूर्वमिति**—अशित्वा प्रवसथमेष्यन्नित्युत्तरेण संबन्धात् अशित्वा प्रयाणस्य च पाक्षिकत्वात् ॥

[खण्डने हेतू]

**तदनुप–दर्शनात्**—एकवचनबहुवचनात्मकस्य ॥

**गमनमं–र्याणाम्**—अशित्वा गमनं विधायानन्तरं वाग्यमनगमनमन्त्रयोर्विधानात्।

---

[1] अग्न्याधेयवत्। विराट्क्रमैरुपस्थाने कृते अशित्वा गमनकाले पुनरग्नीन् समाधेहीत्याह यद्यशित्वा गन्तुमिच्छति। अनशित्वा गमने पुनस्समाधानम्। उपस्थानमेवात्र कार्यमविच्छेदात् आगतोपस्थाने तथा दर्शनाच्च। अशनं पुनस्समाधानं पुनरुपस्थानमित्येतत्त्रयमपि नित्यमेवेत्यपरम्। पुनस्समाधाने विहितानामेव ज्वलनं न पुनर्विहरणम् ऐककर्म्यात् ॥ (रु). [2] गः आधा १-छ.

(सू.) ज्वलत उपतिष्ठते प्रजां मे नर्य पाहि तां मे गोपायास्माकं पुनरागमादिति गार्हपत्यम्। अन्नं मे बुध्न्य पाहि तन्मे गोपायास्माकं पुनरागमादित्यन्वाहार्यपचनम्। पशून् मे शंस्य पाहि तान्मे गोपायास्माकं पुनरागमादित्याहवनीयम् ॥ ॥ ६ ॥ ६ ॥ १३९३ ॥

[1]मम नाम प्रथमं जातवेद इति च ॥ ७ ॥ ॥ ७ ॥ १३९४ ॥

(भा) मम नाम प्रथमं जातवेद इत्याहवनीयमे[2]वोपतिष्ठते ।

(वृ) ममनाम–तिष्ठते—आहवनीयोपस्थानान्तरं विधानात्।

(सू) [3]वाग्यतोऽभिप्रव्रजति मा प्रगाम पथो वयं मा यज्ञादिन्द्रसोमिनः । मांतस्थुर्नो अरातयः । उदस्माँ उत्तरान्नयाग्ने घृतेनाहुत । रायस्पोषेण संसृज प्रजया च बहून् कृधीति ॥ ८ ॥ ८ ॥

(भा) वाग्यतो भूत्वा मा प्रगामेति प्रतिष्ठते ॥ ८ ॥ १३९५

(सू) [2]आरादग्निभ्यो वाचं विसृजते ॥ ९ ॥ ९ ॥ ॥ १३९६ ॥

चतुर्विंशी खण्डिका ॥

---

(भा) आरात्–दूरात् अग्निभ्यः ॥

(वृ) आरात्–भ्यः—अग्न्यगारच्छदिषामदर्शने वाग्विसर्गः ॥

---

[1] यदाहवनीयमुपतिष्ठत इत्यन्वयः (रु). [2] यमेव–छ· ङ. [3] मन्त्रान्ते विहारान्निर्गच्छति (रु). [4] अच्छदिर्दर्शी इति यावत्। तथोत्तरत्र व्यक्तं भविष्यति (रु).

(सू.) [1]प्रवसन् काले विहाराभिमुखोऽग्न्युपस्थानं जपति १॥ १०॥ १३९७॥

[उपस्थानोद्देश्य, मन्त्र, तत्पक्षभेद, प्रवासपदार्थाः]

(भा) यतोऽग्नयस्ततोऽभिमुखः । अग्न्युपस्थानमात्रस्य जपः, सर्वस्येत्युपदेशः कात्यायनमतिश्च । केचित् प्रत्यगाशिषामेव न चोमुन्नयेति । तस्याध्वर्युणोक्तत्वात् । अन्यत्र वसतिः प्रवासोऽग्निरहितस्य ॥

[अग्निदेशाभिमुख्यादिभाष्योक्तार्थसाधनानि]

(वृ) यतो-मुखः—विहारशब्दस्याग्निपरत्वात् ॥

अग्न्यु-जपः—तन्मात्रस्योपदेशात् ।

सर्व-तिश्च—प्रत्यगाशिषां याजमानत्वात् ।

तस्या-क्तत्वात्—प्रेषिते यजमाने ओमुन्नयेत्यस्य अध्वर्युणोक्तत्वात् 'अपचारे यजमानस्य' इति ॥

अन्य-तस्य—ग्रामादेरन्यत्र रात्रिवासः ॥

(सू.) [2]इहैव सन् तत्र सतो वो अग्नयः प्राणेन वाचा मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहासीज्योतिषा वो वैश्वानरेणोपतिष्ठ इति यद्यनुपस्थाय प्रवसेदेतयैवोपातिष्ठेत ॥ २ ॥ ११ ॥ १३९८॥

---

[1] प्रवसन् अग्निहोत्रकाले यत्र विहारस्तां दिशमभिवीक्षमाणः सर्वानग्न्युपस्थानाधिकारविहितान् मन्त्रान्जपतीत्यर्थः । भरद्वाजेन चोक्तम् (रु).

[2] अद्यैवागमिष्यामीति बुध्या राजपुरुषनिर्बन्धादिना यदानुपस्थाय चेत्प्रवसेत् तदा तत्रस्थ एव सन् एतयैवाग्नीनुपतिष्ठेत । एतयेत्येतदेतं मन्त्रमुक्त्वा भक्षयेदित्यादिवद्वैचित्र्यार्थम् । एवकारः सर्वेतरमन्त्रव्यावृत्त्यर्थः । पूर्वेण सहैकग्रन्थमेके योजयन्ति प्रवसन् काले विहाराभिमुख इहैव सन्नित्येतदग्न्युपस्थानं जपति । अनुपस्थाय प्रोषितोऽप्येतयैव प्रवासोपस्थानं कुर्यादिति । बाधे नद्याह,—अथेदं परोक्षोपस्थानं भवतीहैव सन्निति (रु).

[अनुपस्थानेन गमनसंभवः]

(भा) यदा राजपुरुषा अग्न्युपस्थानं कर्तुं न प्रयच्छन्ति तदा गमनमन्त्रस्यापि लोपः [1] प्रवत्स्यदुपस्थानस्य च एतयैवेत्यवधाराणात् ।

[अत्रप्रत्याम्नाय पक्षतन्निरासौ ]

केचिदग्न्युपस्थानस्य प्रत्याम्नायमपि ; तदनुपपन्नमेकस्य बह्वर्थत्वम् ।

[ प्रवासविशेषः ]

यस्य वाऽद्यैव निवर्तिष्यामीति गतस्य प्रवासः ; सर्वानुपस्थाय वसतिः ।

[भाष्योक्तप्रवासहेतोरुपलक्षणत्वम्]

(वृ) यदारा-रणात्—राजपुरुषग्रहणमुपद्रवान्तरस्याप्युपलक्षणम् ।

केचि-यमपि—अवधारणादित्याहुः ।

[पक्षान्तरखण्डनविवरणम्]

तद-र्थत्वम्—प्रवत्स्यदुपस्थानमधिकृत्यावधारणोपदेशादेकस्यानेककार्यकत्वानुपपत्तेः प्रवत्स्यदुपस्थानस्यैव निवर्तकः[2] । अवधारणात्तु गमनमन्त्रस्यापि निवृत्तिः ।

[अतिदेशस्थलविवरणम्]

यस्य वा-वासः—अद्यैव निवर्तिष्यामीति बुद्ध्याऽनुपस्थाय गतस्य दैवान्मानुषाद्वा[3]ऽपचारादन्यत्र रात्रिवासेऽप्यनयैवोपस्थानम् ।

सर्वानुपस्थाय वसतिः—सर्वाग्न्युपस्थानविधानात् ।

(सू) [4] समिधः कृत्वा प्रत्येति ॥३॥१२॥१६९९॥

(भा) समिधः कृत्वा पाणौ प्रतिनिवर्तते ॥

समिधः—पाणौकृत्येत्यर्थः ॥

---

[1] एतस्य उपस्थानस्य च—छ. [2] त्तिः -ख. ग. [3] द्वाऽन्यत्र—ख. ग. घ. [4] प्रत्यागमनकाले समिधः पाणौ कृत्वा प्रत्येति (र).

(सू) यथा ह वा [1]इतं पितरं [2]प्रोषिवांसं पुत्राः प्रत्याधावन्त्येवं ह वा एतमग्नयः प्रत्याधावन्ति । [3]सशकलान [4]दारूणि वाऽऽहरन्नेति [5]यथैव तत्पुत्रेभ्य आहरन्नेति तादृक्तदिति [6]विज्ञायते ॥ ४ ॥ १३ ॥ ॥ १४०० ॥

[प्रवासादागच्छतः कर्तव्यम्]

(भा) यथा इतं—आगतं पितरं । कुत आगतम् ? प्रोषिवांसमागतं पुत्रास्तं प्रत्यागच्छन्ति दास्यति नो यदनेनानीतमिति ; एवमग्नयोऽपि [7]ततत्पुत्रा मृगयन्ते । स यजमानः शकलान् —भिन्नान् दारूणि अभिन्नानि छिन्नास्समिधो गृह्यन्ते ; दारूणां पृथग्ग्रहणात् त्रयमेतद्विकल्पते ; एतदाहरन्नागच्छति यथा पुत्रेभ्यो वस्त्राद्याहरन्नागच्छति तथाऽग्निभ्यस्समिधः ॥

(वृ) ततः—यजमानात् उत्पन्नाः ।

सय-हणात्—अभिन्नकाष्ठानां दारूणीति पृथगुपादानात् । वृक्षाश्छिन्नास्समिधः । परश्वादिभिश्छिन्नाः शकलाः ।

त्रयमेतद्विकल्पते—समिधः कृत्वा प्रत्ये[8]त्यस्मिन् काले ।

एतदाहरन्—शकला[9]द्याहरन् ।

(सू) [10]आरादग्निभ्यो वाचं यच्छति ॥ ५ ॥ ॥ १४ ॥ १४०१ ॥

---

[1] पुनरागतम (रु). [2] प्रोषितवन्तम (रु). [3] भिन्नानि काष्ठानि (रु). [4] दारूणि—तान्येवाभिन्नानि (रु). [5] यथा तत्र पिता फलान्याहरन् (रु). [6] अर्थवादप्रदर्शनमादरार्थम् (रु). [7] तद्वुत्प घ. च. [8] तेतीत्यस्मिन्काले—छ. [9] शकलाद्यन्यतरत्—छ. [10] यावति देशेऽग्न्यगारस्य छदिर्दृश्येत तत्रैतमग्नींश्चान्तरा यद्यप्यत्यन्तं पूज्या राजादयस्सान्निहितास्स्युः तानपि संभावयितुं नाद्रियेत किं पुनरन्यान् । एवमत्र छदिर्दर्शे वाग्यमननियमात् गमनदशायां वाग्विसर्गोऽप्यच्छदिर्दर्श इत्यनुसंधातव्यम् (रु).

**यद्येनं राजा पिताऽऽचार्यो वाऽन्तरेणाग्नीन् स्यात्**
**छदिर्दर्शे नैनमाद्रियेत ॥ ६ ॥ १५ ॥ १४०२ ॥**

[वाग्यमनहेतुविवरणम्]

(भा) राजादिग्रहणं प्रदर्शनार्थम्; अन्यस्यादरो न कर्तव्यः। अतिपूज्या एतेऽपि तावन्न पूज्यन्ते किं पुनरन्यो जनः। यत्राग्न्यगारस्य छर्दीषि[1]दृश्यन्ते तत्राग्नीन् यजमानं चान्तरेण यो भवति तस्यानादरः। वाग्यमनविसर्गयोः छदिर्दर्शनमेव प्रमाणमिति।

[छदिर्दर्शपदार्थः प्रमाणं च]

(वृ) छदिर्दर्शनमेव—आरादग्निभ्य इत्यत्र अरण्यावसाने ग्रामसीमान्तप्रभृति छदिर्दर्शः। ब्रह्मयज्ञप्रकरणे अछदिर्दर्श इत्यस्य व्याख्यानावसरे गुहदेवस्वामिनोक्तत्वात्॥

(सू) **विश्वदानीमाभरन्तोऽनातुरेण मनसा। अग्ने मा ते प्रतिवेशा रिषाम। नमस्ते अस्तु मीढुषे नमस्त उपसद्वने। अग्ने शुम्भस्व तन्वः संमा रय्या सृजेत्य[2]भ्येति ॥ ७ ॥ १६ ॥ १४०५ ॥**

(भा) कृतशौचो विश्वदानीमित्यभ्येत्यागच्छत्याग्निसमीपम्।

(सू) [3]**अग्नीनू समाधेहीति ॥ ८ ॥ १७ ॥ १४०४ ॥**

(भा) ततो विहृत्य संप्रैषमाह।

[प्रवासादागत्याग्निविहरणं याजमानम्]

(वृ) ततो–माह—अग्नीन् समाधेहीति। विहरणं तु याजमानम्॥९॥

(सू) **ज्वलत उपतिष्ठते ॥ ९ ॥ १८ ॥ १४०५ ॥**

**पशून्नश्शंस्याजूगुपस्तान्नः पुनर्देहीत्याहवनीयमभिप्राण्याग्ने सहस्राक्ष शतमूर्धन् शतं ते प्राणा-**

---

[1] न दृश्यन्ते–क. ङ. [2] अभ्यागच्छत्यग्न्यगारम् (रु). [3] संप्रेष्यतीति शेषः (रु).

स्सहस्रमपानाः । त्वं साहस्रस्य राय ईशिषे सहस्रधारस्य पयसः । तस्य नो रास्व तत्य ते भक्षीय तस्य ते वयं भूयिष्ठभाजो भूयास्मेत्याहवनीयम् ॥ १० ॥ १९ ॥ १४०६ ॥

पञ्चविंशी खण्डिका ॥

---

[अभिप्राणनपदार्थः ज्वलदुपस्थाने विशेषश्च]

(भा) । [1] अभिप्राणनमुच्छ्वासः । अग्ने सहस्राक्षाग्ने गृहपत इत्युपस्थानम् । गृहानजूगुपतं युवं पूर्षैनानभ्यराक्षीदस्माकं पुनरागमादिति मन्त्रसन्नामोऽन्यदविकृतम् । मम नाम तव चेत्याहवनीयोपस्थानम् । ॥ १९ ॥

(वृ) अभिप्रा—सः—उपस्थानमन्त्रावेतौ द्वितीयानिर्देशात् ।
गहा—न्नासः—इमान्नो मित्रावरुणेत्यस्मिन् मन्त्रे ।

(सू) प्रजां नो नर्याजूगुपस्तां नः पुनर्देहीति गार्हपत्यमभिप्राण्याग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं सुगृहपतिर्मया त्वं गहपतिना भूयाः । शतं हिमा द्वा यू राधांसीत्सं पृञ्चानावपृञ्चानौ तन्व इति गार्हपत्यम् ॥१॥२०॥१४०७॥

(सू) [2] अन्नं नो बुध्न्याजूगुपस्तन्नः पुनर्देहीत्यन्वाहार्यपचनमभिप्राण्यान्तराग्नी तिष्ठन् जपति यथा प्रवत्स्यदुपस्थाने ॥ २ ॥ २१ ॥ १४०८ ॥

---

[1] उपर्युच्छ्वासः उपतिष्ठत इत्यनुषङ्गः (रु). [2] यथा प्रवत्स्यदुपस्थाने तथेमान्नो मित्रावरुणेति जपति (रु).

(सू.) [1] अजूगुपतमभ्यराक्षीदिति मन्त्रं सन्नमति ॥ ३ ॥ २२ ॥ १४०९ ॥

(सू.) [2] मम नाम तव च जातवेद इति चतसृभिराहवनीयम् ॥ ४ ॥ २३ ॥ १४१० ॥

(सू.) [3] प्रजां मे नर्याजूगुपस्तां मे पुनर्देहीति गार्हपत्यमभ्यपान्यान्नं मे बुध्न्याजूगुपस्तं मे पुनर्देहीत्यन्वाहार्यपचनमभ्यपान्य पशून् मे शंस्याजूगुपस्तान्मे पुनर्देहीत्याहवनीयमभ्यपान्य पूर्ववद्विराट्क्रमैरुपतिष्ठते। अजूगुप इति मन्त्रं सन्नमति ॥ ५ ॥ २४ ॥ १४११ ॥

[अभ्यपाननपदार्थादि]

(भा) अभ्यपाननमुपर्युच्छ्वासः । अथर्व पितुं मेऽजूगुपोऽन्नं नर्य प्रजां मेऽजूगुपो मूलम् । एवमितरत्र ।

(वृ) अभ्यपा—सः—अग्नेरुपर्यूर्ध्वं बाह्यवायोरात्मन्याकर्षणम् ।

अथर्व—रत्र—पशून् मेऽजूगुप इत्यादि । तथाऽस्मच्छाखोक्तत्वात् । विराट्क्रमेऽपि नर्य प्रजां मेऽजूगुपः अमृतत्वाय जीवस इत्यादि ॥ २४ ॥

(सू.) [4] अग्न्युपस्थानव[5]दत्र समिधो दिशां चोप[6]स्थानम् ॥ ६ ॥ २५ ॥ १४१२ ॥

[प्रोप्यागतोपस्थानेऽतिदेशः]

(भा) अग्न्युपस्थानवदिन्धानास्त्वेति चतस्रश्चतस्र एकैकस्मिन्नग्नौ

---

[1] तत्र तु गोपायतमभिरक्षत्विति शब्दावजूगुपतमभ्यराक्षीदिति विपरिणमयति (रु). [2] उपतिष्ठत इति शेषः (रु). [3] अग्नेरुपरि निश्वासः । विराट्क्रमेषु गोपायेत्यस्य अजूगुप इति मन्त्रसंनामः (रु). [4] अग्न्युपस्थानवत् इन्धानास्त्वेत्यादिभिः समिध आदध्यात् । [5] अत्र अस्मिन्काले । [6] प्राची दिगित्यादिभिश्चोपतिष्ठते (रु).

दिशामुपस्थानं प्राची दिगिति। एतावदागतोपस्थानम्। उत्तरं सर्वविधिषु तुल्यम्।

(वृ) उत्तरं–तुल्यम्—अभयंकरेत्यादिष्वपि।

**(सू) नवमीं चेदतिप्रवसेत् मित्रो जनान् यातयति प्रजानन्निति मैत्र्योपस्थाय मनो ज्योतिर्जुषतामित्याहुतिं [1]जुहुयात् ॥७॥२६॥१४१३॥ समिध आहुतिमुपस्थानमित्येवमनुपूर्वाण्येके समामनन्ति ॥७॥२६॥१४१४॥**

षड्विंशी खण्डिका ॥

---

[अतिप्रवासादागतस्य कर्तव्यविवरणादि]

(भा) अतिप्रवासप्रायश्चित्तं गृहाभिगमनम्[3]। आहवनीयं मैत्र्योपस्थाय मनोज्योतिर्जुषतामित्याहुतिः यस्यां या इष्टा इति। सत्यतिप्रवासे एकेषां मते क्रमः समिध आहुतिमिति कृत्वा मैत्र्योपस्थानम् ततो दिगुपस्थानम् इति।

(वृ) अति–प्रस्थानमिति—आहुतिमिति द्वितीयानिर्देशात् आहुतिं कृत्वा समिदाधानम्। [4]अन्ये तु समिध आहुतिः मैत्र्योपस्थानम् दिगुपस्थानम् समिधां पूर्वनिर्देशात् द्वितीया [5]निर्देशेऽपि क्रमान्तरपरता।

---

[1] अध्वर्युरितिशेषः जुहोतिचोदनत्वात् तदङ्गत्वाच्चोपस्थानस्य। तथा मनोज्योतिर्जुषतामित्यध्वर्युराहुतिं जुहोतीति सत्याषाढः। भारद्वाजश्च पोषित आहुतिं जुहोतीति। तथा पवित्रेष्टिं विधायाह सैषा संवत्सरमतिप्रवसत इति (रु). [2] समिदाधानदिगुपस्थानयोर्मध्ये मनस्वत्याऽऽहुतिरितिशेषः। समानमन्यत् (रु). [3] नं च–क. ख. ग. ङ. [4] अन्ये। समि–ख. [5] प्रयोगो न क्रमान्तर परः–ख. ग

(सू.) तदाहु[1]र्नाग्निरुपस्थेयः कश्श्रेयांसं विसुप्तं बोधयिष्यतीति । अभयंकराभयं मे कुरु स्वस्ति मे स्त्वभयं मे अस्त्वित्येव ब्रूयात् । प्रवत्स्यदुपस्थानमागतोपस्थानं चाधिकृत्य वाजसनेयिनस्समामनन्ति ॥ १ ॥ २७ ॥ १४१५ ॥

[2]नमो वोऽस्तु प्रवत्स्यामि नमो वोऽस्तु प्रावात्समिति बह्वृचाः ॥ २ ॥ २८ ॥ १४१६ ॥

[प्रवत्स्यत आगतस्य चोपस्थानं पूर्वोक्तं निषेधतां मतम्]

(भा) अन्ये तु ब्रह्मवादिन आहुः अग्नेरुपस्थानं [3]न कर्तव्यं पूर्वेण विधानेन । श्रेयान्—प्रशस्यतरः । विसुप्तं—प्रसुप्तम् । बोधयिष्यति-उद्घाटयिष्यति । विहरणं समिदाधानार्थम् अतोऽनुद्घाटितेष्वग्निष्वविहृतेषु अभयंकरेति वचनेनाग्नीनुपतिष्ठते । ततो वाग्यतस्यैव प्रस्थानम् मा प्रगामेति । प्रतिनिवृत्य वाग्यतो विश्वदानीमित्यभिगम्याग्नीनभयंकरेति ब्रूयादनुद्घाटितानग्नीन् अभयंकरेति वचनेनाग्नीनुपतिष्ठते ततो गृहाभिगमनम् । यदा त्वतिप्रवासः तदा अभयंकरेत्युक्त्वा विहरणं मैत्र्योपस्थानं आहुतिः गृहाभिगमनम् । एष विधिर्बह्वृचमतेऽपि । उपस्थानद्वयमाधिकृत्य वाजसनेयिनः परिपठन्ति । उत्तरे च ।

---

[1] एवमग्निसमाधानादिना । अप्रादुष्कृतमेवाग्निं प्रत्यभयंकराभयमित्येतं मन्त्रमेव ब्रूयादित्यध्याहारः । तत्र चोपस्थानमधिकृत्येति वचनादुपस्थानादन्ये गमनप्रत्यागमनधर्मा वाग्यताभिप्रव्रजनसमिदाहरणादयस्तत्रतत्र भवन्त्येव । नवरात्रादिप्रवासे तु मनस्वत्याहुतिरागामिनी विहरणकाले भवति प्रादुष्करणप्रतिषेधात् ॥ (रु).
[2] बह्वृचास्तु द्वयोः प्रवत्स्यदागतोपस्थानयोर्द्वावेतौ मन्त्रौ समामनन्ति । समानमितरत्पूर्वेण । त्रिष्वपि चैतेषु कल्पेषु प्रवत्स्यदागतोपस्थानयोः सहशिष्टत्वाद्यएव कल्पः प्रवत्स्यदाश्रितः स एवानागतेनाप्याश्रयणीय इत्यनुसंधातव्यम् (रु).
[3] ब्रूयात् प्रवत्स्यन् ततो-क. ङ. छ. ज. [4] सुवि-ख. ग.

(वृ) अन्ये- धानेन — प्रवत्स्यन् संप्रेष्यतीत्यादिना । अभयंकरेति वचनादग्नीनुपतिष्ठते । तत उपस्थानं प्रवत्स्यदुपस्थानमागतोपस्थानं च परिपठन्त्यभयंकरेति । बह्वृचोक्तं नमो वोऽस्त्वित्येतदप्युपस्थानद्वय-मधिकृत्य ॥

(सू) [1]गृहा मा बिभीत मा वेपिढ्वमूर्जंबिभ्रत एमसि । ऊर्जं बिभ्रद्वस्सुवनिस्सुमेधा गृहानैमि मनसा मोदमानः । येषामध्येति प्रवसन्येषु सौमनसो बहुः । गृहानुपह्वयामहे ते नो जानन्तु जानतः । उपहूता भूरिधनाः सखायस्साधुसंमुदः । अरिष्टास्सर्वपूरुषा गृहा नस्सन्तु सर्वदा । उपहूता इह गाव उपहूता अजावयः । अथो अन्नस्य कीलाल उपहूतो गृहेषु न इति गृहानभ्येति ॥ ३ ॥
॥ २९ ॥ १४१७ ॥

क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शंयोश्शंयो रिति प्रविशति ॥ ४ ॥ ३० ॥ १४१८ ॥

ऊर्जं बिभ्रद्वस्सुमनास्सुमेधा गृहानागां मनसा मोद मानः । इरां वहन्तो घृतमुक्षमाणास्तेष्वहं सुमधास्संविशामीति प्रविश्य [2] जपति ॥

[3]संविशन्वा ॥ ५ ॥ ३१ ॥ १४१९ ॥

सप्तविंशी खण्डिका·

---

[1] अग्न्यगारात् गृहान् प्रतिगच्छति ; यत्र पुत्रदारादयस्सन्ति (रु). [2]जपति प्रविष्टमात्रे जपति गृहानागामिति लिङ्गात् । [3] संविशन्वा–निषीदन्वा ; समनास्संविशामीतिलिङ्गात् । न तदहरागतः कलहं करोतीति सत्याषाढः । एवं केवलस्य यजमानस्य प्रयाणमुक्तम् । अथ सपत्नीकस्य वक्ष्यते । पत्न्यास्तु केवलायाः प्रवासो

[प्रोष्यागत्य प्रविशतो जपः]

(भा) गृहानभ्येति गच्छति समीपम् । संविशन् निषीदन् यजमानो जपति प्रविश्य वा ॥ ३२ ॥

इति धूर्तस्वामिभाष्येरामाग्निचितो भाष्ये वृत्तौ च षष्ठे प्रश्ने सप्तमः पटलः ॥

---

(सू) [1]सगृहः प्रयास्यन् वास्तोष्पतीयं जुहोति ॥ ॥ १ ॥ १ ॥ १४२० ॥

[सगृहप्रवासपदार्थे मतिभेदः]

(भा) गृहसंज्ञा कर्मसु [2] वर्तते । सगृहः सह कर्मभिर्यदा गच्छति [3] तदा उत्तरो विधिः; पूर्वोक्तस्तु यदा गृहे क्रियन्ते कर्माणि । उपदेश:

नेष्टः पत्नीवदस्याग्निहोत्रं भवतीति वचनात् । यदि यजमानः प्रवसेदित्यादिवत्प्रवासानुज्ञानुपलम्भाच्च । किमिदानीं दैवात्पत्न्याः प्रवासे लुप्यत एवाग्निहोत्रम्? क एवमाह? गुणस्तु तस्य लुप्यते कर्माङ्गत्वात्पत्न्याः । दर्शितं चैतदस्माभिर्दर्शपूर्णमासयोः ये वा कश्चिदविद्यमानाया मित्यत्र ॥ मनुनाप्युक्तोऽयमर्थो यद्विनापि पत्न्याः कदाचिदग्नयो भवन्तीति ॥ यथातिथिलक्षणमधिकृत्योक्तम् —

उपस्थितं गृहे विद्यात् भार्या यत्राग्नयोऽपि च ।

इति । यदा तु विनाग्निभिरुभौ प्रवसतः पत्नी यजमानश्च तदाग्निहोत्रलोपः पुनराधानं च स्मर्यते; तथा च छन्दोगपरिशिष्टे कात्यायनः—

असमक्षं हि दम्पत्योर्होतव्यं नर्त्विगादिना ।

द्वयोरप्यसमक्षं हि हुतमप्यहुतं भवेत् ॥

इति । तथा—

विहायाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति ।

होमकालात्यये तस्य पुनराधानमिष्यते ॥

इति च । पत्न्या. प्रवासे नदीतरणे च पुनराधेयं कार्यमित्येवं जातीयकानि वाक्यानि उपेक्षणीयानि (रु) ॥

[1] सदारः प्रवासंगमिष्यन् । वास्तोष्पतिदेवत्यं होमं जुहोति (रु). [2] मसु । सगृहः–ग. छ. [3] तदुत्तरो–ङ.

पत्नी गृहं तया सह यदा गच्छति तदाऽग्निर्नीयत इति । केचित्त्वाहुः—यदैवायमत्यन्तवसतिं करोति तदैवाग्नयो नेयाः 'यद्यनोवाम्' इति लिङ्गात् । यदा पुनर्निवर्तते तदा न चाल्या अग्नय इति । वास्तोष्पतिर्यस्य देवता तद्वास्तोष्पतीयम् ॥

[गृहपदस्य कर्मार्थत्वे मानम्]

(वृ) गृह–सु—'एते वा अध्वर्योर्गृहाः' इति वचनात् गृहशब्दः कर्मसु वर्तते ।

सगृहः–कर्माणि—तदा भवति 'प्रवत्स्यन् संप्रेष्यतीत्यादिः' ।

[उपदेशपक्षाभिमतहेतुः]

उपदेशः–न्त इति—पत्न्या सह प्रवासे दैवाद्धोमकालात्यये पुनराधानप्रसङ्गात् पत्न्या सह प्रवासे अग्नयो नेयाः ।

[केचित्त्विति पक्षाशयः तद्भाष्यलब्धार्थश्च]

केचि–लिङ्गात्—अनसा धान्यादिवहनं बहुदिनवासार्थम् । ततोऽत्यन्तवास एवाग्नयो नेयाः । अग्निभिर्विना दम्पत्योः प्रवासे होमकालात्ययेऽप्यग्नीनां नाशाभावोऽस्मिन् पक्षे भाष्यकारेण सूचितः । [1]तथा जने प्रमीतस्य तस्याभिवान्य[2] वत्साया (९–११–५) इत्यादिषु प्रोषितमरणे गृहकर्मानुष्ठानमुक्त्वा यजमानमरणोपदिष्टं पत्नीमरणेऽपि स्वामित्वाविशेषादिति वदताऽग्निभिर्विना पत्न्याः प्रवासाभ्यनुज्ञानात् होमकालात्ययेऽपि पुनराधानाभावात् अपुनरावृत्तावेव अग्नयो नेयाः ।

[अचालनीयताहेतुः]

यदा पु–ग्नयः—विधानमन्तरेणाग्नीनां स्वस्थानाच्चलने अवक्षाणादिप्रायश्चित्तस्य वक्ष्यमाणत्वात् ।

वास्तोष्प–तीयम्—कर्म ॥

---

[1] एतां जने–ग. [2] न्यपक्षा–छ. न्यवत्सायै पयसेत्यादिषु–घ.

(सू) अहुते यानेषु [1]भाण्डान्यारोपयन्ति ॥ २ ॥ ॥ २ ॥ १४२१

[अहुतशब्दार्थः]

(भा) तस्मिन्नहुते कृते नित्यकर्मणि यानेषु—शकटादिषु भाण्डादीनि घटादीनि आरोपयन्ति यजमानपरिचारकाः ॥ २ ॥

[प्रकृतं नित्यकर्म]

(वृ) तस्मिन्–र्मणि—प्राप्तकालाग्निहोत्राभि[2] प्राया ।

(सू) [3]न हीनमन्वाहरेयुः ॥ ३ ॥ ३ ॥ १४२२ ॥
[4]यद्यनोवाह्यं स्यात्पूर्वं तं प्रवहेयुरपवोद्धरेयुः ॥ ४ ॥ ॥ ४ ॥ १४२३ ॥

[अपोद्धारशब्दार्थः]

(भा) अनः शकटं तेन यदुह्यते तदनोवाह्यं धान्यादि । तत्पूर्वं नेतव्यम् । अपोद्धारोऽन्यत्र स्थापनम् । तत्पश्चान्नेतव्यम् ॥ ४ ॥

[अपोद्धारे हेतुः]

(वृ) अपोद्धा–तव्यम्—पूर्वं वहनाशक्तौ प्रोषित[5] देशान्तरे उपभोगाय पश्चान्नयनार्थत्वादन्यत्र स्थापनस्य ॥

---

[1] कुटुम्बार्थेषु द्रव्येषु भाण्डशब्दः प्रसिद्धः । तान्यहुत एव वास्तोष्पतीये शकटेष्वारोपयन्ति कर्मकाराः यानि नेतुमिष्यन्ते । सत्याषाढश्चाह (रु). [2] यम्–घ.
[3] अहुतेऽनारोपितम् । तत् होमात्परं नान्वाहरेयुः । हीयेतैव तन्न तु नीयेतेत्यर्थः (रु).
[4] यद्यनोवाह्यं भाण्डं नेतव्यं स्यात् तमर्थं यानेष्वारोप्य पूर्वमेव होमात् गन्तव्यदेशं प्रति पुरुषावहेयुः । अपोद्धरेयुर्वा । देशान्तरं गत्वा तत्रावस्थापयेयुः । पश्चात्प्रस्थापयितुम् । अथ अपरा व्याख्या—तत्रारोपितेषु मध्ये यदि पुरुषादिभिर्दुर्वहमनसैव वाह्यं भाण्डं स्यात् तमर्थं पूर्वमेव प्रवहेयुः अनसा नयेयुः अपोद्धरेयुर्वा । यदनोवाह्यादन्यत् पुरुषादिभिरपि शक्यनयनं तत्सर्वं पुरुषादयस्सह नयेयुरिति (रु).
[5] षिते–छ.

(सू) [1] यत्र संहिता रात्रीर्वसेत्पञ्च सप्त नव दश वा तत्प्रयास्यन् जुहुयात् ॥ ५ ॥ ५ ॥ १४२४ ॥

[होमे अव्यवहितपञ्चसप्तरात्रादिवसतिहेतुकत्वपक्षः]

(भा) संहिता रात्रीरेकस्था अन्येन वसतिना अव्यवेताः । आदौ संकल्पः पञ्चसु सप्तसु वा होमं करिष्यामि वास्तोष्पत इति । तत्प्रयास्यन्–तस्मात्प्रयास्यन् । पञ्चरात्रवास्तौ । [2] यो वा संकल्पः ॥

(वृ) अन्येन वसतिना—देशान्तरवसतिना । यत्र वसेत्ततः प्रयास्यन्निति सबन्धः ॥ ५ ॥

[सङ्कल्पः प्रवासात्पूर्वमेव]

आदौ–ष्पत इति—पञ्चसप्तरात्रीरेकत्रोषित्वा तास्वतीतासु पुनर्गन्तुं वास्तोष्पतीयहोमं करिष्यामीति प्रथममेव सङ्ख्याविशेषसङ्कल्पः । देशान्तरं गच्छतां मध्ये यावद्रात्रिषु निवासापेक्षा सङ्ख्यानियमानां वैकल्पिकत्वादन्यतरसङ्कल्पः कर्तव्यः ।

पञ्चरात्रवास्ताविति ; पञ्चरात्रवासादूर्ध्वं प्रयास्यन् जुहोति पुनर्वास्तोष्पतीयम् ।

योवा–ल्पः—सप्तरात्रादिष्वपि पुनःपुनः प्रयाणे [3] होमः ।

(सू) [4] नवरात्रवास्तौ वा पुनरेत्यैकामुषित्वा प्रयास्यन् जुहुयात् ॥ ६ ॥ ६ ॥ १४२५ ॥

---

[1] यत्र वास्तुनि वास्त्वन्तरवासेनाव्यवेताः संहिता एव पञ्चरात्रीर्वसेत् तस्माद्वास्तुनः प्रयास्यन् षष्ठीप्रभृति जुहुयात् । न ततोऽर्वाग्वास इत्यर्थः । एवं सप्तावररात्रिवासे अष्टमीप्रभृतीत्यादि द्रष्टव्यम् (रु). [2] योवाऽस्य सं–ङ. [3] णेष्वपि ख ग.–[4] यत्र कश्चिद्वास्तुनि नवरात्रमुषित्वा ततोऽन्यत्र गच्छन् दशरात्रपक्षाश्रयणेन अहुतवास्तोष्पतीयो गत्वा पुनरपि तस्मिन्नेव नवरात्रवास्तुनि एकावरां रात्रिमुषित्वा ततस्तस्मात्प्रयास्यन् भवति सोऽपि जुहुयादेव वास्तोष्पतीयं दशरात्रोषितत्वात्तत्रेति भावः । पूर्वत्र संहिता इति वचनादप्राप्तो होम इत्यारम्भः । केचित्तु प्रदर्शनार्थमेतदिष्ट्वा पञ्चावरादिकल्पेष्वपि चतूरात्रादिवास्तौ पुनरेत्येत्यादि योजयन्ति ; तदयुक्तम् ? प्रदर्शनार्थत्वे प्रमाणाभावात् । तथा सत्यष्टरात्रवास्तौ पुनरेत्य द्वे उषित्वेत्यादिप्रदर्शनप्रसङ्गाच्च (रु).

[सङ्कल्पितकालमध्येऽनुपपत्तौ विशेषः]

(भा) यदा दशरात्रं सङ्कल्पः तदा नवरात्रस्थाने पुन[1]रेत्यैकामुषित्वा गच्छन् वास्तोष्पतीयं जुहोति ।

[दशोषितवाक्याविरोधः इष्टसिद्धिश्च]

दशोषितस्तत्रेति । प्र (नि) दर्शनं चैतत् । चतूरात्रवास्तावपि पुनरेकामुषित्वा प्रयास्यन् जुहोति । हीनं–यदहुते वास्तोष्पतीयेऽनारोपितं अन्यत्र वा न स्थापितं तत्पश्चान्न नेतव्यम् ।

(वृ) यदादश–जुहोति —अस्यार्थः ; नवरात्रवासेऽपि तस्मिन् देशे सङ्कल्पितसङ्ख्यासम्पत्तौ पुनर्होमः कर्तव्य इत्यर्थः ।

दशोषितस्तत्रेति—तत्र देशे यस्मात् दशरात्रमुषितः तस्मात्प्रयास्यतो होमः कर्तव्यः । तस्माद्यत्र दशोषित्वा प्रयातीत्यविशेषोपदेशात् ।

[सूत्रप्रयोजनम्]

यत्र संहिता रात्रीरित्युक्तेऽपि दैवाद्देशान्तरवासेऽपि दशत्वादिसङ्ख्या पूर्यत एव पुनरेकत्र वासेनेति तत्रापि होमप्राप्त्यर्थं सूत्रम् ।

[दशोषितवाक्यस्योदाहरणपरत्वविवरणं फलान्तरं च]

प्रदर्श–जुहोति—प्रदर्शनं चैतत् नवरात्रवास्ताविति सूत्रम् । दशरात्रसम्पादनेन होमप्राप्त्यर्थत्वान्नवरात्रवास्ताविति सूत्रस्य सर्वसङ्ख्या[2]स्वेकामुषित्वा प्रयास्यन्निति सङ्ख्यासम्पत्त्या होमप्राप्तिरिति न्यायात् । अतः पञ्चरात्रसङ्कल्पे चतूरात्रवास्तावन्यत्र गत्वा पुनरेकामुषित्वा प्रयास्यन् जुहोति । अतो यत्रैक[3]रात्रवास्तावपि पक्षहोमः क्रियते तस्मात्प्रयास्यन् [4]पूर्वपक्षेऽपि जुहुयादेव । सायंप्रातर्होमपरत्वादत्राहोरात्रशब्दस्य । आहुतीष्टका एव ता उपधत्ते इति लिङ्गात् ।

---

[1] रेकामेव रात्रिमु–ज. [2] स्वेकन्यूनमुषित्वाऽपक्रम्य पुनरेकवासे संख्या सम्पत्त्या–ख. ग. [3] रात्रावपि–घ. [4] स्यन्सर्वपक्षेषु जु–घ.

[हीनानन्वाहरणे प्रमाणोपपादनम्]

न हीनमन्वाहरेयुरिति सूत्रमर्थसङ्गत्या उत्कृष्य व्याख्यायते।

**हीनं य–नेतव्यम्**—किमर्थमुत्कृष्य व्याख्यानम्? प्रथमपक्षे नवरात्रवास्तौ वेति च पक्षे दक्षिणो युक्तो भवति सव्योऽयुक्त इत्येतत्कालपर्यन्तमनारोपितस्यान्यत्र[1]च न स्थापितस्य पश्चान्नयनप्रतिषेधार्थम्। यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्विति होमसङ्ख्याविशेषकालस्य यज्ञवास्तुसंस्तवात् तत्र स्थितद्रव्यस्य 'यद्यज्ञवास्तौ हीयते मम वै तदिति रुद्रसम्बन्धित्वान्न तत्पश्चा[2]दुपयातव्यमिति।

(सू) [3]दक्षिणो युक्तो भवति सव्योऽयुक्तः। अपि वाऽग्निष्ठस्य दक्षिणो युक्तः सव्यस्य योक्त्रं परिहृतम्। सर्वेषु वा युक्तेषु ॥७॥ ७॥ १४२६॥

[दक्षिणो युक्त इति श्रुतेर्व्याख्याद्वयम्, तत्तदुपपत्तिश्च]

(भा) यानानां दक्षिणो युक्तः सव्यस्त्वयुक्तः। अग्नयो यत्र स्थाप्यन्तेऽरणीगतास्तदग्निष्ठम्। तस्य दक्षिणोऽनड्वान् युक्तः। सव्यस्य योक्त्रं परिहृतं न तु शम्यायां क्षिप्यते ॥ ७ ॥

(वृ) **यानानां**–क्षिप्यते—अस्यार्थः—दक्षिणो युक्तो भवति सव्योऽयुक्तः इति श्रुतेरुभयथा व्याख्या अविशेषात् सर्वेषामनसामित्येकः पक्षः। अग्निनयनार्थतयाऽग्निष्ठस्य प्रधानत्वात्। तस्यैव दक्षिणो युक्तः सव्यस्त्वयुक्त इति योक्त्रपरिहरणमपि पूर्वमेव कर्तव्यमिति ॥

---

[1] त्रवा नस्था–घ. [2] दुरयोक्तव्यामिति–छ [3] त्रयोऽमी होमकालविकल्पाः ;– यदा सर्वेषां भाण्डवाहिनामनसां दक्षिणो वाहो युक्तो भवत्ययुक्तः सव्यस्तदेत्येकः। यदाऽग्निष्ठस्य अग्निवाहिनोऽनसः दक्षिणं युक्त्वा सव्यस्यापि योक्त्रपरिहरणमात्रं कृतं न तु योगो निर्वृत्तस्तदेति द्वितीयः। सर्वेषामनसां सर्वेषु युक्तेष्विति तृतीयः (रु).

(सू) [1]वास्तोष्पत इत्यनुद्रुत्योत्तरया गार्हपत्ये हुत्वाऽव-
क्षाणानि संप्रक्षाप्य पृथगरणीष्वग्नीन् समारोपयते
ये धार्यन्ते ॥८॥८॥ १४२७॥

[अनुद्रवणमन्त्रस्यापि होमकरणत्वम्]

(भा) वास्तोष्पते शग्मयेति जुहोति गार्हपत्ये। पुरोऽनुवाक्यामनूच्य याज्यया जुहोतीति [2]भक्तिमात्रम्। यस्मात् द्वाभ्यां होमः। अविहृत्याग्नीन् होमः प्रणयनस्यार्थाभावात् ॥

[प्रणयनपक्षः सूत्रे योजनान्तरनिरासः पृथगरणिसङ्ख्या च]

उपदेशः प्रणीय जुहोतीति। कथं संसृष्टो गार्हपत्य इति। केचित्तु व्यतिहारेणार्थं कल्पयन्ति। उत्तरया हुत्वाऽऽहवनीये गार्हपत्येऽवक्षाणानि संप्रक्षाप्येति; तदनुपपन्नम्; मुख्यसंभवे गौणक्लृप्तेरन्याय्यत्वात्। अवक्षाणानि—उल्मुकानि। संप्रक्षाप्य—क्षपयित्वा सर्वाग्नीन्[3]। यदवक्षाणान्यसंप्रक्षाप्येति दोष[4]श्रुतेरविशेषात्। पृथक्पृथगरणिद्वयं धार्याणाम्[5] ॥

(वृ) वास्तोष्प–पत्ये—स्वाहाकारेण ॥

[भक्तिपदार्थः होमे विशेषश्च]

पुरोनु–मात्रम्—गौणवादः। न प्रण[6]वागूर्वषट्काराः। किं सादृश्यम् ॥

---

[1] अथ वास्तोष्पते प्रतिजानीहीत्येतामनुद्रुत्य वास्तोष्पते शग्मयेत्येतया जुहोति द्वाभ्यामेकाहुतिं जुहोतीत्यर्थः। नात्राहवनीयः प्रणीयतेऽर्थाभावात्। ततो धार्यमाणानामग्नीनां अवक्षाणान्यर्धदग्धानि काष्ठानि संप्रक्षाप्य निश्शेषं दाहयित्वा तान् पृथक्पृथगरणीष्वाधानक्रमेण समारोपयते अध्वर्युरिति शेषः। जुहोतीनामाध्वर्यवत्वादुत्तरविधौ यजमानग्रहणात् प्राजहितं समारोप्य शालामुखीयं द्वितीयं गताश्रिय इति षष्ठीनिर्देशाच्च (रु). [2] भक्तिवादः–ख. ग. घ. [3] ग्नीनाम्–ख. ग. घ. [4] श्रुतेः–छ. [5] र्याणां समन्तम्–ङ. [6] वपूर्वव–ख. ग.

[उभाभ्यां होमोक्तिभावः, दर्विहोमधर्मानुवादाविरोधश्च]

(वृ) यस्माद्वाभ्यां होमः—याज्यानुवाक्ययोरदर्विहो[1]मधर्मत्वात् यदेकया जुहुयाद्दर्विहोमं कुर्यादित्यस्मिन् दर्विहोमे सामान्येन दर्विहोमानामेकमन्त्रसाध्यत्वादनुवादोऽपि न विरुध्यते । वास्तोष्पत इत्यनुद्रुत्येनुद्रवणमात्रविधानात् ॥

अविहृ–र्थाभावात्—आहवनीयादेः ।

उपदे–पत्य इति—मिश्ररूपत्वात् । गार्हपत्ये हुत्वेत्यसाधारणनिर्देशानुपपत्तेः ।

[केचित्त्विति पक्षे गौणकल्पनाविवरणम्]

केचित्तु–ष्यत्वात्—गौणक्लृप्तेः अध्याहारव्यवहितान्वयकल्पनादेः ॥

[2] पृथक्पृ–र्णानाम्—अमन्त्रकम् ॥

अवक्षा–श्रुतेः—अविशेषात् ॥ ८ ॥

(सू) [3]उपर्यग्नावरणी धारयन् जपति अयं ते योनिर्-ऋत्विय इति ॥ ९ ॥ ९ ॥ १४२८ ॥

[अयं त इतिजपावसरः प्रकृतारणिपदार्थश्च]

(भा) अधरारणिमुत्तरारणिं च धारयन् जपत्यग्नौ न मन्त्रान्तेनायतं इति ॥ ९ ॥

[भाष्यदर्शितजपकालविवरणम् आरोपणोपपत्तिश्च]

(वृ) अधरा–यं त इति—धारयन् जपतीतिवचनात् न मन्त्रान्तेन धारणम् ; धारणाकरणत्वान्मन्त्रस्य । किं तु मन्त्रजपादेव गार्हपत्यादिदेवताभूतोऽग्निररण्योस्समारोहति तं जानन्नग्न आरोहेति मन्त्रलिङ्गात् ॥ ॥ ९ ॥

---

1 होमार्थत्वात्–ख. घ. 2 इदमादि न दृश्यते–छ. 3 प्रत्यग्नयन्ये अरणी धारयन् जपति (रु).

(सू) अपि वा यजमान एवात्मन् समारोपयते ॥ १० ॥
॥ १० ॥ १४२९ ॥

[1]या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानमच्छा वसूनि कृण्वन् अस्मे नर्या पुरूणि । यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानस्सक्षय एहीति हस्तं प्रताप्य मुखायाहरते ॥ ११ ॥ ११ ॥ १४३० ॥

[आत्मसमारोपणपदार्थः तद्विषयनियमा नापस्तम्बोक्ताः]

(भा) अपि वा धार्यानात्मनि समारोपयते क्रमेण । हस्तं प्रताप्य तूष्णीं मुखसमीपमानयति तथाऽहरति यथा हस्तगत ऊष्मा यथा प्रविशति शरीरम् । आत्मसमारूढे[2] न नियमा आपस्तम्बेनोक्ताः । कल्पान्तरवत् स्नानाचमनादिनिषेधो नास्ति ॥ ११ ॥

[समारोपणे क्रमः]

(वृ) अपि वा – क्रमेण — आधानक्रमेण हस्तमुखसमीपनयनार्थो मन्त्रः । केचिद्धस्तप्रतापनार्थं इति ॥

प्रताप्य–रीरम्[3]—प्रताप्येति प्रकृष्टतपनस्य दृष्टार्थत्वाय ।

[नियमानुक्तिप्रयोजनं मतान्तरं च]

आत्म–नास्ति—[4]अतो बाह्यस्पर्शने मूत्रोच्चारादौ च न दोषः । स्नानाचमनोपवासादिभिः स्मार्तैर्नैमित्तिकैर्यजमानशुद्धौ विशुध्यन्त्येवाग्नयः । केचिदुपावरोह्य वसतौ विहितेऽग्नौ उपघातप्रायश्चित्तं कुर्वन्ति ।

---

[1] तूष्णीं हस्तं प्रताप्य मन्त्रेण मुखं प्रत्याहरते ; यथा तद्गत ऊष्मा अन्तः प्रविशति ; आरोहात्मानमिति लिङ्गात् । धार्याग्न्यनेकत्वे अत्रापि पूर्ववदेव क्रमः (रु).
[2] ढेपि न नि–छ. [3] संस्कृतोऽभावे नियमाभावः प्रता–छ. [4] अतोऽस्पृश्यस्य–छ.

(सू) [1]वास उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन् । आयुः प्रजां रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे इति लौकिकेऽग्ना-वुपावरोहयति ॥ १२ ॥ १२ ॥ १४३१ ॥

[उपावरोहणकालः तदर्थः क्रमश्च]

(भा) वासो यत्र वसतिः तत्रापराह्णे । उपावरोहेति मन्त्र उक्ते गार्हपत्यादिर्देवताभूतोऽग्निर्लौकिकमग्निमुपसङ्क्रामति । उपदेशो यथा वायुर्मुखतो लौकिकमग्निं प्राप्नोति तथा करोति क्रमेणोपावरोहयति यथा समारूढाः ॥ १२ ॥

[भाष्ये अपराह्णशब्दस्य प्रदर्शनपरता क्रमस्वरूपं च]

(वृ) वासो–राह्णे—अपराह्णग्रहणं प्रदर्शनार्थम् । अग्निहोत्रकालानु-रोधार्थम् ।

उपदे–रूढाः—प्रथमसमारूढस्याग्नेः प्रथममुपावरोहणम् ॥

(सू) [2]अरण्योर्वोपावरोह्य मन्थेत् ॥ १३ ॥ १३ ॥ ॥ १४३२ ॥

[3]यदरण्योस्समारूढस्स्याग्निर्वर्तमान एतं मन्त्रं जपेत् ॥ १४ ॥ १४ ॥ १४३३ ॥

॥ अष्टाविंशी खण्डिका ॥

———

[1] वासे–रात्रिवासे । अथवा वसतिर्वासो रात्रिरिति पर्यायाः ; यथोक्तमाश्व-लायनेन 'द्वयोर्दुग्धेन वासेऽग्निहोत्रं जुहुयात्' इति । तत्र प्रणयनकाल एवात्मसमा-रूढांग्नींस्तेनैव क्रमेण लौकिकेऽग्नावुपावरोहयति मुखानिलेनार्पयति । मन्त्रोच्चारणमेवो-पावरोहणस्यानुष्ठानार्थं इत्यपरम् (रु). [2] अनेन मन्त्रेण तस्य तस्याग्नेररण्योरुपावरोह्य ततस्ततो मन्थेत् (रु). [3] यदारण्योस्समारूढस्तदा मथित्वा जातमात्रेऽग्नावुपाव-रोहणमन्त्रं जपेत् । समारूढवचनस्यारणिस्थाग्निप्रदर्शनार्थत्वान्निर्वर्तमानत्वविशेषणाच्च अरण्योरुपावरूढस्य मन्थनेऽपि भवत्येव निर्वर्तमानजपः (रु).

[उपावरोहणे पक्षान्तरम्]

(भा) तस्य तस्य वाऽरण्योरुपावरोहयति मन्त्रेण । न तदा निर्वर्तमानजपः । यदा त्वरण्योस्समारूढः तदा निर्वर्तमाने पतितमात्रे अशक्यत्वान्निर्वर्तमानजपं कर्तुं वर्तमानसामीप्ये वर्तमानवदविरोधः ।

अरण्योर्वोपावरुह्य मन्थेदित्यस्यार्थः ;—

[भाष्यदर्शितपक्षान्तरोपपत्तिः]

(वृ) **तस्य तस्य–दविरोधः**—उपावरोहेति मन्त्रस्यात्मसमारूढानामरण्योरुपावरोहणे विनियोगात् यदरण्योस्समारूढस्स्यान्निर्वर्तमान इत्यरणिसमारूढानां मन्थनविधानाच्च ।

[निर्वर्तमानजपकालः]

**यदात्व–दविरोधः** — निर्वर्तमानम्–अरण्योरुत्पाद्यमानम् । तस्मिन् क्षणे मन्त्रजपाशक्तेर्वर्तमानप्रत्ययस्य वर्तमानसामीप्ये वर्तमानवद्वेति भूतार्थेऽप्याविरोधात् पतनानन्तरं [1] मन्त्रजपः ।

(सू) **इदं श्रेयो वसानं यदागां स्योने मे द्यावापृथिवी अभूताम् । अनमीवाः प्रदिशस्सन्तु मह्यम् । गोमद्धनवदश्ववत् पुरुषवद्धिरण्यवत् सुवीरवत् स्वाहेत्यवसिते जुहोति ॥ १ ॥ १५ ॥ ॥ १४३४ ॥**

---

[1] अवसिते गन्तव्यदेशप्राप्त्या पुनः स्वदेशप्राप्त्या वा प्रतिष्ठिते यजमाने विहृत्याहवनीयमिदं श्रेय इति जुहोति । अत्राध्वन्यग्निहोत्रसमासमाह भरद्वाजः - तस्माद्यायावरधर्मेणामयाव्यार्तोऽध्वन्यापत्सुवाऽर्धमासायाग्निहोत्रं जुहुयात् । प्रतिपदि सायं चतुर्दश चतुर्गृहीतानुन्नयति । एका समित् । सकृद्धोमः । सकृत्पाणिनिमार्जनं एवं प्रातरेतावान् विकारः । शेषं प्रकृतिवत् । अग्नीन् समारोपयेत वौपवसथादौपवसथ्येऽहनि तु न धारयत्यूर्ध्वंद्वादशाहान्निर्मन्थ्यौपवसथादिकर्म प्रतिपद्यते यदि समारूढा भवन्तीति । तथा जननमरणयोरापत्स्वर्धमासायाग्निहोत्रं जुहोतीति च (र).

[अवसिते जुहोतीत्यस्यार्थः तत्र होमेऽग्निश्च]

(भा) यदा प्रतिनिवृत्तः यदा वा वसत्यर्थं देशान्तरं गतः तदा प्रयाणपरिसमाप्तिः। अवसितं—परिसमाप्तं भवति तत्प्रयाणम्। तदा विहृत्येदं श्रेयोवसानं यदागामिति जुहोत्याहवनीये ॥ १५ ॥

(वृ) यदावा वस–गत इति—मध्ये विरम्यात्यन्तनिवासदेशप्राप्तौ प्रयाणपरिसमाप्तिः। अतश्च वास उपावरोह इत्येतन्मध्येऽवसाने भवति।

(सू) [1] नानिष्ट्वाग्रयणेनाहिताग्निर्नवस्याश्नीयात्। ॥ २ ॥ १६ ॥ १४३६ ॥

[आग्रयणपदार्थः नवाग्रयणे कर्ता च]

(भा) नवानामग्रप्रापणं देवानां तदाग्रयणं कर्म। तेनानिष्ट्वा [2] नवानां [3] नात्तव्यम्। येनापि न क्रियते यागः प्रियङ्गुकोद्रवादिना।

(सू) [4] व्रीहीणां यवानां श्यामाकानामित्यग्रपाकस्य यजेत ॥ ३ ॥ १७ ॥ १४३६ ॥

[नवाग्रयणे द्रव्यम्]

धान्यत्रयेण प्रथमपक्वेन यागः। तच्च स्थाप्यते।

---

[1] उक्तः प्रवासः अथाग्रयणमारभ्यते। यत्र नवसस्यानामग्रपाको देवान्नीयते तदाग्रयणं नाम नित्यं कर्म। तेनानिष्ट्वा सर्वमेव सस्यं नाश्नीयात्। यदप्ययज्ञीयं कोद्रवादि तदपि नाश्नीयादेव; नवस्येति सामान्यनिर्देशात् नवानां फलानां अनिष्ट्वापीति लिङ्गाच्च। आश्वलायनस्तु प्रागाग्रयणान्नवैर्हुताग्निहोत्रस्याशनमनुजानाति; यदाह; सस्यं नाश्नीयादग्निहोत्रमहुत्वा यदा वर्षस्य तृप्तस्स्यात्तथाऽऽग्रयणेन यजेतेति (रु).

[2] नवान्नं न कर्तव्यम्–ङ. [3] नाहर्तव्यम्–क. [4] यागस्त्वासामेवौषधीनामग्रपाकेन भवति नान्यासामित्यर्थः। अग्रे पच्यत इत्यग्रपाकः-प्रथमपक्वमन्नमिति यावत् (रु).

यदा वर्षस्य तृप्तिरथ यजेतेति बह्वृचानां श्रुतिः ।

(सू) अमावास्यायां पौर्णमास्यां वा ॥ ४ ॥
॥ १८ ॥ १४३७ ॥

[तत्र कालः]

कालश्च शरद्यथा सम्भाव्यते ।

आमावास्यं तन्त्रम् ॥ ५ ॥ १९ ॥ १४३८ ॥

[तत्र अपेक्षितानाङ्गसमर्पकप्रकृतिः पुनर्विधिफलं च]

[1] मुख्यत्वादैन्द्राग्नस्य तन्त्रमामावास्यम् ।

अमावास्यायामेव मा भूदिति पुनर्विधिः ।

[प्रवृत्तिनिमित्तविवरणं शब्दसाधुत्वं च]

(वृ) नवानां-कर्म—अस्यार्थः अन्नस्य नवधान्यस्य देवानां प्राप्तिराग्रयणम् । आकारव्यत्ययश्छान्दसः । आग्रयणमित्यपि सूत्रे प्रयोगाच्छान्दस एव ॥

[अनत्तव्यताहेतुः]

तेनानि-त्तव्यम्—यदकृत्वाऽऽग्रयणं नवस्याश्नीयादिति प्रायश्चित्तविधानात् ।

---

[1] यजेतेत्यनुषङ्गः यदिष्ट्यादिविधिसिद्धस्यापि पर्वणो विधानमामावास्यतन्त्रत्वादाग्रयणस्यामावास्यैककालत्वभ्रमनिरासार्थम् । अमावास्यापौर्णमासीशब्दाभ्यां च प्रतिपत्पञ्चदश्योस्सन्धिमानहोरात्र उच्यते । तत्रैव तयोर्व्युत्पत्तेः । अतः स एव तावद्विकृतीनां यागकालः । तास्तु प्रकृतिसन्निपाते तदनुरोधेन नेतव्याः । उक्तं च सत्याषाढभारद्वाजाभ्याम् । तत्रेयं विरोधगतिः ; यदा सन्धिमदहरुपवसथं करोति तदा विकृत्येष्ट्वा प्रकृतेरुपवासः । यदा यजनीयं तदा प्रकृत्येष्ट्वा याग इति । सत्याषाढस्तु काम्येष्टी प्रकृत्याह ;–अमावास्यां पौर्णमासीं वा संस्थाप्य यजेतेति । ऋतुमप्याग्रयणस्योत्तरत्र विधास्यति ; तेन न पर्वणोस्समुच्चयः (रु). ऐन्द्राग्नस्य मुख्यत्वादेव सिद्धे पूर्णमासविकाराणां हविषां भूयस्त्वात् पौर्णमासतन्त्रत्वशङ्कापनयार्थं आरम्भः । तेन च भूयस्त्वान्मुख्यत्वं बलवदिति ज्ञापितं भवति (रु). ऐन्द्राग्नस्य मुख्यत्वा–ख. ग.

[अशननिषेधपक्षभेदतद्विवरणे]

येना-दिना—नानिष्ट्वा नवस्याश्नीयादिति नवमात्राशननिषेधादयागीयस्याप्यशननिवृत्तिः। उपदेशस्तु देवेभ्यो भागं प्रतिक्लृप्तमद्यादिति यागीयस्यैव। देवेभ्यो भागं प्रतिक्लृप्तमद्यादार्तिमार्छेदिति देवार्हद्रव्यस्याशने प्रत्यवायश्रवणाद्यागीयस्यैवाशने प्रतिषेधः न सर्वेषामिति।

[समानतन्त्रपक्षे विशेषः]

धान्यत्र-प्यते—व्रीहियवश्यामाकात्मकेन। समानतन्त्रपक्षे वर्षासु पक्कानामपि श्यामाकानां यावच्छरत् स्थापनम्।

[वर्षतृप्तिपदार्थः]

यथाव-श्रुति—वर्षस्य तृप्तिरिति वर्षर्तुसमाप्तिः। शरत्प्राप्तिरित्यर्थः॥

कालश्च-व्यते—वर्षतृप्तिकालश्च शरत्। नियतवृष्टिसमाप्तिर्यस्मिन् काले संभाव्यत इति।

[मुख्यत्वेन प्रकृतोपयोगः मानं च]

मुख्यत्वा-न्त्रम्—मुख्येन धर्मनियमस्सूत्रकारस्याभिमत इति दर्शयति। अन्यत्र चोक्तं संसृष्टे मुख्ये स्वाधर्म्यमिति।

[पुनर्विधानफलविवरणम् अन्यत्राप्येतत्प्रदर्शनम्]

अमा-र्विधिः—आमावास्यतन्त्रत्वादमावास्यैव मा भूदिति पौर्णमासी विधातव्या, तस्यां विहितायां सैव नियता भवेदिति पुनरमावास्याविधिः। पशौ च विधानस्याप्ययमेव न्यायः।

(सू) निर्वपणकाल आग्नेयमष्टाकपालं निर्वपति पुराणानां [1] व्रीहिणाम्॥ ६॥ २०॥ १४३९॥

---

[1] व्रीहीणां संबन्धिनं व्रीहिमयमित्यर्थः (रु).

यथा[1] दान्तेनादान्तं संयुनक्ति तादृक्तदिति विज्ञायते ॥ ७ ॥ २१ ॥ १४४० ॥

[आग्नेयाष्टाकपालनिर्वापे सौत्रदृष्टान्तसङ्गमनम्]

(भा) दान्तेन बलीवर्देनादान्तं बलीवर्दं योजयतीति लिङ्गात् यत्रान्यानि दमनानि ; यथा अन्वायात्यमाने आग्रयणे दर्शपूर्णमासहवींषि पुराणानाम् ।

[तदा आग्नेययागकरणाकरणपक्षौ]

तत्राग्नेयं न कुर्वन्ति । उपदेश आग्रयणे आग्नेयप्राप्त्यर्थोऽर्थवादः । अतस्तत्रापि कर्तव्यः ।

[उपदेशपक्षे हेतुः]

(वृ) दान्तेन—अतो नित्यवदाग्नेयविधानात् तत्राप्यन्वायात्यादिषु कर्तव्य एवाग्नेयः ।

(सू) [2] येन यज्ञेनर्त्सेत्कुर्यादेव तत्राग्नेयमष्टाकपालमिति विज्ञायते ॥ ८ ॥ २२ ॥ १४४१ ॥

[काम्येष्टिषु आग्नेयस्य मुख्याङ्गत्वम्]

(भा) ईर्त्सेत्-वृद्धिमिच्छेत् । नियतां वा सिद्धिमिच्छेत् । अतः काम्यास्विष्टिषु कुर्यादेव तत्राग्नेयं मुख्यमङ्गभूतम् । पशुषु तु वपायाः पुरस्तादिज्या तस्य; न तु नित्ये कामः, समृद्ध्यर्थत्वात्तस्य, तेषां चाकाम्यत्वात् ॥ २२ ॥

---

[1] यथा दान्तेन बलीवर्देन सहाकृतश्रमं बलीवर्दं योजयति कर्षकश्शाकटिको वा तादृगेव नवानां हविषां पुराणेन सह निर्वपणमित्यर्थः । अत एवोपपत्तिवचनाद्दर्शपूर्णमासयोरन्वायात्यमान आग्रयणे पृथगाग्नेयं नेच्छन्ति । तत्र दान्तादान्तयोरसंभवात् अनाग्रयणहविष्ट्वाच्चाग्नेयस्य ! तत्र च लिङ्गं आग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्य इति । भारद्वाजस्तु स्वतन्त्राग्रयणेऽप्याह—अपि वा नवान्येव निर्वपेदाग्नेयम्' इति (रु). [2] न केवलाग्रयणे ; किंतु सर्वत्रैवेष्टिमात्रे येनार्धुमिच्छति तत्राग्नेयं मुख्यं समानतन्त्रं च निर्वपेदित्यर्थः (रु).

(वृ) ईर्त्सेत् च्छेत्—लौकिकपश्वादिफलेषु नियमेनैव फलसिद्धिं यदीच्छेदित्यर्थः ॥

[भाष्ये मुख्यपदस्वारस्यम्]

(वृ) कुर्या–ङ्गभूतम्—मुख्यमिति निर्देशादाग्रयणेऽप्याग्नेयस्याङ्गत्वं प्रतीयते। तदप्युपपन्नम्; राजसूये आग्रयणं भवति हुताद्यायेति विधाय ऐन्द्राग्नवैश्वदेवसौम्यद्यावापृथिव्यानां निर्दिष्टत्वात्तेषामेवाग्रयणे प्राधान्यम्। आग्नेयस्य त्वङ्गता। एवं काम्यकर्मणामपि तत्र तत्र प्रधानविधानादाग्नेयस्याङ्गत्वमेव। [1]यद्यपि पथिकृन्मुख्यः प्रयोगः; तथाप्यैन्द्राग्नस्य मुख्यत्वादामावास्यं तन्त्रमिति भाष्यकारनिर्देशोपपत्तिः प्रधानानां मुख्यत्वात्।

[भाष्ये पाठविशेषे व्याख्या]

पशुषु तु–त्वात्—न तु नित्येषु काम इति पाठे दर्शपूर्णमासादिषु नित्येषु गुणकामन्यायनयेन। यज्ञेनर्त्सेदिति—ऋद्धिं कामयित्वा कर्तव्यमित्यर्थः॥ २२॥

(सू) [2]नवानामितराण्यैन्द्राग्नं द्वादशकपालमाग्नेन्द्रं वा वैश्वदेवं पयसि चरुं सौम्यं श्यामाकं चरुं द्यावापृथिव्यमेककपालम्॥ ९॥ २३॥ १४४२॥ पुरस्तात्सौम्याद्द्यावापृथिव्यमेके समामनन्ति॥ ॥ २४॥

[नवाग्रयणे हविर्विकल्पः याज्याश्च]

(भा) ऐन्द्राग्नादीनि नवानाम्। अग्नीन्द्राभ्यां जुष्टम् अग्नीन्द्रौ हव्यं रक्षेथां अग्नीन्द्रावावह अपतमिन्द्राग्नी भुवनान्नुदेताम् अग्नीन्द्रयोरहं अग्नीन्द्राविदं हविः; विश्वेभ्यो देवेभ्यः विश्वान् देवानावह विश्वेषां देवानां प्राणैः सायुज्यमिति परिपठितम्; सोमस्य वृत्रहा भूयासम्; द्यावा-

---

[1] इदं पदं न दृश्यते–ख. ग. छ. [2] श्यामाकमपि नवानामेव (रु).

पृथिवीभ्यां द्यावापृथिवीहव्यं आवह द्यावापृथिव्योरिति परिपठितम् ; द्यावापृथिवी इदं हविः । केचिद्द्यावापृथिव्याविति कुर्वन्ति ।

(सू.) [1] निरुप्तं हविरिति व्याख्यातम् । अथ पञ्चाज्यानीर्जुहोति शतायुधाय शतवीर्यायेति ॥ १० ॥
॥ २४ ॥ १४४४ ॥

[अज्यानीपदार्थः]

(भा) निरुप्तं हविरिति व्याख्यातम् । अज्यानीरिति नामाहुतीनाम् ॥

[व्याख्यातत्वोक्तेः फलम्]

(वृ) व्याख्यातम् — आग्नेयस्याष्टाकपालस्य तन्त्रमित्यत्रोक्तव्याख्यानप्रकारपरिग्रहार्थम् । अत इदं देवानामित्यन्ते कृते उपसादनान्ते वा कृते इति विधिद्वयमत्रापि लभ्यते ।

(सू.) [2] पुरस्ताद्वा स्विष्टकृतः ॥ १० ॥ २५ ॥
॥ १४४५ ॥

प्रोक्षादि कर्म प्रतिपद्यते ॥ ११ ॥ २६ ॥
॥ १४४६ ॥

[3] एकमुलूखलं मुसलं प्रतिबीजं वा ॥ १२ ॥ २७ ॥
॥ १४४७ ॥

[1] निरुप्तं हविरित्यादिगुरुसूत्रकरणं आग्रयणं निरुप्यैता आहुतीर्जुहोतीति ब्राह्मणव्याचिख्यासयेति द्रष्टव्यम् । अज्यानयो 'भद्रान्नः' इत्याद्याः । (रु).
[2] नारिष्ठेभ्य उपरिष्टाज्जुहोत्यागन्तुकत्वात् । आग्रयणं निरुप्येति यागानुवादोऽयम्, न निर्वापमात्रस्येति भावः ॥ (रु)˙ [3] अत्र उलूखलमुसलमात्रग्रहणात् द्वयोरेवायं नानात्वविकल्पो नान्येषाम् । अतः शूर्पादीन्येकैकानि भवन्ति । शूर्पं कृष्णाजिनं चैकमित्यपि सत्यापाढः । प्रदर्शनमात्रमेतद्विभूनामित्यन्ये । शूर्पोलूखलानि त्रीणित्रीणि द्वे दृषदाविति भारद्वाजः । तत्र शूर्पैकत्वे प्रदेशभेदेन निर्वापोद्वापौ विवेकपरापवने तु सामर्थ्यात् पात्रान्तरे चैकैकस्य बीजस्य भवतः । तथा दृषद्यधिवापः पर्यायेण पात्रीकृष्णाजिनयोः । प्रस्कन्दनं संवापश्च प्रदेशभेदेनेत्यादि द्रष्टव्यम् । बीजसंस्कारेषु संभवतां तन्त्रत्वमितरेषामावृत्तिश्च यथायथमनुसंधातव्ये । तन्त्रिभावादेकैकं बीजमपवर्जयेदिति भारद्वाजः ॥ (रु).

[उलूखलादेरेकानेकत्वनिर्णयः]

(भा) प्रतिबीजं वा द्रव्याणि भवन्ति यान्य[1]विभवीनि। मुसलं त्वेकम् विभवात्। द्वे दृषदौ। त्रीणि शूर्पाणि। एका तु पात्री ग्रहत्रययुक्ता यत्र चैककपालः। भारद्वाजमतिश्च॥

[सूत्रे प्रतिबीजं वेत्युक्तिभावः]

(वृ) प्रतिबीजं-भवन्ति—प्रधानप्रत्यासत्तिसिद्धये प्रयोग प्राशुभावार्थम्। न्यायप्राप्तसाधनान्तरोपादानार्थत्वात् प्रतिबीजं वेत्युपदेशस्य।

यान्यविभवीनि—द्रव्याणि तेषामेव भेदः। न पुनर्विभवतां कृष्णाजिनशम्यादीनाम्।

[मुसलादेरेकत्वादेरुपपत्तिः]

मुसलं त्वेकं विभवादिति—आवृत्त्याऽवघातसंभवात्।

द्वे दृषदौ—उपला त्वेका।

त्रीणि शूर्पाणि—प्रतिबीजपक्षे।

यत्र चैककपालः—द्यावापृथिव्यस्यैककेपालपक्षे।

[2]ग्राहकत्रयमभिपूरणार्थम्। इतरथा द्वयमिति।

भारद्वाजमतिश्च—एवं विभवे। अविभवे नानापात्र्यः।

(सू) [3]सर्वेषु हविष्कृदवहननमन्त्रः ॥ १३ ॥ २८ ॥
॥ १४४८ ॥

---

[1] विभवानि--छ. विभवन्ति--ङ. पिभवन्ति ?--ग. [2] ग्रहत्रयमभि--छ. [3] यदा अवहननार्थो हविष्कृन्मन्त्रः तदोलूखलैकत्वे च बीजेबीज आवर्तते। यदा आह्वानार्थः तदाप्युलूखलैकत्वे आवर्तते भिन्नकालत्वात्। यथा वक्ष्यति हविष्कृदद्रिगु-लपु (आप. परि. ) भिन्नकालता च तत्र काण्डानुसमयेनैवानुष्ठेयत्वात्। भारद्वाजोऽप्याह। यदा तूलूखलभेदस्तदा न हविष्कृदाह्वानमावर्तेत कालव्यवेतत्वात्। कालाव्यवायश्च तत्र कर्मणां समानजातीयन्यायतः प्रवृत्तिसिद्धेः। तथा चैकस्मिन् कृष्णाजिने त्रीण्युलूखलान्यधिवर्तयतीति प्रकृत्य भारद्वाजः—सर्वाणि हवींष्योप्य हविष्कृतमाह्वयति सर्वाण्यवहत्य दृषदुपले समाहन्त्यनुपूर्वं सर्वाणि हवींष्युद्वपति परापुनाति विविनक्तीति॥ (रु).

[हविष्कृन्मन्त्रविनियोग भेदाद्बीजभेदकालभेदमूलावृत्तिः]

(भा) [1]यदा त्ववहननमन्त्रो हविष्कृदेहीति हविष्कृत् तदा प्रतिबीजमावर्तते। यदा त्वाह्वानार्थः उलूखलभेदश्च तदा अभिन्नकालत्वादेक एव हविष्कृत् एकस्मिन्नुलूखले कालभेदादावर्तते ।

[आह्वाने तन्त्रोपपत्तिः]

**यदा त्वव–ष्कृत्** — उलूखलभेदे शूर्पे उद्वपनमकृत्वाप्युलूखलान्तरेऽवघातसम्भवादवघातस्य क्रियान्तरव्यवधानाभावात् समानकालत्वादाह्वा[2]ने तन्त्रता ।

[कालभेदेनावृत्त्युपपत्तिः]

**एकस्मिन्–र्तते**—उद्वपनोत्तरकालमेव द्रव्यान्तरावघातसम्भवात् क्रियान्तरव्यवायात् कालभेदादावर्तते ।

(सू) [3]**तुषोपवपनम्** ॥ १४ ॥ २९ ॥ १४४९ ॥

[तुषोपवापस्य प्रतिवी[4]जमावृत्त्युपपत्ती]

(भा) तुषोपवापस्तु प्रतिबीजमेव सर्वेषां प्रतिपाद्यत्वात् । स्याद्रक्षसां तृप्तिरेकेनापि । तन्त्रेण प्रतिबीजपक्षे । भेदेनैकस्मिन्नुलूखले ।

**तुषोप–द्यत्वात्**—परावपनस्य तण्डुलविवेकार्थत्वात् तण्डुलप्रस्कन्दनान्तक्रियाकलापस्य प्रतिबीजमनुसमयात् तन्मध्यपतितस्य तुषोपवापस्याप्यावृत्तिः सर्वतुषाणां प्रतिपाद्यत्वात् ।

(वृ) **स्याद्रक्ष–नापीति**—यद्यपि रक्षसां तृप्त्य[5]र्थं तन्त्रेणोपवापसम्भवः तथाऽपि प्रतिपत्तिकालभेदात् प्रतिपाद्यभेदाच्चावृत्तिः ।

---

[1] यदावहनन–घ. [2] न तन्त्रता–ख. ग. [3] तुषोपवपनमपि सर्वेषु बीजेषु भवत्युलूखलभेदेऽभेदे च सर्वेषां तुषाणां प्रतिपाद्यत्वात् । तत्र सर्वे तुषाः समाहृत्यान्ततः प्रतिपादनीयाः विभूत्वात् । भारद्वाजश्चाह प्रक्षालननिनयनमप्येतेन व्याख्यातम् (रु). [4] जमावर्तते–घ. [5] र्थत्वात्त–छ.

[रक्षस्तृप्तेरुपपत्तिः]

तन्त्रे-क्षे —सर्वेष्ववहतेष्वेकैकस्य तुषाभिमन्त्रणान्तं कृत्वा तन्त्रेण तुषोपवापः ।

भेदेनै-ले—तण्डुलप्रस्कन्दनान्तस्य क्रमेण कर्तव्यत्वात् ।

(सू) [1]उत्तममोप्य वाचं विसृजते ॥ १५ ॥ ३० ॥ ॥ १४५० ॥

[वाग्विसर्गावसरः]

(भा) उत्तमं बीजं उलूखले समोप्य यो हविष्कृत्तस्मिन् विसृजते वाचम् ।

[विकृतावप्येतदवधिवाग्यमः]

अर्वाग्घविष्कृतो ये पदार्थाः प्रकृतौ ते वाग्यतेन कृता इति विकृतावपि तथैव कर्तव्याः ।

[विकृतावुक्तवाग्यमनोपपत्तिः]

उत्तमं-वाचम्— अध्वर्युर्यजमानश्चाहविष्कृत इति सर्वहविष्कृदाह्वानान्ते युक्तः । आहविष्कृत इत्यभिविधित्वात् ।

[एकतन्त्रानुबन्धिबीजविषयेतन्त्रावृत्त्यादिसम्भवासम्भवप्रदर्शनम्]

(सू) ए[2]षोऽन्येषां नानाबीजानां समवेतानां कल्पः ॥ १६ ॥ ३१ ॥ १४५१ ॥

(भा) अ[3]न्येषामपि नानाबीजानां एकस्मिंस्तन्त्रे समवेतानामेष विधिर्भवति ।

तत्र कर्म वक्ष्यामः—वेषाय व इति शूर्पत्रयमादत्ते यदि शक्यते । प्रत्युष्टमित्यविकारः । [4]सह च तपनम् । परमविकृतम् ।

---

[1] हविष्कृदावृत्तोक्तौ तूत्तमं बीजमोप्य यो हविष्कृत्तेन वाचं विसृजते न पूर्वेणेत्यर्थः । अथ पेषणादीनामपि पूर्ववत्तन्त्रावृत्तिभ्यां प्रवृत्तिः चरुपुरोडाशधर्माश्च यथायथं प्रत्येतव्याः (रु). [2] अन्येषामप्येकस्मिंस्तन्त्रे समवेतानां नानाबीजानां एकमुलूखलं मुसलमित्यादिरेष एव कल्पः; प्रयोगः (रु). [4] सह त.-छ.

बीजेभ्यो गृहीत्वा तन्त्रेण निरसनम् । निर्वापावृत्तिः । एकशूर्पस्थानां बीजभेदेऽपि सहाभिमर्शनं यदि विभवति । देवस्य त्वादिष्वावृत्तिः । शूर्पभेदेऽप्यावृत्तिः । अवशिष्टाभिमर्शनं सह । सर्वमन्यत्तन्त्रेण । शूर्पभेदे प्रोक्षणावृत्तिः । यदि वि[1]भवो भेदनापि तन्त्रेण । कृष्णाजिनादानादितण्डुलप्रस्कन्दनान्तमेकस्मिन्नुलूखले एकस्य बीजस्य कृत्वा पुनर्हविरावपनादितण्डुलप्रस्कन्दनान्तं सर्वमाग्नीध्रप्रैषवर्जम् । एवं [2]प्रतिबीजं तन्त्रेणावेक्षणम् । अदभ्रेन व इति फलीकरणप्रैषश्च । पर्यायेण फलीकरणं प्रक्षालनं च । एकीकृत्य प्रक्षालनं तन्त्रेण निनयनम् ।

ततो विभागो यथाभागं व्यावर्तध्वमिति । अभिमर्शनमिदमिन्द्राग्न्योर्द्यावापृथिव्योरिति । आग्नेन्द्रयोर्द्यावापृथिव्योरिति वा । इदं विश्वेषां देवानामिति चर्वर्थानाम् । ततः कृष्णाजिनादानादि तण्डुलाभिमन्त्रणान्तं तन्त्रेण कृत्वा अधिवापाद्याग्नेयस्य [3]कृत्वा अणूनि कुरुतादित्यन्तं पुनर्नवानामिन्द्राग्निभ्यां जुष्टमधिवपामि द्यावापृथिवीभ्यां जुष्टमधिवपामीति तदन्त[4]मेव । [5]चरोरपेषणम् । प्रतिबीजपक्षे उलूखलाधिवर्तने कृते आग्नेयस्य नवानामुलूखलाधिवर्तनम् ततश्श्यामाकानाम् । नोत्सृजति सर्वाण्येककृष्णाजिनगतानि । पर्यायेण हविरावपनम् । सकृद्गृहीतेन मुसलेन सकृदेवाहूय हविष्कृतं पर्यायेणावहन्ति सर्वाणि । सकृदेवाग्नीध्रप्रैषः । आदानं चाश्मनः । दृषद्वयं हत्वा सकृदुपलाम् । उपलां हत्वा दृषद्वयं एवं संचारयति त्रिरेव मन्त्रः । प्रतिद्रव्यं वा मन्त्रावृत्तिः । तदा सप्तकृत्वः । उपोहनमुद्वपनं चैकैकस्य । तथा परापवनं प्रस्कन्दनानुमन्त्रणं [6]च । सर्वतुषाणां तन्त्रेणोपवपनं पर्यायेण विवेकः । प्रस्कन्दनं च पात्र्याम् ।

---

[1] भवे--छ. [2] बीजे बीज--ख. ग [3] त्वणूकरणान्तं कृत्वा पु--छ.
[4] वकरोति--घ. छ. [5] चर्वी ?--छ. घ. [6] च सकृत् सर्व--ङ.

तन्त्रेणावेक्षणं प्रैषश्च । पर्यायेण फलीकरणम् एकैकस्य त्रिस्त्रिःप्रक्षालनं च । निनयनं प्रक्षालनानां तन्त्रेणैकीकृत्य विभागः पूर्ववत् । एका दीर्घा शम्या दृषद्द्वयं तस्यां पर्यायेण । एकस्यामुपलामत्याधाय अभिमन्त्रणादि पिष्टस्कन्दनान्तं कृत्वा उपलात्याधानाद्यपरस्यां तदन्तं तन्त्रेणावेक्षणं प्रैषश्च । पर्यायेण त्वणूकरणम् उत्सर्गविरो[1]धात् । [2] यदोपलाभेदोऽपि तदाऽऽग्नीध्रोऽप्युपलाद्वयमाहन्ति । पेषणे चोपलाद्वयमत्याधाय पर्यायेण तण्डुलाभिमन्त्रणं तन्त्रेण कृत्वानुत्सृजन्नेवोपलेऽधिवा[3]पं पर्यायेण करोति । प्राणाय त्वेत्यादि प्रस्कन्दनान्तं [4] च पर्यायेण तन्त्रेणावेक्षणं प्रैषश्च । पर्यायेणाणूकरणम् । आतण्डुलभावादेकोऽ[5]वहन्ति पदार्थः । अणूकरणान्तं च पेष[6]णमित्यभेदे पात्राणामुक्तःपक्षः ॥ संवापश्च गृहकद्वये पिष्टानामुत्पवनं पर्यायेण तण्डुलानां च । संयवनं परिप्लावनं च पर्यायेण । पिण्डकरणान्तं नवाना[7]म् । विभागो यथाभागं व्यावर्तेथामिति । अभिमर्शन [8]मिन्द्राग्न्योरिदं द्यावापृथिव्योरिति कृत्वाऽङ्गारापोहनम् । घर्मासीत्यधिश्रयणं चरुपुरोडाशानां क्रमेण । [9] चरूणां प्रथनश्लक्ष्णीकरणपरितपनाधिज्वलनाध्यूहनानि न क्रियन्ते । सर्वमन्यत् । आर्द्रो भुवनस्य गोपा इत्युद्वास्य[10] प्रतिष्ठापनं पात्र्याम् । उपदेशो यत्र पुरोडाशग्रहणं न तच्चरोः क्रियते इति ।

[भाष्यदर्शित तन्त्रावृत्त्यादि संभवासंभवादि हेतुविवरणम्]

(वृ) अन्येषा–भवति—देवसुवादीनाम् ।

वेषा–क्यते—तन्त्रेणोपादातुम् । इतरथा होममन्त्रावृत्तिश्च ।

प्रत्यु–रः—शूर्पबहुत्वेऽपि प्रकृतावप्यग्निहोत्रहवणीशूर्पयोस्तप्यमानत्वात् । एकवचनस्यासमवेताभिधायित्वात् प्रत्युष्टमित्यविकारः ।

---

[1] धाद्योपलाभेदोऽपि–ङ. [2] धातुउपलाभेदोऽपि–छ. [3] पः–ङ.
[4] न्तंपर्या–ङ [5] को भवति हन्तिपदार्थः–घ. ङ [6] णम् । अभेदे–घ.
[7] नामेव–घ. [8] मिदमिन्द्रा–घ. [9] चरुषु–घ. [10] स्य नप्रति–घ. ङ.

सह-नम्—प्रत्युष्टमिति रक्षोविशेषणत्वात्।

बीजेभ्यो-सनम्—निरस्तं रक्ष इति।

निर्वा-विभवति—विभवतां तन्त्रस्योक्तत्वात्।

देव-त्तिः—अशक्यत्वात्तन्त्रेणाभिमर्शनस्य!

शूर्प-त्तिः—अशक्यत्वात्सहाभिमर्शनस्य।

अव-सह—यदि संभवति।

शूर्पमे-णावृत्तिः—यदि न संभवति।

यदि वि-न्त्रेण—प्रोक्षणम्।

कृष्णाजि-प वर्जम्—भ्रातृव्यपराभावनार्थत्वात्समाहननस्य तदर्थत्वादुच्चैस्समाहन्तवा इति प्रैषस्य भ्रातृव्यपराभावनस्य सकृत्समाहननेन सिद्धत्वात् द्वितीयादिहविष्षु प्रैषादिनिवृत्तिः।

एवं प्र-पश्च—एवं हविरावपनादि तण्डुलप्रस्कन्दनान्तम्।

पर्या-निनयनम्—प्रक्षालनोदकं सर्वेषामेकीकृत्य सर्वान्ते नितयनम्।

ततो वि ध्यमिति—चरुपुरोडाशीयानां नवानाम्।

अभिम-र्शनाम्-तदन्तमेव—अणूकरणान्तमेव करोति। एवमेकोलूखलपक्षे।

चरो-णम्—विशदसिद्धौदनवाचित्वाच्चरुशब्दस्य।

प्रतिबीज-गतानि—उलूखलानि।

पर्यायेण-प्रैपः—उच्चैस्समाहन्तवा इति।

आदा-नः—तन्त्रेण।

दृप-त्वा—द्विर्द्विः।

सकृदु-द्वयम्—द्विर्द्विः।

एवं सं-न्त्रः—दृषद्द्वयेऽपि सकृदेव मन्त्रोच्चारणम्, द्रव्यान्तरे क्रियान्तरव्यवधानाभावात्।

प्रतिद्र-कृत्वः—प्रथमपर्याये सकृन्मन्त्रः। उपलायां सकृन्मन्त्रमुक्त्वा प्रथमपर्यायं परिसमाप्य द्वितियपर्यायारम्भं च कुर्यात्। ततो द्वितीयदृषदर्थं सकृदुक्त्वा समाहननम्। एवं सप्तकृत्वो मन्त्रः।

उपोह-न्त्रणश्च—प्रस्कन्दनकाले तुषानुमन्त्रणं च द्वयं प्रतिबीजम्।

सर्व-पात्र्याम्—पात्रेषु वा तण्डुलानित्युभयमेकैकस्य।

तन्त्रेणा-वेक्षणम्—सर्वतण्डुलानाम्।

प्रैषश्च—तन्त्रेण।

पर्या-लनं च—इति द्वयमेकैकस्य।

निनयनं-र्ववत्—चरुपुरोडाशीयानाम्।

एकादी-येण—मन्त्रावृत्तिश्च।

एकस्यामु-प्रैषश्च—असंवपन्तीति।

पर्यायेणा-धात्—अनुत्सृजत एव पेषणस्याणूकरणान्तस्य विधानात्।

ग्रहकद्वये—अलाभे द्वयोः पात्र्योः।

संयवनं—प्रणीताभिः।

परिप्ला-येण—तप्ताभिः।

सर्वमन्यत्—केचिदुरु प्रथस्वेति कुर्वन्ति विक्लेदनात्प्रथन्ते तण्डुला इति।

आर्द्रो-पात्र्याम्—आर्द्रः प्रथस्नुरिति केचित्।

उपदे-यते इति—आग्नेयं पुरोडाशमष्टाकपालेष्वधिश्रयतीत्याद्युद्वासनान्तं सर्वं कर्तव्यम्। अन्यत्र यच्च पुरोडाशग्रहणम्।

(सू) [1]अलङ्करणकाल आज्येनैककपालमभिपूरयति ॥

॥१७॥ ३२॥ १४५२॥

---

[1] अथ-उद्वासनकाले पात्र्यां क्रोडं कृत्वा तत्र प्रतिष्ठापितमेककपालमलङ्करणकाले अलङ्करणमन्त्रेणाभिपूरयति; यथा स निमज्जत्याज्ये तथाक्रोडं पूरयतीत्यर्थः (रु).

[अलङ्करणस्थाने अभिपूरणम्]

(भा) अभिपूरणमलङ्करणप्रत्याम्नायः । अतस्तेनैव मन्त्रेणाभिपूर्यते ।

[प्रत्याम्नायताहेतुः]

(वृ) अभिपू--म्नायः--तुल्यकालत्वात् ।

(सू) [1] आविःपृष्ठं वा कृत्वाऽऽसादयति ॥ १८ ॥
॥ ३३ ॥ १४५३ ॥

[अनभिपूरणपक्षः]

(भा) आविःपृष्ठः प्रकाशपृष्ठः । न पूर्यते वा सर्वम् ॥

(सू) [2] प्रचरणकाले उद्धृत्य बर्हिषदं कृत्वा जुह्वामुपस्तीर्याधायाशयमन्वानीयाभिघार्योपांशु प्रचरति ॥
॥ १९ ॥ ३४ ॥ १४५४ ॥

एकोनत्रिंशी खण्डिका.

---

[होमपूर्वाङ्गव्यापारः]

(भा) उद्धृत्य पात्र्या आधाय स्रुचि आशयः येन पूर्यते घृतेन तत् क्षिप्यते । पश्चाद्द्विरभिघारणम् । सकृदुपदेशः ; आशयेन चतुरवत्तस्य पूरितत्वात् ॥

---

[1] अथवा तं आविःपृष्ठं--प्रकाशपृष्ठं कृत्वाऽनभिपूर्य ततो हवींष्यासादयतीत्यर्थः । तथा च व्यक्तं प्रदेशान्तरे ;—यथा आविःपृष्ठं कृत्वा व्याहृतीभिः हवींष्यासादयेदिति । अथापरा व्याख्या उद्वासनकाले पात्रान्तरे उद्वासितमेककपालमाज्येनाभिपूर्य आविःपृष्ठं वा कृत्वा तेनैव पात्रेण सह सादयति । सत्यापाढोऽप्याह ॥ (रु).

[2] प्रचरणकाले घृतादेककपालमुद्धृत्य बर्हिषि सन्नं कृत्वा ततो जुह्वामुपस्तीर्य तत्र कृत्स्नं पुरोडाशं तूष्णीं निधाय यस्मिन् घृते आशयतस्तदाशयमाज्यं पश्चादानीय सकृदभिघार्य उपांशु प्रचरति । द्विरभिघारणमित्येके ; तदयुक्तम् ; आशयेनैव चतुरवत्तनासिद्धेः कृत्स्नं वैश्वानरमादाय द्विरभिघार्येत्यन्यत्र वचनाच्च (रु)

[अन्वानयनमभिघारणस्थाने]

(वृ) उद्धृत्य-रितत्वात्;—आशयान्वानयन[1]मप्यभिघारणकार्यकरम्।

(सू.) [2]सर्वहुतमपर्यावर्तयन् ऋजुं प्रतिष्ठितं न हस्तेन जुहुयात् ॥ १ ॥ ३५ ॥ १६५५ ॥

[होमप्रकारः हस्तहोमे हेतुश्च]

(भा) अपर्यावर्तयन्–हुतमहुतं च । ऋजुः [3]समं प्रतिष्ठितो यथा न चलति तथा होतव्यम् । [4]वक्रोऽप्यचलः[5] न प्रतिष्ठितो भवति; अतः ऋजुरित्युच्यते । स[6]मं स्रुचा होतुमशक्यमिति जुहुयाद्धस्तेन । अतः प्रतिषेधः[7] ।

(वृ) अपर्या-षेधः—न हस्तेनेति ।

(सू) [8]यदि हुतः पर्यावर्तेत स्रुचोऽग्रेण कल्पयेत् ॥ ॥ २ ॥ ३६ ॥ १४५६ ॥

[9]न पाणिना ॥ ३ ॥ ३७ ॥ १४५७ ॥

[10]वरे दत्ते कल्पयितव्यः ॥ ४ ॥ ३८ ॥ १४५८ ॥

(भा) हुतस्य पर्यावृत्तस्य स्रुचोऽग्रेण कल्पनं प्रायश्चित्तम् । अहुतस्य यद्येककपालः स्कन्देदित्येरत् ॥

(वृ) हुतस्य-श्चित्तम्;—सर्वप्रायश्चित्तं च ॥

[11]आधायाभिघार्य पुनर्होतव्य इत्येके ॥ ॥ ५ ॥ ३९ ॥ १४५९ ॥

---

[1] मभिघार-घ. [2] सर्वहुतमिति विस्पष्टार्थम् । अथवा अस्कन्नस्सर्वो हुतो भवति तथेत्यर्थः । अपर्यावर्तयन् यथा हूयमानोऽहुतश्च न पर्यावर्तेत तथा स्रुक्पार्श्वेन शनैश्चयावयेत् । (रु). [3] समः–छ. [4] चक्रो ? छ. [5] लन् ? घ. [6] समः–ख. ग. समः श्रमं ? छ. [7] कल्पयेत् यथास्थानं प्रतिष्ठापयेत् । हुत इति वचनादहुतस्य पर्यावर्तने यद्येककपालः स्कन्देत्पर्यावर्तेतेत्यनेन विधिना कल्पयेत् (रु). [8] सहकार्यन्तरापेक्षायामपि न पाणिना कल्पयेत् (रु). [9] कल्पयिष्यमाणे वरादेय इत्यर्थः (रु). [10] स्रुचि । [11] आश्रावणादिना ।

(भा) आधाय वा स्रुचि पर्यावृत्तमभिघार्यावृत्तमभिघार्य पुनरनुब्रूहीत्येवमादि होमः ॥

(वृ) आधायाभिघार्य पुनर्होतव्य इत्यस्यार्थः ;—

[1] अपिवा नैककपालं कुर्वीताज्येन द्यावापृथिवी यजेत ॥ ५ ॥ ४० ॥ १४६० ॥

[एककालाभावपक्षे होमे विशेषः]

(भा) यदाऽप्याज्येन द्यावापृथिवी तथाऽपि हुतानुमन्त्रणं परि-[2]पठितव्यम् । न [3] हाविरवेक्षणं वैकृतीनाम् ॥

(वृ) यदाऽप्या—तीनाम् ;—यथालिङ्गं वैकृतीरिति हविर्विशेषापेक्षाभावात् ॥

[4] ये प्राचीनमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति । वासः श्यामाके ॥ ७ ॥ ॥ ४१ ॥ १४६१ ॥

[आग्रयणदक्षिणास्वरूपं पक्षान्तरं च]

(भा) प्राचीनं पूर्वमेकाष्टकायाः प्रवृत्ते व्रीह्याग्रयणे ये वत्सा जायन्ते अन्यस्मिन्न[5]पि संवत्सरे तेषां प्रथमजो देयः । उपदेशो यवाग्रयणे प्रवृत्ते ये वत्सा जायन्ते ते प्राचीनमेवाष्टकायां [6] भवन्तीति तदाप्येकाष्टकाग्रहणमनर्थकमिति ।

---

[1] उभयोरपि पक्षयोः वैशेषिकमेव हुतानुमन्त्रणं न प्रकृतमिति दर्शितं याजमाने ॥ (रु). [2] पठितमेव—छ. [3] हविरनपेक्षणम्—ख. ग. [4] एकाष्टका वक्ष्यते या माघ्याः पौर्णमास्या इति ; तस्याअनिवृत्तायाः प्रागेव ये यजमानस्य गोषु वत्सा जाताः पूर्वस्मिन् संवत्सरे तेषां प्रथमजं ददाति । वासश्श्यामाके चरौनिमित्तभूते । तयोश्चाभिमर्शनादावूहः प्रकृतावेव दर्शितः (रु). [5] स्मिन वत्सरे—ङ. [6] यां प्रतीति—छ.

[वक्तव्यसारः दानसंकल्पे मतिभेदश्च]

पूर्वं व्रीह्याग्रयणादित्येव वक्तव्यम् । श्यामाकदक्षिणां वासो ददामीति संकल्पः । ब्राह्मणा इमे वो गोवाससी इति । उपदेशो ब्राह्मणाः प्रथमजं वत्सं वो ददामीति वासः श्यामाकायेति ।

[आग्रयणे प्रवृत्त इत्येतदुक्त्याशयः]

(वृ) प्राचीन-जोदेयः—प्रवृत्त व्रीह्याग्रयणे इति निर्देशाद्य प्राचीनमिति द्वितीयादिप्रयोगेषु विधिः । प्रथमस्याप्यनाहिताग्नयाग्रयण-कालादूर्ध्वं प्रागेकाष्टकायः जातानां प्रथमजो देयः ।

[एकाष्टकाग्रहणानर्थक्योपपादनम्]

उपदे-र्थकमिति—यवाग्रयणात्तदूर्ध्वंजातानां प्रथमस्य शरत्काले आधानविधाने आगामिन्येकाष्टकायाः पूर्वभावित्वनियमादेकाष्टकाग्रहणमनर्थकम् ।

पूर्वं-क्तव्यम्;—तस्मात्पूर्वव्याख्यानमेव युक्तम् ।

श्यामा-ससी इति—दानम् ।

[1] भद्रान्नश्श्रेयस्समनैष्ट देवा इति यजमानभागं प्राश्नाति ॥ ८ ॥ ४२ ॥ १४६२ ॥

[2] सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायस्स्यात् ॥ ९ ॥ ४३ ॥ १४६३ ॥

[3] अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिरिति श्यामाकानाम् ॥ १० ॥ ४४ ॥ १४६४ ॥

---

[1] प्रत्याम्नानात्प्राकृतमन्त्रो निवर्तते (रु). [2] न केवलं यजमानभागमात्रस्यैव किंतु ये यजमानस्यर्त्विजां वा मन्त्रवन्तो भक्षा इडाप्राशित्रादिविषयास्तेषां सर्वेषामप्ययं मन्त्रः प्रत्याम्नानं स्यात् (रु). [3] श्यामाकानां यजमानभागं पृथगनेन मन्त्रेण प्राश्नाति सर्वेषां वेत्यादि पूर्ववत् (रु).

[भक्षणमन्त्रविनियोगभेदः]

(भा) सर्वेषां भक्षाणामयमेव मन्त्रः। न तु समुच्चयेन प्रत्याम्नाय एव स्यात्। न त्वमन्त्रकाणां श्यामाकानां यजमानभागभक्षणमन्त्रोऽग्निः प्रथम इति।

[प्रत्याम्नायपक्षे विशेषः]

[1] तथैव वा सर्वेषां प्रत्याम्नायः। तदा सहोपहूता[2]मिडां प्राशित्रं च परिहृतं पृथ[3]ग्भक्षयते। मार्जनं तु तन्त्रेण॥

(वृ) सर्वेषां वा भक्षाणां मन्त्रवतामित्यस्यार्थः।

सर्वेषां–थम इति।

[प्रत्याम्नायपक्षे विशेषविवरणम्]

तथैव वा सर्वेषां प्रत्याम्नायः—'कृणोतु विश्वचर्षणिरिति श्यामाकानाम्' इति सूत्रस्य क्रियाविशेषापेक्षत्वात् पूर्वोक्तप्रकारद्वयभक्षणमन्त्राविह संपद्येते।

तदा स–ग्भक्षयत इति—सर्वमन्त्रप्रत्याम्नायपक्षे श्यामाकस्य पृथङ्मन्त्रेण भक्षयितव्यत्वात् श्यामाकद्रव्यस्य इडाप्राशित्रान्तर्भूतस्य पृथगादाय भक्षणम्।

मार्जनं तु तन्त्रेण—उभयं भक्षयित्वा।

(सू) सिद्धामिष्टिस्संतिष्ठते ॥११॥४५॥१४६५॥

[4] अपिवाऽमावास्यायां पौर्णमास्यां वाऽग्रयणेष्टिमन्वायातयेत् ॥१२॥४६॥१४६६॥

---

[1] तेनैववा–घ. [2] यामिडायां–घ. [3] ग्भक्ष्येत–घ. [4] अथ आपत्स्वनुग्रहार्थमाग्रयणानुकल्पा उपदिश्यन्ते। तेषामुत्तरोत्तरकल्पस्यानुकल्पत्वं आपत्तारतम्यानुसारित्वं च बोद्धव्यम्। तत्रानापद्यपि काचित्काचिद्विषयसामर्थ्याद्व्यवतिष्ठते। तं तं विषयविशेषं तत्र कल्पे प्रदर्शयिष्यामः। तत्र यः कदाचित्सम्पदा पृथगाग्रयणेष्टिं निर्वप्तुं न शक्नुयात् स तां दर्शपूर्णमासयोरन्यतरत्रान्वायातयेत्। तदेकतन्त्राण्याग्रयणहवींष्यनुनिर्वपेदित्यर्थः। तत्र चाज्यान्यादि वैशेषिकमप्यविरोधात्कार्यम्। पुराणाग्नेयं तु नेच्छन्ति। तच्च दर्शितमेव प्राक्। दक्षिणास्तु समुच्चीयन्ते वासश्श्यामाके इति लिङ्गात्। भक्षणे तु नवस्य पृथक्कृतस्य भक्षणं मन्त्रभेदात् (ठ).

[1] अपिवाऽमावास्यां पौर्णमासीं वा नवैर्यजेत ॥ १३ ॥ ४७ ॥ १४६७ ॥

[2] आपिवाऽग्निहोत्रीं व्रीहिस्तम्बं यवस्तम्बं वा ग्रासयित्वा तस्याः पयसा सायंप्रातराहुतीर्जुहुयात् ॥ १४ ॥ ४८ ॥ १४६८ ॥

[3] अपि वा नवानां यवाग्वा सायंप्रातर्जुहुयात् ॥ १५ ॥ ४९ ॥ १४६९ ॥

[4] अपि वा नवानां गार्हपत्ये स्थालीपाकं श्रपयित्वऽऽहवनीये जुहुयादाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थाभ्यः ॥ १६ ॥ ५० ॥ १४७० ॥

[5] अपि वा नवानां चतुश्शरावमोदनं पक्त्वा चतुरो ब्राह्मणान् भोजयेत् ॥ १७ ॥ ५१ ॥ ॥ १४७१ ॥

---

[1] पूर्वकल्पस्याप्यशक्तौ दर्शपूर्णमासयोरन्यतरमेव नवैर्यजेत । तत्र तु सर्वस्यापि वैशेषिकस्य निवृत्तिः । अथ यत्राक्रिया दर्शपूर्णमासव्यतिरिक्तेष्टीनां यथा ताभ्यां संवत्सरमिष्ट्वा तत ऊर्ध्वमन्यानि कर्माणि कुरुते इति तत्रायमेव पक्षो व्यवतिष्ठते सामर्थ्यात् .(रु). [2] व्रीह्याग्रयणकाले सव्रीहिकं व्रीहिस्तम्बं यवाग्रयणकाले यवस्तम्बं च प्रातरेव गां ग्रासयित्वा भक्षणप्रपीनायास्तस्याः पयसा सायं जुहुयादपरेद्युः प्रातश्च । तत्र व्रीहियवनियमात् श्यामकानां निवृत्तिः । (रु). अथ यदा दर्शपूर्णमासयोरप्यक्रिया यथासंवत्सरमग्निहोत्रं हुत्वाऽथ दर्शपूर्णमासावारभत इति ; तदाऽयं विधिरुत्तरो वा सामर्थ्यात् । [3] पूर्वेणायं पक्षो व्याख्यातः तुल्यविकल्पश्च सर्वत्र (रु). [4] स्विष्टकृच्चतुर्थाभ्य इति वचनात् श्यामाकदेवतायाः सोमस्य निवृत्तिः । स्थालीपाक इति वचनाच्च पार्वणप्रकृतिको यजमानकर्तृकश्च । अथ यदा संवत्सरे पवमानहविषामुत्कर्षः तदाऽयमेव पक्षः सामर्थ्यात् ॥ (रु). [5] पुरुषाशनपर्याप्तग्राहिणा महता शरावेण चतुर्वारं निरुप्तमोदनं लौकिकेऽग्नौ पक्त्वा चतसृणामासां देवतानामर्थे चतुरो ब्राह्मणान् भोजयेत् । अथ यदोत्सृष्टाग्निर्यजमानः तदाऽयमेव पक्षः सामर्थ्यात् ॥ (रु).

[आग्रयणेष्ट्यन्वायातनेऽनुष्ठाने विशेषः तन्त्रे मतिभेदश्च]

(भा) अन्वायातनमनुप्रवेशः । सहप्रयोगो दर्शपूर्णमासाभ्याम् । तदा दर्शपूर्णमासयोस्तन्त्रं नाग्रयणस्य । दक्षिणाश्च तत्रानुप्रवेशयेत् इति सूत्रकारान्तरमताच्च । आगन्तुकत्वादाग्रयणस्य अविरुद्धा अङ्ग्यान्यः क्रियन्ते । मीमांसकानामाग्रयणस्य प्राधान्यमित्यानित्यस्य प्रयोग[1] इति सगुणविगुणसाध्या प्रकृतिरिति तत्र तस्य सर्व[2]तन्त्रम् । आग्रयणेन यक्ष्य इति सङ्कल्पं कृत्वा ।

[अन्वायातने न्यायः]

आग्रयणं प्रकृतिकाले यदा नशक्यते सम्पादयितुं तदाऽन्वायातनमिति न्यायः ।

[अन्वायातने आवाहने मतिभेदः]

अन्वायात्यानामनावाहनमुपदेशः । आवाहनं वा यस्मादेतानि सह प्रवर्तन्ते न तन्त्रमध्ये ; यथा देविकादेवसुववाजिनवैश्वानरादयः ।

[दर्शपूर्णमासतन्त्रत्वे हेतुः]

(वृ) **अन्वाया-यणस्य**—सहप्रयोगेऽपि मुख्यत्वाद्दर्शपूर्णमासतन्त्रत्वम् ।

[वैशेषिकानुष्ठाने हेतुः]

**दक्षिणा-न्यः क्रियन्ते**—दर्शपूर्णमासतन्त्रत्वेऽपि वैशेषिकानामङ्गानामविरुद्धानामनुष्ठानामिति ।

[मीमांसकाशयः]

**मीमां-सर्वतन्त्रम्** — प्रकृतेर्नित्यत्वेन यथाशक्ति प्रयोज्यतया सगुणविगुणसाध्यतयाऽऽग्रयणस्य च स्वर्गफलतया काम्यत्वात्सर्वाङ्गोपसंहारस्य कर्तव्यत्वात्तदनुसारेण तन्त्रानुष्ठानमिति तस्यैव तन्त्रं न प्रकृतितन्त्रोपजीविता ।

---

[1] गः विगुण–ङ. [2] तन्त्रत्वम्–छ.

[आग्रयणपृथक्प्रयोगसहप्रयोगविकल्पो नेष्यते इति न्यायार्थः]

**आग्रय–तिन्यायः**—आस्यार्थः-आग्रयणस्य द्व्यहकालत्वपक्षे चतुर्दश्यामन्वाधाने कृते पञ्चदश्यामनुष्ठातुमशक्यस्य प्रतिपदि प्रकृत्या सह प्रयोगः। अथवा पञ्चदश्यामेव सद्यस्कालमाग्रयणं कर्तुं सङ्कल्प्य तस्यानुष्ठातुमशक्यस्यान्वायातनमिति; न तु पृथक्प्रयोगसहप्रयोगयोस्तुल्यविकल्पः।

[उपदेशपक्षाशयः]

**अन्वाया–पदेशः**—अनुशब्दप्रयोगात् पश्चाद्भावितया परतन्त्रोपजीवितया देविकादिवदनावाहनमिति।

[तन्त्रानुपजीवितया नावाहननिषेध इति पक्षान्तराशयः]

**आवा–दयः**—उभयोः स्वतन्त्राधिकारत्वात् प्रकृतितन्त्रमध्यविधानाभावाच्च न तन्त्रोपजीविता, किं तु सहप्रयोग एव। अत आग्रयणदेवतानामप्यावाहनम्, अन्वाधानं त्वाग्रयणार्थं कृतमेव। तेष्वेवाग्निषु यतः प्रकृतिः प्रवर्तते।

[नवैर्यागविकल्पे विषयव्यवस्था]

(भा) नवैर्यागादय आग्रायणे विकल्पाः न श्यामाकस्य स्थाने। एतेषु श्यामाकाग्रयणस्य लोपः।

[विकल्पेषु श्यामाकाग्रयणलोपोपपत्तिः]

(वृ) **नवैर्या–लोपः**—नियतैकप्रयोगवर्तिदेवतात्रयापेक्षया श्यामाकदेवताव्यतिरिक्तदेवतात्रयाविषयत्वात् स्थालीपाकस्य तत्तुल्यत्वान्नवैर्यागादीनां तेषु श्यामाकाग्रयणस्य लोपः।

[स्तम्बग्रासादिपक्षे सर्वांशतुल्यविकल्पत्वानौचित्यं विवरणं च]

(भा) व्रीहिस्तम्बं यवस्तम्बं वेति द्वयोर्नियमात् स्विष्टकृच्चतुर्थाभ्य इति। केचिद्विनिवेशं कुर्वन्ति।

(वृ) **केचि–र्वन्ति**—विषयस्य व्यवस्थां कुर्वन्ति। सर्वथा तुल्यविकल्पस्यान्याय्यत्वात् यथासम्भवं मुख्याग्रयणासम्भवे विषयव्यवस्था।

[नवैर्यागादि पक्षाः न सर्वे सर्वस्य अपि तु व्यवस्थया]

(भा) यदा दर्शपूर्णमासाभ्यां संवत्सरम् तदैकं पर्व नवैर्यजेत। वैमृधोऽपि नवैरित्युपदेशः। यदा संवत्सरमग्निहोत्रं नान्यत्कर्म तदाऽग्निहोत्रधेनुं व्रीहिकाले व्रीहिस्तम्बं [1] यवकाले यवस्तम्बं वा ग्रास्यते तस्याः पयसा होमः [2] नवयवाग्वा वा दर्शपूर्णमासविरमणे स्थालीपाकहोमः श्यामाक-देवता परित्यज्यते। स्विष्टकृच्चतुर्थाभ्य इति।

[चतुश्शरावपाकादौ विषयः]

उत्सर्गेऽग्निहोत्रस्य चतुश्शरावो लौकिकेऽग्नौ।

[अत्र विषये व्रतविशेषविषयः]

अग्निहोत्रसंस्तवाद्व्रतस्य संवत्सरदीक्षा यदा तत्रापि व्रीहिस्तम्बं यवस्तम्बं वाऽऽशितायाः पयोः व्रतयेत्।

यस्य यो विधिः स तस्य नियम्यते, येन त्वन्वारम्भणीया कृताऽऽग्रयणार्था स्याद्विकृतावपि। तस्य त्वाग्रयणे[3]ष्टिरेव।

स पक्षस्तेन सङ्कल्पित इति।

[नवयागस्य संवत्सरयाजिविषयत्वे दृष्टान्तः]

(वृ) **यदादर्श–त्सरम्**—यथैकेषामग्नीनाधायेत्यस्मिन् पक्षे।

**तदैकं–जेत**—शरदि।

[वैमृधोऽपि नवैरितिपक्षाशयः]

**वैमृ–देशः**—अपिवा पौर्णमास्यां पौर्णमासीमिति प्रयोग-विशेषविधिरूपत्वात् साङ्गप्रधानविषयत्वात् प्रयोगविधेः।

**यदासं–होमः**—अग्निहोत्रहोमः।

**नवयवाग्वा वा**—पयोरहितस्य अग्निहोत्रहोमः।

**दर्शपू–कहोमः**—त्रिंशतं वा वर्षाणीत्यादौ।

---

[1] ग्रास्यते यवकालेयवस्तम्बम्–छ. [2] न यवाग्वा–छ. [3] णेष्टिः—छ.

**श्यामाक - भ्य इति**--नित्यसहप्रयोज्यत्वाच्छ्यामाकव्यतिरिक्तानाम् ।

[चतुश्शरावपाकविषयविवरणम्]

**उत्सर्गे-ग्नौ**--अत्रैव सोमेन पशुना वेष्ट्वाऽग्नीनुत्सृजतीति पक्षे जीर्णविरमणपुत्रमर्त्यादिषूत्सर्गे च चतुश्शरावमोदनं लौकिकेऽग्नौ पक्त्वा ब्राह्मणान् भोजयेत् । गार्हपत्ये स्थालीपाकं[1] श्रपयित्वेतिवत् अस्मिन् पक्षे [2] वैदिकाग्निविधानाभावात् ।

[व्रतविषयविवरणम्]

(वृ) **अग्निहो-तयेत्**—अस्यार्थः—दीक्षितस्याग्निहोत्रप्रतिषेधेऽग्निहोत्रस्याविच्छेदायेत्यग्निगुप्त्यर्थाग्निहोत्रस्य कर्तव्यत्वात्तत्कार्यकरत्वेन व्रतस्य संस्तवात् संवत्सरसत्रादिष्वाग्रयणकाले व्रीह्यादिस्तम्बं ग्रासयित्वा तस्याः पयो व्रतयेत् ।

[सामान्यतो विधिनियमेन दृष्टान्तः]

**यस्य यो-म्यते**—अन्यत्रापि पवमानहविरादीनां संवत्सरमुत्कर्षे स्थालीपाकः । चातुर्मास्येषु पञ्चसांवत्सरिकेषु स्वतन्त्राग्रयणासंभवे वैश्वातुर्मास्ययागोऽन्वायातनं वा ।

[कृतान्वारम्भणीयस्य नाग्रयणार्थं पृथक्त्वम्]

**येन त्व-वपि**—अस्यार्थः—अन्वारम्भणीया विकृतौ न स्यादिति न्यायेन सकृत्कृतान्वारम्भणीया पुरुषसंस्कारद्वारेण प्रकृत्यर्था संस्कृतपुरुषस्य सर्वदर्शपूर्णमासयोग्यत्वाद्यावज्जीवनं संस्कारानुवृत्तौ विकृतीनामपि तन्मध्यपातात् न पृथगन्वारम्भणीयाऽऽग्रयणार्थतया ।

**तस्य त्वा-रेव**—केवला कर्तव्या ।

---

[1] कमितिवत्-घ.  [2] वैतानिका-घ.

[सङ्कल्पितत्वोक्तेराशयः पक्षान्तरं च]

स पक्ष–इति—स्याद्विकृतावपि। प्रकृत्यर्थतः कृतैव विकृतावप्युपकारिकेति। यदा तु स्याद्वा कालस्याशेषभूतत्वादिति पक्षसंकल्पः; दर्शपूर्णमासाख्यपदार्थसम्यक्करणेन दर्शपूर्णमासार्थतैवान्वारम्भणीयायाः तदा आग्रयणार्थमन्वारम्भणीयां कृत्वाऽऽग्रयणेष्टिः कर्तव्या। पश्चादप्येवम्।

(सू) [1]एवं यवैर्यजेत ॥ १० ॥ ५२ ॥ १४७२ ॥

[2]तत्राग्नेयौ श्यामाकौ न भवतः ॥ १९ ॥ ॥ ५३ ॥ १४७३ ॥

[श्यामाकौ न भवतः इति निषेधस्वारस्यलभ्यार्थः विशेषश्च]

(वृ) एवं यवै–न भवतः इति—अस्यार्थः—व्रीह्याग्रयणं सधर्मकमुपदिश्य एवं यवैरिति यवाग्रयणमुक्त्वाऽऽग्नेयश्यामाकौ न भवत इति व्रीह्याग्रयणे प्रकृतावुपजीव्य यवाग्रयणे निवृत्तिवच[3]नात् तस्यैवाग्रयणस्य कालान्तरे द्रव्यान्तरेण प्रयोगो यवप्राशनार्थो विधीयत इति गम्यते। अतश्च प्रथमभावितोपदेशाद्व्रीह्याग्रयणस्यावश्यंभाविता पुरुषार्थत्वेन नवाशना[4]र्थं च यवप्राशनप्राप्तौ यवाग्रयणं वसन्ते। किंच यवाग्रयणस्य वैकल्पिकत्वं भारद्वाजेनोक्तम्। अत्रोभयाशने उभयाग्रयणं कर्तव्यम्। केचिदन्यतरदेवेत्यपरामिति॥

(सू) य उर्ध्वमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति। एतमुत्यं मधुना संयुतं यवं सरस्वत्या अधिमनावचर्कृपुः। इन्द्र आसीत्सीरपतिः शत-

---

[1] वसन्ते यवानामग्रयणेनाप्येवं व्रीह्याग्रयणस्य सानुकल्पस्याव्रता यजेत। तत्र त्वाह भरद्वाजः 'नयवानामाग्रयणं विद्यत इत्यौडुलोमिः' इति। तथा अपि वा क्रिया यवेष्वित्याश्वलायनः (रु). [2] तत्र–यवाग्रयणे। पुराणाग्नेयश्यामाकचरू न भवतः (रु)
[3] नं त. [4] र्थत्वं च.

क्रतुः कीनाशा आसन् मरुतः सुदानव इति यजमानभागं प्राश्नाति। सर्वेषां वा भक्षाणां मन्त्रवतां प्रत्याम्नायस्स्यात् ॥ २० ॥ ५४ ॥ ॥ १४७४ ॥

सिद्धमिष्टिस्संतिष्ठते ॥ २१ ॥ ५५ ॥ १४७५॥

त्रिंशी खण्डिका.

---

(भा) ऊर्ध्वं–वृत्तायामेकाष्टकायां ये जायन्ते तेषां प्रथमजो देयः। ॥ ५५ ॥

(वृ) उर्ध्वं–देयः—एतमुत्यमिति यवाग्रयणे भक्षणमन्त्रः ॥

(सू) [1]यदि नाना तन्त्रां श्यामाकेष्टिं कुर्वीत श्यामाकानुद्धर्तवा इति संप्रेष्यति ॥ १ ॥ ५६ ॥ ॥ १४७६ ॥

[भिन्नतन्त्रश्यामाकाग्रयणे विशेषः तद्विवरणं च]

(भा) नानातन्त्रा यदि [2]क्रियेत वर्षासु श्यामाकैरिति प्रैषः श्यामाकस्येति ॥

(वृ) **नाना–स्य इति—अनेकधर्मेषु प्राप्तेषु एकस्य पुनरुपदेश इतरवैशेषिकधर्मनिवृत्त्यर्थः ॥**

---

[1] यो व्रीह्याग्रयणे श्यामाकश्चरुरुक्तः तं यदि पृथक्तन्त्रं कुर्वीत तदा वर्षासु श्यामाकसस्ये पक्के सति श्यामाकानुद्धर्तवै उद्धार्याहरतेति कर्मकरान् यजमानः संप्रेष्यति। श्यामाकसस्य इत्यपि संप्रैषावयव इति न भ्रमितव्यम्; विपर्ययस्यैवोत्तरत्र वक्तव्यत्वात्। यथा वेणुयवेषु पक्केषु वेणुयवानुद्धर्तवा इति संप्रेष्यति (रु).
[2] यन्ते - ङ.

(सू) तस्याः[1] सप्तदशसामिधेन्यः ॥ २ ॥ ५७ ॥
॥ १४७७ ॥

[पुनस्साप्तदश्यविधानफलम्]

(भा) साप्तदश्यस्य पुनर्विधानान्नाज्यानीरित्युपदेशः ॥

[साप्तदश्यपुनर्विधानफलविवरणम्]

(वृ) साप्तद-देशः--गृहमेधीयाज्यभागवदज्यानीनां निवृत्तिः साप्तदश्यस्य विधानादित्युपदेशः। स्वमते तु सर्वाग्रयणसाधारणः तथाऽपि धर्मविधानमिति मुख्यत्वाद्भूयस्त्वादैन्द्राग्नादीनामेव विशेषधर्मप्रयोक्तृत्वमिति शङ्कायां श्यामाकाग्रयणेऽपि प्राप्त्यर्थं साप्तदश्यवचनमिति ॥

(सू) [2]सद्वन्तावाज्यभागौ। विराजौ संयाज्ये ॥
॥ ५८ ॥ १४७८ ॥
त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वते। सोम यास्ते मयो भुव इति सद्वन्तौ। प्रेद्धो अग्ने इमो अग्ने इति विराजौ ॥
॥ ४ ॥ ५९ ॥ १४७९ ॥

(भा) सच्छब्दो ययोः विद्यते तौ सद्वन्तौ। त्रिपात्त्वाद्विराजौ ॥

[विराड्व्यपदेशनिर्वाहः]

(वृ) सच्छ-द्विराजौ--पादानां दशाक्षरभावेन साक्षाद्विराट्छन्दस्याभावेऽपि त्रिपदा विराडित्यादिषु त्रिपात्त्वेन विराट्संपत्तिदर्शनाद्विराड्व्यपदेशः। किं च पूर्वस्याः कथञ्चित् त्रिंशदक्षरत्वेन विराट्क्रियात्वसंभवेऽप्युत्तरस्याः पादानामधिकाक्षरत्वात् त्रिपात्त्वादेवोभयोर्विराड्व्यपदेशः ॥

---

[1] साप्तदश्यवचनमज्यान्यादेः सर्वस्यापि विशेषस्य प्रदर्शनार्थम्। तन्त्रं त्वस्याः पौर्णमासं अग्नीषोमीयविकारत्वात् (रु). [2] सद्वन्तौ अस्तिधातुमन्तौ (रु).

(सू.) [1]वासो दक्षिणा दधिमन्थो मधुमन्थो मधपर्को मधुग्लुन्थो बभ्रुर्वा पिङ्गलः ॥ ५ ॥ ६० ॥ ॥ १४८० ॥

सिद्धमिष्टिस्संतिष्ठते ॥ ६ ॥ ६१ ॥ १४८१ ॥

[विवक्षितं तन्त्रं तद्धेतुश्च]

(भा) सोमस्याग्नीषोमीयविकारत्वात् पौर्ण[2]मासं तन्त्रम् । समानतन्त्रस्य वास एवेति ।

[पुनर्वासोविधानफलम्]

उपदेशः तस्य विकल्पान् वक्ष्यामीति पुनर्वासोविधानम् ।
अमथितोऽपि सक्तुर्मन्थः यो न मिश्रित आज्येन ।

[मधुग्लुन्थशब्दार्थः]

मधुशर्करा मधुग्लुन्थः । वाचेऽन्नमिति प्रतिग्रहमन्त्रः ।

[बभ्रुत्वादिर्गोः]

बभ्रुः कपिलः । पिङ्गलः पिङ्गलाक्षो गौः ।

(वृ) सोम--एवेति--न दधिमन्थादयो वैकल्पिका भवन्तीति दधिमन्थादीनां नानातन्त्रेषूपदेशात् ।

उप–विधानम्—समानतन्त्रे दधिमन्थादयो विक[3]ल्प्यन्ते । दधिमन्थादीनामित्युपदेशस्य शाखान्तरीयत्वात् तैस्सह विकल्पार्थं पुनर्वासोविधानमिति ॥

---

[1] वाससः पुनरुपादानमुत्तरैर्विकल्पार्थम् । सर्पिरादिसंयुक्ताः सक्तवो मन्थः । स दध्ना संयुक्तो दाधमन्थः मधुना मधुमन्थः । अनिश्चोतितमधुर्मधुकोशो मधुग्लुन्थः । मधुमिश्रं गुडमित्यन्ये । बभ्रुः–कपिलः । पिङ्गलः पिङ्गाक्षः (रु). [2] मास्यं त–ङ. मासत–ख. ग. [3] ल्पन्ते–घ.

[दधिमन्थशब्दार्थः]

अमथि–ज्येन—मन्थनाभावेऽपि यस्मादाज्येन मिश्रितसक्तुर्मन्थः। येन मिश्रित इति वा पाठः। तदाऽऽज्यमिश्रणरहितस्य मन्थत्वम्; मिश्रितस्य करम्भत्वं भवति दधिमन्थः—दधि च मन्थश्च। दधिमधुसंसृष्टं मधुपर्कः। मधुशर्कराणां मधु[1]ग्लुन्थः।

मधु–मन्थः—दधिमन्थादीनाम्।

(सू) [2]हरितयवशाकशमीधान्यानां नवानां फलानामनिष्टेऽपि प्राशने याथाकामी ॥ ७ ॥ ६२ ॥ १४८२ ॥

[हरितयवादीनां प्राशनस्यैच्छिकत्वम्]

(भा) हरितयवाः प्रदर्शनम्; गोधूमा अप्यपक्वाः। शाकादि च नवान्नम्। शमीधान्यानि कोशधान्यानि चणकादीनि। नवानां च फलानामनिष्टेऽप्याग्रयणे याथाकामी स्यात्; भक्षयति वैतानि न वा। यत्तु धान्यं नवं येनाऽप्यनिज्या तदपि न भक्षयति।

(वृ) हरित–क्वाः—हरितयवाः अपक्वाः गोधूमाश्चापक्वा गृह्यन्ते।

शकादि च नवान्नम्—शाकादिवचनात् नवानां सर्वेषां भक्ष्यभोज्यादीनां ग्रहणम्।

शमी–मास्यात्—फलेनाग्रयणाभावेऽपि प्राशने याथाकामी स्यात्।

भक्ष–वा—भक्षयति। भक्षणेऽप्यप्रत्यवायः। भरद्वाजमतिस्तु एतेषु किञ्चिद्दत्त्वा भक्षयेदिति।

यत्तु–यति—पक्वं गोधूमादि। येनाप्यनिज्या प्रियङ्ग्वादिना। पक्वं धान्यं सर्वं अकृते यागे न भक्षयितव्यम्।

---

[1] ग्लुन्धः-ख. ग. [2] पूर्वत्र अनिष्ट्वाऽऽग्रयणेनेत्यनेन प्रागाग्रयणात्सर्वस्यापि नवप्राशनं प्रतिषिद्धम्। तत्र केषाञ्चिदशनमनेनाभ्यनुज्ञायते। हरितयवा नाम सस्यविशेषाः। तथा शाकाः शमीधान्यानि कोशधान्यानि। तेषां जम्ब्वादिफलानां च नवानामनिष्टेऽप्याग्रयणे याथा काम्यं भक्षणे भवति (रू).

(सू.) [1]वेणुयवानामिष्टिमेके समामनन्ति ॥ ८ ॥ ॥ ६३ ॥ १४८३ ॥

[2]वेणुयवेषु पक्वेषु वेणुयवानुद्धर्तवा इति संप्रेष्यति ॥ ९ ॥ ६४ ॥ १४८४ ॥

[3]तस्या एतदेव तन्त्रमेषा देवता ॥ १० ॥ ॥ ६५ ॥ १४८५ ॥

[4]आग्नेयी मैत्रावरुणी प्राजापत्या वा ॥ ११ ॥ ॥ ६६ ॥ १४८६ ॥

[वेणुयवेष्टौ विशेषः]

(भा) वेणुयवैरनित्यो यागः। एतत्तन्त्रं यच्छ्यामाकेष्ट्याम्; सोमो देवता। अग्न्यादयो वा।

(वृ) वेणुय–यागः—एके इति वचनात्। वेणुतण्डुला वेणुयवाः।

एत–देवता—सन्निधानात्।

अग्न्यादयो वा– आग्नेयी मैत्रावरुणी प्राजापत्या वा वेणुयवेष्टिः।

(सू.) [5]सप्रत्नवदिति द्वे धाय्ये चतस्र आज्यभागयोः दशहविषां द्वे स्विष्टकृतः ॥ १२ ॥ ६७ ॥ ॥ १४८७ ॥

---

1 वेणुयवैराग्रयणं केश्चिद्विधीयते (रु). 2 श्यामाकसंप्रैषेणायं व्याख्यातः (रु). 3 यच्छ्यामाकेष्ट्यामुक्तं सप्तदशसामिधेन्यादि तदेवास्यास्तन्त्रं देवताऽपि तत्रत्यस्सोम एवेत्यर्थः। (रु). 4 इष्टिरिति शेषः (रु). 5 सप्रत्नवदिति पारक्षुद्रस्यानुवाकस्यादितो द्वे धाय्ये भवतः। ततः पराश्चतस्रो व्रीहियवाग्रयणयो राज्यभागार्थे. अनुवाक्यास्तास्वादितो द्वे आग्नेयस्य परे द्वे सौम्यस्य, श्यामाकेष्ट्यां तु सद्वन्तावित्युक्तम्। याज्यास्तु जुषाणवत्यः एवं सर्वत्र। परास्तु दशप्रधानहविषां याज्यानुवाक्याः। ताश्च यथालिङ्गं गृह्यन्ते, न तु क्रमशः सौम्ययोः प्रथमाभावात्। ततः परे द्वे संयाज्ये (रु).

[हविर्विशेषेषु धाय्या याज्यापुरोऽनुवाक्याः]

(भा) होत्रविधिः सप्लवदिति । त्रिवाक्ये द्वे धाय्ये । चतस्त्रस्त्रिवाक्या आज्यभागयोः । ऋग्याज्ये जुषाणयाज्यात्वमुपदेशः । अग्नेः सोमस्य चैकैका । व्रीहिषु यवेषु चापरे पुरोनुवाक्ये । नवस्य सोम इति [1]त्रिवाक्या पुरोऽनुवाक्या । नवं हविरिति चतुष्पदा याज्या श्यामाकस्य । नवं स्तोमं शुचिं नु स्तोममित्यैन्द्राग्नस्य । अग्निरिन्द्रो नवस्य नः यज्ञं न आ हि गच्छतामित्याग्नेन्द्रस्य । विश्वान् देवांस्तर्पयत एदं बर्हिरिति वैश्वदेवस्य । इमे नु द्यावापृथिवी इमे धेनू इति द्यावापृथिव्योः [2] । यविष्ठो हव्यवाहनः त्वमग्ने देवताभ्य इति स्विष्टकृतः ।

(वृ) होत्र–पदेशः—अस्मिन् पक्षे ।

आग्नेः सो–हिषु—आज्यभागयोः पुरोऽनुवाक्ये । द्वे यवे ।

(सू) [3]व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेता यवेभ्यो दर्शपूर्णमासावेवं यवैराव्रीहिभ्योऽपि वा व्रीहिभिरेवोभयत्रैते ह वै सूपचरतमा भवन्तीति बह्वृचब्राह्मणम् ॥ १३ ॥ ६८ ॥ १४८८ ॥

[व्रीहियवयागव्यवस्था, पक्षान्तरं च]

(भा) व्रीहियवनियमो दर्शपूर्णमासयोरेव नाग्निहोत्रस्य । यदि तण्डुलैर्हूयते व्रीहिभिरिष्ट्वेति । व्रीहीन् यवान्वेति तत्र पुनर्वचनात् पूर्णमास-

---

[1] त्रिपदा–घ. [2] अत्र दशहविषां इति सूत्रानुपूर्व्यादर्शनात् हविःपराणामेव शब्दानां पूर्वं दर्शनात् 'सर्वान् वैश्वदेवान् द्यावापृथिव्यानिति भारद्वाजवचनाच्च द्यावापृथिव्ययोरितिपाठस्स्यत्. [3]दर्शपूर्णमासयोः व्रीहीन् यवान्वेति व्रीहियवयोस्सर्वकालं विकल्प उक्तः । इदानीं शाखान्तरीयो विनिवेशः पक्षे यवबाधश्च प्रदर्श्यते । व्रीह्याग्रयणेनेष्ट्वा व्रीहिभिरेव दर्शपूर्णमासौ यजेताथवाग्रयणात् । एवं यवाग्रयणादारभ्या व्रीह्याग्रयणाद्यवैः । अपिवा व्रीहिभिरेव यजेतोभयोः कालयोः । यत एते सूपचरतमाः-सुखेन वहन्यन्ते पिष्यन्ते च, नयववद्दुःखेन । तस्माद्व्रीहिभिरेव नित्यं यजेत दर्शपूर्णमासाविति वचनात् नाग्निहोत्रार्थेषु तण्डुलेष्वयं नियमः । दर्शपूर्णमासाभ्यामेव तद्विकाराश्च व्याख्याताः (रु).

विकारेष्वपि नियम इत्युपदेशः । सुखोपचारा व्रीहयः । यवा दुःखोपचाराः । कण्डनं पेषणं च दुःखेन ।

[तण्डुलहोमनित्यत्वसिद्धिः]

(वृ) व्रीहियव-रिष्टेति —अस्माल्लिङ्गात्तण्डुलैरपि नित्यो होमः । इतरथा आयवेभ्यस्तण्डुलहोमो न प्राप्तः । तण्डुलहोमस्य नित्यत्वं चोक्तम् पाप्मानं तुस्तूर्षमाणस्येत्यत्र ।

व्रीहीन्-देशः —तथा वा पवित्रवत्या व्रीहीन् यवान्वेति तत्र पुनर्वचनाद्विकृतिषु व्रीहियवनियमो नास्तीति पूर्वोक्तमेव स्मारितम् ।

(सू) [1]वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैर्यथर्तु वेणुयवैरिति विज्ञायते इति विज्ञायते ॥ १४ ॥ ६९ ॥ १४८९ ॥

एकत्रिंशी खण्डिका.

---

[श्यामकादीष्टिकालः संकल्पे मतिभेदश्च]

(भा) यथर्तु—यस्मिन् काले प्रजायन्ते वेणुयवाः स एषामृतुः । आग्रयणेन यक्ष्ये स्वर्गं लोकमवाप्नवानीति सङ्कल्प आदौ मीमांसकमत्या, यत्रानाम्नातः कामो न तत्र कामयितव्यमित्युपदेशः । अकामनं वा नित्येषु यत्राप्याम्नातः अकामहतश्रुतेः ।

इति धूर्तस्वामिभाष्ये षष्ठे प्रश्ने अष्टमः पटलः ॥

समाप्तश्च षष्ठः प्रश्नः.

---

[1] यदि नानातन्त्रा श्यामाकेष्टिः तदा अनया वर्षासु यजेत । ततश्शरदि केवलैर्व्रीहिभिः । समानतन्त्रत्वे तूभयैश्शरदि ततो वसन्ते यवैः वेणुयवैस्तु यथर्तु यजेत । ते ह्यनियतकालनिष्पत्तयः यस्मिन्नेवर्तौ निष्पद्यन्ते तस्मिन्नेव यजेतेत्यर्थः (रु).

(वृ) यथर्तु—अश्रुतफलेषु स्वर्गफलत्वं विश्वजिन्नयायात् ।

[अकामनापक्षतत्प्रमाणयोर्विवरणम्]

यत्रा-देश:—फलस्याश्रवणान्नित्यवत्कर्तव्यमेव ।

अका-श्रुते:—नित्यकर्तव्येषु दर्शपूर्णमासादिषु । पक्षे कामोपदेशेऽपि कामनाऽयुक्ता मुमुक्षोः । श्रोत्रियस्य चाकामहतस्येति मुमुक्षोः [1] श्रवणात् ।

इति श्रीकौशिकेन रामाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ
षष्ठे प्रश्ने अष्टमः पटलः.

समाप्तष्षष्ठः प्रश्नः.

---

[1] घ. पुस्तके न दृश्यते.

## अथ सप्तमः प्रश्नः.

(सू) [1]सर्वान् लोकान् पशुबन्धयाज्यभिजयति ॥१॥ १ ॥ १४८८॥

[नामनिरुक्तिः फलोक्तिसामञ्जस्यं संकल्पाकारश्च]

(भा) पशुर्बध्यते [2]यज्ञार्थं यस्मिन् कर्मणि स पशुबन्धः। तेनेष्टवान् पशुबन्धयाजी। सं सर्वान् लोकानभिजयति। नास्य लोके[3]षु प्राप्तिः प्रतिघातो [4]विद्यते। न चान्यकर्मानर्थक्यम्! अन्यैः कर्मभिरन्यथालक्षणस्य [5]सुखस्य प्राप्तिः। [6]पशुबन्धेन यक्ष्ये सर्वान् लोका[7]नभिजयासमिति संकल्पः ॥ १ ॥

[अन्यकर्मानर्थक्य परिहारोपपत्तिः]

(वृ) **नचान्य-प्राप्तेः**—अस्यार्थः—स्वर्गादिसर्वलोकप्राप्तिः पशुयागेन सिध्यति! महाप्रयत्नेन ज्योतिष्टोमादिषु स्वर्गाद्यर्थं पुरुषाणां प्रवृत्त्यभावप्रसङ्गात् कर्मान्तरानर्थक्यशङ्का माभूदित्युच्यते—अन्यैः कर्मभिरन्यथालक्षणस्येति। स्वर्गादिफलेष्व[8]ल्पकालबहुकालादिभेदेन फलभूयस्त्वाल्पत्वोपपत्तेरल्पकर्मणाल्पफलप्राप्तिरिति व्यवस्थया फलसिद्धिभेदात् कर्मान्तरानर्थक्यं नास्ति। तदेतत् अर्थवादाधिकरणे पूर्णाहुत्या सर्वान् कामानित्यत्र वार्तिककारेणोक्तम्—

कर्मणामल्पमहतां फलानां च स्वगोचरे।
विभागः स्थानसामान्यात् . . . . .॥

[9]इत्यादिषु ॥

---

[1] सर्वकामो दर्शपूर्णमासावितिवत् आहारपृथक्त्वाभिप्रायं सर्वाभिजयवचनम् अथ नित्यः पशुरारभ्यते। यंयमेव लोकं प्रयोगभेदेन कामयते तं तमेवाभिजयति। नित्यस्य चायं फलविधिः दर्शपूर्णमास वेदव वेदितव्यः। फलार्थवादो वा कमेरश्रवणात् (रु). [2] यज्ञार्थे–ज. यस्मिन् कर्मणि यज्ञार्थं पशु–घ. [3] षु प्रति–ङ ज. [4] भवति–घ. [5] स्यावाप्तेः–घ. [6] निरूढपशु–ज. [7] नभिजयानीति–ङ. ज. नभिजायेयमिति–क. [8] ष्यल्पका–घ. ष्वल्पमहाकार्यादि ?–ख. ग. [9] इत्यादि–घ.

(सू) तेन यक्ष्यमाणोऽमावास्यायां [1] पौर्णमास्यां वा षड्ढोतारं मनसाऽनुद्रुत्याहवनीये सग्रहं जुहोति सूर्यं ते चक्षुरिति ॥ २ ॥ २ ॥ १४८९ ॥

[उभयकालविधानहेतुः]

(भा) [2] प्रातर्दोहविकारत्वात्पशुबन्धस्य माभूदमावास्यै[3] वेत्युभय-

[संकल्पक्रमः]

कालविधिः । कृते संकल्पे यक्ष्य इति कामे चोक्तेऽपामुपस्पर्शनम् विहरणम् ।

[षड्ढोतुर्मानसहोमे हेतुः]

षड्ढोता सर्वो मनसा हूयते । पशुबन्धेन यक्ष्यमाणः षड्ढोतारं मनसाऽनुद्रुत्याहवनीये जुहुयादिति ।

[आहवनीयग्रहणफलम्]

आहवनीयग्रहण [4] षड्ढोतुराहवनीयः पृथग्यथा स्यात् माभूत्प्रधा-

[ग्रहे उपदेशपक्षः]

नार्थ आहवनीय इति । ग्रह उपांश्वित्युपदेशः । सर्वत्र चैवम् । षड्ढोतु-

[अन्यत्रातिदेशः]

र्द्धित्वात् सूर्यं ते चक्षुरिति नियमः ॥

---

[1] यदीष्ट्यादिविधिना तयोरेव यागविधानात् । तेन द्वयहकाले पशोश्चतुर्दश्यां हूयते षड्ढोता । तत्र प्रकृत्यविरोधगतिराग्रयण एव दर्शिता । पर्वणोर्वचनं परमत-निरासार्थम् । सान्नाय्यविकारत्वात्पशोः अमावास्यामेवास्य कालं मामंसतेति वा । सान्नाय्यविकारत्वमेव पशोः भरद्वाज बोधायनसंमतं श्रुतिसिद्धं च सूत्रे चात्र लिङ्गानि भवन्ति । उदकपवित्रे कुम्भ्यां दक्षिणस्यां वेदिश्रोण्यामासाद्य आज्येन पशुं यस्त आत्मा पशुषु प्रविष्ट इत्यादि तस्मात्सिद्धं पशुः प्रातर्दोह विकार इति । तत्रोदवसाय जुहोति उपयुज्य मनुष्याः प्रयान्तीति लिङ्गात् । (रु). [2] तत्रापि प्रातर्दोह-विकारत्वमिति सत्याषाढः. [3] वास्येत्यु–छ. वास्यामेवेत्यु–ज. [4] षड्ढो-तुर्यथास्यात्–ख. ग. छ.

(वृ) **प्रातर्दो-लविधिः**—अस्याभिप्राय [1] आग्रयणे दर्शितः।

**कृते-रणम्**—यदा [2] बहिर्निष्क्रम्य पशुयागः तदा संकल्प्याग्नीन् समारोप्य यागदेशे मथित्वा विद्युदसीत्युपस्पर्शनम्। तथा वरुण प्रघासेषु भाष्यकारेण क्रमोपादेशात्।

[आहवनीयग्रहणफलविवरणम्]

**आहवनी-य इति**—अस्यार्थः—आहवनीये प्रदानमिति परिभाषायां सिद्धत्वात् सर्वहोमानां आहवनीये प्रदानस्यैवाहवनीयग्रहणं सर्वथाऽऽहवनीयाद्भेदेनाहवनीयप्राप्त्यर्थम्। किंच आग्नावैष्णवान्ते धारयत्याहवनीयमिति विधानाच्च ततः पूर्वभाविनः पृथगाहवनीय इति। अग्निहोत्र दर्शपूर्णमास चातुर्मास्येषु दशहोतृ चतुर्होतृ पञ्चहोणतृां आरम्भ संयोगात् सर्वाग्निहोत्रदर्शपूर्णमासानां च यावज्जीवमारम्भस्य [3] ह्यनेकप्रयोगारम्भरूपत्वाच्चातुर्मास्यानां चतुर्णां पर्वणामारम्भसाधारण्यात् होणतां सर्वार्थे[4] बहिः प्रयोगात् अग्निहोत्रदर्शपूर्णमास चातुर्मास्यानां दशहोत्रादीनां पृथगग्नेर्न्यायितः प्राप्तत्वात्तत्रतत्राहवनीयग्रहणमनुवादः। पशुबन्धेन यक्ष्यमाणः षड्ढोतारम् दीक्षिष्यमाणः सप्तहोतारम् इत्यनयोः प्रयोगान्तर्भावित्वेन प्रधानाग्नौ कर्तव्यत्वे[5]ऽप्याग्नावैष्णवानन्तरं धारयत्याहवनीयमिति सूत्रकारवचनात् दीक्षणीयाग्नेश्च धारणस्य हिरण्यकेशिनोक्तत्वाच्च। पश्विष्टिदीक्षणीययोः पूर्वभाविहोमानां पृथगाहवनीयस्य युक्तत्वात्। प्रदर्शनार्थमुभयत्राहवनीयग्रहणात्। प्राणा वा एते यच्चतुर्होतार इत्यादिभरद्वाजोक्ताग्निनियमस्य प्रयोगार्थता।

[ग्रहोपांशुत्वहेतुः]

**ग्रह उपांश्वित्युपदेशः**—षड्ढोतारं मनसाऽनुद्रुत्येति ब्राह्मणे होतृमात्रस्य मानसत्वविधानात् ग्रहस्य याजुर्वेदिकमुपांशुत्वमेवेति।

---

1 'नाऽनिष्ट्वाऽऽग्रयणेन' इत्यादिसूत्रभाष्यवृत्ताविति भावः. 2 निष्क्रम्य-घ.
3 स्य चानेक-छ. 4 र्थेबहिः?-छ. 5 त्वेपुनराग्ना-ख. ग.

[अतिदेशार्हसर्वपदार्थः]

सर्वत्र चैवम्—मनसाऽनुद्रुत्य होतृहोमेषु सर्वेषु ।

पड्ढो-नियमः—वाग्घोतेत्यस्य ऋतुमुख[1] एव नियमात्

(सू) आग्नावैष्णवमेकादशकपालं निर्वपति ॥
॥ ३ ॥ ३ ॥ १४९० ॥

[आहवनीय एवात्राग्निः पृथङ्नदक्षिणा]

(भा) परित्यज्यान्यमग्निमाहवनीयं प्रणीयाग्नावैष्णवम् ब्राह्मण[2] तर्पणान्तम् । [3]न तु दक्षिणा प्रधा[4]नवर्तित्वात् ।

[पृथग्दक्षिणाभावहेतुः]

(वृ) परि-र्तित्वात्—तस्य प्रधानकर्तृभिरेव कर्तव्यात् । प्रधानदक्षिणयैवानतिसिद्धेः सोमेष्विव ॥

(सू) आग्नचन्वाधानस्य प्रत्याम्नायो भवाति ॥ ४ ॥ ४ ॥
सिद्धमिष्टिस्संतिष्ठते ॥ ५ ॥ ५ ॥ १४९२ ॥
धारयत्याहवनीयम् ॥ ६ ॥ ६ ॥ १४९३ ॥

[आहवनीयधारणोक्तिभावः]

(भा) तस्य धारणविधानमाहवनीयस्य पुरस्ताद्वर्तिनो ये दर्विहोमाः तेषां पृथगाग्निरिति ज्ञा[6]पकम् ॥

---

[1] खीय एव नियमात्–छ. [2] णभोजनान्तम्–क. ङ. [3] तस्यचाङ्गत्वात् अबहिस्तन्त्रवर्तित्वाच्च नान्वाहार्यं इष्यते । सत्याषाढस्त्वत्रानुग्रहमाह ;—अपि वा चतुर्गृहीतमाज्यमाग्नावैष्णव्यर्चाऽऽहवनीये जुहोतीति । पशुबन्धे अग्नाविष्णुभ्यामिति चतुर्गृहीतं स्यादिति भरद्वाजः । [4] न दक्षिणा–ङ. [5] नानुवर्ति–ङ. [6] इष्टेरपवर्गादग्नेरपवर्गो मा विज्ञायीत्यारम्भः । इदमेव धारणवचनं ज्ञापकं तन्त्रान्तरशेषभूता अपि बहिस्तन्त्रवर्तिन इष्टिदर्विहोमाः पृथगग्नयो भवन्तीति दर्शितं चैतदस्माभिरन्वारम्भणीयायाम् (रु). पनम्–क.

[आहवनीयधारणोक्तिभावविवरणम्]

**धारण-ज्ञापकम्**—अस्यार्थः अन्वाधानप्रत्याम्नायत्वादिष्टेः धारणविधानमनर्थकम्; तस्येदं प्रयोजनम् प्राधानार्थाहवनीयोत्पत्तेः पुरस्ताद्वर्तिनां संभारयजुस्सावित्रहोमाद्यर्थाग्नीनां तत्तत्कर्मान्ते लौकिकत्वात्परित्याग इति ज्ञापकमेतद्विधानम् । अतो होतॄणां पृथगाहवनीयत्वं सिद्धम् ॥

[असद्यस्कालत्वेक्रमः]

**(सू)** [1] **उरुविष्णो विक्रमस्वेति स्रुवेणाहवनीये यूपाहुतिं जुहोति ॥ ७ ॥ ७ ॥ १४९४ ॥**

[2] **स्रुचा वा चतुर्गृहीतेन ॥ ८ ॥ ८ ॥ १४९५ ॥**

अन्वाधानार्थत्वादिष्टेः तदनन्तरं शाखाहरणं व्रतोपायनं यजमानस्याशनं च; यदि न सद्यस्कालः पशुः ।

[यूपाहुतौविशेषः]

ततो यूपाहुतिः स्रुवेणाहवनीय इति वचनात् ।

यदा यूपसकाशे न स्रुवेण स्रुचैव चतुर्गृहीतेन ।

[यूपाहुतिसमाख्याफलम्]

यूपाहुतिरिति समाख्यानाद्यत्र यूपस्य न छेदनं परिध्यादेस्तत्रास्य लोपः ।

[भोजने मतभेदः]

**(वृ) अन्वाधा-हितेन**—सद्यस्कालपक्षे प्रयोगमध्ये भोजनं निषिद्धं भरद्वाजेन ।

---

1 शाखामाहृत्य निधाय यूपाहुतिं जुहोति । वक्ष्यमाणनिर्मन्थ्यविकल्पार्थमाहवनीयग्रहणम् । यूपाहुतिसमाख्यानाद्यूपाभाव निवर्तते परिधौ पशुन्नियुञ्जन्तीत्यादौ (रु). 2 स्रुचा वा जुहोति तदा चतुर्गृहीतेन (रु).

[स्रुवाहवनीयपुनरुक्तिफलम्]

**यदा-चैवेति**—अस्यार्थः ;—[1]जुहोतित्वादेवाहवनीये प्राप्ते आहवनीयग्रहणादस्मिन्नेव होमे आहवनीयस्रुवयोः परस्परानिय[2]मात्। अतो दीक्षितस्य यूपसकाशे होमपक्षे जुह्वैव चतुर्गृहीतेनाज्येन होमः ॥

[समाख्याफलविवरणम्]

(वृ) **यूपा-स्यलोप इति**—यूपच्छेदनार्थत्वाद्धोमस्य परिधिखले वाल्यादिषु नियोजनार्थेषु छेदनाभावाद्धोमलोपः ॥

(सू) **न दीक्षितस्य जुहुयात् ॥ ९ ॥ ९ ॥ १४९६ ॥**
**वैष्णवीमृचमनूच्याच्छेत्यः ॥ १० ॥ १० ॥ १४९७ ॥**
**जुहुयाद्वा ॥ ११ ॥ ११ ॥ १४९८ ॥**
**यूपसकाशे वाऽग्निं मथित्वा तस्मिन् जुहुयात् ॥**
**॥ १२ ॥ १२ ॥ १४९९ ॥**

[कचिद्यूपाहुतिनिषेधादिः]

(भा) न दीक्षितस्य हूयते यूपाहुतिः। तस्य यूपाहुतिमन्त्रमुक्त्वाऽच्छेत्यः आभिमुख्येन गन्तव्यो यूपः। यूपावाप्तये वा गन्तव्य [3] इत्यर्थः। लौकिकारण्योर्मथनं यूपसकाशे स्रुवस्यादानादाव्रश्चनहोमोऽपि [4] स्रुवेणैव। अन्येनानीतया जुह्वैवेत्युपदेशः।

[स्रुवेणैवेत्यत्र हेतुः]

(वृ) **आव्रश्चन-णैव**—अस्यार्थः; स्रुवादान[5]स्य दृष्टार्थत्वादाव्रश्चनहोमः स्रुवेणैव।

---

[1] होमत्वादेवाहवनीयत्वे–छ. [2] मः. [3] व्यभित्यर्थः–ङ. [4] स्रुवेण स्रुचा वा जुहुयात् (रु). [5] स्याद–घ.

[उपदेशपक्षे यूपसकाशे स्रुवादानहेत्वन्तरम्]

अन्येना–देशः—स्रुवादानं जुह्वग्रहणार्थम् जुहूं पात्रमिति जुह्वाः प्राप्तत्वात् ॥

(सू) **स्रुवमाज्यशेषं चाध्वर्युरादत्ते तक्षा शस्त्रम्**[1] **॥ १३ ॥ १३ ॥ १५०० ॥**

(भा) तक्षा–कुट्टकः । शस्त्रं–वाशी[2] । तामादत्ते; तक्षा हस्तेन वाश्येति[3] लिङ्गात्[4] ।

(सू) [5]**यत्र यूपस्तद्यन्ति ॥ १४ ॥ १४ ॥ १५०१ ॥**

(भा) [6]तद्यान्ति–तत्र यन्ति[7] यजमानो ब्रह्मा च ।

[बहुवचनोपपत्तिः]

(वृ) तद्यन्ति—ह्मा च — बहुवचनचोदितेषु यजमानो ब्रह्मा चाध्वर्योस्सहायभूतौ । ब्रह्मणोऽपि कर्मणिकर्मणि वाचं यच्छतीति सर्वत्रान्वयात् ।

(सू) **यूप्या वृक्षाः पलाशखदिरबिल्व**[8]**रौहीतकाः ॥ ॥ १५ ॥ १५ ॥ १५०२ ॥**

[यूपार्हरौहीतके विशेषः]

(भा) यूप्याः यूपार्हाः । रौहीतको वटाकृतिर्ह्रस्वपर्णः ।

(सू) **पालाशं तेजस्कामो यज्ञकामो वा । खादिरं स्वर्गकामो वीर्यकामो वा । बैल्वमन्नाद्यकामो ब्रह्मवर्चसकामो वा । रौहीतकं प्रजाकामश्चक्षुष्कामो**[9] **वा ॥ १६ ॥ १६ ॥ १५०३ ॥**

---

[1] येन चान्येनार्थी भवति तदप्यन्यो हरति (रु). [2] सी–**ख. ग.** [3] वास्येति–**ख. ग.** [4] लिङ्गत्वात्. [5] यत्र यूपश्छेद्यस्तत्र व्रजन्ति ब्रह्मयजमानाध्वर्यवस्तक्षा च (**रु**). [6] तद्यान्ति यज–**ङ**. [7] ब्रह्मा यज–**क.** [8] रौहीतको वटावान्तरजातीयः (रु). [9] यूपं कुर्वीतेतिशेषः । नित्येष्वमीष्वेवामी कामाः । ततोऽन्यस्य यूपस्याभावात् (**रु**).

[नित्ये कामोपपत्तिः]

(भा) नित्येषु [1] कामाः पक्षेण ॥

[नित्ये कामोपपत्तिविवरणम्]

(वृ) नित्येषु--ण—पलाशखदिरबिल्वरौहीतका इति नित्यार्थतया विहितानामेव तेजस्कामादिसंबन्धावगमात् सत्यां फलेच्छायां उभयार्थतया पलाशादीनामुपादानम् ।

(सू) समे जातमशाखाजं बहुपर्णशाखमप्रतिशुष्काग्रमसुषिरमव्यावृत्तमघूर्णमृजुमूर्ध्वमूर्ध्वशकलमग्र ईषदुपावनतं प्रागुदक्प्रत्यग्वोपनतम् ॥ १७ ॥ १७ ॥ ॥ १५०४ ॥

[यूपार्ह तदनर्हदारुस्वरूपविवरणम्]

(भा) शाखा न क्रियते यूपः । बहुपर्णश्च बहुशाखश्च अव्यावृत्तः-अवालितः । अघूर्णः—घुणैरभक्षितः । ऋजुः अवक्रः ऊर्ध्वश्च । शकलान्यस्य ऊर्ध्वानि वलितानि । अग्र ईषदुपावनतः । दक्षिणावनतो नेष्यते ।

(वृ)–शाखा–पः—इति । अशाखाजमित्यस्यार्थः —भूमौ प्ररूढवृक्षस्तम्बस्यैव यूपत्वं न शाखायामुत्पन्नस्य ।

ऋजुः–श्च—अनूर्ध्वोऽपि कश्चिद्भवत्यृजुः । अत ऊर्ध्व इत्युच्यते ।

दक्षिणा–ष्यते प्रागुदग्वोपनतामिति नियमात् ॥

(सू) यं कामयेताप्रतिष्ठितस्स्यादित्युक्तम् ॥ १८ ॥ ॥ १८ ॥ १५०५ ॥

---

[1] काम्यपक्षेण -ग. [2] यं कामयेताप्रतिष्ठितस्स्यादित्यारोहं तस्मै वृश्चेदित्यादिब्राह्मण एव यूपस्य गुणदोषास्तत्फलानि चोक्तानि । तत्सर्वं तत्रैवानुसंधातव्यमित्यर्थः । आरोहमिति वृक्षात् न भूमेरिति आरोहश्शाखाजः । आरोहमिति णमुलन्तमिति केचित्; तदयुक्तं एष वै वनस्पतीनामप्रतिष्ठित इति; प्रतिष्ठितं वृश्च इति च लिङ्गात् स्वरवशाच्च अत एव चोक्तं सूत्रकृता 'समे जातमशाखाजम्' इति (र). अत्र भाष्यदूषण मूलं 'यस्तं वृश्चेत्' इत्युत्तरत्र वाक्यमालोच्य स्यात्.

[वृक्षान्तरे जातस्य प्रतिषेधः]

(भा) आरोहं आरुह्य यश्छिद्यते ॥ अन्यवृक्षजातमपि यं जोषयते— यस्मिन् अस्य प्रीतिर्भवति ।

(वृ) आरोहं–द्यते—इति यं कामयेताप्रतिष्ठितस्स्या[1]दित्युक्तामिति निर्दिष्टब्राह्मणव्याख्या । [2]आरोहं तस्मै वृश्चे[3]दित्यस्यार्थः ;—आरोहम् आरुह्य यश्छिद्यते ।

[भाष्यस्य प्रतिषेधपरत्वविवरणम्]

(वृ) अन्यवृ–र्भवति—अन्यस्मिन् वृक्षे आरुह्य तस्मिन् जातः पलाशादिर्यश्छिद्यते तस्य प्रतिषिध्यते ।

[अनिष्टफलयूपवाक्यानां प्रतिषेधपरत्वं सूत्रकृन्मतम्]

अप्रतिष्ठितादीनां यजमानानिष्टकामानां प्रतिषेधार्थत्वमुक्तं 'पदाभ्यासप्रतिषेध' इति । अत्र यस्समे भूम्यै स्वाद्योने रूढः इति भूम्याः समे प्रदेशे स्वबीजात्प्ररोहितः । एतत्समे जातमित्यनेनोक्तम् ।

[प्रत्युङ्ङुपनते वैकल्पिकत्वम्]

यः प्रत्यङ्ङुपनत इति वैकल्पिकम् प्रागुदक्प्रत्यङ्वोपनतामिति वचनात् ।

(सू) अतिक्रम्य यूप्यान्यं जोपयते तमभिमन्त्रयते ॥

॥ १९ ॥ १९ ॥ १५०६ ॥

प्रथमा खण्डिका.

---

1 दित्युक्तमिति–घ. दित्युक्तानिमिति ?–छ. 2 आरोहः—शाखासु प्ररूढः (भ. भा.)। आरोहः शाखेति सायणः । भाष्यकारस्तु अनक्षसङ्ग इति प्रक्रमे णमुलन्त परिग्रहावश्यकतां पर्यालोच्य आरोहपदेन शाखाजमात्रपरिग्रहे स्कन्धजस्यासंग्रहाच्चारोहशब्दं णमुलन्तमभिप्रैति. 3 दि . . . . . . . रोह्य–ख. ग.

(सू.) [1]अत्यन्यानगामिति ॥ १ ॥ २० ॥ १५०७ ॥

अथैनमुपस्पृशति तं त्वा जुषे वैष्णवं देवयज्याया इति ॥ २ ॥ २१ ॥ १५०८ ॥

[एनमित्येकवचनाशयः]

(भा) अथशब्द आनन्तर्ये क्रियते। यूपबहुत्वेऽपि अभिमन्त्रणाद्यग्रच्छेदनान्तमेकैकस्य यथा क्रियेतेति ।

(वृ) अथश–क्रियते—प्रथमस्याभिमन्त्रणे कृते तदनन्तरमेवोस्पर्शनं कर्तव्यम् इति ।

(सू.) देवस्त्वा सविता मध्वानक्त्विति स्रुवेण सर्वतो मूलं [2]पर्यणक्ति ॥ ३ ॥ २२ ॥ १५०९ ॥

[स्रुवेणाञ्जनविधिभावः]

(भा) स्रुवेणाञ्जनं हस्तनिवृत्त्यर्थम् ।

[हस्तस्याञ्जने प्राप्तिः]

(वृ) स्रुवेणा–र्थम्—उपस्पर्शने हस्तस्य प्रकृतत्वात् तेनाञ्जनं मा भूदिति ।

(सू.) ओषधे त्रायस्वैनमित्यूर्ध्वाग्रं दर्भमन्तर्धाय [3]स्वधिते मैनꣳहिꣳसीरिति स्वधितिना प्रहरति ॥ ॥ ४ ॥ २३ ॥ १५१० ॥

(भा) स्वधितिः—छेदनसमर्थं द्रव्यम् । इह वाशी ।

---

[1] प्रथमप्राप्तांस्त्र्यवरान् यूप्यान् वृक्षानतिक्रम्य ततो यं जोषयते—यत्र प्रीतो भवति तमभिमन्त्रयेत अत्यन्यानगामिति लिङ्गादिति भावः (रु). [2] सर्वं मूलभागं परितोऽनक्ति (रु). [3] स्वधितिः—क्षुरः तेन प्रहरति । तक्ष्णः शस्त्रमेवात्र स्वधितिर्विवक्षित इत्यन्ये (रु).

[इह वाशीपरिग्रहे हेतुः]

(वृ) स्वधि-शी—तक्षा हस्तेन वा (श्ये) स्येति लिङ्गात् ।

(सू) **प्रथमपरापातिनं शकलमाहरति ॥ ५ ॥ २४ ॥ ॥१५११ ॥**

(भा) प्रथ[1]मः परापतति--प्रथमपरापाती । तमाहरति शकलम् ।

(सू) **[2]गुल्फदघ्ने वृश्चेज्जानुदघ्नेऽनक्षसङ्गं वा ॥ ६ ॥ ॥ २५ ॥ १५१२ ॥**

(भा) गुल्फः—पादान्तः । तत्प्रमाणेन कर्तव्यं छेदनम् । जानुदघ्ने जानुप्रमाणे ।

[अनक्षसङ्गपदार्थः]

अथवा यानस्याक्षो न सज्यते यूप[3]स्थाणौ ।

[अनक्षसङ्गमिति श्रुतिविवरणम्]

(वृ) अथवा-यूपस्थाणौ—अनक्षसङ्गं वृश्चेदित्यस्यार्थः, शकटादीनां पथि गच्छतां यूपव्रश्चनस्थाणावक्षो यथा न प्रसक्तो भवति । चक्रस्याक्षस्थानादधोभूतश्छेत्तव्य इति यावत् ।

(सू) **दिवमग्रेण मा लेखीरिति प्राञ्चं पातयत्युदञ्चं प्राञ्चमुदञ्चं वा ॥ ७ ॥ २६ ॥ १५१३ ॥**
**वनस्पते शतवल्शो विरोहेत्या[4]व्रश्चने जुहोति ॥ ॥ ८ ॥ २७ ॥ १५१४ ॥**

(भा) आव्रश्चनं—छेदनम् यूपवृक्षस्य मूलम् ॥

---

[1] मं-क. [2] गुल्फश्चरणग्रन्थिः । अनक्षसङ्गं-यथा शकटस्य गच्छतोऽक्षस्थाणौ न सज्यते तथेत्यर्थः (रु). [3] स्थानम्-ङ. [4] यतो वृक्णो यूपः तद्वृक्षमूलमाव्रश्चनम् .

[आव्रश्चनहोमे स्थानम्]

(वृ) **आव्र-मूलम्**—छिद्यत इति छेदनम् । तस्मिन् मूले आव्रश्चनहोमः ।

(सू) **सहस्रवल्शा विवय॑ रुहेमेत्यात्मानं प्रत्यभिमृश्य यं त्वायं स्वधितिरित्य[1]न्वग्रम[2]द्वांश्छिनत्ति ॥ ॥९॥२८॥१५१५॥**

(भा) अद्वाः—शाखाः । तान् छिनत्ति । यतोऽग्रं ततः क्रियापरिसमाप्तिः ॥

(सू) **अच्छिन्नो रायस्सुवीरः इत्यग्रं परिवासयति ॥ ॥१०॥२९॥१५१६॥**

[अग्रच्छेदे विशेषः]

(भा) मीत्वाऽग्रच्छेदः ।

[माने हेतुः]

(वृ) **मीत्वा-दः**—वक्ष्यमाणारत्निप्रमाणेन मीत्वा ।

(सू) **पञ्चारत्निमिति[3]काम्याः ॥ ११ ॥ ३० । १५१७॥**

[पञ्चारत्निषडरत्न्योः कामविवरणम्]

(भा) यं कामयेतोपैनमुत्तरो यज्ञो नमेदिति तस्मै पञ्चारत्निश्छेत्तव्यः । प्रतिष्ठा—स्थानलाभः । सर्वप्रकारा [4] ऋद्धिः । स्तोमोऽपि त्रिवृत् नवभी ऋग्भिः ।

[उत्तरो यज्ञ उपनमेदित्यस्यार्थः]

(वृ) **यं काम-त्तव्यः**—' पञ्चारत्निमितिकाम्याः ' इतिसूत्रं पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपैनमुत्तर इत्यादिब्राह्मणप्रतीकोपादनम् । उपैनमुत्तरो यज्ञो नमेदित्युत्तरा यज्ञक्रियोपनमेदिति प्राप्नुयादिति ।

---

[1] अन्वग्रं—मूलादारभ्याऽऽग्रात्. [2] अद्वाः—शाखाग्रन्थयः (रु).
[3] पञ्चारत्निं तस्मै वृश्चेदित्यादयः काम्याः यूपपरिमाणकल्पाः यथाब्राह्मणमेवानुसन्धातव्या इत्यर्थः (रु). [4] वृद्धिः—ज. ऋद्धिः प्रतिष्ठा—ख. ग.

[ब्राह्मणोक्तत्रिवृत्स्तोमसंमितत्वोपपत्तिः]

स्तोमे-भिः—स्तोत्रीयानवकवाचित्वात्त्रिवृच्छब्दस्य नवसंख्याकत्रिवृता स्तोमेन संमितं मानम्। इन्द्रियं—वीर्यम्।

(सू.) एकारत्निप्रभृत्यात्रयस्त्रिंशदरत्ने[1]रव्यवायेनैके समामनन्ति ॥ १२ ॥ ३१ ॥ १५१८ ॥

[यथारुचिपरिगृहीतयूपबहुत्वे व्यवस्था]

(भा) एकारत्निः प्रथमे यूपे। ततो यूपे यूपे आगतेऽरत्निर्वर्धतेऽव्यवायेन। क्वचिद्यजमानमात्रः कदाचिदरत्नेर्वृद्धिर्भवतीति न लभ्यते। अरत्निवृद्धावन्तराऽन्यो विधिर्न लभ्यते। युगपद्यूपोत्पत्तौ समा एव। एवं पूर्णे त्रयस्त्रिंशदरत्नौ ऊर्ध्वं त्रयस्त्रिंशदरत्नय एव।

[भाष्यदर्शितव्यवस्थाविवरणम्]

(वृ) एकार-पे—अयमेकारत्निप्रभृत्यात्रयस्त्रिंशदरत्नेरित्यर्थः।

ततो यू-नेति—अरत्निवृद्धिपक्षेऽप्येकस्मिन् प्रयोगे बहुयूपसम्भवे तुल्यपरिमाणा एव। न प्रत्येकमरत्निवृद्धिः। अव्यवायेनेति क्रमवृत्तिप्रयोगाभिप्रायत्वात्।

एवं पूर्णे-त्नय एव—अरत्निवृद्धिप्रकरणत्वात् न ह्रासपक्ष उपपद्यते। वृद्ध्यन्तरानुपदेशादन्तिमत्रयस्त्रिंशदरत्निरेवोर्ध्वमनुवर्तते। व्यवायप्रतिषेधादुत्तरपरिमाणालाभेन पूर्वपरिमाणमपि लभ्यते।

(सू.) यावान् यजमान ऊर्ध्वबाहु[2]स्तावान् ॥ १३ ॥ ॥ ३२ ॥ १५१९ ॥

यावान् वा रथे [3]तिष्ठन् ॥१४॥३३॥१५२०॥

ऊर्ध्वबाहु[4]र्वा ॥१५॥ ३४ ॥ १५२१ ॥

---

[1] अव्यवायेनेति एतासां संख्यानां मध्ये न काचिदपि हेयास्ति। सर्वा एव विकल्पन्त इत्यर्थः। तत्रारत्निसंख्या यूपस्य सहोपरेणेति भरद्वाजसत्याषाढौ (रु).
[2] सहोपरेण तावान् भवति ऊर्ध्वं निखाताद्यजमानसंमितेत्यौदुम्बर्या वचनात् (रु).
[3] रथे तिष्ठन्नित्येव (रु). [4] अनूर्ध्वबाहुरिति शेषः (रु).

पुरुष[1]मात्रीत्येतस्यावमा मात्रा । अथ ततो वर्षीयान् वर्षीयानेव कार्य इत्येके ॥ १६ ॥ ३५ ॥ ॥१५२२॥

[यूपप्रमाणे मतिभेदाः]

(भा) रथे तिष्ठन् ऊर्ध्वबाहुरनूर्ध्वबाहुर्वा । पुरुषप्रमाणान्निकृष्टा मात्रा यूपस्य । ततः परं स्वल्पमप्याहार आहारे वर्धते[2] तदा । अथवा पुरुष-प्रमाण एव सर्वदा ।

[रथस्थितोर्ध्वबाहुमानमर्थलभ्यम्]

(वृ) रथे–सर्वदा—रथे तिष्ठन्नित्येतावन्मा[3]त्रोपदेशात् ऊर्ध्वबाहुर्वेति पक्षान्तरोपदेशः । रथे स्थितस्योर्ध्वबाहुत्वानुपदेशेऽपि तदपि लभ्यते ।

[पुरुषप्रमाणमात्रोपदेशेऽप्यन्यविवक्षा]

अग्निमाने 'पुरुषमात्रेण विमिमीते' इति पुरुषमात्रोपदेशेऽपि 'यावान् पुरुष ऊर्ध्वबाहुस्तावान् भवत्येतावद्वै पुरुषे वीर्यम्' इति पुरुषप्रमाणस्यैवंविधोपदेशादन्यत्रापि लभ्यते ।

[अवमा मात्रेत्येतस्य विषयः]

पुरुषमात्री त्वेतस्येत्यत्रापि पुरुषप्रमाणान्निकृष्टा मात्रा यूपस्य प्रथमप्रयोगे ।

[क्रमवृद्धिपक्षः]

ततः परं स्वल्पमप्याहार आहारे वर्धत एकेषाम् ।

[सदैकरूपं मानं वर्षीयस्त्वोक्तिनिर्वाहश्च]

अथवा पुरुषप्रमाण एव सर्वदा वर्षीयानिति वर्षीयस्त्ववीप्साया एकेषां मतेनोक्तत्वात् ।

(सू.) त्र्यरत्निश्चतुररत्निर्वा पालाशो [4]निरूढपशु-

---

[1] यूपस्यापकृष्टा मात्रा पुरुषमात्री पुरुषमात्रया संमिता. [2] वर्धते–क. ख. ग. [3] वता मा–छ. [4] सोमाद्बहिर्यः स्वतन्त्रः क्रियते स निरूढपशुबन्धः । तस्य पालाशस्त्रिचतुररत्निश्च यूपस्स्यात् । वृक्षान्तराणि परिमाणान्तराणि च सौमिकस्य यूपस्येति विनिवेशो वाजसनेयिनामित्यर्थः (रु).

**बन्धस्यातोऽन्यः सौम्यस्याध्वरस्येति वाजसनेयकम् ॥ १७ ॥ ३६ ॥ १५२३ ॥**

द्वितीया खण्डिका.

———

[यूपे जातिभेदः सोमयागपशुबन्धयोरिति पक्षः]

(भा) निरूह्य[1]ते सोमाद्बहिर्भवतीति निरूढपशुबन्धः। तस्य पालाशत्वं यूपस्यारालिप्रमाणत्वं[2] च वाजसनेयिनां मतेन। इतरथा पूर्वविषयो यावान् यजमा[3]न उर्ध्वबाहुरित्येवमाद्याः कार्याः।

[अध्वरसौम्यशब्दयोरर्थौ]

अध्वरो ना[4]स्मिन् हिंसा प्रत्यवायं करोतीति। सौम्यः सोमसाधनत्वात्। स च ज्योतिष्टोमः, तस्य पूर्वोक्ता यूपा एवंपरिमाणादन्ये

[वाजसनेयिमतोपादानफलम्]

(वृ) **निरूह्य–कार्याः**—वाजसनेयिमतोपन्यासस्य विकल्पार्थत्वात्। स्वमते यावान् यजमान इत्येवमादयः।

[अध्वरशब्दविवरणोपपत्तिः]

**अध्वरो–तीति**—अतोऽन्यत्सौम्यस्याध्वरस्येत्यत्र अध्वरशब्दार्थनिर्वचनम्। ध्वरशब्दः प्रत्यवायसाधनहिंसायां वर्तते। ज्योतिष्टोमे चाग्नीषोमीयादिहिंसाया विहितत्वादप्रत्यवायकरत्वादध्वरता। ततो ज्योतिष्टोमस्याध्वरत्वम्।

**सौम्यः–ष्टोमः**—मूलप्रकृतित्वात्। त[5]स्य त्र्यरत्निश्चतुररत्निर्वेत्यतोऽन्यपरिमाणाः।

(सू) [6]**मूलतोऽतष्टमुपरम् ॥१॥ ३७ ॥ १५२४ ॥**

---

[1] निरुह्यः सो–क. ङ. निरुह्य छ. निरूढस्य निरूह्यते सो–ज. निरूढस्सो। ख.ग. [2] च प्रथमं वाज–ङ. [3] जमानत्तरायज्ञक्रियां एवमुपनमेदितीत्ये ?–छ. [4] नादितस्मिन् ?–छ. [5] तस्य पूर्वोक्ता यूपाः एवंपरिमाणादन्ये त्र्यरत्निश्चतुररत्निर्वेत्यतोऽन्यपरिमाणाः–ख. ग. घ. [6] मूलभागे यदुपरं निखातव्योंऽशः तदतष्टं भवति। (रु).

[उपरभागातक्षणम्]

(भा) मूलादारभ्य मूलतः । अतष्टमुपरम्—नास्य तक्षणं क्रियते अवटपरिमाणम् ।

[उपरपदार्थः]

(वृ) **अतष्टमुपरम्**—यूपमूले अवटपरिमाणस्योपरसंज्ञा ।

(सू.) **[1]अष्टाश्रिरनु[2]पूर्वोऽग्रतोऽणीयान् प्रज्ञाताग्निष्ठाश्रिरस्थूलोऽनणुः ॥ २ ॥ ३८ ॥ १५२५ ॥**

[यूपाकृतिविशेषविवरणम्]

(भा) अश्रयोऽस्याष्टौ । अनुपूर्वः—आनुपूर्व्येण मूलादारभ्याग्रतो यथा भवति तनुस्तथा तक्ष्यते । मध्ये स्थूलः मूले तनुः तनुतरोऽग्रे इत्येतन्न लभ्यते ।

[अग्निष्ठादिपदविवरणम्]

अग्निना तुल्यं तिष्ठतीत्यग्निष्ठा । सा महती सर्वाभ्यः । न स्थूलः अस्थूलः । न अणुः—अनणुः । न भवति तनुर्यथा नापक्रामति पशुस्तस्मिन् बद्धः तथालक्षणः ; नाति स्थूलः । हस्तद्वयग्राह्यः कार्य इति [3]निगममतिः ।

(वृ) **अस्य**—यूपस्य अश्रयः ।

**सर्वाभ्यः**—अश्रिभ्यः ।

(सू) **अवतक्षणानां स्वरुरधिमन्थनश्च श[4]कलः ॥ ३ ॥ ३९ ॥ १३२६ ॥**

---

[1] शेषस्त्वेवं तद्व्य इत्याह (रु). [2] अनुपूर्वः मूलादारभ्याऽऽग्रात् क्रमेण तनुः अग्रतस्त्वणीयान्-अणुतरः । याग्नेराजेवेन तिष्ठति साऽग्निष्ठाऽश्रिः साऽस्फुटा भवत्याऽभ्यः ॥ (रु). [3] निगमकारमतिः—छ. ज. [4] तक्षणप्रभवाश्शकला अवतक्षणास्तेषां मध्ये कश्चित्स्वरुर्भवति अन्योऽधिमन्थनः । यस्योपरि मथ्यतेऽग्निः सोऽधिमन्थनः (रु).

[अवतक्षणपदार्थः]

(भा) अवतक्षणानां—यूपे तक्ष्यमाणे ये शकलास्तेषां स्वरुः प्रथमः।

[प्रथमशकलस्य स्वरुत्वे मानं तृतीयशकलोपयोगश्च]

(वृ) **ये शक—थमः**—यः प्रथमश्शकरु इति निर्देशात्। शाखान्तरे यः प्रथमश्शकलस्स स्वरुरिति विधानाच्च। द्वितीयोऽधिमन्थनत्वेन संकल्पयितव्यः तृतीयो यूपाञ्जनत्वेन।

(सू) **अग्राच्च[1]षालं पृथमात्रमष्टाश्रि मध्ये संनतम् ॥४॥ ४० ॥ १५२७॥**

**[2] यं कामयेतान्योऽस्य लोकमभ्यारोहेदिति तस्यान्यवृक्षस्य स्वरुचषाले कुर्यात् ॥५॥ ४१ ॥ ॥ १५२८॥**

**यावदुत्तममङ्गु[3]लिकाण्डं तावदूर्ध्वं चषालाद्यूपस्यातिरिक्तं द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा ॥ ६ ॥ ४२ ॥ ॥ १५२९ ॥**

(भा) पृथः—हस्ततलम्। संनतम्[4]-तनु मध्ये।

[स्वरुचषालेन यूपप्रतिनिधिसंभवे अधिमन्थोऽन्यथापि]

[5]खलेवाल्यादिषु स्वरुचषाले न क्रियेते प्रतिषिद्धत्वात्। अधिमन्थनस्त्वन्यवृक्षस्यापि क्रियते।

---

[1] यूपस्याग्रिमोऽवयवश्चषालम्। तत् परिवासितादग्रादपच्छिद्य कार्यम्। पृथस्त्रयोदशाङ्गुलमिति बोधायनः। संनतं तत्कृतं निष्ठब्धं च भवति यूपे प्रतिमोक्ष्यमाणत्वात् (रु). [2] एवं निन्दितत्वाद्वर्जनीयोऽन्यवृक्ष इति भावः। अपिवाऽन्यस्य तज्जातीयस्य वृक्षस्य कुर्यादिति बोधायनः (रु). [3] अङ्गुलिकाण्डं-अङ्गुलिपर्व (रु). [4] नतं मध्ये—घ. [5] खले वारयति बलीवर्दानिति व्युत्पत्त्या रलयोरभेदेन खले वारणकाष्ठम्।

[तृतीयशकले न नियमः]

अञ्ज[1]नं येन केनचिच्छकलेन क्रियते पश्वर्थत्वादाज्यसाध्यत्वाच्च। स्वरुसंस्कारस्तु लुप्यते; [2]अत्र तु स्वरोरञ्जनमिति[3]। बहुपशावप्येकस्मिन् यूपे वर्जयित्वैकादशिनानेक एव स्वरुः। प्रतियूपमेव हि स्वरुः।

[स्वरुचषालयोरन्यवृक्षनिषेधमानम्]

(वृ) खलेवा-द्धत्वात्—यं कामयेतान्योऽस्य लोकमभ्यारोहेदिति अन्यवृक्षस्वरुचषालयोरनिष्टकामसंयोगेन निषिद्धत्वात् खलेवालीपरिध्यादिषु स्वरुचषालनिवृत्तिः।

[अधिमन्थाञ्जनशकलयोरनियमे उपपत्तिः]

अधिम-यते—अधिमन्थनशकलस्त्वप्रतिषिद्धत्वादन्यवृक्षस्यापि क्रियते साद्यस्क्रादिषु।

अञ्जनं-यते-त्वाच्च—प्रयाजार्थाज्यसाध्यत्वात् पश्वञ्जनस्य। तस्य च खलेवाल्यादिष्वपि विद्यमानत्वात् आज्योपादानभूतस्वरोरभावेऽपि 'गुणलोपेऽपि मुख्यस्येति' इति न्यायेन (१०-२-६३) यं कंचिच्छकलं जुह्वाऽभ्यज्य तेन पशोरञ्जनं कर्तव्यम्।

[स्वरुसंस्कारलोपोपपत्त्यादि]

स्वरुसं-ते-नमिति—दिवस्सूनुरसीत्यादि च। तस्याञ्जनस्य पश्वर्थत्वाभावात्। स्वरुसंस्कारत्वात्।

[बहुपशावित्यादिभाष्यस्य एक एव स्वरुरिति सूत्रविरोधपरिहारः]

बहुपशा-स्वरुः—अस्यार्थः—एकयूपं मिनोति नैनं वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून् व्यर्धयतीति पश्वेकादशिनीब्राह्मणे उक्तत्वात् प्रतियूपं स्वरव इति सूत्रकारेणोक्तत्वाच्च उभयोर्विषयभेदेनाविरोध इति।

---

[1] नं तु-घ. [2] अत्र स्वरो-घ. ङ. [3] मिति च-ङ. छ.

(सू) रथमात्री निरूढपशुबन्धस्य वेदिः ॥७॥४३॥१५३०॥

(भा) रथप्रमाणा-रथमात्री। तस्यो[1]त्तरो निर्णयः।

(सू) [2]अक्षसंमिता पश्चात्तिर्यगीषया प्राची विपथयुगेन पुरस्ताद्यावता वा बाह्ये छिद्रे ॥८॥४४॥१५३१॥

अरत्निभिर्वा चतुर्भिः पश्चात् षड्भिः प्राची त्रिभिः पुरस्तात् ॥ ९ ॥ ४५ ॥ १५३२ ॥

[3]तां वेदं कृत्वा दर्शपूर्णमासवत् सन्नमनवर्जं प्रागुत्तरात्परिग्राहात्कृत्वा परेण यूपावटदेशं सञ्चरमवाशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोति ॥ ॥१०॥ ४६ ॥ १५३३ ॥

[रथमात्रीत्वे प्रमाणविवरणम्]

(भा) चतुरुत्तरमङ्गुलिशतं पश्चाद्विस्तारः। अष्टाशीतिशतं प्राची। षडशीतिः पुरस्ताद्विस्तारः। एतद्विपथयुगप्रमाणम्। पथो बहिर्गच्छतीति विपथयुगम् यावता वा बाह्ये [4]छिद्रे [5]तावान पुरस्ताद्विस्तारः। तां शौल्वेन विधिना एकेन वा विमिताम्। संनमनं—मध्ये तनूकरणम् तद्वर्जं दर्शपूर्णमासवत् प्रागुत्तरात्परिग्राहात् करोति।

[अपरभागप्रतिसंबन्धी]

वेदं कृत्वा वेदिं च अपरेण यूपावटदेशं वेदेरेव।

---

[1] त्तरतो–घ. [2] एतदेव व्याकरोति ; पश्चात्तिर्यगक्षसंमिता। ईषासंमिता प्राची। पुरस्तात्तिरश्ची तु विपथयुगेन संमिता तस्यैव वा युगस्य बाह्ययोछिद्रयोर्यावदन्तरं तावता संमिता। अक्षादिप्रमाणानि शुल्बे वक्ष्यति अष्टाशीतिशतमीषेति (रु). [3] तां एवं विमितां सतीं कृत्वा। कथं नाम कृत्वा? वेदं कृत्वा दर्शपूर्णमासवदोत्तरपरिग्राहात्कृत्वा तस्यामेव वेद्यामुत्तरवेदिं करोति। कुत्र प्रदेशे? पश्चाद्यूपावटदेशस्य संचरं शिष्ट्वा अनन्तरदेशे। तां सोमे दशपदां करोति। सर्वतश्च दशपदाम्, अविशेषात्। तथा सर्वतो दशपदामित्येव भरद्वाजः। क्षेत्रतश्शतपदेत्युक्तं भवति। सौमिक्यास्त्विह वचनं प्रासङ्गिकम्। पाशुबन्धिक्याश्च प्रमाणमनन्तरमेव वक्ष्यते (रु). [4] छिद्रे? इति–क. [5] तावत्पुर–क.

[वेद्यामुत्तरवेदिमिति सूत्रखण्डाशयः]

तत्र सिद्धे वेद्यामुत्तरवेदिमितिवचनाद्यत्र विधाभ्यासोऽग्नेरेकशतविधा[1]न्तम्। अन्तरेणापि तत्र वचनं सौमिक्या वेदेर्वृद्धिर्भवति। उत्तरवेदिमुपवपति यावानग्निरिति।

[दशपदत्वोपपत्तिः पक्षान्तरं च]

सर्वतो दशपदा शतपदा क्षेत्रतः। क्षेत्रतो दशपदेत्युपदेशः।

[भाष्यविवृतप्रमाणाश्रयप्रदर्शनम्]

(वृ) **चतुरु-स्तारः**—तस्याक्षपरिमाणत्वात्।

**अष्टाशी-ची**—अष्टाशीतिशतमीषेत्यादिशुल्वोक्तत्वात्।

**षडशी-ताम्**—रथमात्रारत्निमात्रयोरन्यतरेण विमितां वेदिं तामिति सूत्रच्छेदः तामेवंलक्षणां विमितां वक्ष्यमाणां कुर्यात्।

[तामित्येतदर्थः दर्शपूर्णमासवदित्यस्य फलं च]

**संनम-दिं च**—तां इति शौल्वविमितां वेदिं निर्दिशति। दर्शपूर्णमासवदित्युपादानं पशोर्दर्शविकारत्वेऽपि रथमात्रादिपरिमाणान्तरोपदेशाद्दर्शपूर्णमासवेदिनिवृत्तिशङ्का स्यादिति।

[यूपावटदेशापरभागस्य वेदिसंबन्धित्वोपपत्तिः]

**अपरेण-रेव**—संचरः। अर्धमन्तर्वेदि अर्धं बहिर्वेदीति यूपावटविधानात्।

[सौमिकवेदिवृद्धौ भाष्योक्तपक्षादन्यः पक्षः]

**तत्रासिद्धे-न्तम्**—सप्तविधे। अथवा एकविधः प्रथमोऽग्निर्द्विविधो द्वितीय इत्यादिपक्षे वा।

**अन्तरेणा-भवति**—यथाऽग्निर्वेद्यां भवति।

---

[1] न्ता-अ. छ.

[सूत्रखण्डाशयविवरणम्]

उत्तर-रिति—यावदग्निप्रमाणमुत्तरवेदिवृद्धेस्तदन्तर्भावार्थं वेदिवृद्धिर्यथा स्यादित्येवमर्थं वेद्यामुत्तरवेदिमिति वचनम्।

[दशपदेत्येतदुपपत्तिविवरणम्]

सर्वतो-दशपदा—चतुर्ष्वपि पार्श्वेष्वेकैकत्र[1] दशपदा।

शतपदा क्षेत्रतः। क्षेत्रतो दशपदेत्युपदेशः—दशपदोत्तरवेदिरित्युपदेशात्।

(सू) अंहीयसीं पुरस्तादित्येके ॥ ११ ॥ ४७ ॥ १५३४ ॥

[अंहीयसीपदार्थः]

(भा) अंहीयसी-तन्वी पुरस्तात्।

(सू) तां [2]युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते ॥ १२ ॥ ४८ ॥ १५३५ ॥

[परिमाणान्तरलाभः]

(भा) युगमात्र्यपि लभ्यते वेदिः युगेनेति वचनात्।

(वृ) वेदिः—उत्तरवेदिः। पदेन तुल्यविकल्पनात्।

(सू) [3]शम्यामात्री निरूढपशुबन्धस्योत्तरवेदिः ॥ १३ ॥ ॥ ४९ ॥ १५३६ ॥

[सोमपशुबन्धोत्तरवेदिमानप्रमाणे]

(भा) शम्यामात्री सोमेऽपि लभ्यते मात्रैवास्य सेति।

(वृ) शम्या-सेति—लिङ्गात् सोमे।

---

[1] कश्चिद ?-घ. [2] युगेन वा विमायेति वचनात् युगमात्रीत्यपि सिद्धं भवति। यजमानग्रहणात् यजमानस्याध्वर्योर्वेति विकल्पो निवृत्तः। तथा युगमात्रीं यजमानदशपदां सोम इति कात्यायनः। तत्र यदा पदमाना वेदिः तदायुगमात्रैवेष्यते न दशपदा। अन्यथा सदोहविर्धानादिप्रसङ्गात्। शम्यामानं तूत्तरवेदिसंस्कारार्थमुभयत्र समुच्चीयते। (रु). [3] शम्याप्रमाणं तु दर्शितमेव दर्शपूर्णमासयोः (रु).

(सू) शम्यां पुरस्तादुदगग्रां निधाय स्फ्येनोदीचीमभ्यन्तरमुपलिखति वित्तायनी मेऽसीति। एवं दाक्षिणतः प्राचीं तिक्तायनी मेऽसीति। पश्चादुदीचीमवतान्मा नाथितमिति। उत्तरतः प्राचीमवतान्मा व्यथितमिति ॥१४॥५०॥१५३७॥

तृतीया खण्डिका

———

(भा) उदीचीं—उदगग्राम्। अभ्यन्तरं-शम्यायाः समीपे लिखत्येतैर्मन्त्रैः [1]प्रतिदिशम्।

(वृ) [2]उपलिखतिवचनात्पूर्वनिर्दिष्टत्वाच्छम्यायाः समीपे।

इति श्रीकौशिकरामाग्निचिद्विरचितायां श्रीधूर्तस्वामिभाष्यवृत्तौ सप्तमे प्रश्ने प्रथमः पटलः

———

(सू) उत्तरस्माद्वेद्यंसादुदक् प्रक्रमे [3]चात्वालः ॥१॥ ॥१॥१॥१५३८॥

[4]तमुत्तरवेदिवत् तूष्णीं शम्यया परिमित्य देवस्य त्वा सवितुः प्रसवे इत्यभ्रिमादाय परिलिखितं रक्षः परिलिखिता अरातयः इति त्रिः प्रदाक्षिणं परिलिख्य तूष्णीं जानुदघ्नं त्रिवितस्तवा खात्वोत्तरवेद्यर्थान् पांसून् हरति विदेरति ॥२॥२॥ ॥१५३९॥

---

[1] क. ङ.–कोशयोरिदं न दृश्यते भाष्ये. [2] उपलिखतीपरिमाणान्तरावचनापूर्वनिर्दिष्टत्वात्? छ. [3] उत्तरवेदिपांस्वर्थोऽवटश्चात्वालः (रु). [4] चात्वालप्रमाणमुत्तरवेद्या व्याख्यातम्। प्रदक्षिणवचनमविस्मरणार्थम्। वितस्तिः—कनिष्ठाङ्गुल्योरायामः (रु).

[चात्वालमानम् प्रादक्षिण्योक्तिफलं च]

(भा) अभ्रिः—खनित्रम् । चात्वालोऽपि शम्यामात्रः । प्रदक्षिणवचनं च यथा स्फ्येन लिखितं तथा माभूदिति । तूष्णीं-वाग्यतः । वितस्तिः—मध्यमाङ्गुल्या युक्तः प्रसारितोऽङ्गुष्ठः तिस्रो वितस्तयो यस्य परिमाणं स त्रिवितस्तः ।

[उत्तरवेद्यर्थत्वोक्तिभावः]

उत्तरवेद्यां निवपतीति सिद्धे तदर्थत्वे उत्तरवेद्यर्थानिति वचनात् चात्वाल उत्तरवेदिप्रयुक्त इति दर्शयति । अतस्सौमिके वैश्वदेवे न चात्वालः । वरुणप्रघासेषु महाहविषि च क्रियते चात्वालः उत्तरवेद्यर्थत्वात् ।

[चात्वालमानलाभः अपिशब्दलभ्यार्थपक्षश्च]

(वृ) अभ्रिः ख—मात्रः—शम्यया परिमित्येति वचनात् परिमाणान्तरानुपदेशाच्च । चात्वालोऽपि शम्यामात्र इत्यपिशब्दश्रवणादुत्तरवेदिपरिमाणतुल्यश्चात्वाल इति केचित् ।

[प्रदक्षिणपदलभ्यार्थे हेतुः]

प्रदक्षि–ग्यतः—[1] मन्त्रस्याभावात् ।

वितस्तिः–त्रिवितस्तः—चात्वालः ।

[सिद्धे तदर्थत्वे इत्येतदर्थे हेतुः]

उत्तरवे–नचात्वालः—नोत्तरवेदिमुपवपतीति निषेधात् ।

(सू) सिंहीरसीत्युत्तरवेद्यां निवपति ॥ ३ ॥ ३ ॥ ॥ १५३८ ॥

[2]एतेनैव यो द्वितीयस्यामितिद्वितीयं यस्तृतीयस्यामिति तृतीयम् ॥ ४ ॥ ४ ॥ १५४० ॥

---

[1] मन्त्रप्राप्त्यभावात्–छ. [2] विदेरितिमन्त्रेण यो द्वितीयस्यां इत्येवं विकृतेन द्वितीयं हरति । एवं तृतीयम् (रु).

(सू) तूष्णीं [1] चतुर्थं हृत्वा उरुप्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयित्वा ध्रुवासीतिशम्यया संहत्य देवेभ्यः कल्पस्वेत्यभिमन्त्र्य देवेभ्यश्शुन्धस्वे-त्यद्भिरवोक्ष्य देवेभ्यश्शुम्भस्वेति सिकताभिरवकीर्य प्रोक्षणीशेषमुत्तरत उत्तरवेद्यै निनीयापो रिप्रं निर्वहतेति स्फ्येनोदीचीमेकस्फ्यां निस्सार्य विभ्राड्-बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपताववितुतम् । वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजतीत्युत्तरवेद्या अन्तान् कल्पयति ॥ ॥५॥५॥१५४१॥

[संहननपदार्थः उपकिरणद्रव्यम्, निनयनकर्म निस्सारणक्रमः अन्तरचनादि च]

(भा) शम्यया संहननं दृढीकरणम् । उपरिकिरणं वालुकाभिः । अवो-क्षणशेषमपि प्रोक्षणीशेषम् । एकस्फ्या रेखा तथा निस्सार्यते यथो-दग्गच्छत्युदकम् । अन्तान् रचयति यथा समा भवन्ति । नाभिरिव मध्ये क्रियते चात्वालपांसुभिरुत्तरवेद्यङ्गत्वात् ।

[उत्तरवेदेरूर्ध्वमानम्]

(वृ) शम्यया–रणम्—ऊर्ध्वप्रमाणमुत्तरवेदेर्जानुदघ्नादिखातपांसुपरि-माणमेव ।

[प्रोक्षणीशेषपदेनावोक्षणशेषपरिग्रहोपपत्तिः]

अवोक्षण–शेषम्—अद्भिरवोक्ष्येति विहितावोक्षणशेषनिनयने प्रोक्षणीशेषमिति निर्देशोऽवोक्षणेऽपि प्रकर्षेणोक्षणात् ।

---

[1] चतुर्थं सर्वान् पांसून् हरति । तैरेवोत्तरवेदिसमुच्छ्रयो व्याख्यातः । संहत्य-लोष्टानि विमृद्य । प्रोक्षणीशेषम्—अवोक्षणशेषम् । उत्तरवेद्या इति षष्ठ्यर्थे चतुर्थी । स्फ्यकृतैकरेखा—एकस्फ्या । तां निस्सार्य तयोदकं गमयित्वा अन्तान् कल्पयति—मृत्तोयैर्दृढयति । यथा न विशीर्येरन् (रु).

(सू) [1] संमृशतीत्येके ॥ ६ ॥ ६ ॥ १५४२ ॥

तुरीया खण्डिका

अथास्या मध्ये प्रादेशमात्रीं गोपदमात्रीं अश्वशफमात्रीं वा [2] उत्तरनाभिं चतुस्स्रक्तिं कृत्वा चतुश्शिखण्डे युवती कनीने घृतप्रतीके भुवनस्य मध्ये। तयोर्देवा अधिसंवसन्त उत्तमे नाक इह मादयन्तामित्युभे अभिमन्त्र्य इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्वित्येतैर्यथालिङ्गमुत्तरवेदिं प्रोक्षति ॥ १ ॥ ७ ॥ १५४३ ॥

[अथ शब्दफलं प्रोक्षणे विशेषः]

(भा) अथशब्दोऽर्थकृत्यप्रतिषेधा[3]र्थः। चतुस्स्रक्तिः—चतुष्कोणः इन्द्रघोषादिभिः प्रोक्षणमनुपरिक्रामता नैकस्थेन। दिग्भ्य एवैनां प्रोक्षतीति लिङ्गात्।

[मनोजवः पदार्थः]

[4]मनोजवाः—प्रधानः; अतो न पित्र्यम्।

[प्रोक्षणे भाष्योक्तविशेषोपपत्तिः]

(वृ) प्रोक्षण–लिङ्गात्—दिग्भ्य इत्यपादाननिर्देशात् प्रतिदिशमागताभिरद्भिः प्रोक्षणम्। अतः प्रतिदशमनुक्रम्य प्रोक्षणम्।

[पित्र्यनिषेधे मानम्]

मनो–त्र्यम्—पितृभिरिति सहभावमात्रनिर्देशात्।

(सू) प्रोक्षणीशेषं दक्षिणत उत्तरवेद्यै निनयेत् शुचा

---

[1] तूष्णीं वा कल्पयित्वा मन्त्रेण संमृशति (रु). [2] नाभिरिव मध्ये भवति। उत्तरनाभिं चतुस्स्रक्तिं—चतुष्कोणम्। यथालिङ्गं—यस्मिन् मन्त्रे यस्या दिशो लिङ्गं तेन तं दिग्भागं प्रोक्षति (रु). [3] र्थः सर्वत्र–ड. छ. [4] मनोजवास्त्वा—अतोनपित्र्यम्–क. मनोजवाः–प्रधानभूतः–ग.

त्वाऽर्पयामीति द्वेष्यं मनसा [1]ध्यायेत् ॥ २ ॥
॥ ८ ॥ १५४४ ॥

[द्वेष्यध्यानाकारः]

(भा) पाप्मन्नित्यामन्त्रणेन ध्यानं द्वेष्यस्य ।

[ध्यानावसरः]

(वृ) पाप्म–ष्यस्य— शुचा त्वाऽर्पयामीत्यत्र ।

(सू) **पूर्ववदेकस्फ्यां दक्षिणतो निस्सार्य जुह्वां पञ्च-गृहीतं गृहीत्वा सर्वत्र [2]हिरण्यमुपास्यन्नक्ष्णयो-त्तरवेदिमुत्तरनाभिं वा व्याघारयति ॥ ३ ॥ ९ ॥
॥ १५४५ ॥**

[निस्सारणे मन्त्रदिशौ जुहूविधिहेतुश्च]

(भा) आपो रिप्रमिति निस्सारणं दक्षिणतः । आहवनीयप्रदाने जुहूः नियमादुत्तरवेद्यां [3]होम इत्यतो जुहूर्विधीयते । उपासनं—क्षेपो हिरण्यस्य । अक्ष्णया—अनृजुः । कोणव्याघारणं—दीर्घधारता ।

[परिभाषयाजुहूलाभायोगः]

(वृ) जुहूर्विधीयते—जुहोतीति चोद्यमाने इति परिभाषायामाहवनीयाध्वर्युजुह्वादीनां परस्परनियमादत्राहवनीयहोमत्वाभावाज्जुहूविधानमिति ।

(सू) **दक्षिण[4]मंसमुत्तरां श्रोणिं दक्षिणामुत्तरमंसं मध्य-मिति सिंहीरित्येतैः प्रतिमन्त्रम् ॥ ४ ॥ १० ॥
॥ १५४६ ॥**

---

[1] शुचा त्वाऽर्पयामीति द्वेष्यध्यानाकारः निनयनं तु पूर्ववत् तूष्णीमेव लिङ्गानुगुण्यात् (रु). [2] यथाऽऽज्यं हिरण्ये पतेत्तथा तदग्रतो नयन् कोणदिशः प्रति दीर्घां धारां करोति (रु). [3] हूयत इ–क. ङ. [4] एवं क्रमिकान् दक्षिणांसादीन् सिंहीरसीत्येतैः प्रतिमन्त्रं व्याघारयति (रु).

[अंसश्रोणिपदार्थः]

(भा) अंसः—पूर्वदक्षिणः कोणः पूर्वोत्तरश्च ।
श्रोणी–उत्तरापरः कोणः दक्षिणापरश्च ।

(सू) भूतेभ्यस्त्वेति स्रुचमुद्गृह्य [1] पौतुद्रवैः परिधिभिः उत्तरवेदिं परिदधाति । विश्वायुरसीति मध्यमं ध्रुवाक्षिदसीति दक्षिणमच्युतक्षिदसीत्युत्तरम् ॥ ॥ ५ ॥ ११ ॥ १५४७ ॥

[पौतुद्रवपदार्थः]

(भा) पौतुद्रवाः—देवदारुमयाः ; केषाञ्चिदौदुम्बराः ।

(सू) [2] परिधिसंधिना सर्वाहुतीर्जुहोति ॥ ६ ॥ ॥ १२ ॥ १८४८ ॥

पञ्चमी खण्डिका

---

(भा) दक्षिणेन परिधिसंधिना या दक्षिण[3]ता हूयन्ते उत्तरेणोत्तराः ।

(वृ) उत्त–रा—उत्तरेण परिधिसन्धिना उत्तरा आहुतयः ।

(सू) अग्नेर्भस्मासीत्युत्तरवेद्यां [4] संभारान्निवपति गुग्गुलु सुगन्धितेजनं श्वेतामूर्णास्तुकां पेत्वस्यान्तराशृङ्गीयां लूनस्यालूनपूर्वस्य वा ॥ १ ॥ ॥ १३ ॥ १५४९ ॥

[सुगन्धितेजनादिपदार्थः स्तुकायां विशेषश्च]

(भा) सुगन्धितेजनम्—सुगान्धितृणम् । ऊर्णास्तुका ऊर्णास्तम्बः ।

---

[1] पूतुद्रुः देवदारुः (रु).   [2] परिधिसन्धिना प्रपद्य जुहोति । केन ? दक्षिणेन दक्षिणा आहुतीरुत्तरेणोत्तरा इति विवेकः (रु).   [3] णेन–ङ.   [4] सर्वसम्भारानेकीकृत्य निवपति । पुरीषमसीत्यन्तो मन्त्रः ; अग्नेः पुरीषमसीत्याह अग्नेर्ह्येतत्पुरीषं यत्सम्भाराः इति लिङ्गात् । अग्नेर्भस्मासीति सिकतानिवपतीत्यत्रापि तथा दर्शनाच्च । सुगन्धितेजनस्तृणविशेषः; यस्सुगन्धितेजनश्च जाठराग्नेर्भवति । ऊर्णास्तुका-लोमकलापः सा तु पेत्वस्य शृङ्गान्तरोद्भवा भवति । पेत्वो वृष्णिः । वृष्णेःस्तुका इत्येव कात्यायनः ; लूनस्य—लूनलोम्नः ; तदभावेत्वलूनस्या (रु).

पेत्वः—[1]विगतपुंस्त्वो मेषः । तस्य शृङ्गयोरन्तरा भवा अन्तराशृङ्गीयाः । अर्धलूनस्य नेष्यते ।

[स्तम्बशब्दार्थः]

(वृ) **ऊर्णास्तम्बः**—ऊर्णाख्यलोमसमूहः ।

[स्तुकायां भाष्योक्तविवरणम्, संभारनिधाने मानं च]

लूनस्याल्लूनपूर्वस्य वेति स्तम्बस्यैकदेशो लूनः अन्यो न लून इति न भवति । कृत्स्नं लूनपूर्वमिदानीं वा लूयते कृत्स्नम् । ताभ्यां सम्भारनिधानम् । तस्यैष स्वो लोको यदुत्तरवेदिर्नाभिरिति अग्निदेशत्ववचनात् ।

(सू) **व्याघारणप्रभृति संभारनिवपनान्तमुत्तरवेद्यामुपर्यग्नौ [2] धार्यमाण एके समामनन्ति ॥ २ ॥ ॥ १४ ॥ १५५० ॥**

[व्याघारणादौ कर्ता]

(भा) अन्येन धार्यमाणेऽग्नौ अध्वर्युः करोति ।

[अध्वर्योः कर्तृत्वलाभः]

(वृ) **अन्येन–करोति**—उपर्यग्नौ धार्यमाण इत्यस्मिन् पक्षे व्याघारणादीनामध्वर्युकर्तृकत्वात् ॥

(सू) **प्रोक्षान्तां कृत्वा उदुम्बरशाखाभिः प्लक्ष शाखाभिर्वा प्रच्छाद्य वसति [3] यद्यसद्यस्कालः पशुर्भवति ॥ ३ ॥ १५ ॥ १५५१ ॥**

---

[1] पुंस्त्वो ? मेषः–क. ख. ग. घ. च. ज. [2] औत्तरवेदिकोऽग्निरुपर्युत्तरवेदेरन्येन धार्यते । ततो जुह्वां पञ्चगृहीतमित्याद्यध्वर्युः (रु). [3] यद्यसद्यस्काल इत्यनुवादः । द्व्यहकालस्यापि विधिरनुमीयते । बोधायनश्चाह इष्टिपशुबन्धाः सोपवसथाः सद्यो यज्ञा वेति । तदा तु दक्षिणतो निस्सारणान्तामुत्तरवेदिं कृत्वा प्रच्छाद्य विरमति व्याघारणान्युत्तरेद्युरेव क्रियन्ते (रु).

[शाखाभिः प्रच्छादनकालः उपदेशपक्षश्च]

(भा) द्वितीये प्रोक्षणे निस्सारणान्ते कृते औदुम्बरशाखाभिः प्रच्छादनम्। अनन्तरं हुत्वाऽग्निहोत्रमित्युपदेशः।

[पर्वयोगभेदादनुष्ठानविशेषः पक्षान्तरम् अतिदेशश्च]

यदा रात्रावपराह्णे वा पर्व तदा तस्मिन्नेवाहनीज्या सद्यः पूर्वेद्युर्वा प्रोक्षणान्तं कृत्वा पश्चात्पर्वणोऽग्न्यन्वाधानं करोति पशौ वृत्ते। [1]यदा पूर्वाह्णे [2]पर्वकालः तत्र कृत्वा पर्व सद्यस्काल एव पशुः। उपदेशः कृत्वैव [3]पर्वपशुः सद्यो द्व्यहो वेति। विकृतीनामेष विधिरन्यासामपि।

[प्रच्छादनकालविवरणम्]

(वृ) द्वितीये-पदेशः—प्रच्छाद्य वसतीति प्रच्छादनवासयोरानन्तर्यात् रात्रौ होमोत्तरकालं प्रच्छादनशयनादि।

[पर्वयोगभेदप्रयुक्तानुष्ठानभेदस्य सहेतुकं विवरणम्]

यदारात्रौ-पशौवृत्ते-अस्यार्थः—पर्वणि प्रकृतिविकृत्योस्सन्निपाते क्रमो विधीयते। इष्टिपशूनामतिदेशासिद्धत्वात्पर्वकालस्य। काम्यैः पशुभिरमावास्यायामिति विधानाच्च। सन्धिमदहोरात्रे विकृतीनामिज्या पौर्णमास्यमावास्याशब्दवाच्यपर्वसन्धिसन्निकर्षार्थं प्रकृतेश्च द्व्यहकालत्वाद्रात्रावपराह्णे वा सन्धिपक्षे प्रकृतिं कृत्वा पश्चात्; न तु प्रकृतिं प्रक्रम्य मध्ये विकृतिः; यस्य यज्ञे प्रतत इति निषेधात्। विकृतेस्तु व्यहकालत्वपक्षे चतुर्दश्यामुपक्रमः॥

यदातुपू-एवपशुः—सन्धिमदहोरात्रे विकृतिप्रयोगो यथा स्यादित्येवमर्थम्। विकृतेः पूर्वं प्रयोगो यथा स्यादित्येवमर्थम्।

विकृतेः पूर्वप्रयोगे निथिद्वयसंबन्धः प्रकृतेर्न भवेत्। एतत्सर्वं सद्यस्कालः पशुर्भवती[4]ति सूचितम्।

---

1 र्वाह्णे-छ. 2 दातुपू-घ. 3 पर्वपशुस्सद्य एव कर्तव्यः-घ. 4 तीतिसूचितम्-ख. ग. छ.

**उपदे–होवेति**—पूर्वाह्णे संधिपक्षे[1]ऽपि प्रकृतिं कृत्वा विकृतिस्सद्यो द्व्यहो वा इति भरद्वाजमतात्।

**विकृती–मपि**—प्रकृतिसन्निपाते।

(सू.) **आहवनीये [2]प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्य अग्नये प्रणीयमानायानुब्रूहीति प्रणीयमानायानुब्रूहीति च। ॥४॥१६॥ १५५२॥**

[प्रणयनीयेध्मनियम मतिभेदः]

(भा) इध्मस्य न संख्या नापि वृक्षनियमः प्रणयनीयस्य। वृक्षनियम [3]इत्युपदेशः। अग्नेरधस्ताद्धारणमुपयमनम्।

[इध्मसंख्यानियमविरहोपपत्तिः]

(वृ) **इध्मस्य–नीयस्य**—अयमभिप्रायः—प्रणयनीयमिध्ममादीप्येतीध्मशब्दश्रवणाद्दर्शपूर्णमासेध्मवृक्षसंख्याप्राप्तिशङ्कायामुच्यते अप्राकृतकार्यत्वान्न तद्धर्मा इति।

[उपदेशपक्षाशयः]

**वृक्षनि–देशः**—इध्मशब्दात्तद्धर्मप्राप्तेः। संख्यायास्त्वाघारसमिदादिभेदेन विनियोगविशेषादिह तदभावात् संख्यानिवृत्तिः। वृक्षनियमस्तु संभवादविरोधाच्च भवत्येवेति। अस्मिन् पक्षे अग्निषु महत इध्मानादधातीत्यत्रापि वृक्षनियमः। प्रणयनीयमाश्वत्थमिध्ममादीपयतीत्यत्रापि संख्याया विरोधात् वृक्षस्य च कण्ठोक्तत्वात् परिमाणानियमः।

---

[1] क्षंप्र. [2] प्रणीयमानमिध्ममादीप्य प्रणयनार्थमिन्धनं ज्वलयित्वा। सिकताभिरुपयम्येति–यस्मिन् पात्रेऽग्निरुद्धरिष्यते तस्याधस्तादुपयमनानुगुणाः सिकताः कल्पयित्वेत्यर्थः। दीप्तस्यानुद्यतस्योपयमनासंभवादुत्तरत्रोद्यमनवचनाच्च। व्यक्तोक्तं चैतदग्न्याधेये यथा प्रणयनीयमिध्ममादीपयति सिकताश्चोपयमनीरुपकल्पयते तमुद्यच्छतीति–(रु).
[3] मउपदेशः–ख. ग. ङ.

[इध्ममन्त्रस्य नातिदेशः]

ननु इध्मशब्देन इध्ममन्त्रातिदेशः ? नैतत्; शुल्बे इध्मं संभरतीति संभरणे विनियोगान्मन्त्रस्य; अत्र चार्थलोपात् संभरणनिवृत्तेः। न हि संभरणार्थतया पूर्वमुपादाय निधानम्।

(सू) [1] उद्यम्याग्निमाहवनीय उद्यतहोमं जुहोति यत्ते पावक चकृमा कच्चिदागः पूर्वो यत्सन्नपरो भवासि। घृतेन त्वं तन्वं वर्धयस्व मा मा हिंसीरधिगतं पुरस्तात्स्वाहेति ॥ ५ ॥ १७ ॥ १५५३ ॥

[उद्यमनप्रकारः तत्र पक्षान्तरं उद्यतहोमेऽग्निश्च]

(भा) प्रैषमुक्त्वाऽऽहवनीयात् ज्वलन्तमिध्ममुद्गृह्णाति तदुद्यमनम्। केचिद्गृहीत्वाऽऽहवनीयात् सिकतासु स्थापयित्वा प्रैषमुक्त्वा उद्यमनमुत्क्षेपणं कुर्वन्ति तस्याग्नेः। यस्माद्गृहीतोऽग्निः तस्मिन्नुद्यतहोमः।

[उद्यतहोमाग्नौ प्रमाणम् आहवनीयग्रहणफलं च]

(वृ) यस्माद्गृ–तहोमः—पूर्वो यत्सन्नपरो भवासी[2]ति अपरभूते आयतनगतेऽग्नौ होमः। आहवनीयग्रहणमुद्धृताग्निनिवृत्त्यर्थम्। इदानीमस्याहवनीयत्वाभावादतिमुक्तिहोमान्ते एष पशुबन्धस्याहवनीय इति वक्ष्यमाणकाले[3]ऽस्याहवनीयत्वात्।

(सू) प्रथमायां त्रिरनूक्तायामुपय [4]मनीभिरुपयम्य हरति ॥ ६ ॥ १८ ॥ १५५४ ॥

---

[1] उद्यम्याग्निं आदीप्तमिध्ममाहवनीयादुद्धृत्येत्यर्थः। केचित्तु अनन्तरोक्तेनादीपनेनोद्धरणं लक्षयित्वोद्यम्येति तस्यैवाग्नेरुत्क्षेपणमात्रमुक्तमित्याचक्षते: तदयुक्तम्; मुख्यार्थोपपत्तौ जघन्यवृत्त्याश्रयणायोगात् उद्यतहोमसमाख्यानाच्च। तस्य चाहवनीयादौत्तरवेदिकोद्धरणं निमित्तम् नतूत्क्षेपणं पूर्वो यत्सन्नपरो भवासीति लिङ्गात्। तस्माद्यथोक्त एव सूत्रार्थः (रु). [2] सीतिलिङ्गात् अविहृत आहवनीयगतेऽग्नौ होमः। घ. [3] कालेऽस्या–ख. ग. [4] उपयमनीभिः सिकताभिरुद्यतमग्निम् (रु).

[सूत्रेऽनुक्तावधारणांशपूरणम्]

(भा) उपयम्यैव हरति न ता अपनयत्यग्नेः ।

(वृ) उपय–त्यग्नेः–सिकताभिरुपयम्येत्युपयमने सिद्धेऽपि उपयमनी-

[सिकतानपनयनसिद्धिः]

भिरुपयम्य हरतीति पुनर्विधानात् उपयमनप्रभृत्यनपनयनं सिकतानाम् ।

(सू) ऊर्णाम्रदन्तं प्रथमस्सीद योनिमिति होतुरभिज्ञायाग्ने बाधस्व विमृधो नुदस्वापामीवा अपरक्षांसि सेध । अस्मात्समुद्राद्बृहतो दिवो नोऽपां भूमानमुपनस्सृजेह । यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आत्वा वसूनि पुरुधा विशन्तु । दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्ग्धीह यज्ञः प्रत्यष्ठादिति संभारेषु प्रतिष्ठाप्य ॥ ७ ॥ १९ ॥ १५५५ ॥

षष्ठी खण्डिका

———

[अभिज्ञानकर्म]

(भा) अभिज्ञाय ज्ञात्वा एतं शब्दमुक्तं होत्रा ।

(सू) अग्नेः पुरीषमसीत्युत्तरत उपयमनीर्न्युप्य मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि । अग्ने मनुष्वदङ्गिरो देवान् देवायते यजेत्युपसमिध्य द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधस्सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति ॥ १ ॥ २० ॥ १५५६ ॥

[सप्तवतीपदप्रयोजनम्]

(भा) सप्तवत्येति ज्ञानार्थम् ।

[सप्तवतीपदप्रयोजनोपपत्तिः]

(वृ) सप्त–र्थम्—[1] सप्त ते अग्ने [2] इति पूर्णाहुतिमिति विनियोगादेव

1 उपसमिन्धनं-बलवत्करणम् । 2 इति जुहोतीत्येतावता सिद्धे सप्तवत्येतिज्ञा–घ.

सप्तवत्त्वे सिद्धे सप्तवत्येति पुनर्वचनं सप्तवतीति ज्ञानार्थम्। यत्र पूर्णाहुतिस्तत्र द्वादशग्रहणम्। द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधस्सप्त जिह्वा इति सप्तवत्या जुहोतीत्येतावतैव सिद्धे पुनः पूर्णाहुतिमिति वचनात्॥

(सू) अग्निर्वायुरादित्यो विष्णुर्यज्ञं[1] नयतु प्रजानन्
मैनं यज्ञहनो विदन् देवेभ्यो यज्ञं प्रब्रूतात्
प्रप्रयज्ञपतिं तिर स्वाहेति चतस्रोऽतिमुक्तीर्जुहोति॥ २॥ २१॥ १५५०॥

[सूत्रेऽनुषञ्जनीयं पदम्]

(भा) अग्निर्यज्ञमित्यनुषङ्गः।

(वृ) अग्नि—ङ्गः—देवताशब्देभ्यः परस्ताद्यज्ञं नयतु प्रजानान्नित्यनुषङ्गः। अतिमुक्तीरितिज्ञानार्थम्।

(सू) [2]एष पशुबन्धस्याहवनीयो यतः प्रणयति
स गार्हपत्यः॥ ३॥ २२॥ १५५८॥

[अस्याहवनीयस्यापेक्षिकं तत्त्वम्]

(भा) पशुबन्धस्यैवाहवनीयः। यास्तु प्रायश्चित्तेष्टयो हिरण्य[3]नाशादौ तासामाहवनीयो न भवति। परिसमाप्ते ता भवन्ति न मध्ये

[उपदशन्यायपक्षौ पशुबन्धात्परं अग्नेरसमारोहश्च]

इत्युपदेशः। [4]दोषादनन्तरं मध्येऽपि भवन्तीति [5]न्यायः। पशुबन्धग्रहणात् वृत्ते पशुबन्धे न समारोप्यत औत्तरवेदिकः॥

[पशुबन्धं प्रत्येवाहवनीयत्वोक्त्युपपत्तिः]

(वृ) पशुबन्ध—पदेशः—अस्यार्थः; एष आहवनीय इत्येतावत्युक्तेऽपि

---

[1] यज्ञं नयत्वित्यादेरनुषङ्गस्सर्वत्र (रु). [2] अतः परस्मिन्नेवाहवनीयकर्माणि क्रियन्ते। तयोर्नो त्वाहवनीये गार्हपत्यकर्माणि। (रु). [3] शाद्याः--क. ख. ग. ङ. छ. ज. [4] पानन्तरम्–छ. [5] प्रायः? छ.

प्रकरणात्पश्वर्थत्वे सिद्धे पशुबन्धग्रहणात्पश्वर्थ एवायमाहवनीयः। अतस्तदनङ्गभूतहिरण्यनाशेष्ट्यादीनामयमाहवनीयो न भवति। [1] तास्तु समाप्ते पशुबन्धे पृथक्प्रणीय कर्तव्याः। मध्ये निमित्तोपजननेऽपि स्वार्थ आहवनीयाभावात्।

[उपदेशपक्षस्य प्रथमोक्त्याशयः]

सर्वत्रोपदेशपक्षः परस्तान्न्यायपक्षस्य भवति अत्र तु पुरस्तादुपदेशमतोपन्यासः तस्या[2]भासत्वं ज्ञापयितुम्। तथाहि;—न हिरण्यनाशेष्ट्या निषेधात्पशुबन्धग्रहणम[3]र्थवद्भवति। विवा एतस्य यज्ञश्छिद्यते यस्य यज्ञे प्रततेऽन्तरेतामित्यनेनैव[4] सिद्धेः।

[न्यायपक्षाभिप्रायः]

**दोपाद्-न्यायः**—अयमभिप्रायः—अनन्तरं दोषात्कर्तव्यानीति निमित्तानन्तरमेवाधिकारसम्भवात्तदानीमेव कर्तव्यानीति तन्त्र [5]समापनेन परतन्त्रप्रसाङ्गि[6]ताभावात्।

[अग्नेरसमारोपेऽवसरः]

**पशु-दिकः**—पशुबन्धग्रहणं समाप्ते पशुबन्धे गतश्रीणां पुनर्गृहाभिगमने औत्तरवेदिकस्य न समारोहणमित्येवमर्थम्।

**(सू.) [7] प्रणीते चेदग्निहोत्रकाले एतास्मिन्नेवाग्निहोत्रं जुहोति ॥ ४ ॥ २३ ॥ १५५९ ॥**

---

[1] तासु? घ. [2] स्याभ्यास.-घ. छ. [3] णमनर्थ.—ख. ग. वासिद्धे? ख. ग. [4] समानेन.-ग. समासेन-ग. [5] सङ्गालाभात्-ख. ग. सङ्कलाभावात्? -छ. [6] एष पशुबन्धस्याहवनीय इति वचनान्मानिवृत्तमस्मिन्नग्निहोत्रमित्यारम्भः नौत्तरवेदिकेऽग्निहोत्रं विद्यत इति कल्पान्तरकारमतनिरासार्थं च। [7] प्रणीते सत्यौत्तरवेदिके यद्यग्निहोत्रं प्राप्तकालं स्यात्तदेतस्मिन् औत्तरवेदिक एव जुहुयात्। श्रपयेच्छालामुखीये यतः प्रणयति स गार्हपत्य इत्यत्रात एव न्यायात् (रु).

[प्राप्तकालाग्निहोत्रहोमविशेषेऽग्निः हविश्रपणेऽग्नौ मतिभेदश्च]

(भा) एतस्मिन्नेव प्रणीत औत्तरवेदिकेऽग्निहोत्रहोमः । आहवनीयद्वित्वाभावात् । श्रपणं चाग्निहोत्रस्य शालामुखीये न क्रियते । सत्यपि गार्हपत्यद्वित्वे प्राजहितस्य विद्यमानत्वात् । उपदेशश्शालामुखीयो गार्हपत्यार्थ इति । केचित्तु शालामुखीयमेवाहवनीयार्थे कुर्वन्ति । प्राजहितं च गार्हपत्यार्थे । पशुबन्धस्यैतावग्नी नाग्निहोत्रस्येति ।

[औत्तरवेदिके प्रणीताग्नावेवाग्निहोत्रहोमहेतुः]

(वृ) एतस्मि–होमः—तस्य स्वकाल एव कर्तव्यत्वात् ।

[आहवनीये होमायोगहेतुः]

आहव–द्यमानत्वात् — तस्याग्निहोत्रश्रपणसाधनतया पूर्वक्लृप्तत्वात् ।

[गार्हपत्यद्वित्वोपपत्तिः]

यतः प्रणयति स गार्हपत्य इति पश्वर्थतया गार्हपत्यांशसंक्रमणविधानम् ।

[उपदेशपक्षाशयः]

उपदे–र्थ इति—यतः प्रणयति स गार्हपत्य इत्यविशेषश्रवणात् पश्वर्थाग्नि[1]प्रसङ्गित्वाद[2]ग्निहोत्रस्य एतस्मिन्नेवाग्निहोत्रं जुहुयादिति अग्निहोत्रस्थानापन्नस्य दीक्षितव्रतस्य गार्हपत्ये श्रपणविधानाच्च गार्हपत्ये दीक्षितस्य व्रतं श्रपयतीति ।

[केचित्त्वित्युक्तपक्षाशयः]

केचित्–त्यार्थे—पूर्वक्लृप्तयोरेव विद्यमानत्वात् ।

किञ्च ;—

पशुबन्धस्यैतावग्नी—शालामुखीयौत्तरवेदिकौ ।

[अत्र अग्निहोत्रविधिफलम्]

नाग्निहोत्रस्य—तत्र प्राप्त्यर्थमेतस्मिन्नेवाग्निहोत्रं जुहुयादिति

---

[1] प्राप्त–ख. ग. [2] दाहवनीयस्य–छ.

[सूत्रे भाष्ये चैतस्मिन्नित्यस्यार्थविशेषः तत्फलं च]

एतस्मिन्नेव पश्वर्थ एवापश्वर्थेऽपीति अतो न प्राप्तबाधः दार्शपौर्ण-

[अग्निहोत्रहोमोत्र न वक्तव्य इति शङ्का परिहारः]

मासिकेऽग्नौ अग्निहोत्रस्य दृष्टत्वात् न प्राप्तिर्वक्तव्येति चेन्न; न ह्यवकल्पते यदुत्तरवेद्यामग्निहोत्रं जुहुयादिति निषेधात् प्राप्तिर्वक्तव्यैव।

(सू) [1]एवमन्यत्र विप्रकान्ते तन्त्रे ॥ ५ ॥ २४ ॥ ॥ १५६० ॥

[शाखाहरणकाले मतिभेदः]

(भा) प्रारब्धे तन्त्रेऽग्निहोत्रं हूयते। इष्टिपशुदर्विहोमोखासम्भरणादिषु शाखापूर्वगृहीता। इदानीमुपदेशः।

(सू) इध्माबर्हिराहरति ॥ ६ ॥ २५ ॥ १५५८ ॥

बर्हिः [2]प्रस्तरणम् इध्मः पलाश [3]शातनमुपवेषकरणं [4]पवित्रस्य च पशुं हव्यमित्यूहः। नतूपदेशः। समूहनादिगोमयालेपनान्तं इमौ पर्णमिति शाखापवित्रनिधानम् अग्निपरिस्तरणमिति कर्मक्रमः। पुरोडाशविकारः पशुः। यावदुक्तं सान्नाय्यविका[5]रत्वादित्युपदेशः।

(सू) त्रयोविंशतिदारुरिध्म आश्ववालः प्रस्तरः प्रस्तर ऐक्षवी विधृती कार्ष्मर्यमयाः परिधयः ॥ ॥ ७ ॥ २६ ॥ १५६१ ॥

सप्तमी खण्डिका.

---

[1] एवमन्यस्मिन्नपीष्ट्यादितन्त्रे विप्रकान्ते—प्रक्रम्यापरिसमाप्ते प्राप्तकालमग्निहोत्रं तस्यतस्याहवनीय एव जुहुयात्। भरद्वाजस्त्वाह—विप्रकान्ते कर्मण्यग्निहोत्रकाल आगच्छेत्तस्याप्य जुहुयादित्याश्मरथ्यः काल एव जुहुयादित्यालेखन इति (रु). [2] अथ बर्हिराहरणादि प्रतिपद्यते समानमाकुम्भ्यालेपनात्। तत्र वेदो वेदिश्च प्रागेव कृतौ। शाखापवित्रानुमन्त्रणे तु पशुं हव्यमित्यूहः तथास्येमौ पर्ण चेति। निधानं प्रकृतावेव व्याख्यातम्. [3] प्रशातन--ङ. छ. [4] पवित्र निधान--ग. ङ शाखापवित्रनि—घ. [5] रमित्य—ख. ग. [6] रत्वमित्यु—क. ङ. घ.

आश्ववालः काशमयः । ऐक्षवी—इक्षुपर्णी[1] । काश्मर्य-श्रीपर्णी ।

इति आपस्तम्बश्रौतसूत्रेषु धूर्तस्वामिभाष्ये
सप्तमे प्रश्ने द्वितीयः पटलः

---

[पूर्वगृहीताशाखेतिपक्षे हेतुः]

(वृ) प्रारब्धे–गृहीता — अन्वाधानकार्यकरत्वादिष्टेः तदनन्तरं शाखाहरणं व्रतोपायनं च ।

[इदानीं शाखाहरणमिति पक्षाशयः]

इदानीमुपदेशः—अन्वाधानादूर्ध्वं बर्हिषः पुरस्ताच्छाखा-हरणकालः । तत्रान्वाधानप्रत्याम्नायेष्ट्यनन्तरं यूपकर्मोपदेशात् बर्हिषः पुरस्ताच्छाखाहरणं युक्तमिति ।

[विवक्षितपवित्रसिद्धिः]

पवित्रस्य च—करणम् । त्रिवृद्दर्भमयमित्यस्य ।

[ऊहस्थलं पक्षान्तरं च]

पशुं–त्यूहः—त्रिवृत्पलाशइत्यस्मिन् याजमाने ; न तूपदेशः । प्रकृतौ दध्नोऽहविष्ट्वात् पयो हव्यमिति पयोग्रहणस्यापि विवक्षितत्वात् ।

[पशोःपुरोडाशविकारत्वे हेतुः]

पुरो–पशुः—कठिनत्वात् ।

यावदु–देशः—कुम्भीं शाखापवित्रम् यस्त आत्मेत्यादि चेत्युपदेशः । अन्यत्रैन्द्राग्नविकारः ।

[आश्ववालपदार्थे उपदेशपक्षः]

अश्व–यः—येन समूहनं क्रियते स इत्युपदेशः ।

इति श्रीरामाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ
सप्तमे द्वितीयः पटलः.

---

[1] ऐक्षवी—इक्षुशलाके इति भरद्वाजः (रु).

(सू.) **अग्नीन् परिस्तीर्य पाणिप्रक्षालानादि कर्म प्रतिपद्यते ॥ १ ॥ १ ॥ १५६१ ॥**

(भा) परिस्तरणमिहोपदेशेन ॥

[परिस्तरणे व्यवस्थादि ; इहेत्यस्य सावधारणत्वं च]

(वृ) **परि–शेन**—व्यहकालत्वेऽपि न सायं परिषेचनम्। इहैवोप-[1]देशात् ॥

(सू.) **[2]यथार्थं पात्राणि प्रयुनक्ति ॥ २ ॥ २ ॥ १५६२ ॥**

[पात्रसादनस्याभ्यनुज्ञा तत्र मतिभेदश्च]

(भा) यथार्थं पात्राणीति यत्रोच्यते तत्रार्थलक्षणान्यन्यान्य[3]पि साद्यन्त इति केचित्। यैः पात्रैरर्थः तान्यासाद्यन्ते न दृषदादीन्याहननार्थम्। दशत्वपूरणार्थं वा ॥

[यैः पात्रैरित्याद्युक्तस्यस्वपक्षत्वम्]

(वृ) **इति केचित्**—स्वपक्षस्तु—

[आसादनोपाधिः]

**यैः पा–र्थं वा**—यैर्यैः पात्रैरर्थस्तानितान्यासाद्यन्ते न दृष-दुपलादीन्याहननार्थमिति संस्कारार्थं वा। यथार्थमिति दृष्टकार्याणां प्रयोगो नादृष्टार्थानामिति। तेषां प्रतितन्त्रं संस्कार इति प्रयोजनवतां प्रयुक्तानामेव संस्का[4]रार्थः।

[संस्कारार्थत्वफलम् असतिफले तत्तन्निवृत्तिः]

अतः पेषणप्रयुक्तदृषदुपलासमाहननं रक्षोहननार्थं न तु तत्प्रयोजक-मिति दृषदादिनिवृत्तिः। अत एव पिष्टे पेषणमन्त्रा इत्यस्मिन् प्रयोगे उलूखलमुसलदृषदादिप्रयोगनिवृत्तिः। तथा दोहनमन्त्रा इत्यत्र दोग्धुर-

---

[1] देशत्वात् ? ख. ग. [2] यथार्थं–यैरर्थः प्राकृतेषु यैश्चान्यैरागन्तुभिरित्यर्थः (६). [3] न्यप्यासा-ख. ग. ङ. [4] रोऽर्थः-ख. ग. घ.

भावात् प्रैषप्रतिवचनानाम्; छिन्ने छेदनमन्त्रा इत्यत्र बर्हिषि असिदाद्यभावात् तत्संस्काराणाम्; यूपे स्थाण्वाहुतेः मार्तिके चोखादौ अश्वगर्दभादीनामभावात् तत्संस्काराणां अभिधान्यादीनां च निवृत्तिः। तदेतत्सर्वं भगवता भरद्वाजेनोक्तम्। छिन्ने छेदनमन्त्रा इति।

[भारद्वाजसूत्रे पदप्रयोजनम्]

छिन्ने मन्त्रा इत्येतावतैव सिद्धे छेदनमन्त्रा इति विशेषणं बर्हिषि विशाखेष्वारम्भणप्रभृति पृथिव्यास्संपृचः पाहीति निधानान्ता एव मन्त्राः प्रयोक्तव्याः नान्य इति। ननु एक एव छेदनमन्त्रः स एव केवलं प्रयुज्यताम्? न; छिन्ने इत्येकवचनेनोपादाय छेदनमन्त्रा इति बहुवचनेन मन्त्रसंबन्धनात् तदसाधारणानां मन्त्राणां निवृत्तिः। एवमन्यत्र।

[संख्यापूरकत्वपक्षः]

दशत्वपूरणार्थं वा—दशापराणि दश पूर्वाणीति वचनाद्वृषदादीन्यपि प्रयोज्यानीति ॥

(सू.) [1] स्फ्यमग्निहोत्रहवणीं वसाहोमहवनीं द्वितीयां जुहूं पृषदाज्यधानीं द्वितीयामुपभृतं द्वे आज्यस्थाल्यौ हृदयशूलमसिं कुम्भीं प्लक्षशाखां शाखापवित्रं कार्ष्मर्यमय्यौ वपाश्रपण्यौ द्विशूलामेकशूलां चौदुम्बरं मैत्रावरुणदण्डमास्यदघ्नं चुबुकदघ्नं वा रशने च ॥ ३ ॥ ३ ॥ १५६६ ॥

---

[1] स्फ्याग्निहोत्रहवण्योग्रहणं प्रदर्शनार्थम्। द्वयं तावदपरत्रार्थवशात्प्रयोज्यम्। एवं स्रुवाद्यपि पूर्वत्रेति। तत्र वसाहोमहवन्यादीनां जुह्वादिसमाख्यानाद्वृक्षनियमस्तावद्व्याख्यातः। तथा प्राकृतैर्जुह्वादिभिरेकवल्करणेनैषां द्वन्द्वप्रयोग इति सिद्धं भवति। हृदयशूलादीनां पाठक्रमेणैव द्वन्द्वता। निशातमग्रं शूलमित्युच्यते। हृदयश्रपणार्थं शूलं यस्य काष्ठस्य तद्धृदयशूलम्। असिः स्वधितिः। स च द्विधारः स्वधितेरन्यतरां धारामिति लिङ्गात्। चुबुकमास्याधोभागः। रशने-रज्ज्वौ ॥ (रु).

[सादने द्वन्द्वत्वम् स्फ्यस्य प्रकृतिविकृतिभेदेन भिन्नसाहित्यद्वन्द्वम्]

(भा) द्वन्द्वं प्रकरणधर्मः। अतोऽग्निहोत्रहवण्या सह स्फ्यस्य द्वन्द्वम्। प्रकृतौ तु कपालैः।

[द्वितीयजुहूपयोगः]

द्वितीया जुहूः पालाशस्य। जुह्वा व्यापृतत्वे च तया होमो न स्रुवेण। अग्नावग्निश्चरति प्रविष्ट इत्यत्र स्रुवनियमात्। एकार्थानां चैकता कपालवत्।

[विवक्षितद्वन्द्वानि]

अतः स्रुवोऽसिर्जुहूद्वयं च द्वन्द्वम्। उपभृतौ ध्रुवा च वेद आज्यस्थालीद्वयं च समवत्तधानीमुपवेषश्च वपाश्रपण्यौ प्लक्षशाखा हृदयशूलं कुम्भी शाखा[1]पवित्रं च द्वन्द्वम्।

[शाखादिपदार्थानां कुम्भीधर्मता]

शाखा-हविर्धारणार्था। कुम्भी-पच्यमानाङ्गधारणार्था। पक्व-धारणं प्लक्षशाखा करोति। अतस्तेषां कुम्भीधर्माः।

[सान्नाय्यधर्मता मांसस्य]

पशुप्रभवं सान्नाय्यं[2] मांसं च। अतस्सान्नाय्यधर्मा [3]मांसस्य काल-[4]सामान्यात्।

[पशोः पयोधर्माः]

प्रातर्दोहविकारः पशुः, अतः पयोधर्माः।

[तत्तत्सादने व्यवस्थापकम्]

मैत्रावरुणदण्डरशने च [5]द्वन्द्वम्। न क्रमेण सादनार्थः पाठः। एतान्यासाद्यानीति विधीयन्ते। यद्यस्य स्थाने तत्तेन सह साद्यते।

[तत्रोपदेशपक्षस्तद्धेतुश्च]

उपदेशो हृदयशूलादीनां पाठक्रमेण सादनम्। हृदयशूलोत्तर-कालमसेः पाठात्। इतरथा स्रुवादनन्तरं पठ्येत। अतः पाठक्रमेण

---

[1] पवित्रेण--ख. ग. [2] तथा मांसं च--घ. [3] मांसे--घ. छ. [4] साम्यात्--ङ. [5] द्वन्द्वम्। क्रमेण--ख.ग.

सादनमिति। द्विशूला—द्वे तीक्ष्णे शूले यस्याः सा। [1]चुबुकं—हनुः। [2]आस्यं—तुण्डम्।

[द्वन्द्वताहेतुः]

(वृ) द्वन्द्वं-र्मः — स्फ्यादीनां कपालादिभिरेव द्वन्द्वनियमो नास्ति, किंतु [3]प्रकरणे कार्यार्थतया प्रयुक्तानां यथाक्रमं द्वन्द्वता।

अतो-द्वन्द्वम्—द्वन्द्वधर्मो भवेत्।

प्रकृ-लैः—स्वमते।

द्विती-शस्य—जुहूशब्दप्रयोगात्।

जुह्वा व्या-नियमात्—पशुप्रकरणे।

[एकतरव्यवहारनिदानम्]

एकार्था-वत्—एकावान्तरकार्यार्थानां जुहूनामपि कपालानामिवैकत्वं द्वन्द्वे।

अतः स्रु-द्वन्द्वम्—पच्यमानधारणं वपाश्रपण्यौ हृदयशूलं च कुर्वन्ति।

[वपाश्रपण्या सह द्वन्द्वम् तत्र हेतुश्च]

पक्वधा-धर्माः—वपाश्रपण्यादीनाम्। तेषां शाखापवित्रेण द्वन्द्वम्। कुम्भीं शाखापवित्रमिति प्रकृतौ निर्देशात्।

[कालसामान्योपपत्तिः]

कालसामान्यात्—दिवाकर्तव्यत्वात्।

[पयोधर्मत्वं पाक्षिकम्]

प्रात-धर्मा—सान्नाय्यविकारपक्षे।

[सह सादने हेतुः]

मैत्रा-साद्यते—तत्कार्यकरत्वात् क्रमेण सादनम्।

---

[1] रुद्रदत्तस्तु अमरकोशमनुससारेति भाति। [2] इदं तु—ङ.पुस्तकमात्रे न दृश्यते, [3] प्रकरणकार्थतया—घ.

[भाष्यस्थापत्तौ निदर्शनम्]

उपदेशो–पठ्येत—द्वितीयां जुह्वमितिवत्।

(सू) पवित्रे [1] कृत्वा यजमान! वाचं यच्छेति संप्रेष्यति॥ ॥४॥४॥१५६७॥

[पवित्रकरणम् यज्ञयोगस्तत्रोपदेशमतं च]

(भा) पवित्रकरणं अस्मिन् कालेऽध्वर्युणा पात्राभिमर्शने कृते यज्ञयोगः। उपदेश औषधार्थो यज्ञयोग इतीह न [2] कुर्वन्ति।

[यज्ञयोगकालोक्तिहेतुः]

(वृ) पवित्र–योगः— निर्वपणाभावात्।

[उपदेशपक्षाशयः]

[[3]उपदे–र्वन्ति—तदुदित्वा वाचं यच्छति अथ यज्ञं युनक्ती-त्यग्निं होतारमित्यनेन संबन्धात् निर्वापावघातमध्यवर्तित्वाच्च औषधार्थो यज्ञयोग इति।]

(सू) वाग्यतः पात्राणि[4] संमृश्य प्रोक्षणीस्संस्कृत्य ब्राह्मणमामन्त्र्य पात्राणि प्रोक्षति अत्र वाचं विसृजते। स्फ्यमादायोत्तरं परिग्राहं परिगृह्य दर्शपूर्णमासवत् संप्रेष्यति आज्येन दध्नोदेहीति संप्रैपान्तं नमति॥५॥५॥१५६८॥

---

[1] सोमविधे पशाविति भावः। इष्टिविधे तु पवित्रे कृत्वा प्रणीताप्रणयनं वक्ष्यति (रु). [2] कर्तव्यम्–ख. ग. क्रियते–घ. छ. [3] [एतच्चिह्नद्वयान्तरालवर्तिग्रन्थः –ख. ग. छ. पुस्तकेषु न दृश्यते।?] [4] ऐष्टिकैः पदार्थान्तरैरसंस्कारार्थमनुमन्त्रणम्। तत्र स्फ्याग्निहोत्रहवणीसंमर्शने स्फ्यप्रोक्षणे च संमर्शनप्रोक्षणमन्त्रये-र्द्विदेवकवदेवोहः। तूष्णीं स्फ्यमादायोत्तरपरिग्राहादि। संप्रैषं तु केचित्स्रुवं च स्वधितिं चेत्यपि कुर्वन्ति। स्वधितेरपि संमार्गवचनात्। स्रुवस्थानापन्नत्वाच्च तदयुक्तं; दर्शपूर्णमासवत्संप्रेष्यतीत्यतिदिश्य संप्रैपान्तं नमतीति वचनात्। चातुर्मास्येषु पशुवत्संप्रैष इत्यतिदेशात् प्राशित्रहरणवदसंप्रेषितस्यापि संमार्गवचनोपपत्तेश्च (रु).

[उत्तरपरिग्राहप्रकारे मतिभेदः]

(भा) [1] स्फ्यमादाय तूष्णीं उत्तरः परिग्राहो विपरीतः। केचित् परिगृह्योत्तरपरिग्राहं दर्शपूर्णमास[2]वत्कुर्वन्ति धाअसीतीत्यादि।

[असंप्रैषपक्षासिद्धिः]

दर्शपूर्णमासवद्वचनादसंप्रैषपक्षोऽपि लभ्यते।

[परिग्राहवैपरीत्ये हेतुः]

(वृ) स्फ्यमा–रीतः—स्तम्बयजुरर्थत्वादादानमन्त्रस्य।

[सूत्रवाक्यावधिः]

उत्तरं परिग्राहं परिगृह्य दर्शपूर्णमासवदिति सूत्रच्छेदः।

[दर्शपूर्णमासवदित्येतदाशयः]

अत्र दर्शपूर्णमासवद्वचनं धाअसीत्यादिप्राप्त्यर्थम्। इतरथा संप्रेष्यतीत्येतावत्युक्ते परिग्रहणानन्तरं संप्रैषस्स्यादुपसद्वदिति शङ्कापरिहारार्थम्।

[दर्शपूर्णमासवदितिपदस्याफलत्वपक्षः]

दर्शपूर्णमासवत्संप्रैष्यतीति नैवमन्वयः संप्रैषान्तं नमतीति प्राप्तसंप्रैषविकारोपदेशादेव दर्शपूर्णमासवत् संप्रैषः प्राप्त एवेति [3]केचित्।

[स्वपक्षः]

स्वपक्षस्तु दर्शपूर्णमासवत्संप्रेष्यतीत्यन्वयः।

[असंप्रैषपक्षे इष्टोपपत्तिः]

दर्शपू–भ्यते—धाअसीत्यादेस्तु दर्शपूर्णमासधर्मातिदेशादलुप्तकार्यत्वाच्च प्राप्तिः।

(सू.) स्रुचां संमार्जनकाले स्रुवं समृज्य तस्यावृता [4]स्वधितिम् ॥ ६ ॥ ६ ॥ १५६९ ॥

[स्वधितेस्स्रुवधर्मासिद्धिः प्रसङ्गात् पूर्वोक्तप्रैषे उपदेशपक्षः]

(भा) स्रुवस्थानापत्तेः स्रुवं च स्वधितिं च ; स्रुवं च स्रुचश्च संमृड्ढि पत्नीं

---

[1] तूष्णीं स्फ्यमादायोत्तरः–ख. ग. घ. [2] वत्करोति धा–ख. ग.
[3] केचित्तु दर्श–छ. [4] स्वधितिरपि अवदानार्थत्वात् स्रुववत्संस्कारमर्हतीति भावः (रु).

संनह्याज्येन दध्नोदेहीति । आज्यदधिभ्यामुदेहीति न भवत्यूहः । उपदेशो दर्शपूर्णमासवदविकृतस्संप्रैषः । आज्येन दध्नोदे[1]हीत्यसंस्कारपक्षेऽ[2]पि । स्रुवेणावदानं सान्नाय्यस्य । स्वधितिना पशोः । अतः स्वधितेः स्रुवधर्माः । आवृत्-क्रिया ।

[स्रुवधर्मसिद्धेर्निर्देशासिद्धत्वम्]

(वृ) स्रुवस्थाना-हीति—अवदानसाधनत्वात् स्रुवादनन्तरं निर्देशः स्रुवं च स्वधितिं चेति । दध्नोऽपि ग्राह्यत्वादाज्येन दध्नोदेहीति दधिनिर्देशोऽपि प्राप्त एव । सूत्रकारपाठस्येदं प्रयोजनम् ।

[निषेध्योहप्राप्तिः]

आज्यदधि-त्यूहः—उभयनिर्देशे समासोहस्यापि प्राप्तत्वात् ।

[अविकृतसंप्रैषलाभहेतुः]

उपदे-संप्रैषः—दर्शपूर्णमासावद्वचनात् ।

आज्येन-क्षेऽपि—नियतः सूत्रकारोपदेशादित्युपदेशः ।

आवृत् क्रिया—संस्कारः स्वधितेः ।

(सू) जुहूवद्वसाहोमहवनीमुपभृद्वत्पृषदाज्यधानीम् । आज्यं निरुप्य दधि निर्वपति ॥ ७ ॥ ७ ॥
॥ १५७० ॥

[जुहूपभृद्धर्मप्राप्तिहेतुः अतिदेशोपपत्तिश्च]

(भा) वसा—पशुरसः । [3]तस्या होमार्था वसाहोमहवनी । अप्राकृतकार्यापन्नत्वान्न प्राप्नुवन्ति जुहूधर्माः । व्यापृतायां तया होमः । प्राकृता ह्रूयन्ते प्रायश्चित्ताद्याः । अतो जुहूधर्माः । जुह्वा तुल्यं [4]जुहूवत्, सिद्धत्वात्सर्वस्यापवर्गोऽपि संमार्गस्य जुहूवत् । उपभृता तुल्य-

---

[1] हीति संस्कार-ख. ग. [2] पि भवतीत्युपदेशः-घ. छ. [3] तस्या वसाहो-क. [4] जुहूवत्सर्वस्या-क.

मुपभृद्वत् । पृषदाज्येनानुयाजाः प्रकृतौ चाज्येन तत्पृषदाज्यं धारयतीत्युपभृद्धर्माः ।

[वसाहोमशब्दस्य पशुरसार्थत्वम्]

(वृ) वसाप–हवनी—वसाहोम इत्यपि पशुरसस्याभिधानम्; वक्ष्यति वसाहोमं गृह्णातीति ।

अप्राकृ–धर्माः—तथाऽपि ;—

[प्रकृतौ वसाहोमहवन्युपयोगविवरणम्]

व्यापृतायां–धर्माः—व्यापृतायां जुह्वां तया वसाहोमहवन्या होमा हूयन्ते प्राकृताः प्रायश्चित्ताद्याः । वसाहोमहवनीं द्वितीयां जुहूमिति तद्धर्मप्राप्तिनिर्देशात् तत्कार्यमनया कर्तव्यमिति व्यापृतायां जुह्वां तस्याः प्राप्तिः । व्यापृतायां स्रुवेणेति सिद्धेऽपि प्रहृत्य स्रुवेणाभिजुहोतीति पुनस्स्रुवनियमाच्च । अतो जुहूधर्मास्तत्कार्यकरतया प्राप्ताः ।

[अपवर्गेऽपि जुहूवत्त्वोपपत्तिः]

जुह्वा–हूवत्—द्वितीयां जुहूमिति निर्देशात् सर्वजुहूधर्मप्राप्तावपि संमार्गकाले जुहूवदितिवचनात् अपवर्गोऽपि जुहूवदेव । अग्रैरन्तरतः प्राचीमित्यादि जुह्वां यथाऽपवर्गः कृतः संमार्गस्य पार्श्वेऽग्रे वा ।

तथैव—

[पृषदाज्यधानीशब्दार्थः]

उपभृ–भृद्धर्माः—[1] पृषदाज्यधान्याम् । तदाज्यं पृषत्तागुणविशिष्टं धारयतीति पृषदाज्यधानीति तस्यामुपभृद्धर्माः । [2] उदगपवर्गताऽपि ।

---

[1] इदं पदं ख. ग. पुस्तकयोः न दृश्यते. [2] इदं–घ. पुस्तके न दृश्यते.

(सू) [1]आधिश्रयणवर्जं दधनि क्रियते ॥८॥८॥ ॥१५७१॥

[दधन्याज्यधर्माधिश्रयणविरहोपपत्तिः]

(भा) दधनि चाज्यधर्माः । तस्य त्वधिश्रयणं श्रुतिविप्रतिषिद्धम् । अर्थविरोधाद्वा निवर्तते विनाशमुपयाति दधि शृतमिति ।

[दधनि आज्यधर्मातिदेशावश्यकता]

(वृ) दधनि चाज्यधर्माः—तस्यापि हविष्ट्वात् ।

[अधिश्रयणनिषेधश्रुतिः]

तस्य त्व–द्धम्—न दध्यधिश्रयति श्रृतं हि तदिति ।

(सू) [2]नैतस्य दध्नस्संस्कारो विद्यत इत्यपरम् ॥९॥ ॥९॥१५७२॥

अष्टमी खण्डिका.

---

[अत्र दध्नोऽसंस्कारपक्षोपपत्तिः]

(भा) असंस्का[3]रो दध्नः । आज्यं प्रधानम् । तस्य पृषत्तागुणो दध्ना क्रियते । आज्यशब्दश्च न प्रच्यवते पृषदाज्यमिति । तच्च संस्कृतं क्षिप्यते । अतोऽसंस्कारो दध्नः । आज्येनोदेहीत्येव संप्रैषः । सर्वं चाविकृतम् । संस्कारपक्षे । आज्यदधिपानाह ;–स्वाहा देवा ॰ आज्यदधिपान् ।

एवंप्रकारेषूहः । उपदेशस्संस्कार[4]पक्षेऽपि नोहो हौत्रे । आध्व[5]र्यवे ऊहोऽदिती स्थोऽच्छिद्रपत्रे [6] इति । एतस्य दध्नो न [7] विद्यते ।

---

[1] अधिश्रयणप्रतिषेधात् पत्न्यवेक्षणमपि निवर्तते । अमेध्यं वा एतत्करोति यत्पत्न्यवेक्षते गार्हपत्येऽधिश्रयति मेध्यत्वायेति लिङ्गात् । भारद्वाजश्चाह न पत्न्यवेक्षताधिश्रयणप्रतिषेधादिति । तत्र दध्याज्यस्थाल्योरूहेणादानं अदिती स्थोऽच्छिद्रपत्रे इति । तथाऽऽज्यमसीत्योदराज्यं दधि स्थ इत्यसमासेनैवोह आज्येन दध्नोदेहीति लिङ्गात् (रु). [2] अस्मिंस्तु पक्षे दर्शपूर्णमासवदेवाविकृतं सर्वम् । लौकिक एव तु दध्नि संस्कृतमाज्यमानीयते ॥ (रु) [3] रो वा दध्नः–क. ङ. छ. ज [4] रः ? पक्षे–ज. [5] र्यवे तु अदिती स्थो–ज. [6] इत्येवमादि–ज. इत्येवमादिषु तस्य–ख. ग. [7] विद्यते संस्कार इति–ख. ग.

[एतच्छब्दव्यावर्त्यम्]

चातुर्मास्येषु दध्नो नियतस्संस्कार [1]इति ॥

(वृ) तच्च–प्यते—आज्यं दध्ना संस्कृतं पृषदाज्यधान्यां क्षिप्यते ।

[अविकृतसंप्रैष मीमांसकसम्मतहेतुः]

अतो–विकृतम्—आज्यं प्रधानं तस्य पृषत्ता गुण इति मीमांसकाः । अतो नोहः ।

[ऊहप्रयोजकधर्मः]

एवं प्रकारेषूहः —[2]आज्यशब्दयुक्तेषु स्विष्टकृत्सूक्तवाकादिषु ।

[उपदेशपक्षे ऊहनिषेधस्याशयः]

उपदे–हौत्रे—तस्मादृचं नोहेदिति बह्वृचमन्त्रमात्राभिप्रायम्, प्रदर्शनार्थत्वादृग्ग्रहणस्य ।

आध्व–त्रे इति—एवमादौ ।

एतस्य–द्यते— एतस्येति निर्देशात् ।

[दध्नो नियतं संस्कार इत्येतदाशयः]

चातु–र इति — चातुर्मास्येषु चाज्यदध्नोः पृथग्ग्रहणात् नाज्यसंस्कारो दधनीति तत्रोभयोस्संस्कारो नियतः ।

(सू) आज्यग्रहणकाले [3] चतुर्जुह्वां गृह्णाति चतुरुपभृति ॥ १ ॥ १० ॥ १५७३ ॥

[चतुर्ग्रहणफलम्]

(भा) चतुर्गृहीतवचनात् [4] न पञ्चगृहीतं जुह्वां [5] नोपभृति ।

[उपदेशपक्षावज्ञा]

यद्यपि पञ्च प्रयाजार्था मन्त्रा इत्युपदेशः ।

---

[1] इति केचित्-ज. [2] इदं विवरणम्-घ—पुस्तके न दृश्यते [3] जुह्वां पञ्चगृहीतस्य निवृत्त्यर्थं चतुर्गृहीतवचनमुपभृति अष्टगृहीतदशगृहीतयोः (रु). [4] न लभ्यते पञ्च–क [5] नाप्युप–क.

[अन्यत्रापि चतुर्गृहीतमेव]

(वृ) चतुर्गृ-देशः—अस्यार्थः— चतुर्गृहीतवचनात् पञ्चावत्तिनोऽपि चतुर्गृहीतमेव । इतरथा तस्यानर्थक्यात् । तथाऽऽतिथ्यायामवभृथे च । अयमेव स्वपक्षः ॥

(सू) दधन्याज्यमानीय [1]महीनां पयोऽसीति पृषदाज्यधान्यां पञ्चगृहीतं पृषदाज्यं ज्योतिरसि विश्वरूपं विश्वेषां देवानां समिदिति वा ॥ २ ॥ ॥ ११ ॥ १५७४ ॥

[पृषदाज्यनिष्पत्तिः मन्त्रान्तभागपक्षौ मन्त्रावृत्त्यनावृत्तिपक्षौ च]

(भा) आज्यं दधनि वह्वानीयते । तथा हि पृषत्तागुणो भवति । महीनां पयोऽसीति दुग्धान्तो मन्त्रः । यावती द्यावापृथिवी इति दधिधर्मे विनियुक्तत्वात् । अस्तृतान्तं केचित् । पञ्चकृत्वो मन्त्रावृत्तिः । सकृदुपदेशः । तदनूयाजार्थम् ॥

[मन्त्रस्यान्तभागे युक्तपक्षः आवृत्तिपक्षोपपत्तिश्च]

आज्यं-भवति—महीनामित्यारभ्य गृह्णामीति ग्रहणप्रकाशनान्तो मन्त्रो युक्तः । महो वा विष्णविति वदिह विनियुक्तस्याप्येकदेशस्य दधिधर्मे विनियोगोपपत्तेः । पञ्चकृत्वो मन्त्रावृत्तिः बहूनां ग्रहणमन्त्राणां स्थानापन्नत्वात् ।

[उपदेशपक्षाशयः]

सकृदुपदेशः—एकत्वान्मन्त्रस्य शुन्धध्वमिति त्रिः प्रोक्षतीतिवत् ।

तदनूयाजार्थम्—पृषदाज्यम् ।

---

[1] दुग्धमिति प्रथममन्त्रान्तः । शेषस्य दाधिधर्मे विनियोगात् । तत्र एकमन्त्राणि कर्माणीति न्यायेन सकृन्मन्त्र इति केचित्; तदयुक्तं द्रव्यपृथक्त्वात् । भरद्वाजेन तथोक्तेश्च (रु).

(सू) चतुर्ध्रुवायाम् ॥ ३ ॥ १२ ॥ १५७५ ॥

[ध्रुवायामपि चतुर्ग्रहणम्]

(भा) ध्रुवायामपि पञ्चगृहीतप्रतिषेधः । परमविकृतम् ।

(वृ) ध्रुवा-धः—चतुर्गृहीतवचनादेव ।

(सू) [1]सादनकाले आज्यानि सादयति ॥ ४ ॥ ॥ १३ ॥ १५७६ ॥

[वसाहोमहवन्यनासादनसिद्धिः]

(भा) आज्यानि सादयतीति वचनात् अनाज्यत्वान्न साद्यते वसाहोमहवनी ।

(सू) [2]उपभृद्वत्पृषदाज्यधानीम् ॥ ५ ॥ १४ ॥ ॥ १५७७ ॥

[उपभृत्पृषदाज्यधान्यासादने विशेषः स्रुवस्वधित्योस्तस्मिन् पक्षभेदस्सहेतुकः पक्षद्वये विशेषाश्च]

(भा) उपभृद्वत्—उपभृदसीति पृषदाज्यधानीम् । न पृषदाज्यधान्यसीति । क्रमेण[3] च सादनम् । ऋषभोऽसीति स्रुवस्वधित्योरासादनम् । पर्यायेण प्रवृत्तत्वात् युगपद्वा सम्भवात् । स्रुवस्वधिती ऋषभौ[4]स्थ इति यथार्थमूहः[5] । यदा पर्यायेण तदा याजमाने अयं स्वधितिरभिजिहर्ति होमानिति । यदा युगपत् स्योनौ मे सीदतं सुपदौ पृथिव्याम् । इमौ स्रुवस्वधिती अभिजिहृतो होमानिति ।

[1] स्तरणकाले सर्वा वेदिं स्तृणाति विशेषावचनात् । अपरेणोत्तरवेदिं स्तृणातीति सौमिक्यां विशेषवचनात् दाक्षिणस्यां वेदिश्रोण्यां बर्हिषीति लिङ्गाच्च । स्रुक्सादनकाले त्वाज्यवतीरेव सादयति न त्वनाज्यां वसाहोमहवनीं आज्यानीति वचनात् (रु).
[2] उपभृदसीति मन्त्रेण सादयति । स्रुवमन्त्रेण स्वधितिं तत्स्थानापन्नत्वात् । तस्यावृता स्वधितिमिति लिङ्गात् स्रुवधर्माः स्वधिताविति कल्पान्तरकारवचनाच्च । स्रुवस्वाधित्योस्सम्भवाद्युगपत्सादनामित्येके, तदा तु द्विवदूहो मन्त्राणाम् (रु).
[3] ण सा–घ. ङ. णासा.–क. णैवासा–छ. [4] स्थः शाक्वराविति–छ.
[5] हः । तथा च याजमानं यदा पर्यायेण अयं स्वाधिति–क. ङ.

[हृदयस्य पृषदाज्येनाभिघारणविधिहेतुः]

पृथक्पाकाद्धृदयस्य सान्नाय्यवदभिघारणे प्राप्ते पृषदाज्येन विधीयते । अतः स्थालीगतमपि प्राकृतकार्यं करोति ।

[स्थाल्योरासादने विशेषः]

इयं स्थाली दध्नः पूर्णेति भवति । युगपच्चेदिमौ स्थाल्यौ घृतस्य दध्नः पूर्णे इति ।

[स्वधितेरनासादनमुपदेशपक्षे]

न स्वधितेरासादनमुपदेशः ।

[आज्यदध्नोर्वैष्णवीत्वतदभावहेतुः तत्फलं च]

इदं विष्णुरित्यधिश्रयणादाज्यस्य वैष्णवत्वम् । दध्नस्त्वधिश्रयणं नास्तीत्यवैष्णवत्वम् । अतः पृषदाज्यधानीस्थस्य संस्कारपक्षेऽपि न स्यादभिमन्त्रणं विष्णू[1]निस्थेति । गौणत्वाद्वैष्णवत्वस्य पूर्ववदाज्यानां सर्वेषामभिमन्त्रणम् ।

(वृ) उपभृ–धान्यसीति—उपभृदसीति साद्यते पृषदाज्यधानी न पृषदाज्यधान्यसीति ।

[क्रमेण सादने हेतुः]

**क्रमेण च सादनम्**—दक्षिणहस्तेन प्रकृतौ कृतत्वादिह तेन युगपदसम्भवात् असंस्पर्शविधानाच्च ।

**ऋषभो–त्तत्वात्**—उपभृत्पृषदाज्यधान्योः ।

**युगपद्वा सम्भवात्**—स्रुवस्वधित्योरासादनस्य दक्षिणहस्तेन ।

[यथार्थमूह इति भाष्यग्रन्थस्य सर्वत्र ग्राह्यार्थः]

**स्रुवस्व–मूहः**—स्रुवस्वाविती इत्यूह्यपदप्रदर्शनार्थम्, याजमाने ऋषभौ स्थ इत्याध्वर्यवे स्रुवं साद्यमानमिति करणमन्त्रान्तसन्निपातिसादनदशा[2]संबन्धनीययाजमानगतोहपदस्याध्वर्यवात्पूर्वप्रदर्शनमाभिमन्त्रणस्यापि मन्त्रान्ते कर्तव्यत्वात् याज[3]मानस्य च दैर्घ्यादाध्वर्य-

[1] नि स्थ वैष्णवानीति. [2] संबन्धनियमाद्याज–घ. छ. [3] माने यथार्थम्–ख. ग.

वात्पूर्वं प्रवृत्तिर्भवतीति । एवं सर्वत्र यथार्थमूह इति निर्देश उभयपक्षार्थः ।

[स्वधितेरासादने हेतुः]

[1] यदपर्या-निति—अत एव स्वधितिना हरणादवदानानामत्र निर्देशः ।

यदा युगपत्—साध्यते तदा ।

[अन्यत्रातिदेशः]

स्योनौ मे-मानिति—एतदपि प्रदर्शनमन्येषामपि न्यायसामान्यात् । दिवि सीदतं शतक्षरौ समङ्क्त इत्येतेषां याजमाने ।

पृथक्पा-धीयेत—स्थालीगतेन ।

अतः स्थाली-र्णे इति—युगपच्चेत् स्थाल्योरासादनं तदा इमे स्थाल्यौ इत्यादि ।

[सादनेऽनुक्तस्रुवस्येवास्तु स्वधितेरिति शङ्कानवकाशः]

न स्वधितेरासादनमुप[2]देशः—स्रुचः प्रस्तरे सादयतीत्येतावत्युक्तेऽपि दक्षिणेन जुहूं स्रुवमिति देशनियमात् । स्रुक्शब्देन स्रुवस्यापि ग्रहणम् । स्रुचस्संमार्ष्टि स्रुवमग्रे इतिवत् । स्वधितेस्तथा प्राप्तिर्नास्तीति न सादनम् । आज्यस्थाल्यास्तु याजमानदर्शनादित्युक्तम् ।

[पृषदाज्यानभिमन्त्रणोपपत्तिः]

इदं विष्णु-निस्थेति—यद्यपि तद्गताज्यस्याधिश्रयणमस्ति तथाऽपि संसृष्टरूपस्य हविष्ट्वाद्दध्नो विष्णुसंबन्धाभावादवैष्णवत्वमिति कृत्स्नस्य वैष्णवत्वनिर्देशासंभवान्न पृषदाज्यस्याभिमन्त्रणम् ।

[जौहवाज्यवत्पृषदाज्यस्याप्यभिमन्त्रणमिति पक्षः]

गौणत्वा-न्त्रणम्—जौहवाज्यस्यापि विष्णुदेवतासंबन्धाभावाद्वैष्णवमन्त्रेणाधिश्रयणमात्रेण वैष्णवत्वस्य गौणत्वात् । प्रकृता-

---

[1] अयं स्वधि-निति-घ [2] देशेन-घ.

[हृदयस्य पृषदाज्येनाभिघारणविधिहेतुः]

पृथक्पाकाद्धृदयस्य सान्नाय्यवदभिघारणे प्राप्ते पृषदाज्येन विधीयते। अतः स्थालीगतमपि प्राकृतकार्यं करोति।

[स्थाल्योरासादने विशेषः]

इयं स्थाली दध्नः पूर्णेति भवति। युगपच्चेदिमौ स्थाल्यौ घृतस्य दध्नः पूर्णे इति।

[स्वधितेरनासादनमुपदेशपक्षे]

न स्वधितेरासादनमुपदेशः।

[आज्यदध्नोर्वैष्णवीत्वतदभावहेतुः तत्फलं च]

इदं विष्णुरित्यधिश्रयणादाज्यस्य वैष्णवत्वम्। दध्नस्त्वधिश्रयणं नास्तीत्यवैष्णवत्वम्। अतः पृषदाज्यधानीस्थस्य संस्कारपक्षेऽपि न स्यादभिमन्त्रणं विष्णू[1]निस्थेति। गौणत्वाद्वैष्णवत्वस्य पूर्ववदाज्यानां सर्वेषामभिमन्त्रणम्।

(वृ) उपभृ–धान्यसीति—उपभृदसीति साद्यते पषदाज्यधानी न पृषदाज्यधान्यसीति।

[क्रमेण सादने हेतुः]

**क्रमेण च सादनम्**—दक्षिणहस्तेन प्रकृतौ कृतत्वादिह तेन युगपदसम्भवात् असंस्पर्शविधानाच्च।

**ऋषभो–त्तत्वात्**—उपभृत्पृषदाज्यधान्योः।

**युगपद्वा सम्भवात्**—स्रुवस्वधित्योरासादनस्य दक्षिणहस्तेन।

[यथार्थमूह इति भाष्यग्रन्थस्य सर्वत्र ग्राह्यार्थः]

**स्रुवस्व–मूहः**—स्रुवस्वधिती इत्यूह्यपदप्रदर्शनार्थम्, याजमाने ऋषभौ स्थ इत्याध्वर्यवे स्रुवं साद्यमानमिति करणमन्त्रान्तसन्निपाति-सादनदशा[2]संबन्धनीययाजमानगतोहपदस्याध्वर्यवात्पूर्वप्रदर्शनमाभिमन्त्र-णस्यापि मन्त्रान्ते कर्तव्यत्वात् याज[3]मानस्य च दैर्घ्यादाध्वर्य-

[1] नि स्थ वैष्णवानीति. [2] संबन्धनियमाद्याज–घ. छ. [3] माने यथार्थमू–ख. ग.

वात्पूर्वं प्रवृत्तिर्भवतीति। एवं सर्वत्र यथार्थमूह इति निर्देश उभयपक्षार्थः।

[स्वधितेरासादने हेतुः]

[1] **यदपर्या-निति**—अत एव स्वधितिना हरणादवदानानामत्र निर्देशः।

**यदा युगपत्**—साद्यते तदा।

[अन्यत्रातिदेशः]

**स्योनौ मे-मानिति**—एतदपि प्रदर्शनमन्येषामपि न्यायसामान्यात्। दिवि सीदतं शतक्षरौ समङ्क इत्येतेषां याजमाने।

**पृथक्पा-धीयेत**—स्थालीगतेन।

**अतः स्थाली-र्णे इति**—युगपच्चेत् स्थाल्योरासादनं तदा इमे स्थाल्यौ इत्यादि।

[सादनेऽनुक्तस्रुवस्यैवास्तु स्वधितेरिति शङ्कानवकाशः]

**न स्वधितेरासादनमुप[2]देशः**—स्रुचः प्रस्तरे सादयतीत्येतावत्युक्तेऽपि दक्षिणेन जुहूं स्रुवमिति देशनियमात्। स्रुक्शब्देन स्रुवस्यापि ग्रहणम्। स्रुचस्संमार्ष्टि स्रुवमग्रे इतिवत्। स्वधितेस्तथा प्राप्तिर्नास्तीति न सादनम्। आज्यस्थाल्यास्तु याजमानदर्शनादित्युक्तम्।

[पृषदाज्यानभिमन्त्रणोपपत्तिः]

**इदं विष्णु-निस्थेति**—यद्यपि तद्गताज्यस्याधिश्रयणमस्ति तथाऽपि संसृष्टरूपस्य हविष्ट्वाद्दध्नो विष्णुसंबन्धाभावादवैष्णवत्वमिति कृत्स्नस्य वैष्णवत्वनिर्देशासंभवान्न पृषदाज्यस्याभिमन्त्रणम्।

[जौहवाज्यवत्पृषदाज्यस्याप्यभिमन्त्रणमिति पक्षः]

**गौणत्वा-न्त्रणम्**—जौहवाज्यस्यापि विष्णुदेवतासंबन्धाभावाद्वैष्णवमन्त्रेणाधिश्रयणमात्रेण वैष्णवत्वस्य गौणत्वात्। प्रकृता-

---

[1] अयं स्वधि-निति—घ [2] देशेन—घ.

वप्यसमवेताभिधायित्वाद्विष्णवशब्दस्य पृषदाज्येऽप्यभिमन्त्रणमस्तीति केचित् ।

(सू) [1] पूर्ववदाज्यान्यभिमन्त्र्याग्रेणाहवनीयं यूपावटं परिलिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि ॥ ६ ॥ १५ ॥ ॥ १५७८ ॥

[पृषधाज्यधानीस्थाज्याभिमन्त्रणं नेति पक्षः]

(भा) केचित्तु पूर्ववद्ग्रहणात् पृषदाज्यधानीस्थस्य न कुर्वन्त्यभिमन्त्रणम् ।

[वेद्यर्धस्य यूपाङ्गत्वं तत्फलं च]

यूपाङ्गं वेद्यर्धम् । अतः प्राच्येकादशिन्यां यावद्यूपं वेदिः ।

[अभिमन्त्रणं भवत्येवेत्युपदेशपक्षः]

(वृ) केचित्तु पू—न्त्रणम्—गौणत्वपक्षेऽपि उपदेशो गुणत्वात् पृषत्ताया आज्यं प्रधानं तस्मादभिमन्त्रणं भवत्येव ।

[यावद्यूपं वेदिसंभवस्थलादिविवरणम्]

यूपा—पं वेदिः—अर्धमन्तर्वेदि मिनोतीति यूपावटार्धस्य वेदिभागत्वेन विधानाद्यूपाङ्गं वेद्येकदेशः । अतश्च तीव्रसुतोक्थ्ये प्राच्येकादशिनी समाने सर्वयूपानां वेदिभागसंबन्धासिद्ध्यर्थं यावद्यूपावटं वेदिविवृद्धिः ।

[यूपाङ्गत्वोपपत्तिः]

तत्र च एकादशयूपानामन्तर्बहिर्देशोभयसंबन्धासंभवाद्विरोधे मुख्यभूतवेद्यर्धाङ्गत्वमेवानुग्राह्यमिति ।

[यावद्यूपं वेद्युद्धननं न्यायप्राप्तम्]

तत्र यावद्यूपं वेदिमुद्धन्तीति न्यायप्राप्तानुवादः ।

(सू) [2] पूर्ववदभ्रेरादानं परिलेखनं च ॥ ७ ॥ ॥ १६ ॥ १५७९ ॥

[1] पूर्ववद्विष्णू निस्थेत्यभिमन्त्र्य परिलिखत्यवटं यथा पृथ्व्यान्त्यश्शङ्कुर्मध्ये भवति (रु). [2] पूर्ववत्सावित्रेणादानं परिलेखनं च मन्त्रः परिलिखितमिति (रु).

अथखनति [1]यथानाविरुपरं भविष्यतीति ॥ ८ ॥ १७ ॥ १५८० ॥

[यूपावटपरिमितिः]

(भा) [2]न आविः—अनाविः अप्रकाशो यथा भवत्युपरस्तावन्मात्रोऽवटः खन्यते ।

[उपरमानम्]

(वृ) यावदुपरदीर्घत्वं तावदवटप्रमाणम् । उपरप्रमाणमर्धलक्षणम् । [3]यस्मिन्नियुक्तः पशुः निखातं यूप यथा न चालयति तावत्प्रमाणमुपरं ॥ ४२ ॥

(सू) अग्रेणावटं प्राञ्चं यूपं निधाय यत्ते शिक्नः परावधीत्तक्षा हस्तेन वास्या । आपस्तत्सर्वं जीवलाः शुन्धन्तु शुचयश्शुचिम् इति यूपं प्रक्षाल्याथैनं [4]यवमतीभिः प्रोक्षति । पृथिव्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रम् ॥ ९ ॥ १८ ॥ ॥ १५८१ ॥

[यवमतीपदार्थः]

(भा) [5]यवो यासु विद्यते ता यवमत्यः । [6]केचित्तु जातिः ।

[पक्षान्तराशयः]

(वृ) केचित्तु जातिः—जातिर्जन्म । यवानां जन्म यास्वप्सु ता यवमत्यः । यव [7]प्ररोहयोग्या इत्यर्थः ॥

(सू) शुन्धतां लोकः पितृषदन इति प्रोक्षणीशेषमव-

---

[1] यथा निखातस्य यूपस्य नाविर्भविष्यत्युपरमिति मन्यते तावन्तमवटं खनति(रु). [2] अनाविरप्रकाशो—घ [3] अस्मिन् गते नियुक्तः—ख. ग. [4] यासु यवा भवन्ति ता यवमत्यः (रु). [5] यवा यासु विद्यन्ते—ख. ग. [6] केचन—छ.--केचित् सजातिः--क. ङ. [7] प्ररोहणयो—ख. ग.

टेऽवनीय यवोऽसीति यवम[1]वास्य पितॄणां सदनमसीति बर्हिषाऽवस्तीर्य स्वावेशोऽसीति प्रथमपरापातिनं शकलमवास्य घृतेन द्यावापृथिवी आपृणेथामिति स्रुवेण शकले हुत्वा ॥ १० ॥ १९ ॥
॥ १५८२ ॥

नवमी खण्डिका

———

[प्रथममन्त्रेण कार्यस्य पित्र्यत्वम्]

(भा) पितॄणां सदनं यस्मिन् लोके नान्येषां स पितृषदनो लोकः। सदनं–स्थानम् । स शुन्धतां–[2]शुद्धोऽस्तु । स्थास्यन्त्यस्मिन् पितर इत्यस्य पित्र्यत्वम् । [3]पितॄणां सदनं न देवानाम्[4] । [5]पितरस्त्वयि स्थास्यन्तीति बर्हिषश्च । अतः प्राचीनावीती करोत्युभयम् ।

[अपित्र्यत्वपक्षः तदाशयश्च]

केचिदपित्र्यत्वं लोकबर्हिषोरभिधानात् । तेषां पक्षे स्वधा पितृभ्य ऊर्मेव बर्हिषद्भ्य इत्युदकाभिधानादपित्र्यत्वम् ।

[अवसानपदार्थः अवटसंस्कारे व्यवस्था च]

अवसानमवटे क्षेपो यवजातेः बर्हिषश्च शकलस्य वा । अवटसंस्कारस्सह होमेन । अत उपशये निवर्तते ।

---

[1] अवनयनावस्तरणे पित्र्यर्थे ; मन्त्रलिङ्गात् पितॄणां निखातमिति लिङ्गाच्च । अतः प्राचीनावीतिना क्रियते । व्यापृतायां स्रुवेणत्येव सिद्धे स्रुववचनाज्जानीमो नर्ते वचनात् स्रुवेण होमः पशाविति । तेन प्रहृत्य स्रुवेणाभिजुहोति स्रुवेण वपामभिजुहोतीत्यादिवद्यत्र न स्रुवश्चोदितस्तत्र वसाहोमहवन्या होम इष्यते जुहूसमाख्यानात् (रु). [2] शुद्धमस्तु –क. ख. ग. घ.छ. [3] पितॄणामसि सदनं–ङ.ख.ग. पितॄणामपि सदनं –ज. [4] नां यद्भ्रज्यन्ते–ङ. नां य इज्यन्ते–ख.ग. [5] 'पितॄणां' इत्यादि 'त्र्यत्वं' इत्यन्तं –क पुस्तके न दृश्यते । तरः स्था ङ. स्थास्यन्त्यस्मिन्–क. ख. ग. घ. छ.

[इह होमे करणम्]

स्रुववचनादिह व्यापृतायां जुह्वां वसाहोमहवन्या होमः, अन्येषु स्रुवेण ।

(वृ) पितॄणां–न्येषाम्—शुन्धतां लोकः पितृषदन इति प्रोक्षणशेषावनयनस्य अवटदेशशोधनार्थस्य पित्र्यत्वम् । कुतः ? पितॄणां स्थानं लोकः पितृषदन इति विशेषणोपादानात् य इज्यन्ते पितरस्तेषामेव नान्येषां देवादीनाम् ।

[पितृसदनत्वोपपत्तिः]

स पितृ–न देवानाम्–अस्यार्थः—तस्मादातृतीयात्पुरुषान्नाम न गृह्णन्ति एतावन्तो हीज्यन्ते इति पितृपितामहप्रपितामहा [1]उच्यन्ते । तेषामवटस्थानत्वं चावगम्यते । पितॄणां निखातमिति श्रुतेः तद्देशाङ्गत्वाच्च पित्र्यत्वम् , पितॄणां स्थानयोग्यतापादनार्थत्वात् पितृप्राधान्यात् ।

[बर्हिषः पित्र्यत्वोपपत्तिः]

पितरस्त्वयि–पश्च—पितॄणां सदनमसीति बर्हिस्स्तरणमन्त्रत्वात् ये वै यज्वानः ते पितरो बर्हिषद इति केषाञ्चिद्बर्हिस्सदनावगतेः बर्हिषश्च पित्र्यत्वम् ।

[अपित्र्यत्वपक्षे हेतुः]

केचिद–धानात्–लोकबर्हिषोः [2]प्रधानतयाऽभिधानम्, न पितृप्राधान्यमिति ।

तेषां पक्षे–दपित्र्यत्वम्—ऊर्जा पृथिवीं गच्छतेत्युदकाभिधानात् ।

[स्वमते हेतुः परसंमतिश्च]

स्वमते तु पितृदेवतासंबन्धिद्रव्यनिर्देशात् पितृप्रधानो मन्त्र इति । यथा वैश्वानरे हविरिदं जुहोमीति पित्र्यत्वमुक्तं हिरण्यकेशिना ।

---

[1] इज्यन्ते–घ. [2] प्राधान्येनाभि–घ.

अवसान-होमेन-अग्न्यादानादिहोमान्तत्वादवटसंस्कारस्य । अत उपशये निवर्तते--अवटाभावात् ।

स्रुववच-न्या होमः—स्रुवेण शकले हुत्वेति पुनर्वचनात् ।

(सू) यूपायाज्यमानायानुब्रूहीति संप्रेष्यत्यज्यमानायानुब्रूहि अञ्जमो यूपमनुब्रूहीति वा ॥ १ ॥ २० ॥ ॥ १५८३ ॥

अथैन[1]मसंस्कृतेनाज्येन यजमानोऽ[2]ग्रतश्शकलेनानक्ति ॥ २ ॥ २१ ॥ १५८४ ॥

[अञ्जनव्यतिरिक्तकर्मणि आज्यम् ]

(भा) अञ्जने असंस्कृतस्य विधानात् प्राकृतेन सर्वाणि कर्माणि अग्रादारभ्या मूलात् ।

[इह प्राकृताज्यपदार्थः]

(वृ) अञ्जने-कार्याणि --प्राकृतेन ध्रौवेणाज्यस्थालीगतेन च सर्वकार्याण्यप्राकृतान्यपि ।

[अग्रत इत्युक्त्या समग्राञ्जनलाभः]

अग्रतः-लात्—अग्रतश्शकलेनानक्तीत्येतावत्युक्तेऽपि मूलपर्यन्ताञ्जनम् । अग्रत इत्यारम्भविधानात् । समाप्तिदेशापेक्षायां याव[3]द्यूपाञ्जनम् । अग्रेणावटं निहितस्यैवाग्रमुत्क्षिप्य ॥

(सू) ऐन्द्रमसीति चषालमक्त्वा[4] सुपिप्पलाभ्यस्त्वौषधीभ्य इति प्रतिमुच्य देवस्त्वा सविता मध्वाऽ-

---

[1] एनं यूपं. [2] अग्रत आरभ्यामूलात् । अनक्तमुपरमिति तु सत्याषाढः । असंस्कृतेनेति वचनात् शकलाभिहोमादन्यत्सर्वं संस्कृतेनेति सिद्धं भवति । भारद्वाजस्त्वाह—अप्राकृता आहुतय आज्यनिर्वपणादूर्ध्वमाज्यस्थाल्या इत्याश्मरथ्यो लौकिकाज्यादित्यालेखनो ध्रौवादित्यालेखनिरिति (रु). [3] यूपमाञ्जनम्—**ख**. यूपमञ्जनम्—**छ**.
[4] अध्वर्युरिति शेषः । यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसाऽनक्तीति श्रुतेः । उत्तरत्र यजमानग्रहणाच्च । प्रतिमुच्य—यूपाग्रे क्षिप्त्वा । संततं—संततधारं अविच्छिन्दन्नग्निष्ठामिति शेषः (रु.)

नक्त्यति स्रुवेण संततमविच्छिन्दन् अग्निष्ठामश्रिमनक्त्योपरात् ॥ ३ ॥ २२ ॥ १५८५ ॥

[चषालाञ्जने कर्ता]

(भा) चषालाञ्जनाद्याध्वर्यवम्; यजमानमेव तेजसाऽनक्तीत्यग्निष्ठायां दर्शनात् । लञ्जनं—प्रतिमोकः । संततया धारया अविच्छिन्दन् अग्निष्ठा यथा सर्वा [1]अङ्क्ष्यते ।

[चषालाग्निष्ठयोरञ्जने अध्वर्योः कर्तृत्वोपपत्तिः]

(वृ) चषाला-र्शनादिति—यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसाऽनक्तीति यजमानस्य कर्मत्वावगमात् अग्निष्ठाञ्जनमाध्वर्यवम् । चषालादेश्च तत्समानकर्तृकत्वश्रुतेः । अतश्चषालाञ्जनमाध्वर्यवम् ।

लञ्जनं—कः—प्रतिमोको यूपे ।

[धारासम्बन्धी विच्छेदहेतुश्च]

संततयाऽङ्क्ष्यऽते—स्रुवधारया संततया अविच्छिन्दन्[2] आन्तादनक्ति स्रुवेण[3] संततमिति स्रुवधारा संतता अविच्छिन्दन्निति अग्नि[4]ष्ठेन विच्छेदाभावः ।

(सू) रशनादेशे त्रिस्सर्वतो यूपं [5]संमृशति ॥ ४ ॥ ॥ २३ ॥ १५८६ ॥

अञ्जनादि यूपं यजमानो नोत्सृजत्यापरिव्ययणात् ॥ ५ ॥ २४ ॥ १५८७ ॥

(भा) [6]परिवीत उत्सृज्यते ॥

(वृ) परि—ते—आपरिव्ययणादित्यभिधानात् ॥

---

[1] अज्यते—ङ. छ. ज. [2] च्छिन्दन्नान्तादनक्ति स्रुवेण संतं-स्रुवधारा संतता—घ. [3] संततं स्रुव-घ. [4] ष्ठायां वि—घ. [5] यत्र रशना भन्त्स्यते तत्र संमृशति (रु). [6] परिव्ययणं—परिव्याणम् । अभिविधावाकारः (रु).

(सू) यूपायोच्छ्रीयमाणायानुब्रूहीति संप्रेष्यति उच्छ्रीयमाणायानुब्रूहीति वा ॥ ६ ॥ २५ ॥ १५८८ ॥

उद्दिवꣳस्तभानान्तरिक्षं पृणेत्युच्छ्रयते ॥ ७ ॥ ॥ २६ ॥ १५८९ ॥

ते ते धामानीत्यवटेऽवदधाति ॥ ८ ॥ २७ ॥ ॥ १५९० ॥

विष्णोः कर्माणि पश्यतेति द्वाभ्यामाहवनीयेऽग्निष्ठां [1] संमिनोति ॥ ९ ॥ २८ ॥ १५९१ ॥

[यूपाग्रिस्थितिः]

(भा) आहवनीयमभिमुखीक्रियतेऽग्निष्ठा ।

(वृ) आहव–ग्निष्ठा — [2] संमानमाभिमुखीकरणम् ।

(सू) यं कामयेत तेजसैनमि[3]त्युक्तम् ॥ १० ॥ ॥ २९ ॥ १५९२ ॥

[सूत्रगृहीतश्रुत्यर्थः]

(भा) इत्थं वेत्थं वा—दाक्षिणत उत्तरतो वाऽऽहवनीयस्य स्थाप्य[4] ते न तुल्यम् । अतिचालनम्—अतिनावनम् । इतो वेतो वा—दक्षिणत उत्तरतो वा चालयेदिति प्रतिषेधार्थः । संमानमाहवनीयतुल्यस्थापनम् ।

(वृ) इत्थं वे–तुल्यम्—इति यं कामयेत तेजसैनमित्यस्या[5]र्थः । इत्थं वेत्थं वेत्थं वेत्यस्य ब्राह्मणपदस्यार्थः ; आहवनीयस्य पुरस्तान्मध्ये देशाद्दक्षिणत उत्तरतो वाऽग्निष्ठां स्थापयेत् ; न मध्यदेशतुल्यमिति ।

---

[1] आहवनीयेन संमिनोति–तस्यार्जवेन स्थापयति (रु). [2] द्वाभ्यामाहवनीयेनाग्निष्ठासंमान–छ. [3] अग्निष्ठाया यथोक्तप्रकारादन्यथावस्थापने दोषः तथात्वे गुणश्च ब्राह्मणे दर्शितः । स तत्रैवानुसन्धेय इत्यर्थः (रु). [4] तेऽग्निष्ठा न तुल्यम्–**ख. ग. घ.** [5] र्थः । तेजसैनं देवताभिरिन्द्रियेण च व्यर्धयेयमित्यादि ब्राह्मणव्याख्यानम् ।

(वृ) इतो वे-पेधार्थः—[1] अस्यां श्रुतौ क्रियाद्वयं प्रतिषिध्यते ; दक्षिणत उत्तरतो वा नाग्निष्ठां स्थापयेदित्यध्याहृत्य प्रतिषेधः । अतिनावयेदित्यत्रापीत्थं वेत्थं वेति संबध्यते। अतः (ति !) स्थापनं चालनं चोभयं प्रतिषिध्यते ।

संमान-ल्यस्थापनम्—अग्निष्ठामाहवनीयेन संमिनुयादित्यस्यार्थः ॥

(सू) [2] अग्रमाहवनीयमुपनतं यूपस्यावनतं मूलम् ॥ ११ ॥ ३० ॥ १५९३ ॥

[यूपस्थितौ विशेषः]

(भा) आहवनीयं प्रत्युपनतमग्रं, मूलं तु [3] पुरतस्थितम् ।

(वृ) आहवनीयं-स्थितम्—अग्रमाहवनीयमित्यस्यार्थः । अवनतं मूलमित्यस्यार्थः ।

(सू) अनाविरुपरं [4] कृत्वा ब्रह्मवनिं त्वा क्षत्रवनिमिति प्रदक्षिणं पांसुभिः पर्यूह्य ब्रह्म दृंह क्षत्रं दृंहेति मैत्रावरुणदण्डेन [6] समं भूमिपरिदृंहणं कृत्वा ॥ १२ ॥ ३१ ॥ १५९४ ॥

दशमी खण्डिका

———

(भा) पर्यूहणं—पांसुभिर्वेष्टनं यूपभूमेः । परिदृंहणं कुट्टनं मैत्रावरुणदण्डेन समं भूम्या करोति ॥

(वृ) अनाविरुपरामिति—यूपस्योपरप्रदेशः कृत्स्नोऽवटे निखातव्यः नैकदेशः प्रकाशितो भवेत् ॥ ५६ ॥

[1] अस्याः श्रुतेः-ख. ग. [2] यूपस्याग्रमाहवनीयं प्रति प्रह्वं भवति । मूलं तु ततः किञ्चिदपनीतम् (रु). [3] पुनरत ?-घ. [4] अप्रकाशितोपरं यूपं कृत्वा (रु). [5] वेष्टयित्वा (रु). [6] यथा समीपभूमिसममवटस्थलं भवति (रु).

(सू) उन्नम्भय पृथिवीमित्यद्भिः[1] परिषिञ्चति ॥१॥ ॥ ३२ ॥ १५९५ ॥

(भा) समन्ततः सेकः परिषेकः ॥ ५७ ॥

(सू) दर्भमय्यौ रशने भवतः । द्विगुणा[2] द्विव्यायामा पशुरशना त्रिगुणा त्रिव्यायामा यूपस्य ॥ २ ॥ ३३ ॥ १५९६ ॥

देवस्य त्वा सवितुः प्रसव इति[3] रशनामादाय विष्णोः कर्माणि पश्यतेति सरशनेन पाणिना यूपमुन्मार्ष्टि ॥ ३ ॥ ३४ ॥ १५९७ ॥

[यूपरशनास्थदर्भस्थितिः]

(भा) यूपरशनाप्रपिष्टैः दर्भैः ; पिष्टतमयेति लिङ्गात् । उन्मार्ष्टि–मूलादारभ्याऽऽग्रात् ।

(वृ) पिष्ट–ङ्गात्—वनस्पतियागप्रैषयाज्ययोः पिष्टतमया रशनयेति निर्देशात् यूपस्य वनस्पतिदेवतात्वात् यूपरशनाप्रपिष्टैर्दर्भैः ॥

(सू) तद्विष्णोः परमं पदमित्यग्रं प्रेक्षते । यूपाय परिवीयमाणायानुब्रूहीति संप्रेष्यति परिवीयामाणायानुब्रूहीति वा ॥ ४ ॥ ३५ ॥ १५९८ ॥

परिवीरसीति नाभिदघ्ने[4] रशनया त्रिः प्रदक्षिणं यूपं परिव्ययति मध्यदेशं वा ॥ ५ ॥ ॥ ३६ ॥ १५९९ ॥

[परिव्ययणे देशः कर्ता च]

(भा) नाभितुल्ये अध्वर्योर्यजमानस्य वा परिव्ययणे मध्यदेशे वा सह निखातेन यूपस्य ।

(वृ) नाभितु–स्य वा—एष हि चेष्टानां कर्ता भवतीति निर्देशात् ।

---

[1] परितास्सिञ्चति (रु). [2] व्यायामश्चतुररत्निः (रु). [3] यूपरशनाम् (रु).
[4] तत्र रशनां त्रिः परिभुज्य मध्यमेन गुणेन परिव्ययतीति बोधायनः (रु).

[सूत्रे मध्यशब्दार्थः योजनाविशेषश्च]

**परिव्य–पस्य**—मध्यशब्दस्य प्रतियोग्यपेक्षत्वात् यूपस्येति संबन्धात्[1] । अतः उपरादूर्ध्वं मध्ये इति न भवति ॥

**(सू) यं कामयेतोर्जेन[2]मित्युक्तम् ॥६॥३७॥१६००॥**

[रशनाविन्यासविशेषफलश्रुतिविवरणम्]

**(भा)** अवाचीनम्–अधो मध्यदेशात् । उपरिष्टाद्वा मध्यदेशादवोहेत् सारयेत । परिवीताम् ।

**(वृ)** **यं का–त्युक्तम्**—अनेन ऊर्जेनं व्यर्धयेयमित्यूर्ध्वां वा तस्यावाचीं वाऽवोहेदिति ब्राह्मणं व्याख्यायते ।

**परिवीताम्**—मध्यदेशे रशनां परिवीतामिति प्रतिषेधार्थः । वर्षुकः पर्जन्य इत्यादेरप्यवोहनोदूहनयोरयमेवार्थः ।

**(सू) अधो[3]दूरं परिव्ययेद्वृष्टिकामस्य उपरिदूरमवृष्टिकामस्येत्येके ॥७॥३८॥१६०१॥**

[वृष्टिकामपरिव्ययणपक्षे फलम्]

**(भा)** वृष्टिकामस्य तु [4]अधस्ताद्दूरं परिव्ययणमेव ।

[अधोदेशं प्रत्यवधिः]

**(वृ)** वृष्टिकामस्य तु विध्यन्तरम् । अधोदूरं परिव्ययेदित्यनेन मध्यस्याधस्ताद्दूरं परिव्ययणमेव अवृष्टिकामस्योपरिष्टादिति ॥

**(सू) यं कामयेत [5]स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषज्य न प्रवेष्टयेत् ॥८॥३९॥१६०२॥**

---

[1] न्धात् उपरा–घ. छ. [2] एवं परिवीताया रशनायाः कामवशादूर्ध्वमधो वा सारणमुक्तं ब्राह्मणे तदप्यनुसन्धातव्यमित्यर्थः (रु). [3] शाखान्तरे तु वृष्ट्यवृष्टिकामयोः परिव्याणमेवाधस्ताद्दूरमुपरिष्टाद्दूरं चोक्तम् । तत्तु अस्मद्ब्राह्मणवचनाभिदेष्ट्र परिवीतायाः साधारणमित्यर्थः (रु). [4] स्तात्परिव्य–ज. [5] यौ बन्धविशिष्टौ रशनाखण्डौ तावुपान्ते तयोस्समीपे व्यतिषज्य मिथस्सम्बध्य मुंचत् न वेष्टयेत् । एवं कृते स्त्र्यस्य जायेत । अतो न तथा कुर्यात् (रु).

[निषेध्यवेष्टनप्रकारः]

(भा) स्वयस्य जायेतेति उपान्ते तस्य व्यतिषज्य अन्योन्यस्योपरि कृत्वा न प्रवेष्टयति ॥

(सू) यं कामयेत पुमानस्य जायेते[1]त्यान्तं तस्य प्रवेष्टयाणिमति स्थाविमत्प्रवीय दिवस्सूनुरसीति स्वरुमादायान्तरिक्षस्य त्वा सानाववगूहामीत्युत्तरेणाग्निष्ठां मध्यमे रशनागुणेऽवगूहति ॥ ॥ ९ ॥ ४० ॥ १६०३ ॥

(उत्तमे सर्वेषु वा द्वयोरधरयोरिति वाजसनेयकम्)

एकादशी खण्डिका.

---

[वेष्टने विशेषविवरणम्]

(भा) [2]अन्तं यावत् आन्तं वेष्टयति परिवीतशेषरशनाभागौ। आणिमति–तनुर्यः प्रदेशः। स्थविमत्–स्थूलप्रदेशः। प्रवीयति–निक्षिपति स्थूलप्रदेशं तनौ प्रदेशे। तथा कार्यं यथा समावन्तौ रशनागुणौ रशनामध्यमो वेष्टनभागः तत्रैनं क्षिपति ॥

इति आपस्तम्बश्रौतसूत्रे धूर्तस्वामिभाष्ये सप्तमे तृतीयः पटलः.

---

(वृ) तथा कार्यं यथा समावन्तौ––स्थौल्येन समौ कार्यौ ॥

इति श्रीरामाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ सप्तमे तृतीयः पटलः.

---

(सू) पशुं स्नपयन्ति [3]कूटकर्णकाणखण्डवण्डश्लोण-[4]सप्तशफवर्जम् ॥ १ ॥ १ ॥ १६०४ ॥

---

[1] रशनाखण्डौ बन्धनादारभ्यान्ताद्वेष्टयित्वा तयोरण्वन्ते स्थूलमन्तं क्षिप्त्वा बन्धने यो मध्यगुणस्तस्मिन् स्वरुमवगूहति (रु). [2] आन्तं यावदन्तं तावद्वेष्टयति–घ. [3] कूटः—भग्नशृङ्गः। वण्डः पुच्छेन विकलः। श्लोणः पादेन। तथा—वण्डस्तु भिन्नपुच्छस्स्याच्छ्लोणः पङ्गुरित्यादि नैघण्टुकाः. [4] सप्तशफः—एकेन पदेनैकशफ इति यावत् (रु).

[1]यद्यङ्गहीनस्स्यादङ्गतो वा विरुज्येत ॥ २ ॥
॥ २ ॥ १६०५ ॥

[2] अथैकेषां [3] वैष्णवीमाग्नावैष्णवीं सारस्वतीं बार्हस्पत्यामिति च हुत्वा प्रयोजयेत् ॥ ३ ॥
॥ ३ ॥ १६०६ ॥

[4] योऽपन्नदत् मलं तत्पशूनामिति विज्ञायते ॥
॥ ४ ॥ ४ ॥ १६०७ ॥

[पशुपदार्थनिर्णयः]

(भा) पशुः—छागः मन्त्रवर्णात् छागस्य वपाया मेदसोऽनुब्रूहीति ।

[पशुलक्षणविवरणम्]

कूटः—एकशृङ्गः । कर्णः–छिन्नकर्णः । [5] काणः—एकेन चक्षुषा हीनः । खण्डः भग्नदन्तः । वण्डः यो न विवर्धते । केचिच्छिपिविष्टं छिन्नपुच्छं केचित् । श्लोणः–स्फोटकः बधिरो वा । सप्तशफः–सप्तखुरः । एतान् वर्जयित्वाऽन्यस्य स्नपनमृत्विग्भिः कार्यम् ।

[अपन्नदत आलम्भननिषेधः]

अपन्नदत्–अपतितदन्तः । मलं–पापं पशूनां अपतितदन्तत्वम् , अतस्तद्गुणो नालब्धव्यः । निन्दा प्रतिषेधार्था, यथा गच्छतस्ते ध्रुवं मरणमित्युक्ते गमनं प्रतिषिध्यते ।

---

[1] अङ्गहीनः—जनन एव विकलाङ्गः । रोगादिनैवश्चेदङ्गहीनः । इदं विस्पष्टार्थः तदातिरिक्तस्य वैकल्यस्याप्रयोजकत्वात (रु). [2] कूटादिविशिष्टमप्यङ्गीकृत्याह (रु). [3] वैष्णव्याद्याः प्रसिद्धा याः काश्चन ग्राह्या; सामान्यतो निर्देशात् । 'यद्यङ्गहीनः पशुः' इति प्रकृत्य आग्नेयीमित्याद्युक्तवान् बोधायनः (रु). [4] योऽपन्नदत्—पतितोत्थितदन्तो न भवति पशूनां मध्ये तन्मलं—वर्जनीयमित्यर्थः । यदा वै पशोर्दन्ताः पुनर्जायन्तेऽथ स मेध्यो भवतीति (रु). [5] काणः—यो न पश्यति एकेन चक्षुषा–ङ. छ. काणः यो न पश्यति खण्डो–क.

[एतन्न्यायस्य प्रतिनिधिष्वतिदेशः पक्षान्तरं च]

एतेन प्रतिषिद्धाः प्रतिनिधयोऽपि न कर्तव्याः प्रतिषेधाच्च प्रतिनिधिर्निवृत्त इति । [1]केचित्तु जात्यन्तराद्वरो जातिमानिति कुर्वन्ति ।

[जातिमतो वरत्वोपपादनम्]

(वृ) केचित्तु–कुर्वन्ति—[2]जातेर्विनियोगेनान्तरङ्गत्वात् कूटकर्णादीनां व्यक्तिधर्माणां बहिरङ्गत्वात् प्रधानभूतजात्युपादानेन प्रतिनिधौ संभवति बहिरङ्गभूतकूटकर्णादिपरिहारार्थं जात्यन्तरोपादानं न युक्तमिति ॥

(सू) [3]इषे त्वेति बर्हिषी आदत्त उपवीरसीति प्लक्षशाखां बहुपर्णशाखामप्रतिशुष्काग्रामसुषिराम् ॥ ॥५॥५॥ १६०८ ॥

[इषे त्वेति मन्त्रस्य बर्हिर्द्वयाङ्गत्वोपपत्तौ मतिभेदः]

(भा) इषे [4]त्वेत्यावृत्तिरेकवचनत्वात् । युगपदुपदेशः । प्लक्ष आम्र-[5]पिप्पली ॥

(वृ) इषे–त्तिः—दर्भयोः ।

एकवचनत्वात्—शब्दस्य ।

युगपदुपदेशः—दर्भयोस्सकृन्मन्त्रमुक्त्वा एकवचनस्य जात्यभिप्रायतोपपत्तेः ।

(सू) यं कामयेतापशुस्स्यादित्यपर्णया तस्य शुष्काग्रयोपाकुर्यात् ॥ ६ ॥ ६ ॥ १६०९ ॥

[6]तृणेनोपाकरोतत्येके ॥ ७ ॥ ७ ॥ १६१० ॥

---

1 साङ्गसजातीयालाभे तु व्यङ्गोऽपि विजातीयात्प्रतिनिधेः श्रेयानित्यपरम् । यथाऽऽह—आम्नातप्रतिषेधे प्रतिनिधिरङ्गं बलीयः यथाऽल्पगावो यथाऽपन्नदन्पशुरिति भरद्वाजः (रु). 2 'जातेरित्यादि—न युक्तमिति' इत्यन्ता वृत्तिः घ.—पुस्तके न दृश्यते. 3 इषे त्वेत्यावृत्तिरेकवचनत्वात् (रु). 4 त्वेतिमन्त्रस्यावृत्तिः-ज. 5 पिप्पलीवृक्षः-ज. 6 यदि तृणेन तदा तस्यैव विभागः पशुसंज्ञपनवपान्तर्धानयोः (रु).

बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात्प्रत्यञ्चं पशु-[1]मुपाकरोति। उपो देवान् दैवीर्विशः प्रजापतेर्जायमाना इति चैताभ्यामुपस्पृशन्निन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीति ॥८॥८॥ १६११॥

(भा) [2]एकेन वा तृणेन प्लक्षशाखया च।

[तृणविभागप्रकारः]

तदा तृणविभागः। अर्धमधस्तादुपधाने पशोः। साग्रं वपान्तर्धाने। पुरस्तादाहवनीयस्य प्रत्यङ्मुखस्य पशोरुपाकरणं स्पर्शनं शाखया तृणाभ्यां च यजुषा ऋग्द्वयेन च। उपस्पृशन्–उपस्पर्शनं कुर्वन् इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीत्याह।

[एकेन वा तृणेनेति पक्षेऽपि शाखासाहित्यम्]

(वृ) एकेन–या च––तृणेनोपाकरोतीत्यस्मिन्नपि पक्षे शाखया सहैव इषे त्वेति बार्हिरादत्त इत्यस्मच्छाखोक्तपक्षे एकेन तृणेन।

[उभयोरस्पर्शे विनियोगोपपत्तिः]

तदा तृण–ग्द्वयेन च—प्रजापतेर्जायमाना इति चैताभ्यामिति द्विवचनमुपो देवानित्येकेन सह न भवति। [3]प्रजापतेर्जायमाना इत्यत्रैव द्वयोरुपदेशात्। यदेताभ्यामुपाकरोतीति च। न च उपो देवानित्यस्य वैकल्पिकत्वम्। अस्मच्छाखायामेवोभयोरुपाकरणे विनियोगात्। उप ह्येनानाकरोति यदेताभ्यामुपाकरोतीति च। शाखाभेदे हि विकल्पो भवति।

उपस्पृशन्–मीत्याह—आहेत्यध्याहारः।

---

[1] देवतार्थत्वेन सङ्कल्पनमुपाकरणम्। उपो देवानिति यजुरृग्द्वयं चोपाकरणार्थं नोपस्पर्शनार्थं यदेताभ्यामुपाकरोति लिङ्गात् (रु). [2] शाखया दर्भाभ्यां च एकेन वा तृणेन वा-ज.

(सू) पञ्चकृत्वो देवतोपदेशनम् ; [1] उपाकरणे नियोजने प्रोक्षणे वपाया उद्धरणे हृदयस्याभिघारणे इति ॥ ९॥ ९॥ १६१२॥

[देवतोपदेशनेषु विभक्त्यैक्यम्]

(भा) पञ्चकृत्वः–पञ्चस्वपि देवतोपलक्षणेषु। यथोपाकरणे विभक्तिः सैव सर्वत्र चतुर्थी ; पुनरुपाकरणग्रहणात्।

(वृ) यथोपा–णात्—इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीत्युक्त्वा पुनरुपाकरणे नियोजन इति निर्देशात् उपाकरणवदेव सर्वत्र चतुर्थ्यन्तेन प्रयोगः।

(सू) प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति पञ्च हुत्वाऽग्निं मन्थति ॥ १०॥ १०॥ १६१३॥

[उपाकृतहोमे आज्यनिर्णयः, पक्षान्तरं च]

(भा) उपाकृतहोमा आज्यस्था[2]ल्याः । ध्रौवाज्यात्पूर्वमा[3]घार एव प्राजापत्यमिति । तत उत्तरं ध्रुवात एवाहवनीयहोमाः ; अप्येव नोऽत्रास्त्विति देवैः प्रजापतिर्याचित इति लिङ्गात्। लौकिकाज्यादिति भवदासमतिः। तस्य यूपाञ्जने प्रकृतत्वात्।

[उपाकृतहोमेन ध्रौवाज्यमित्यत्रोपपत्तिः]

(वृ) ध्रौवाज्या–माघार एव— इत्यत्र लिङ्गम् ; प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्स आत्मन्नधत्तेत्याज्यस्य प्रथमं प्रजापतिसंबन्धमुक्त्वा अप्येव नोऽत्रास्त्विति देवैः प्रजापतिर्याचितः। ततो यजान् व आज्यभागावित्यादिना ध्रौवाज्यस्याज्यभागादिषु पश्चाद्विनियोगः [4] अतो ध्रौवस्य प्रथमं प्रजापतिसंबन्धावगमात् प्राजापत्याघार एव प्रथमं ध्रैवात्कर्तव्य इति उपाकृतहोमप्रायश्चित्तादयः आज्यस्थाल्या एव।

---

[1] उपाकरणग्रहणं दृष्टान्तार्थम्। यथोपाकरणे तथा दृष्टान्तेन यजुषा सर्वत्र देवतोपदेशनमिति (र). [2] ल्या एव–क. ङ. छ. [3] घारमेव–घ. [4] ततो–छ

[लौकिकाज्यादिति पक्षे हेतूपपत्तिः]

ध्रौवाज्या–तत्वादिति—अप्राकृतकार्यार्थत्वेन प्रकृतत्वादन्येषामप्यप्राकृतकार्याणां लौकिकमेव ॥

(सू) आपिवाऽग्निं मथित्वोपाकुर्यात् ॥ ११ ॥ ११ ॥
॥ १६१४ ॥

[मथनोत्तरमुपाकरणपक्षे होमकालतन्माने]

(भा) [1]यदाऽग्निं मथित्वोपाकरणं तदा होमा अपि पश्चात्। उपाकृत्य पञ्च जुहोतीति ।

(वृ) यदाऽग्निं–जुहोतीति—अनेन उपाकरणोत्तरकालं [2]होमागतेः मन्थनोत्तरकालमुपाकरणादूर्ध्वं होमाः ॥

(सू) अग्नेर्जनित्रमसीत्यधिमन्थनशकलं निदधाति । वृषणौ स्थ इति प्राञ्चौ दर्भौ॥१२॥१२॥१६१५॥

[निधेयशकलस्य यूपनिष्पत्तिदशासङ्कल्पितत्वम्]

(भा) पूर्वसङ्कल्पितस्य मन्थनार्थस्य शकलस्य निधानम् ।

(सू) उर्वश्यसीत्यध[3]राराणिमादत्ते । पुरूरवा इत्युत्तरारणिम् ॥ १३ ॥ १३ ॥ १६१६ ॥

[अरणौ मतिभेदः]

(भा) गार्हपत्यारणी इह प्रकृतत्वात् । केचिल्लौकिक्यौ ।

[अरणिविषये पक्षयोर्हेतुः]

(वृ) गार्ह–तत्वात्—विभवादन्योपादानानुपपत्तेश्च ।

केचिल्लौकिक्यौ—प्रकृतयोर्गार्हपत्यार्थत्वस्योक्तत्वात् । स्वपक्षे तु प्रकृतयोर्गार्हपत्यार्थत्वस्योक्तत्वेऽपि प्रसङ्गोपजीवित्वामिति [4]यूपसका-[5]शेऽग्निमन्थनेऽप्येवमेव ।

---

[1] अयमेवार्थ उच्यते रुद्रदत्तेनापि। [2] होमावगतेर्न मन्थ?–छ. [3] अरणी अग्न्याधेयिक्यावन्ये वा अविशेषात् । तयोर्गार्हपत्यैकयोनित्वादन्ये एवेत्यन्ये (रु).
[4] इदं–छ पुस्तके न दृश्यते । [5] शे निर्मथ–छ.

(सू) देवो वां सविता मध्वाऽनक्त्विवत्याज्यस्थाल्या [1]बिलेऽङ्क्वा घृतेनाक्ते वृषणं दधातामित्युभे अभिमन्त्र्य आयुरसीति समवधाय ॥ १४ ॥ १४ ॥ ॥ १६१७ ॥

द्वादशी खण्डिका.

---

[अरणिसमवधानक्रमविवरणम्]

(भा) आज्यस्थाल्या बिले मुखे विलगतेनैवाज्येनाञ्जनम् । समवधानं [2]सङ्क्रमनमरण्योः ॥ १४ ॥

(सू) अग्नये मथ्यमानायानुब्रूहीति संप्रेष्यति मथ्यमानायानुब्रूहीति वा ॥ १ ॥ १८ ॥ १६१८ ॥

प्रथमायां त्रिरनूक्तायां त्रिः प्रदक्षिणमग्निं मन्थति । गायत्रं छन्दोऽनुप्रजायस्वेति प्रथमं त्रैष्टुभमिति द्वितीयं जागतमिति तृतीयम् ॥ २ ॥ ॥ १६ ॥ १६१९ ॥

ततो यथा[3]प्राशु मन्थति ॥ ३ ॥ १७ ॥ ॥ १६२० ॥

[प्राशुशब्दश्शीघ्रार्थः]

(भा) प्राशुशब्दश्शीघ्रवाची निरुक्तेः ।

(वृ) निरुक्तेः—शीघ्रवाचित्वेन निर्वचनात् ॥

(सू) यदि मथ्यमानो न जायेत [4]राक्षोघ्नीरनुब्रूयात् ॥ ४ ॥ १८ ॥ १६२१ ॥

---

1 बिलेऽङ्क्त्वेति वचनान्न स्रुवादिनाऽऽज्यमादायानाक्ति (रु). 2 सङ्क्रमोऽरण्योः ख. ग. घ. ङ. 3 यथ प्राशु शीघ्रतरं तथा मन्थति (रु). 4 कृणुष्वपाजीयाः । यदि निर्मन्थ्यो मथ्यमानो न जायते तस्य स्थाने हिरण्यशकलं व्याहृतीभिर्जुहुयादिति भारद्वाजः (रु).

[विकल्पितमन्त्रविषये अनुब्रूयादिति धात्वर्थे अन्न्युत्पत्तौ च विशेषः]

(भा) राक्षोघ्नीः—अग्नी रक्षांसि सेधतीति तिस्र आवर्तयति यावदग्निः पतति। कृणुष्वपाजीया वा। पतिते धनञ्जयमिति प्रतिपद्यते।

(वृ) राक्षोघ्नीः—राक्षोघ्नयः कृत्स्नोऽनुवाकः।

[धनञ्जयमिति प्रतिपदत्यवसरः]

पतिते–द्यते––होता। राक्षोघ्नीमध्येऽपि आश्वलायनवचनात्॥

(सू) जातायानुब्रूहीति जाते संप्रेष्यति प्रह्रियमाणायेति प्रहरन्॥ ५॥ १९॥ १६२२॥

[प्रहरणात्पूर्वं वर्तमानार्थप्रैषोपपत्तिः]

(भा) प्रहरन्—प्रह[1]रिष्यन्निति वर्तमानवत्।

(वृ) प्रहरन्–नवत्—प्रहरणात्पूर्वमेव प्रह्रियमाणायेत्यवर्तमानेऽपि प्रहरणे वर्तमानवत्प्रैषो वक्तव्यः प्रहरणार्थत्वात्प्रैषस्य। वर्तमानसामीप्ये वर्तमानवत्स्मरणात् आविरोधात्॥

(सू) भवतं नस्समनसौ इत्यग्रेणोत्तरं परिधिमाहवनीये प्रहरति संधिना वा॥ ६॥ २०॥ १६२३॥

[मथनसिद्धाग्निप्रवेशनक्रमविकल्पः]

(भा) उत्तरपरिधेरग्रेण प्रवेश्यते निर्मथितोऽग्निः। संधिना[2]वोत्तरेण॥

[सन्धिपक्षे परिधेरवाधितोपपत्तिः]

(वृ) उत्तरपरि–त्तरेण—परिध्योः प्रकृतत्वात्।

(सू) अग्नावग्निश्चरति प्रविष्ट इति [3]प्रहृत्य स्रुवेणाभिजुहोति॥ ७॥ २१॥ १६२४॥

---

[1] रिष्यामीति वर्त–क. ख. ग. ङ. [2] चोत्तरेण–ख. ग. ङ.
[3] प्रहृत्येति ब्राह्मणानुकरणार्थं वैचित्र्यार्थं वा अभिजुहोति उपरि जुहोति निर्मन्थ्यस्य(क).

[मन्थनाग्निप्रवेशनानुपदमुपरिहोमः]

(भा) प्रहृत्य प्रायश्चित्तमप्यकृत्वा स्रुवेणोपरि जुहोति।

[प्रहृत्येति ल्यबन्तस्वारस्यम्]

(वृ) **प्रहृत्य—होति**—प्रहृत्य स्रुवेणाभिजुहोतीत्यव्यवायार्थम्; इतरथा प्रहरणोत्तरकालपाठादेव सिद्धे प्रहृत्येति वचनमनर्थकम्॥

(सू) **सावित्रेण रशनामादाय पशोर्दक्षिणे बाहौ परिवीयोर्ध्वमुत्कृष्य ऋतस्य त्वा देवहविः पाशेनारभ इति [1] दक्षिणेऽर्धशिरसि पाशेनाक्ष्णया प्रतिमुच्य धर्षामानुषानित्युत्तरतो यूपस्य नियुनक्ति॥८॥ ॥२२॥१६२५॥**

[सावित्रमन्त्रानुषङ्गिपदं प्रत्यङ्मुखस्यानुगुणं दक्षिणत्वम्]

(भा) आदद इत्यादानं सावित्रेण। पश्चान्मुखस्योत्तरो भवति [2]दक्षिणः; तस्मिन् बद्ध्वा ऊर्ध्वं सारयति। अर्धं शिरसोऽर्धशिरः तस्मिन् दक्षिण उत्तरो भवति पश्चान्मुखस्य। अक्ष्णया-वक्रम्। प्रतिमोको बन्धनं शृङ्खलपाशेन धर्षामानुषानिन्द्राग्निभ्यां त्वा जुष्टं नियुनज्मीति रशनाशेषेण बध्नात्युत्तरतो यूपस्य, तन्नियोजनम्।

[प्रकृतोऽर्धशिरःपदार्थः]

(वृ) **अर्धं शि—न्मुखस्य**—शिरसो दक्षिणो भागः।

[सूत्रे दक्षिणत्वोक्तिविवक्षितार्थः]

उभयत्र दक्षिणो भागः प्राङ्मुखस्य दक्षिणत्वाभिप्रायः; न तु पशोरवस्थानापेक्षया॥

(सू) **दक्षिणत [3]ऐकादशिनानाम्॥९॥२३॥१६२६॥**

---

[1] दक्षिणमर्धशिरः पाशेन प्रतिमुच्य यथा शिरसो न गलति तथा वशाकृत्य बद्ध्वा नियुनक्ति रशनाशेषेण यूपे बध्नाति। पूर्ववद्देवतोपदेशनं इन्द्राग्नि—ज्मीति (रु).
[2] दक्षिणो बाहुः तस्मिन्—**ख. ग. घ. ज.** [3] लाघवार्थमेषामिह वचनम् (रु).

[1] अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षति ॥
॥ १० ॥ २४ ॥ १६२७ ॥

[पशुप्रोक्षणमन्त्रविषये मतिभेदः]

(भा) अद्भ्यस्त्वौषधीभ्य इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति प्रोक्षणम् । अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति केचित् । प्रोक्षाम्यन्तस्य सूत्रकारेण परिपाठात् । अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीन्द्राग्निभ्यां त्वा जुष्टमित्युपदेशः ।

प्रोक्षणं पायनं प्रोक्षणमिति त्रयः पदार्थाः । केचिन्मेध्यकरणत्वादयमेकः पदार्थ इति ; उपरिष्टात्प्रोक्षाम्युपरिष्टादेवैनं मेध्यं करोतीति । तदा पदार्थत्रयमेकैकस्य पशोः ।

[केचिदित्युक्तपक्षोपपत्तिः]

(वृ) अद्भ्यस्त्वौ–ठात्—अद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षाम्यन्तस्य निर्देशात् तत उत्तरं देवतानिर्देश इति ।

[प्रथमपक्षोपपत्तिः]

पूर्वस्मिन् पक्षे मन्त्रान्ते क्रियानुष्ठानात् तत्रैव क्रियापदनिर्देशो युक्त इति मन्त्रपाठस्य सूत्रकारेण परिपाठात् क्रियापदात्पूर्वं देवतानिर्देशो युक्त इति ।

[उपदेशपक्षोपपत्तिः]

अद्भ्यस्त्वौ–पदेशः—आर्षानुग्रहाय मन्त्रमध्ये देवतापदस्य निवेशनमयुक्तम् । नियमेन च क्रियापदात्पूर्वं देवतापदस्य निवेशो न दृश्यते । यथा ; जनयत्यै त्वा संयौम्यग्नये त्वाऽग्नीषोमाभ्यामिति । क्रियैकत्वाच्च क्रियापदावृत्तेरयुक्तत्वात् ।

---

[1] अत्र तु मन्त्रगतादेवाख्यातात् पूर्वदेवतोपदेशनप्रक्षेपेण मन्त्ररूपमुदाजहतुर्बोधायनभरद्वाजौ यथा–अद्भ्यस्त्वौषधीभ्य इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति (रु).

[प्रोक्षणादित्रयस्यैकपदार्थत्वभिन्नत्वपक्षोपपत्तिः]

प्रोक्षणं पायनं पुनःप्रोक्षणमिति त्रयः पदार्थाः। अतः पशुगणे एकैकांशेनानुसमयः।

केचिन्मे–करोतीति—प्रतीकग्रहणं सर्वत एवैनं मेध्यं करो[1]तीत्येवमन्तस्य। अतस्त्रयाणां मेध्यकरणप्रयोजनैकत्वादेकपदार्थत्वम्। अवघाते कृष्णाजिनास्तरणादेरिव।

[पदार्थभेदपक्षे विशेषः]

तदाप–शोः—पशुगणे पूर्वस्मिन् पक्षे त्रयाणां मेध्यकरणार्थत्वेऽपि पायनव्यवधानाद्विलक्षणक्रियाभेदात् पदार्थभेदः। अथवा मेध्यकरणमर्थवाद इति॥

(सू) **अपां पेरुरसीति पाययति ॥११॥२५॥ ॥१६२८॥**

**स्वात्तं चित्तसदेवं हव्यमापो देवीः स्वदतैनामित्यु-[2]परिष्टादधस्तात्सर्वतश्च प्रोक्ष्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते ॥१२॥२६॥१६२९॥**

त्रयोदशी खण्डिका.

---

[प्रोक्षणानन्तरं कर्तव्यसिद्धिः प्राकृतस्य]

(भा) वेदं निधाय सामिधेनीभ्यः—सामिधेन्यर्थम्। यत्कृत्वा प्रकृतौ प्रतिपद्यते तद्यावत्करोति। वेद्यन्तपरिस्तरणं होतृषदनपरिकल्पनं च।

[वेदनिधानेतरप्रतिषेधपक्षः]

केचित्त्यजन्त्यपरिपाठात्॥

इति धूर्तस्वामिभाष्ये सप्तमे प्रश्ने चतुर्थः पटलः.

---

[1] तीत्यन्तस्य–घ. [2] सर्वत इत्येव सिद्धे क्रमार्थमुपरिष्टादधस्तादिति। वेदं निधाय सामिधेनीभ्य इति वचनात् वेद्यन्तपरिस्तरणहोतृषदनपरिकल्पने च न स्त इति केचित् (र).

[प्राकृतकार्यस्येह प्राप्तिः]

(वृ) वेद नि–ल्पनं च—यद्यपि वेद्यन्तपरिस्तरणादेरसंकीर्तनम्; तथाऽपि प्रकृतितः प्राप्तस्य कार्यसद्भावे सति बाधो न संभवतीति। वेदं निधाय सामिधेनीभ्य इत्युक्तेऽपि अन्यदपि प्राप्तं कृत्वा सामिधेनीभ्यः प्रतिपद्यत इति।

[इतरवर्जनपक्षसिद्धिः]

केचित्त्य–पाठात्—वेदनिधानादित्येतावता सिद्धे वेदं निधाय सामिधेनीभ्यः प्रतिपद्यत इति पाठ इतरव्युदासार्थ इति।

इति श्रीरामाग्निचिद्विरचितायां धूर्तस्वामिभाष्यवृत्तौ
सप्तमे प्रश्ने चतुर्थः पटलः ॥

———

(सू) स्रुच्यमाघार्य [1]प्रत्याक्रम्य जुह्वा पशुं समनक्ति॥
॥ १ ॥ १ ॥ १६३० ॥

सं ते प्राणो वायुना गच्छतामिति शिरसि। सं यजत्रैरङ्गानीत्यं[2]सोच्चलयोः। सं यज्ञपतिराशिषेति श्रोण्याम्॥ २॥ २ ॥ १६३१ ॥

[पशोरञ्जनदेशविवरणम्]

(भा) अंसोच्चलयोः—अंसयोर्ये चलस्थाने तयोरञ्जनम्। श्रोणिः—कटिः। स्रुचा हूयते स्रुच्यम्।

[जुहूग्रहणफलम्]

(वृ) प्रकृतेऽपि जुह्वेति पुनरुपादानात् जुहूस्थाज्यस्य वचनमन्तरेणान्यत्र विनियोगासम्भवात् तत्प्राप्त्यर्थं जुहूग्रहणम्।

---

[1] प्रत्याक्रम्येति वचनात् स्रुच्यमाघार्य न दक्षिणो गत्वा समनक्ति (रु).
[2] अंसोच्चलयोः—अंसकोटयोः। तयोश्चावृत्तिर्मन्त्रस्य (रु).

(सू) ध्रुवासमञ्जनादि कर्म प्रतिपद्यते । समानमा-
प्रवरात् ॥ ३ ॥ ३ ॥ १६३२ ॥

षड्ऋत्विजः ॥ ४ ॥ ४ ॥ १६३३ ॥

[पशुबन्धे षड्ऋत्विजः, शमिता तु नर्त्विक्]

(भा) [1]षड्ऋत्विजः पशुबन्धस्य कर्म कुर्वन्ति । यद्यपि शमिता श्रपणकर्म करोति; तथाऽपि न भवत्यृत्विक् । अतस्सामान्यचोदनासु नाद्रियते ॥ ४ ॥

[ऋत्विक्कर्मकरणेऽपि सामान्यचोदनासु न शमितृग्रहणम्]

(वृ) षड्ऋत्विजः पशु–र्वन्ति—षण्णामृत्विजां कार्यदर्शने सत्यपि षड्ऋत्विज इति पुनर्वचनस्येदं प्रयोजनम् ।

यद्यपि शमिता–द्रियते—अस्यार्थः ;—मीमांसकैः अध्वर्योरेव शमितृत्व उक्तेऽपि विश्वसृजामयने 'मृत्युस्तदभवद्धाता शमिताग्रो विशांपतिः' इति अध्वर्योरन्यस्य शमितृत्वदर्शनात् अध्वर्योश्च संज्ञपनकाले पराङावर्तनपृषदाज्यावेक्षणासनानां विहितत्वादन्यश्शमिता । तस्य च श्रपणादृत्विक्कार्यकरत्वेऽपि ऋत्विक्त्वं नास्ति; षड्ऋत्विज इति नियमात् । इडाभक्षणे च मैत्रावरुणषष्ठाः प्रतिप्रस्थाता सप्तम इति नियमात् शमितुरनुपादानात् । अतः सामान्यचोदनासु मार्जनादिषु तस्यान्वयो न विद्यते ।

(सू) [2]दैवं च मानुषं च होतारौ वृत्वा पुनराश्राव्य मैत्रावरुणं प्रवृणीते मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति ॥ ५ ॥ ५ ॥ १६३४ ॥

---

[1] असमासार्थं वचनं ब्राह्मणानुकरणार्थं च । शमितुः ऋत्विक्त्वशङ्कानिराकरणार्थमित्यपरम् (रु). [2] अग्निर्दैवो होतेति दैवं असौ मानुष इति मानुषं च वृत्वा मैत्रावरुणमप्यसौ मानुष इत्यनेन वृणीते । होतृविकारत्वात् । सौमिके च तथा दर्शनात् । व्यक्तपाठाच्च कल्पान्तरेषु (रु).

[होतृतद्विशेषवरणानि मन्त्रत उपदेशपक्षश्च]

(भा) दैवो—होता; अग्निर्देवो होतेति। असौ मानुष इति मानुषः। तौ वृत्वा कृत्वाऽऽश्रुतप्रत्याश्रुते मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति[1] देवदत्तो मानुष इति सोऽपि होतृविकार[2]त्वात्। उपदेशो न व्रियते मानुष इति।

(वृ) होतृविकारत्वात्—व्रियते।

[मानुषनिषेधे हेतुः]

न व्रियते—अपठितत्वात्।

(सू) तिष्ठति पशावेकादश प्रयाजान् यजति ॥ ६ ॥
॥ ६ ॥ १६३५ ॥

[प्रयाजानुष्ठानं तत्र तत्र विलक्षणम्]

(भा) एकादशप्रयाजान् यजत्यस्मिन् कर्मणि। तांश्च तिष्ठति पशौ ये [3]सम्भवन्ति। वाजपेये त्वेकादशापि। सारस्वतप्रभृतिषु तिष्ठत्सु।

[संभवत्प्रयाजविषयत्वकथनहेतुः]

(वृ) एकादशप्र–कर्मणि—तिष्ठति पशावेकादश प्रयाजान् यजतीति सूत्रं विभज्य व्याख्यायते। वपाश्रपणोत्तरकालं उत्तमप्रयाजविधानात् एकादशानां तिष्ठति पशावसम्भवात्; अत एवं व्याख्या। 'एकादश–र्मणि' इति प्रयाजसङ्ख्याविधिः।

[तिष्ठति पशौ इत्यस्यार्थान्तरम्]

तांश्च ति–भवन्ति—दश। इह तिष्ठति पशौ सम्भवतां दशानां तिष्ठत्येव पशावनुष्ठानम्, न निषण्ण इत्यर्थान्तरविधिः।

---

[1] इति मानुषोऽपि–ख. छ. [2] त्वात् न व्रियते मानुष इत्युपदेशः–ज.
[3] तत्र त्वसंभवपर्युदस्तत्वादेकादशे दशस्वेव पशोः स्थाननियमः। निषण्णं तु पशुं यद्यु वै निषीदेदिति विधिनोत्थापयेत् (रु).

[वाजपेये सर्वानुष्ठाने हेतुः]

वाजपे-ष्टत्सु—तेषां ब्रह्मसामकाले संज्ञपनात्।

(सू.) समिद्धचः प्रेष्येति [1]प्रथमं संप्रेष्यति । प्रेष्य प्रेष्येतीतरान् ॥ ७ ॥ ७ ॥ १६३६ ॥

[2]चतुर्थाष्टमयोः प्रतिसमानीय दशैष्वैकादशायाज्यमवशिनष्टि ॥ ८ ॥ ८ ॥ १६३७ ॥

तान् यजमानः प्राकृतैरादितश्चतुर्भिश्चतुरोऽनु[3]मन्त्रय चतुर्थस्यानुमन्त्रणेन दुरःप्रभृतींस्त्रीनुत्तमेन शेषम् ॥ ९ ॥ ९ ॥ १६३८ ॥

[प्रयाजहोमानुमन्त्रणे विशेषविवरणम्]

(भा) आदितः—[4]प्रथमप्रयाजप्रभृति । [5]अष्टमादय उत्तमविकाराः । बर्हिः स्वाहाकारार्थं [6]समानयनमिति उत्तमविकारेष्वपि क्रियते । चतुर्थोत्तमविकारा आगन्तवः । तन्मध्यपाठात् । [7]तत्र समप्रविभागेन [8]विकाराः । हेमन्तशिशिराविति प्रयाजशेषस्यानुमन्त्रणम् ॥

(वृ) आदितः–प्रभृति—चतुर्भिः ।
अष्टमा–राः—इति वक्ष्यते ।
बर्हिः स्वा–क्रियते—[9]पुनर्वचनात् ।

---

[1] प्रथमं प्रयाजं प्रति मैत्रावरुणं संप्रेष्यति (रु). [2] चतुर्थप्रभृतयश्चत्वारो बर्हिषो विकाराः अष्टमप्रभृतयः स्वाहाकारस्य । बर्हिः स्वाहाकारार्थं च प्रकृतौ बर्हिषः समानयनम्; अतश्चतुर्थ एव सर्वानयने प्राप्ते विभागार्थमुक्तं चतुर्थाष्टमयोरिति (रु) [3] तत्तद्विकारांस्तस्य तस्य मन्त्रेणानुमन्त्रयत इति भावः । अत एव न्यायात्तत्तद्देशत्वमपि तत्तद्विकाराणां द्रष्टव्यम् (रु). [4] प्रथमं प्रयाजं प्रभृति-**ज.** [5] पञ्चमादयश्चतुर्थविकारात्-**ज.** [6] समानयनम्-**ख. ग.** [7] तत्र संप्रतिविभा-**ख. ग.** [8] विकारः-**ख. ग. घ.** विकारात्-**क. ज.** [9] वचनात्-**घ.**

चतुर्थो–पाठात्—बर्हिःस्वाहाकारयोर्मध्यपाठात् ।

[प्रकृतप्रयाजे दुरआदेः प्रयाजत्वानुपपत्तिः]

तत्र सम–राः—बर्हिर्विकारा दुरःप्रभृतयस्त्रय उत्तमविकाराः तिस्रो देवीरित्येवमादयस्त्रयः । एवं न्यायप्राप्तं सूत्रकार आह—तान् यजमानः प्राकृतैरित्यादि । आदितश्चतुर्णां प्राकृतरूपप्रत्यभिज्ञानात् उपरितनानां न्यायप्राप्तो विभाग इति उत्तमेन शेषामिति ।

(सू) प्रत्याक्रम्य जुह्वा स्वरुस्वधिती अनक्ति । त्रिस्स्वरुं सकृत्स्वधितेरन्यतरां धाराम् ॥१०॥ ॥१०॥ १६३९॥

(भा) अन्यतरा धारा—एकतरा धारा ।

(सू) स्वरुमन्तर्धाय स्वधितिना पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेतामिति शिरसि ॥११॥ ॥११॥ १६४०॥

[स्वरोरन्तर्धानप्रकारः]

(भा) स्वरुरधस्तादुपरि स्वधितिः । ताभ्यामञ्जनं पशोः ।

[स्वरुस्वधिती अञ्जनकरणम्]

(वृ) स्वरुरध–पशोः—स्वधितिना पशुं समनक्तीति स्वधितेरञ्जनकरणत्वेऽपि स्वरोरञ्जने अन्तर्धानस्य दृष्टार्थत्वाय उभाभ्यामञ्जनम् ।

(सू) न वा स्वधितिना [1]स्वरुणैव ॥१२॥१२॥ ॥१६४१॥

[एकेनाञ्जनपक्षे विशेषः]

(भा) एकेनाप्यञ्जनं स्वरुणा । अविकृतो मन्त्रः । घृतेनाक्तः पशुं त्रायस्वेत्युपदेशः । पुनर्यूपे क्षिप्यते स्वरुः ।

---

1 तदा तु घृतेनाक्तः पशुं त्रायस्वेत्यूहः (रु).

[द्विवचनाविवक्षानिवार्हः]

(वृ) एकेना—मन्त्रः—यदा न वा स्वधितिना स्वरुणैवेति स्वरुणैवाञ्जनं तदाऽप्यविकृतो मन्त्रः; पशुसंस्कारत्वादञ्जनस्य। तत्साधनत्वान्मन्त्रस्य। घृतेनाक्ताविति द्विवचनमविवक्षितम्। पाक्षिकप्राप्तानुवादो वा घृते॥

घृतेना-देशः—अञ्जनसाधनत्वेऽपि मन्त्रस्य अञ्जनसाधनस्यैकत्वद्वित्वाविकल्पे अपाकृतत्वेऽपि मन्त्रस्य इन्द्रप्रकाशकमन्त्राणां महेन्द्रप्रकाशने तत्पदप्रक्षेपवत् केवलस्वरुपक्षे एकवचनमेवेति।

पुनः-स्वरुः—तस्मिन् रशनागुणे॥

(सू) [1]अक्तया शृतस्यावद्यति पशुमितरया विशास्ति॥ १३॥ १३॥ १६४२॥

[स्वधितिधाराकार्यभेदः]

(भा) अक्तया धारया। पक्वस्य पशोरवदानं अनक्तया[2] विशसनम्।

(सू) शमित्रे स्वधितिं प्रयच्छन्नाह शमितरेषा[3] तेऽश्रिः स्पष्टाऽस्त्विति॥ १४॥ १४॥ १६४३॥

चतुर्दशी खण्डिका.

---

(भा) स्पष्टाऽस्तु—विदिता भवतु, एषाऽश्रिरक्ता, अनक्तया विशसनं कुरु।

(वृ) अत्र आयतने स्रुचौ सादयेत्।

(सू) [4]पर्यग्नये क्रियामाणायानुब्रूहीति संप्रेष्यति पर्यग्नयेऽनुब्रूयादिति वा॥ १॥ १५॥ १६४४॥

---

[1] अक्तया स्वधितेर्धारया पक्वस्य पशोरङ्गान्यवद्यति। इतरया त्वनक्तया पशुं विशास्ति शमिता (रु). [2] क्तया त्वं विशसनं—ख. ग. [3] एषा अक्तादानार्था धारा स्फुटा विदिताऽस्तु तया विशसनं परिहरणीयमित्यर्थ (रु). [4] परितोऽग्निर्यस्य स पर्यग्निः। तथा क्रियमाणाय पशव इत्यर्थः। न तु परितः क्रियमाणायाग्नय इति। यथा चैतदेवं तथैकादशिनेषु व्यङ्क्ष्यामः (रु).

[सौत्रप्रैषार्थः पर्यग्निकरणे पक्षद्वयतन्माने च]

(भा) पर्यग्नये समन्ततोऽग्नये क्रियमाणायेति प्रैषार्थः। पशुमेव वा त्रिः पर्यग्नि करोति अग्रे पशोराम्नानात्। सह वा यूपादिभिः अन्यमतात्।

[पर्यग्निकरणे पक्षद्वयोपपत्तिः]

(वृ) पशुमेव वा–म्नानात्—अस्यार्थः—आज्यानि चेत्येक इति मतान्तरत्वेन निर्देशात् पक्षद्वयमङ्गीकर्तव्यम्। तत्र पशुमात्रपर्यग्निकरण-मेकस्मिन् पक्षे। पर्यग्नि करोति सर्वहुतमेवैनं करोतीति पशुसंस्कारत्वा-वगतेः सूत्रकारेण प्रथमनिर्देशाच्च।

सह वा–तादिति—एके इति मतान्तरे यूपादीनामविशेषाच्च। शब्दस्य सर्वार्थत्वात्पश्वाद्याज्यान्तानां पर्यग्निकरणमिति द्वितीयः पक्षः, चात्वालस्योत्तरतो हिरण्यकेशिनोक्तत्वात्।

(सू) आहवनीयादुल्मुकमादायाग्नीध्रः परिवाजपतिः कविरिति त्रिः प्रदक्षिणं [1] पर्यग्नि करोति पशुं यूप-माहवनीयं शामित्रदेशं चात्वालम्। आज्या-नि चेत्येके ॥ २ ॥ १६ ॥ ॥ १६४५ ॥

[द्वितीयपक्षे पर्यग्निकर्तुः गतिदेशः]

(भा) आज्यान्यपरेणान्तराग्नीं गच्छति द्वितीये कल्पे।

[भाष्यदर्शितविशेषहेतुविवरणम्]

आज्या–कल्पे—एकत्र स्थितेन सर्वपर्यग्निकरणासंभवादा-ज्यान्यपरेणान्तराग्न्योर्गमनेऽपि न दोषः।

---

[1] पर्यग्नीति क्रियाविशेषणम्। यथा पर्यग्नि भवति पशुस्तथा करोतीत्यर्थः। तत्र चात्वालान्तमपच्छिद्य पश्वादीनि पञ्च पर्यग्नि करोतीति प्रथमः कल्पः। आज्यानि चेत्येक इत्याज्यसमुच्चयेन द्वितीय इति योज्यम्। इत्थं हि सत्याषाढेन परमतेनेद-मुक्तम्। पर्यग्नि करोति पशुमिति वाऽपच्छिद्य ततो यूपादिपञ्चसमुच्चयेन द्वितीयः कल्पः। बोधायनभरद्वाजाभ्यां पशोरेव पर्यग्निकरणमेकीयमुक्तम्। प्रथमा योजनैव तु सूत्रानुगता। त्रिः प्रतिपर्येतीत्यभिपर्यग्निकृते देश इति च नित्यवद्वचनात् (रु).

(सू.) प्रत्यपिसृज्याल्मुकं त्रिः प्रतिपर्येति ॥३॥१७॥
॥ १६४६ ॥

[प्रतिपर्ययणे विशेषः]

(भा) प्रत्यपिसर्गः—पुनः क्षेपः।

[अनिवृत्तिपक्षस्तद्धेतुश्च]

प्रतिपर्येति निवर्तते यथागतम्। अगतेनापि शक्यते पशोरेकस्य पर्यग्निकरणमिति न प्रतिपर्येति प्रथमे कल्पे।

[पक्षद्वयसाधारणोंऽशः]

(वृ) प्रत्यपि–कल्पे—प्रत्यपिसर्गस्त्वविशेषादुभयोः पक्षयोः।

(सू.) प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति पर्यग्नौ क्रियमाणे अपाव्यानि जुहोत्येकं द्वे त्रीणि चत्वारि वा॥
॥ ४ ॥ १८ ॥ १६४७ ॥

[अपाव्यहोमः]

(भा) अपाव्यानीति नामधेयं होमस्य।

[अपाव्यहोमोक्तेराशयः उपदेशपक्षोपपत्तिश्च]

(वृ) अपाव्या–मस्य—उपाकरणप्रभृति संज्ञपनात्प्राक् सर्वत्रोपदेशमतेन प्रायश्चित्तप्राप्तिं दर्शयितुं प्रयाजसन्निधानादुत्कृष्योच्यते। यदि पशुरुपाकृत इत्युपक्रम्य निषण्णप्रायश्चित्तविधानादुपदेशपक्षोपपत्तिः।

(सू.) [1]पशुपतेः पशवो विरूपाः सदृशा उत। तेषां यं वव्रिरे देवास्तं स्वराडनुमन्यताम् ॥५॥ १९ ॥
॥ १६४८ ॥

---

[1] द्विप्रभृतिषु कल्पेष्वेव द्वितीयाहुतिर्नियता (रु).

[पशुपतेरितिहोमे विशेष उपदेशपक्षश्च]

(भा) पशुपतेरिति द्विप्रभृतिषु नित्या। प्रयाजेषु स्थाननियमान्न पूर्वं पशोरुपविष्टस्य प्रायश्चित्तम्। उपाकृतमात्र इत्युपदेशः।

(सू) ये बध्यमानमिति प्रमुच्यमाने। प्रमुञ्चमाना इति प्रणीयमाने ॥ ६ ॥ २० ॥ १६४९ ॥

[विमोकहोमपौर्वापर्यम्]

(भा) शमिता मुञ्चति पशुम्। मुच्यमानेऽध्वर्युर्जुहोति। प्रणीयमाने नीयमाने।

(वृ) शमिता मुञ्चति पशुम्—नयनार्थत्वात्। प्रमुच्यमाने अध्वर्योर्होमविधानाच्च।

(सू) रेवतीर्यज्ञपतिं प्रियधा विशतेति वपाश्रपणीभ्यां पशुमन्वारभेते अध्वर्युर्यजमानश्च आश्राव्य प्रत्याश्राविते संप्रेष्यत्युपप्रेष्य होतर्हव्या देवेभ्य इति ॥ ॥ ७ ॥ २१ ॥ १६५० ॥

[अध्वर्युणाऽन्वारम्भे होमकर्ता अन्वारम्भावधिश्च]

(भा) तत्राध्वर्युणाऽन्वा[1]रब्धः पशुरिति प्रतिप्रस्थाता जुहोति। नीयमानश्चात्यन्तमन्वारब्धव्यः पशुः।

[यजमानान्वारम्भलाभः]

यः पशुं मृत्यवे नीयमानमन्वारभत इति यजमानस्याप्यन्वारम्भमन्त्रः।

[प्रैषक्रमः कर्तव्यविशेषः प्रैषार्थश्च]

होतरुपप्रेष्येति मैत्रावरुणेन प्रैष उक्ते अध्रिगुप्रैषः। हव्यानि यथा देवेभ्यः कर्तव्यानि [2] यथाप्रैषम्। त्वगेकधा कर्तव्या। स्थगयि-

---

[1] रब्धव्यः—घ. [2] यथाप्रोषितम्—क. ख. ग. ङ. छ.

तव्यः पशुः। अङ्गानि च चोदितानि सकलानि ग्रहीतव्यानीति प्रैषार्थस्सं-क्षेपतः।

[प्रतिप्रस्थातुः कर्तृत्वप्राप्तिः]

(वृ) **तत्राध्व-होति**—अध्वर्योरन्यत्र व्यापारे तत्कार्यकरत्वात्।

[अन्वारम्भेऽत्यन्तत्वलाभः]

**नीयमान-शुः**—संज्ञपनकालेऽध्वर्योः पराङावर्तनविधानात्। वपाश्रपणीभ्यां तावदन्वारम्भः कर्तव्यः।

[यजमानान्वारम्भलाभविवरणम्]

**यः पशुं-मन्त्रः**—अस्यार्थः;—ब्रह्मवादिनो वदन्त्यन्वारभ्य इत्यादिना तं यदन्वारभेत प्रमायुको यजमान इति साक्षादन्वारम्भे दोषमुक्त्वा सुवर्गाय वा एष लोकायेत्यादिना दोषपरिहारेण सुवर्गप्राप्त्यर्थो वपाश्रपणीभ्यामन्वारम्भ उक्तः। प्र वा एषोऽस्मादित्यादिना अन्वारम्भे मृत्युलोकप्राप्तया अस्माल्लोकात्प्रच्युतिमनूद्य पुनर्वपाश्रपणीभ्यामन्वारम्भेण यजमानस्यास्मिन् लोके प्रतिष्ठानिर्देशात् यजमानस्य पुनरन्वारम्भविधानान्नीयमानान्वारम्भस्समन्त्रको यजमानेन कर्तव्यः।

[अध्रिगुप्रैषे कर्ता]

**होतरुप-गुप्रैषः**—होतरुपप्रेष्य उपप्रेष्येति मैत्रावरुणेन प्रैष उक्ते अनन्तरं अध्रिगुप्रैषं होताऽन्वाह॥

[यथाप्रैषं कर्तव्यसंक्षेपः]

**हव्यानि यथा देवेभ्यः कर्तव्यानि**—श्येनाकृतिं वक्षः कृणुतादित्यादिकृत्स्नोद्धरणादिप्रकारेण न्यूनहविरुद्धरणार्थः प्रैषः।

[कर्तव्यविशेषमानानि]

**त्वगेकधा कर्तव्या**—एकधाऽस्य त्वचमाछयतादित्यस्यार्थः।

स्थगयितव्यः पशुः—अन्तरेवोष्माणं वारयतादित्यस्यार्थः। श्रपणकाले कुम्भी स्थगयितव्येति।

अङ्गानि च यथा चोदितानि—गात्रं गात्रमस्यानूनं कृणुतादित्यस्यार्थः।

[संक्षेपोक्त्याशयः]

सकलानि-क्षेपतः—उक्तः, पशुहौत्रव्याख्यानावसरे विस्तरेण व्याख्यातत्वात्।

(सू) प्रास्मा अग्निं भरत स्तृणीत बर्हिरिति होतुरभिज्ञायाहवनीयादुल्मुकमादायाग्नीध्रः [1]पूर्वः प्रतिपद्येत ॥ ८ ॥ २२ ॥ १६५१ ॥

[2]शमिता पशुं नयति ॥ ९ ॥ २३ ॥ १६५२ ॥

उरो अन्तरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्ति ॥ १० ॥ २४ ॥ १६५३ ॥

[उरो-इत्यादिमन्त्रोच्चारणे कर्तारः]

(भा) उरो अन्तरिक्षेत्यध्वर्योर्यजमानस्याग्नीध्रस्य शमितुश्च मन्त्रः ॥

[भाष्यदर्शितकर्तृत्वोपपत्तिः]

(वृ) उरो अन्तरिक्षेत्यध्व–[3] मन्त्रः—यद्यपि शमिता पशुं नयतीति शमितुर्नयने कर्तृत्वम्; तथाऽपि उरो अन्तरिक्षेत्याद्युक्त्वा उदञ्चं पशुं

---

1 पूर्वः प्रतिपद्यते पुरस्तात्पशोर्गच्छति (रु). 2 शमिता यूपात् पशुं प्रमुच्य गमनाय कर्षति। तत्राध्वर्युराहुती जुहोति ये बध्यमानं प्रमुञ्चमाना इति (रु). 3 अध्वर्य्वादयः शमित्रा सह पशुमुदञ्चं बहिर्वेदि नयन्ति। तदर्थव्यापारान् कुर्वन्ति। यद्वा छत्रिन्यायेन शमित्रा सह गमनात्तेषां नेतृत्वोपचारः। पशुं तु नीयमानमपि पूर्ववदन्वारभेतैव यजमानः यः पशुं मृत्यवे नीयमानमन्वारभेत वपाश्रपणी पुनरन्वारभत इति लिङ्गात्। तथाऽध्वर्युरप्यन्वारभेतेत्यपरे (रु).

नयन्तीति निर्देशात् अध्वर्युयजमानयोश्च नयनेऽन्वारम्भणेन कर्तृत्वात् आग्नीध्रस्य च रक्षोहननार्थमुल्मुकहरणेन नयनोपकारकतया कर्तृत्वात् सर्वेषां नयनमन्त्रः ॥

(सू) नाना प्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति ॥
॥ ११ ॥ २५ ॥ १६५४ ॥

पञ्चदशी खण्डिका.

———

[1] ऊवध्यगोहं पार्थिवं खनतादित्यभिज्ञायो-
वध्यगोहं खनति ॥ १ ॥ २६ ॥ १६५५ ॥

[ऊवध्यगोहपदार्थः खननकर्ता उपदेशपक्षश्च]

(भा) ऊवध्यमुदरगतं शकृद्यत्र गुह्यते क्षिप्यतेऽवटे स ऊवध्यगोहः । पृथिव्यां भवः पार्थिवः । स खन्यते व्यापृतत्वादध्वर्योः प्रतिप्रस्थात्रा । अध्वर्युरेव खननारम्भं करोतीत्युपदेशः ॥

[उपदेशपक्षाशयः]

(वृ) अध्वर्युरेव-देशः—गात्रं गात्रमित्यध्वर्योः प्रेषितत्वात् तदानन्तर्यादध्वर्युणैव यथाकथंचित्कर्तव्यत्वात् । खननारम्भद्वारेणाध्वर्युः कर्ता ।

(सू) अभिपर्यग्निकृते देश उल्मुकं [2] निदधाति ॥
॥ २ ॥ २७ ॥ १६५६ ॥

[उल्मुकनिधानदेशः]

(भा) अभिपर्यग्निकृते देशे पक्षेण ।

---

[1] उदरगतमसुरभिशकृदाद्यूवध्यं । यदूवध्यमुदरस्यापवातीति लिङ्गात् । तद्गूह्यते छाद्यते यस्मिन्नवटे स ऊवध्यगोहः । तं खनति कश्चिदृत्विक् परिकर्मी वा ॥ (रु.)
[2] आग्नीध्र इति शेषः । तत्रोत्तरेण चात्वालशामित्रदेशे इति सत्याषाढः-(रु).

[सूत्रोक्तस्य पाक्षिकत्वे हेतुः]

(वृ) अभिप–क्षेण—[1] द्वितीयपक्षे शामित्रदेशस्यापि पर्यग्निकरणात् ॥

(सू) [2]स शामित्रः ॥ ३ ॥ २८ ॥ १६५७ ॥

[शामित्रपदव्युत्पत्तिः]

(भा) शमिता[3]र्थलक्षणं पाकं करोतीति शामित्रोऽग्निः ॥

(सू) तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य पृथिव्यास्संपृचः पाहीति तस्याधस्ताद्बर्हिरुपास्यत्यु[4]पाकरणयोरन्यतरत् ॥ ४ ॥ २९ ॥ १६५८ ॥

[उपाकरणदर्भयोरन्यतरोऽधस्तात् क्षिप्यते]

(भा) उपाकरणयोर्दर्भयोरेकमधस्तात् क्षिपति ।

[उपाकरणपक्षभेदादुपपत्तिः]

(वृ) उपाक–पति—बर्हिर्भ्यामुपाकरणपक्षे । तृणेनोपाकरणपक्षे तु तस्यार्धं क्षिपति ॥

सू) तस्मिन् [5]संज्ञपयन्ति प्रत्यक्शिरसमुदीचीनपादम् ॥ ५ ॥ ३० ॥ १६५९ ॥

(भा) प्रत्यक्शिराः अपरशिराः । उदीचीनैः पादैर्मार्यते ।

(वृ) प्रत्यक्शि–र्यते—'तस्मिन् संज्ञपयन्ति प्रत्यक्शिरसमुदीचीन[6]पादम्' इत्यन्तमेकं सूत्रम् ।

(सू) [7] अमायुं कृण्वन्तं संज्ञपयतेत्युक्त्वा पराङावर्ततेऽध्वर्युः ॥ ६ ॥ ३१ ॥ १६६० ॥

---

[1] द्वितीयकल्पे–छ. [2] सोऽग्निर्निरूढपशोः शामित्रः । श्रपणे पशुसंबन्धात् पशुश्रपणार्थोऽग्निश्शामित्र इति समाख्यायते–(रु). [3] ताऽत्रार्थ–ख. ग. घ. [4] उपाकृतः पशुर्याभ्यां ते उपाकरणे–(रु). [5] शमितार इति शेषः । अक्षतस्य मारणं संज्ञपनम् (रु). [6] पादमित्येकम्–ख. ग. [7] मायुः शब्दः तमकुर्वन्तमित्यर्थः (रु).

[प्रैषाकारे मतान्तरम्]

(भा) अमायुः [1]प्रैषादिः भारद्वाजमतात्।

[सूत्राक्षरार्थः कृते शब्दे कर्तव्यं पक्षान्तरे च]

[2]मायुश्शब्दः । शब्दमकुर्वन्तं मारयतेत्यर्थः । पराङ्मुख आवर्ततेऽध्वर्युः । मार्यमाणो यदि शब्दं करोति तदा [3]इन्द्रस्येति जपः पशोरवेक्षणमन्त्रलिङ्गात् । हिरण्यकेशिनस्तु यदि शब्दं करोति तदा इन्द्रस्य भाग इत्यवेक्षणमेव । प्रायश्चित्तं पृषदाज्यस्य। अधिकमित्युपदेशः ।

[पश्ववेक्षणसूत्रे चकारफले मतिभेदः]

चकारो वाग्यमनसमुच्चयार्थः । केचिन्मन्त्रसमुच्चयः ।

[अवेक्षणमेवेति एवकारव्यावर्त्यम्]

(वृ) इत्यवेक्षणमेव—अनेन मन्त्रेण पृषदज्यावेक्षणमेव प्रायश्चित्तम् । न तु यदस्य पारे रजस इत्यादि ।

[उपदेशपक्षाशयः]

अधिकमित्युपदेशः—यदस्य पारे रजस इत्यादिभ्योऽधिकं वाग्यमनावेक्षणमित्युपदेशः । एकस्मिन् दोषे श्रूयमाणानि प्रायश्चित्तानि समुच्चीयेरन्निति ।

[भाष्यदर्शितचशब्दार्थविवरणम्]

चकारो-यार्थ इति—स्वमतेन पश्ववेक्षणे चशब्दो वाग्यमनसमुच्चयार्थः अवेक्षिते च वाग्यतश्चेत्यर्थः ।

केचिन्मन्त्रसमुच्चयः—चशब्देनोच्यत इत्याहुः।

---

[1] प्रैषादिभिः-ग. प्रैषादि-छ. प्रैषस्यादिर्न भवति मायुशब्द इत्यर्थः। एतत्सूचनायैव वृत्तौ पादशब्दान्तरस्यैकसूत्रता कीर्त्यते भाष्यकारमतेन तथा चोक्तं भरद्वाजेन प्रत्यक्शिरसम्' इत्यादि. [2] मायुः शब्दमकुर्वन्तं--ङ. मायुः शब्दमकुर्वन्तममा?-क. [3] इदं द्रस्येति पशोरवे?-छ. इन्द्रस्येति पशोरवेक्षणं मंत्र-घ.

(सू) स्वर्विदसि स्वर्वित्त्वा स्वरिहि स्वर्मह्यं स्वः पशुभ्यः। लोकविदसि लोकं वित्त्वा लोकमिहि लोकं मह्यं लोकं पशुभ्यः। गातुविदसि गातुं वित्त्वा गातुमिहि गातुं मह्यं गातुं पशुभ्यः। नाथविदसि नाथं वित्त्वा नाथमिहि नाथं मह्यं नाथं पशुभ्यः। न वा उवे तन्म्रियसे न रिष्यसि देवाँ इदेषि पाथिभिस्सुगेभिः। यत्र सन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवस्सविता दधातु। आशानां त्वाशापालेभ्य इत्येषा। विश्वा आशा मधुना संसृजाम्यनमीवा आप ओषधयो भवन्तु। अयं यजमानो मृधो व्यस्यताम्। अगृभीताः पशवस्सन्तु सर्व इत्युक्त्वा पराङावर्तते यजमानः। नानाप्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति॥ ७॥ ॥ ३२॥ १६६१॥

षोडशी खण्डिका

---

(सू) यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च। ता नस्सन्तु पयस्वतीरस्मिन् गोष्ठे वयोवृधः। इह पशवो विश्वरूपा रमन्तामस्मिन् यज्ञे विश्वविदो घृताचीः। अग्निं कुलायमभिसंवसाना अस्मा अवन्तु पयसा घृतेनेति पृषदाज्यमवेक्षमाणौ वाग्यतावासाते अध्वर्युर्यजमानश्च॥ १॥ ३३॥ १६६२॥ इन्द्रस्य भागस्सुविते दधातनेमं यज्ञं यजमानं च सूरौ। यो नो द्वेष्टचनु तं रवस्वानागसो यजमानस्य

वीरा इति च वाश्यमानेऽवेक्षते ॥ २ ॥ ३४ ॥ ॥ १६६३ ॥

[पशुना शब्दे कृते प्रायश्चित्तम्]

(भा) यासामूधः इन्द्रस्य भाग इति च [1]वाश्यमाने द्वाभ्यामवेक्षणम् ।

[अवेक्षणस्य प्रायश्चित्तत्वे हेतुः हिरण्यकेशिपक्षश्च]

(वृ) यासामूध–वेक्षणम्—मन्त्रलिङ्गात् । हिरण्यकेशिनो यासामूध इन्द्रस्य भाग इति[2] वाश्यमाने पृषदाज्यावेक्षणं प्रायश्चित्तम् ॥

(सू) यत्पशुर्मायुमकृतेति संज्ञप्ते संज्ञप्तहोमं जुहोति ॥ ३ ॥ ३५ ॥ १६६४ ॥

[संज्ञप्तहोमो नित्य एव]

(भा) यदा मायुं न करोति तदाऽपि नित्य[3]स्संज्ञप्तहोमः न प्रायश्चित्तम् । संज्ञप्ते[4]मृते ।

[मन्त्राक्षरार्थसिद्धे शब्दनिमित्तत्वे नित्यत्वोक्त्युपपत्तिः]

(वृ) यदा–न प्रायश्चित्तम्—यद्यपि यत्पशुर्मायुमकृतेति मन्त्रलिङ्गेन मायुकरणनिमित्तस्यैनसो मोचनार्थत्वेन संज्ञप्तहोमः प्रायश्चित्तार्थ इति सामर्थ्यप्राप्तम्; तथाऽपि संज्ञप्ते संज्ञप्तहोममिति संज्ञप्तिमात्रसम्बन्धावगमात् अग्निर्मा तस्मादेनसो विमुञ्चत्वंहस इति च मायुकरणपद्भिराहननादिपूर्वकमारणकर्तृकतया प्राप्तात्मसम्बन्धिदोषपरिहाराशासनार्थत्वेनोपपत्तेर्नित्यवद्धोमः ।

---

[1] वाश्यमाने पशौ तमेव पशुमवेक्षत इत्यर्थः । तथा पशुमभिमन्त्रयेत यदि करोदेत्येव सत्याषाढः । चकारो वाग्यतासनसमुच्चयार्थः (रु). [2] इति च–ख. ग. [3] संज्ञप्तिमात्रनिमित्तो होमो न तु मान्त्रवर्णिकमायुकरणादिनिमित्तः । तेन नित्य इति ज्ञापयितुं संज्ञप्ते संज्ञप्तहोममित्युक्तम् इति (रु). [4] 'मृते संज्ञप्तहोमे हुते' इत्यधिकं–छ.

(सू) शमितार उपेतनेति वपाश्रपणीभ्यां[1] पशुमुपे-
तोऽध्वर्युर्यजमानश्च ॥ ४ ॥ ३६ ॥ १६६५ ॥

[अध्वर्युयजमानयोः पशुसमीपप्राप्तिः]

(भा) निष्टप्तमिति प्रतितप्याहवनीये वपाश्रपण्यौ ताभ्यां सह पशुमुपेतः—उपगच्छतः, शमितार इति।

[वपाश्रपणीतापनप्राप्तिः]

(वृ) निष्टप्त-शमितार इति—वपाया दोहविकारत्वात् तदाधारवपाश्रपण्योः पूर्वनिष्टपनमाहवनीये तत्र श्रवणात् ॥

(सू) [2]पशोः पाशं प्रमुञ्चत्यदितिः पाशं प्रमु-
मोक्त्वेतमिति ॥ ५ ॥ ३७ ॥ १६६६ ॥

[पाशप्रतिमोचने कर्ता]

(भा) पाशप्रतिमोचनाद्याध्वर्यवम् ।

(सू) संवेष्ट्य रशनां [3]ग्रीवासु निधायैकशूलयोप-
सज्य चात्वाल उदस्यत्यरातीयन्तमधरं करो-
मीति ॥ ६ ॥ ३८ ॥ १६६७ ॥

[रशनाया उद्सनादन्यत्फलम्]

(भा) एकशूलया गृहीत्वा चात्वाले क्षिपत्यरातीयन्तमधरं करोमीति वृक्षादिबन्धनं वा रशनया ॥

(सू) यद्यभि[4]चरेदरातीयन्तमधरं कृणोमि यं द्विष्म-

---

[1] वपाश्रपणीभ्यां सङ्गच्छतस्ते तु सह प्लक्षशाखया निष्टप्तमित्याहवनीये प्रतितप्येताम् । साधारणार्थत्वेन कुम्भीधर्मत्वात्तासाम् । तथा धर्मा इत्यधिकृत्य ये साम्नाय्योखायां पशुश्रपण्यां वपाश्रपण्योः हृदयशूले प्लक्षशाखायामिति क्रियेरन्निति भारद्वाजः (रु). [2] पशोः—पशुतः । पाशं रशनाम् (रु). [3] कर्णस्था धमन्यो ग्रीवा इत्युच्यन्ते तत्सक्तं कृत्वा (रु). [4] अभिचरतस्त्वनेन स्वशाखास्थेन मन्त्रेण तया रशनया वृक्षादिं बध्नीयात् । न तु चात्वाल उदस्येत् । स्थाणुरशाखं तरुप्रकाण्डम् । स्तम्भः—स्थूणा (रु).

स्तस्मिन् प्रतिमुञ्चामि पाशमिति तया वृक्षं स्थाणुं स्तम्भं वाऽपिदध्यात् ॥ ७॥ ३९ ॥ १६६८ ॥

सप्तदशी खण्डिका

---

[अभिचरत उदसनप्रत्याम्नायः]

(भा) अभिचरतः परिपठितेनास्माकमुदसनप्रत्याम्नायः ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये सप्तमप्रश्ने
पञ्चमः पटलः.

---

[उदसनतत्प्रत्याम्नाययोः मन्त्ररूपभेदः]

(वृ) अभिचरतः–म्नायः—अरातीयन्तमधरं करोमीत्येतावतोदसनम्। अरातीयन्तमधरं कृणोमि यं द्विष्म इत्यस्माकं परिपठितेनाभिचरतो वृक्षादिबन्धनमुदसनप्रत्याम्नायः ॥

इति श्रीकौशिकेन रामेणाग्निचिता विरचितायां
श्रीधूर्तस्वामिभाष्यवृत्तौ सप्तमे
प्रश्ने पञ्चमः पटलः.

---

(सू) ततः प्रतिप्रस्थाता पत्नीमुदा[1]नयति ॥ १ ॥
॥ १ ॥ १६६९ ॥

[पत्न्यानयनममन्त्रकम्, उदानयनपदार्थश्च]

(भा) तूष्णीमानयनं पत्न्याः गार्हपत्यस्योत्तरप्रदेशं प्रति प्रतिप्रस्थातुः ॥

[तूष्णीमानयनव्यक्तिनिर्देशः]

(वृ) तूष्णीमा–स्थातुः—प्राजहितस्य पश्चाद्दे[2]शात् शालामुखीयोत्तरदेशं प्रति पत्नीमुदानय प्राचीमुदानयती[3]त्युदानयनद्वयविधानात् प्रथमानयनं तूष्णीम्।

---

[1] स्वायतनाद्वोदिसमीपं नयति (ठ). [2] देशं–ख. ग. [3] त्यानयनद्वय–छ.

(सू) नमस्त आतानेति पत्नयादित्य[1]मुपतिष्ठते ॥ २ ॥
॥ २ ॥ १६७० ॥

[बहुपत्नीनां युगपदुपस्थानम्]

(भा) आदित्योपस्थानं युगपत् ।

[अस्योपस्थानस्यादित्यदैवतत्वसिद्धिः]

(वृ) आदित्यो-पत्—नमस्त अतानेत्यादित्योपस्थानमन्त्रः । आदित्यस्य वै रश्मय आताना इत्यादित्यसंबन्धात् । अदित्योपस्थानं युगपत्सर्वपत्नीनाम् ।

(सू) अनर्वा प्रेहीति प्राचीमु[2]दानयत्यनुमन्त्रयत इत्येके ॥ ३ ॥ ३ ॥ १६७१ ॥

[समन्त्रं प्राच्युदानयनम्; अनुमन्त्रणपक्षश्च]

(भा) प्राच्युदानयनमेकैकस्याः एकवचनत्वात् । [3]अतस्सत्रे त्वावृत्तिः । तथाऽनुमन्त्रणम् ।

[अस्मिन्नानयने पर्यायः प्रतिपत्नि मन्त्रावृत्तिश्च]

(वृ) प्राच्युदा-नत्वात्—प्रेहीत्येकवचनत्वादनेकपत्नीकप्रयोगे एकैकस्याः पर्यायेणोदानयनमन्त्रावृत्तिः[4] ।

अतस्सत्रे त्वावृत्तिः । तथानुमन्त्रणम्—अनुमन्त्रणपक्षेऽपि एकवचनत्वान्मन्त्रस्य ।

(सू) आपो देवीश्शुद्धा युव इति चात्वाले [5]पत्न्यपोऽवमृशत्यृत्विजो यजमानश्च ॥ ४ ॥ ४ ॥ १६७२ ॥

[चात्वालोपस्पृष्टापसंस्पर्शस्सर्वासाम्]

(भा) सर्वाः स्पृशन्त्यपश्चात्वाले ।

---

1 अनेकाश्चेत् सर्वा युगपदुपतिष्ठन्ते (रु). 2 ततश्चात्वालं प्रति प्राचीं नयति नीयमानां चानुमन्त्रयते । बह्वीस्त्वेकैका नयति प्रेहीत्येकवचनत्वात् (रु). 3 अतः मन्त्रे ?-छ. 4 त्तिश्च-छ. 5 स्पृशन्त्यपस्सर्वाः पत्नयः (रु).

(सू) न पत्नीत्येके ॥ ५ ॥ ५ ॥ १६७३ ॥

अद्भिः पशोः[1] सर्वान् प्राणानाप्याययति ॥ ६ ॥ ॥ ६ ॥ १६७४ ॥

सर्वाण्यङ्गान्यध्वर्युरभिषिञ्चति पत्न्याप्याययति। एतद्वा विपरीतम्। वाक्त आप्यायतामित्येतैर्यथालिङ्गम् ॥ ७ ॥ ७ ॥ १६७५ ॥

या ते प्राणाञ्छुग्जगामेति [2]हृदयम् ॥ ८ ॥ ॥ ८ ॥ १६७६ ॥

[3]मेढ्रं त आप्यायतामिति मेढ्रम् ॥ ९ ॥ ९ ॥ ॥ १६७७ ॥

शुद्धाश्च[4]रित्रा इति पादान् ॥ १० ॥ १० ॥ ॥ १६७८ ॥

[समन्त्रमाप्यायनाभिषेकौ विपरीतं वा। तत्कर्तारौ कर्मानुकल्पश्च]

(भा) एकाऽऽप्यायनमाभिषेकं वा [5]करोति पशुसंस्कारत्वात्। वायुः येन पुरीषं करोति एतत्। अनन्तरं मेढ्रं-शिश्नम्। स्पर्शनमाप्यायनं, असंभवे यथा [6]कण्ठयोः।

---

1 यद्यल्लिङ्गो मन्त्रः तत्तदङ्गमध्वर्युपत्न्योरन्यतरोऽभिषिञ्चति। तत्तदेवेतर आप्याययति, तेनेतनाप्यायनलिङ्गमन्त्रेणाभिमृशतीत्यर्थः। पत्न्यनेकत्वेऽप्येकैवाप्याययति। पशुसंस्कारत्वात्। तत्र चक्षुश्श्रोत्रघ्राणेष्वावृत्तिः अधिष्ठानाभिधानात् तद्भेदाच्च। न चाभिगुवदिन्द्रियाभिधानोपपत्तिः ! पशोर्मृतत्वात्। (रु). 2 हृदयलिङ्गाभावाद्वचनम्। (रु). 3 आगन्तुत्वेऽपि पादमन्त्रात्पूर्वमस्य प्रयोगः, तथा विनियोगात् (रु) 4 चरित्रशब्दस्य पादे प्रयोगमान्यनाव्यक्तलिङ्गत्वाद्वचनम् (रु). 5 करोति मुख्या -ख. ग. घ. 6 कर्णयोः—घ.

(सू) ए[1]कैकमाप्याय्य जपति शमद्ध्य इति पुरा स्तोकानां भूमेः प्रापणात् ॥ ११ ॥ ११ ॥ १६७९ ॥

[पादाप्यायनप्रकारः जपसमयश्च]

(भा) एकीकृत्य पादान् यावत् स्तोका विन्दवो न भूमिं प्राप्नुवन्ति तावज्जपति शमद्ध्य इति ।

(सू) शमोषधीभ्यश्शं पृथिव्या इति भूम्यां शेषं निनीयौषधे त्रायस्वैनामित्युपाकरणयोरवशिष्टं दक्षिणेन नाभिमन्तर्धाय स्वधिते मैनं हिंसीरिति स्वधितिना पार्श्वतस्तिर्यगाछ्यति ॥ १२ ॥ १२ ॥ ॥ १६८० ॥

[आप्यायनशेषनिनयनकर्ता मन्त्रेण पशोश्छेदनप्रकारश्च]

(भा) एकैकमाप्याय्य शेषनियनाद्यध्वर्युरेव । [2]दक्षिणेन नाभिं यत्र भ्रमरकः तत्रान्तर्धानम्। पार्श्वाद्दारभ्य यावद्वपा तावच्छिनत्ति तिर्यगवस्थितेनासिना ।

[अन्तर्धाने पक्षभेदेन विषयः]

(वृ) एकैकमाप्या–र्धानम्—उपाकरणदर्भस्य बर्हिर्भ्यामुपाकरणपक्षे। तृणेनोपाकरणपक्षे ऊर्ध्वार्धस्य ।

(सू) बर्हिषोऽग्रं सव्येन पाणिनाऽऽदत्ते ॥ १३ ॥ ॥ १३ ॥ १६८१ ॥

[बर्हिरग्रादाने विशेषः]

(भा) उदग्दक्षिणेनावस्थितेन सव्येन हस्तेनाग्रमादाय स्थाप्यतेऽन्यत्र [3] ।

---

1 अङ्गमङ्गमाप्याय्य तावदेव जपति शमद्ध्य इति यावदाप्यायनानामपां बिन्दवो भूमिं न प्राप्नुवन्ति । (रु). 2 दक्षिणेन नाभिं भूमिमध्ये बर्हिर्निधाय तस्योपरि तिर्यगवस्थितेन स्वधितिना पार्श्वप्रदेश एव छिनत्ति (रु). 3 न्यत्रापि मध्यमिति–ख. ग. घ. ङ.

(सू) [1]अथ मध्यं यत आच्छयति तदुभयतो लोहितेनाङ्क्त्वा रक्षसां भोगाऽसीत्युत्तरमपरमवान्तरदेशं निरस्याथैनत्सव्येन पदाऽभितिष्ठतीदमहं रक्षोऽवबाधे इदमहं रक्षोऽधमं तमो नयामीति ॥ १४ ॥ ॥ १४ ॥ १६८२ ॥

अष्टादशी खण्डिका

---

[मध्यपदस्वारस्यम्, अत्र मध्यपदार्थः, अपामुपस्पर्शनविरहश्च]

(भा) [2]मध्यमिति वचनात्[3] मूल एवान्तर्धानं क्रियते। पृथिव्यामस्य मूलमग्रं च [4]सव्येन गृहीतम्। अतश्शेषं[5] मध्यं भवति। तदुभयतो लोहितेन म्रक्षयति। यत आच्छयति तस्मिन् प्रदेशे पार्श्वे। पार्श्वत इत्येतदपि सप्तम्यर्थे। उपाकरणमपामुपस्पर्शनं रक्षसां नोपघाते। अतो निरसनमेव कृत्वा; उपरि तिष्ठति सव्येन पादेन तृणस्य इदमहं रक्षोऽवबाधे इदमहं रक्षोऽधमं तमो नयामीत्येवमन्तः॥

(वृ) मध्यमिति–यते –[6]दक्षिणेन नाभिमन्तर्धानमिव?

पृथिव्यामस्य–म्रक्षयति—मध्यस्यान्ते।

यत आ–र्श्वे—दक्षिणेन नाभिं तस्मिन् प्रदेशे पार्श्वे वा।

[पार्श्वत इत्यस्य सप्तम्यर्थत्वोपपत्तिः]

पार्श्वत–म्यर्थे—पार्श्वत आच्छयतीति श्रुतौ पार्श्वत इति सप्तम्यर्थे तसिः; पार्श्वे इत्यर्थः। अपिशब्दात् यत आच्छयतीति सूत्रेऽपि सप्तम्यर्थे तसिः। तदुभयत इति–तन्मध्य उभयतः।

---

[1] आलवस्थमूलोपक्षया बर्हिषः खण्डान्तरमिह मध्यमभिप्रेतम्, तृतीयखण्डाभावात्। तन्मध्यमुभयोरन्तयोरङ्क्त्वा निरस्याभितिष्ठति–उपरि तिष्ठति द्वाभ्यां यजुर्भ्याम्। तत्रेदमहं रक्षोधममित्यादि इदमेनमधमं तमो नयामीत्यन्तं द्वितीयम् (र). [2] अथ मध्य–क. [3] नादमूल–ख. ग. नान्मूलत–ज. [4] सव्येन हस्तेन गृ–ङ. [5] षं भवति–घ. [6] इदं–घ. कोशे न दृश्यते.

[अपामुपस्पर्शप्रसङ्गपरिहारौ]

(धू) उपाक्र–घाते—रौद्रराक्षसेत्यपामुपस्पर्शनम्। रक्षसामुपकारके कर्मणि कृते भवति न तेषामनुपकारके कर्मणि। अत इदमहं रक्षोऽवबाध इत्यपामुपस्पर्शनम्।

[निरस्तबर्हिषः पदाऽऽक्रमणमन्त्रे विशेषः]

उपरि तिष्ठति–मन्त्रः—इदमहं रक्षोऽवबाध इति शाखान्तरे यो मन्त्रः यश्चास्मच्छाखीय उभाभ्याम्। आभितिष्ठतीति सूत्रम्। इदमहं रक्षोऽधमं तमो नयामीति प्रतीकोपादानम्।

(सू) इषे त्वेति वपामुत्खिद्य घृतेन द्यावापृथिवी प्रोर्ण्वाथामिति वपया द्विशूलां प्रच्छाद्योर्जे त्वेति [1]तनिष्ठेऽन्तत [2]एकशूलयोपतृणत्ति ॥ १ ॥ ॥ १५ ॥ १६८३ ॥

[उत्खिद्येत्यादेरर्थः]

(भा) उत्खिद्य–उत्पाद्य। तनिष्ठे–तनुतमे। अन्ततः–उपान्ते। उपतृणत्ति–भिनत्त्येकशूलया॥

(सू) देवेभ्यः कल्पस्वेत्यभिमन्त्र्य देवेभ्यश्शुन्धस्वेत्यद्भिरवोक्ष्य देवेभ्यश्शुम्भस्वेति स्वधितिना वपां [3]निमृज्याच्छिन्नो रायस्सुवीर इन्द्राग्निभ्यां त्वा जुष्टमुत्क्रन्तामीत्युत्कृन्तति[4]॥ २ ॥ १६ ॥ १६८४ ॥

[निमार्गफलम्]

(भा) निमृज्य–वपाया यदन्यन्मांसं तदपनीय उत्कृन्तति-छिनत्ति।

(वृ) अपनीय–स्वधितिना॥

---

1 तनिष्ठेऽन्ततः तनुत्तमे वपान्ते (रु). 2 शूलप्रोतं करोति यावत् (रु).
3 यदन्यद्वपायास्तन्निर्णुद्य (रु). 4 छिनत्ति; जुष्टामुत्कृन्तामीति विशिष्टप्रयोगदर्शनार्थं पुनर्देवतोपदेशनवचनम् (रु).

छिनत्ति—वपाम् ॥

(सू) मुष्टिना शमिता वपो[1]द्धरणमपिधायास्त आ वपाया होमात् ॥ ३ ॥ १७ ॥ १६८५ ॥

[वपोद्धरणपदार्थः, स्थगनकरणं च]

(भा) वपा यस्मा[2]दुद्ध्रियते तद्वपोद्धरणम्[3] । तत् स्थगयति यथा सर्वेषामन्तर्भवति ।

(वृ) स्थगयति—तृणमुष्ट्यादिना ।

(सू) प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इति शामित्रे वपां प्रतितप्य नमस्सूर्यस्य संदृश इत्यादित्यमुपस्थायोर्वन्तरिक्षमन्विहीत्यभिप्रव्रजति ॥ ४ ॥ ॥ १८ ॥ १६८६ ॥

उल्मुकैकदेशमादायाग्नीध्रः पूर्वः प्रतिपद्यते ॥ ॥ ५ ॥ १९ ॥ १६८७ ॥

[उल्मुकनयनप्रकारः]

(भा) यथा सर्वेषामग्रे भवति तथो[4]ल्मुकं नयत्याग्नीध्रः ।

(वृ) यथा स–ग्नीध्रः—सर्वेषां निवर्तमानानां अध्वर्युयजमानयोः स्वस्य चाग्रे नयत्याग्नीध्र उल्मुकम् ।

(सू) वपाश्रपणी [5]पुनरन्वारभते यजमानः ॥ ६ ॥ ॥ २० ॥ १६८८ ॥

[सौत्रपुनश्शब्दार्थे पक्षान्तरम्]

(भा) पुनश्शब्देन केचित्तस्मिन्नेव देशे स्पृशति वपाश्रपण्यावित्याहुः ।

---

[1] यतो वपोद्धृता तद्विवरं वपोद्धरणम् (रु). [2] स्मात्प्रदेशादु–घ. [3] द्धरणस्थानम् –घ. [4] उल्मुकस्य शामित्रार्थस्यैकदेशं पुरस्तान्नयति (रु). [5] पुनरन्वारभते इति ब्राह्मणानुकरणार्थम् । यथा पशौ नीयमाने तथा वपायामपि नीयमानायामित्यर्थः (रु).

(वृ) **पुनश्शब्देन**—पुनरन्वारभत इति पुनश्शब्दप्रयोगात् ।

(सू) उल्मुकैकदेशमाहवनीये प्रत्यपिसृजति ॥ ७ ॥ ॥ २१ ॥ १६८९ ॥

(भा) [1]एकदेशः—शामित्रः । एकदेशं क्षिपत्याहवनीये ।

(सू) निर्दग्धं रक्षो निर्दग्धा अरातय इत्याहवनीयस्यान्तमेऽङ्गारे वपां निकूड्यान्तरा यूपमाहवनीयं च दक्षिणाऽतिहृत्य प्रतिप्रस्थात्रे प्रयच्छति ॥ ८ ॥ ॥ २२ ॥ १६९० ॥

(भा) [2]अन्तमे—अध्वर्योस्समीपतः । निकूड्य दग्ध्वा । [3]अन्तिमेऽङ्गारे ।

(सू) तां दक्षिणत आसीनः प्रतिप्रस्थाता आहनीये श्रपयति ॥ ९ ॥ २३ ॥ १६९१ ॥

एकोनविंशी खण्डिका

---

वायो वीहि स्तोकानामिति बर्हिषोऽग्रमधस्ताद्वपाया उपास्यति ॥ १ ॥ २४ ॥ १६९२ ॥

[बर्हिरग्रोपासने मानं पक्षान्तरं च]

(भा) वपायामेव लगयति अधस्ताद्बर्हिषोऽग्रम् । अग्रेणैवाग्रं समर्धयतीति लिङ्गात् । केचिदग्नौ क्षिपन्त्यधस्ताद्वपायाः ।

(वृ) **वपाया–लिङ्गात्**—अस्यार्थः—अधस्ताद्वपाया उपास्यतीति वपायामेवाधोभागे बर्हिरग्रं लङ्गयति । अग्रं वा एतत्पशूनाम् इत्यादिना अग्रेणैवाग्रं समर्धयतीत्यत्र अग्रयोस्संसर्ग उक्तः । अथो ओषधीष्वेव पशून् प्रतिष्ठापयतीति बर्हिष उपरि वपादर्शनाच्च ।

---

[1] उल्मुकैकदेशः–घ. [2] अन्तमे—यथाप्राप्ते । निकूड्य ; कूडयतिर्दाहकर्मा । अतिहृत्य–स्वयं यूपाद्बहिर्गच्छन् यूपाहवनीययोर्मध्ये हृत्वेत्यर्थः (रु). [3] अन्तमे–छ. [4] वपाया अधस्ताद्भागे तया सहोपश्लेषयति । अधस्ताद्वपाया अग्नौ क्षिपतीति केचित् ; तदयुक्तम् । प्रहरतीत्यवचनात् । 'अग्रं वा एतत्पशूनाम्' इत्यादिब्राह्मणे विपर्ययस्यैव व्यक्तत्वाच्च (रु).

[पक्षान्तराशयः]

केचित्–पायाः—वपायामधस्तादित्यनिर्देशादग्नौ प्रक्षेपे दृष्टार्थो भवति, दृष्टार्थत्वे सति अदृष्टार्थमन्याय्यमिति ॥

(सू) त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति ॥ २ ॥ २५ ॥ १६९३ ॥

[वपाहोमे द्रव्यं विशेषश्च]

(भा) वपाभिहोमो ध्रुवातः । [2]लौकिकं वा । लौकिकं क्षिप्यते घृतम् ।

(वृ) वपा–कं वा—अप्राकृतकार्यत्वात् ।
लौकिकं–तम्—अहोमार्थत्वाल्लौकिकं घृतम् ।

(सू) प्रादुर्भूतेषु [3]स्तोकेषु स्तोकेभ्योऽनुब्रूहीति संप्रेष्यति ॥ २ ॥ २६ ॥ १६९४ ॥

[4]अलोहिनीं सुशृतां कृत्वा सुपिप्पला ओषधीः कृधीति दक्षिणस्यां वेदिश्रोण्यां बर्हिषि प्लक्षशाखायामासाद्य प्रयुता द्वेषांसीति वपाश्रपणी प्रवृह्य निधाय घृतवति शब्दे जुहूपभृतावादाय दक्षिणातिक्रम्याश्राव्य प्रत्याश्राविते संप्रेष्यति स्वाहाकृतीभ्यः प्रेष्य स्वाहाकृतिभ्यः प्रेष्येति वा ॥ ॥ ४ ॥ २७ ॥ १६९५ ॥

[सूत्रादुक्तं कार्यं, उक्ते विशेषः, उपदेशमतं च]

(भा) यथा भवत्यलोहिनी सुशृता च। पुनरपि यस्त आत्मेत्यभि-

---

[1]र्थं भवति–घ. छ. [2]लौकिकं क्षिप्यते घृतम्–क. ङ. ज. लौकिकेन वा–छ. [3]अग्निसंयोगाद्ये मेदसो बिन्दवश्च्योतन्ते स्तोकाः (रु). [4]यथा न लोहिता भवति तथाऽऽज्येनाञ्जन् सुशृतां कृत्वा प्रातर्दोहवदभिघार्योद्वास्य बर्हिषि प्लक्षशाखायां च सह सादयति । उक्तं चैतद्भरद्वाजेन । वपाश्रपण्योः प्रवर्हणे मन्त्रः । तूष्णीं निधानं मन्त्रलिङ्गात् । अथासन्नाभिमर्शने प्रातर्दोहमन्त्रगतानामिदंतदामूहः स्त्रीलिङ्गेन । घृतशब्दस्थाने वपाशब्दः (रु).

घार्य दृंहगा इत्युद्वास्य शूलाभ्यामेव सुपिप्पला इत्यासाद्य ब[1]र्हिषि। अवस्थितायां शाखायां केचित्। उभयत्र तिष्ठति वपा बर्हिषि प्लक्ष-शाखायां चेति। प्रयुता द्वेषांसीति प्रवृहणम्। निधानं तूष्णीम्। अविकृतं प्रातर्दोहवदासन्नाभिमर्शनम्। आख्यानवादात्। केचिदिदमिन्द्रियमिति प्रतिपद्यन्ते। यावदुक्तं सान्नाय्यधर्म इत्युपदेशः। प्रयाजाङ्क्त्वा[2]त्स्रुगादापनस्य प्रनर्घृतवतिशब्दः। अतिक्रमणादेः पुनरनु-क्रमणमपूर्वविधानार्थम्।

[पुनरभिघारणप्राप्तिः]

(वृ) पुनरपि—घार्य—त्वामु ते दधिर इत्यस्य होमात्मकतया अनभिघारणत्वाद्यस्त आत्मेत्यभिघारणस्यानिवृत्तिः प्राकृतस्य।

[उद्वासनमन्त्रे विशेषः]

दृंहगाइ-हणम्—मन्त्रेण; प्रथमभावित्वात्।

[आसन्नाभिमर्शने पक्षयोराशयः]

अविकृतं-वादात्—इदमिन्द्रियमितीन्द्रियसमानाधिकरणत्वात् इदंशब्दस्यार्थवादरूपत्वादिदमिन्द्रियमित्यस्यानूहः।

केचिदि-द्यन्ते—यावत्सम्भवं समवेताभिधानं न्याय्यमिति।

यावदुक्तं-देशः—उदक्पवित्रे कुम्भ्यां पशुमवधायेत्यादिना केषांचिद्दोहधर्माणां पुनरनुक्रमणादन्येषां निवृत्तिरित्युपदेशः। अस्मिन् पक्षे ऐन्द्राग्नपुरोडाशविकारत्वात् तूष्णीमभिघार्य आर्द्रा भुवनस्य गोपा श्रितोत्स्नाति जनितेत्युद्वास्य पात्र्यां स्योनं त इति कृते सदने तस्मिन् सीदामृते प्रतितिष्ठ पशोर्मेध सुमनस्यमान इति प्रतिष्ठापनम्। अयं यज्ञो यो नः कनीयो ममाग्ने पञ्चहोता चेत्यासन्नाभिमर्शनम्।

---

[1] र्हिषि प्लक्षशाखा-घ. छ. [2] त्स्रुगादापनस्य-क. ङ.

[पुनर्घृतवतिशब्दग्रहणातिक्रमणाद्युक्तेरुपपत्तिः]

**प्रयाजा–वतिशब्दः**—अस्यार्थः—घृतवतिशब्दे जुहूपभृतावादायेति प्रकृतौ प्रयाजार्थादाने घृतवतीमध्वर्यो इति मन्त्रस्य विनियोगात् इह चोत्तमप्रयाजात्पूर्वं पर्यग्निकरणादेः कर्मान्तरस्योपदेशात् स्वाहाकृत्यर्थं पुनर्घृतवतिशब्दनिर्देशात् पर्यग्निकरणात्पूर्वमायतने स्रुचौ सादयितव्ये। अतः स्वाहाकृत्यर्थोपादानेऽपि पुनर्घृतवतिशब्दः। अस्मादेव वचनात्प्रयाजाङ्गत्वमपि सिद्धम्। अतो गृहमेधीयवैश्वानरादिषु स्रुगादापनं निवर्तते प्रयाजाभावात्। प्रायणीयोदयनीययोश्चान्यतरपक्षे। अतो यत्समुदायस्य यदङ्गं तत्समुदाय्यन्यतमस्य कालान्तरप्रयोगे तदङ्गमावर्तते। तथाऽत्र चतुर्होता प्रयाजसमुदायाङ्गमत्रापि भवति। तथा पञ्चहोता वपायां हविषि च। अतिक्रमणादेः पुनरनुक्रमणमपूर्वविधानार्थम्। दक्षिणातिक्रमणादेः प्राप्तस्य पुनरनुक्रमणं स्वाहाकृतिभ्यः प्रेष्येत्यपूर्वविधानस्य क्रमसिद्ध्यर्थम्।

(सू) [1]वषट्कृते हुत्वा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्य पृषदाज्यमभिघारयत्यथ वपाम्। एतद्वा विपरीतम् ॥ ५ ॥ २८ ॥ १६९६ ॥

(सू) नोपभृतम्[2] ॥ ६ ॥ २९ ॥ १६९७ ॥

(सू) आज्यभागौ[3] यजति ॥ ७ ॥ ३० ॥ १६९८ ॥

[क्तसप्तम्योः स्वारस्यम्]

(भा) यत्र वषट्कृते [4]होमः तत्र वषट्कारेण सह न लभ्यते।

---

[1] यत्र वषट्कृते हुत्वेति यत्नः तत्र वषट्कृत एव जुहोति न वषट्कारेण। पृषदाज्यमुभयमभिघारयति स्रुग्गतं स्थालीगतं च स्थालीगतस्यापि वनस्पतीज्यार्थत्वात्, प्रयाजानिष्ट्वा हवींष्यभिघारयतीति श्रुतेश्च (रु). [2] उत्तरविकल्पार्थोऽनुवादः (रु). [3] रिक्तत्वादिति भावः (रु). [4] होम उच्यते–ख. ग. घ.

[प्रथमं न ध्रुवाभिघारणमिति पक्षः]

केचित् ध्रुवाभिघारणं पूर्वं न कुर्वन्त्यनाज्यभागपक्षे। अतो हि प्रथमावाज्यभागौ यक्ष्यन् भवतीति हेतुवचनात्।

[पृषदाज्याभिघारणे मतिभेदाः]

वपामभिघार्य पृषदाज्यं स्रुक्स्थालीगतम्, न स्थालीगतमित्युपदेशः। केचित् स्थालीगतमेवाभिघारयन्ति।

नोपभृतमिति पृषदाज्यधानीस्थस्य प्रतिषेधः, रिक्तत्वादुपभृतः प्रतिषेधो नोपपद्यत इति।

[प्रकृतावुपभृदभिघारणसदसद्भावविचारः]

[1]न तत्प्रकृतौ; तत्र सन्देहः किं पात्रस्याभिघारणम्, उताज्यस्येति।

[सन्देहपरिहारस्सूत्रेणैव]

नोपभृतमिति प्रतिषेधादिह प्रकृतावपि हविषोऽभिघारणमध्यवसीयते। प्रयाजानिष्ट्वा हवींष्यभिघारयतीति।

[वषट्कारासहभावोपपत्तिः]

(वृ) यत्र व–म्यते—इतरथा विधानानर्थक्यात् नियमनार्थत्वादुपादानस्य।

[ध्रुवायाः पूर्वमभिघारणवादिपक्षाशयः]

**केचि–चनात्**—शाखान्तरे ध्रुवामेवाग्रेऽभिघारयत्यतो हि प्रथमावाज्यभागौ यक्षयन् भवतीति हेतुवचनात् यागक्रमेण प्रयाजशेषेणाभिघारणमिति। अनाज्यभागपक्षे प्रथमं ध्रुवाभिघारणं न कुर्वन्ति केचित्, तदपि विपरीतपक्षे।

[2] तस्मिन् पक्षे—

[स्रुक्स्थालीगतयोरुभयोरभिघारणलाभः]

**वपाम–लीगतम्**—पश्चाद्ध्रुवाम्। अविशेषात् स्थालीगतस्यापि वनस्पतियागार्थ[3]त्वात्।

---

[1] न वुतत्प्र–ख. ग. ङ. [2] अस्मिन् पक्षे–छ. [3] त्वाच्च–ख. ग.

  

[उपदेशपक्षाशयः]

**न स्था–देशः**––प्रकृतौ सर्वयागार्थत्वेऽपि स्थालीगतस्याज्य-[1]स्याभिघारणादर्शनात् । न [2]चात्र विधानम् । पृषदाज्यमभिघारयतीति एकवचनस्य पृषदाज्यधानीस्थाभिघारणमात्रेणापि पर्यवसानादिति ।

[नोपभृतनिषेधसूत्रलब्धः परसंमतार्थः]

**केचित्–पपद्यत इति**—अतः पृषदाज्यमभिघारयतीति स्थालीगतस्यैवाभिघारणम् ।

[उपभृदभिघारणे संदेहोपपत्तिः]

**न तु तत्प्र–ज्यस्येति**—प्रकृता वुपभृतमन्तत इति निर्दिष्टा-भिघारणं किं पात्रस्य पात्रस्थाज्यस्य वेति सन्दिग्धम् । उपभृच्छब्द-स्योभयत्र [6]व्यवहारात् ।

इह सन्देहे निर्णयः क्रियते—

[संदेहपरिहारोपपत्तिः]

**नोपपभृत—रयतीति**—[3]प्रकृतावुपभृतमन्तत इत्यनुयाजा-र्थस्यैवाभिघारणम् ।

**(सू) तौ [4]न पशौ करोति । न सोम इत्येके ॥८॥**
**॥३१॥१६९९॥**

[पशुशब्दग्रहणलभ्योऽर्थः तत्र मानं च]

(भा) [5]न तौ करोतीति सिद्धे पशाविति वचनात् पशौ न करोत्या-ज्यभागौ । पशुपुरोडाशे करोतीत्यर्थः । [6]तस्य लिङ्गदर्शनं स्वाहाऽग्निं न भेषजं स्वाहा सोममिन्द्रियमिति पुरोडाशानां पूर्वमाज्यभागयोः पाठः ।

---

[1] स्यानभिघारणदर्शनात्–ख. ग. [2] नात्र वि–ख. ग. [3] हविष्याभिघारणविधात् प्रकृतावु–ख. छ. [4] तौ न तावत् स्वतन्त्रे पशौ करोति । तथा सोमे यः पशुर्न तत्रापीत्यर्थः । सोमे य इष्टिपशवो न तत्रेत्यन्ये (रु). [5] तौ न–ख. ग. [6] तस्य च–ख. ग.

[न सोमे इत्येतद्व्यवस्थाविषयमतिभेदाः]

[1] यथा पशुबन्धे न कृतावाज्यभागौ [2] तथा सोमेऽ[3]पीति यः पशुरग्नीषोमीया[4]दयः [5] तस्मिन्नपि न कर्तव्याविति केचित् । सोमेऽपीष्टिपशुबन्धे न कर्तव्यावित्यन्ये । यदा पशौ न क्रियेते आज्यभागौ तदा पशुपुरोडाशोऽपीत्युपदेशः ।

[पशुपुरोडाशे आज्यभागानिषेधलाभोपपत्तिः]

(वृ) नतौ क–त्यर्थः— अज्यभागौ यजति, न वा करोतीत्येतावत्युक्तेऽपि पशौ विकल्पसिद्धेः तौ न पशाविति पशुग्रहाणात् पशावेव निषेधः । पशुपुरोडाशस्य तु पश्वर्थानुष्ठितप्रसङ्गोपजीवित्वादाज्यभागयोः पश्वर्थानुष्ठानाभावे प्रसङ्गानुपपत्तेः पुरोडाशार्थमनुष्ठानं कर्तव्यमित्येवमर्थं पशुग्रहणम् ।

[पशुपुरोडाशे आज्यभागसद्भावे लिङ्गोपपादनम्]

तस्य च–लि पाठः—कौकिल्यां स्वाहाकारप्रयाजप्रैषे स्वाहाच्छागमश्विभ्यां इत्यादि पशुदेवतानां पाठादुपरिष्टात्स्वाहेन्द्रं सुत्रामाणं इत्यादि पुरोडाशदेवतानां पुरस्तात्स्वाहाऽग्निं न भेषजं स्वाहा सोममिन्द्रियमित्याज्यभागदेवतयोः पाठात् पशुपुरोडाश आज्यभागाविति गम्यते ।

[न सोमे इति निषेधव्यवस्थायाः शबरस्वामिमते अनुपपत्तिः]

यथा पशु–केचित्—तौ न पशौ करोतीत्यनेनैकवाक्यतया न सोम इत्यस्य प्रतिषेधानुवादेन पशावित्यस्य दृष्टान्ततयोपादानमित्येवं न भवति आनर्थक्यात्, एके इति मतान्तरत्वेनोपन्यासानुपपत्तेश्च । अतस्ते न पशौ करोतीत्यनेन सूत्रेण निरूढपशावाज्यभागप्रतिषेधः । न सोमे इति सूत्रान्तरेण सोमाङ्गगतपश्वग्नीषोमीयादिषु आज्यभागप्रतिषेधः । आनर्थक्यात्तदङ्गेष्विति न्यायेन क्रियते एकेषां मतेन ।

[1] यदा–ङ. तदा–ङ. [3] मेऽपि यः–ख. ग. [4] यादिः–घ. ङ.
[5] तावेतस्मिन्नपि–छ.

[नतौ पशौ इत्यादेर्वैयर्थ्यपरिहारः]

ननु तौ न करोतीत्येतावता निरूढपशौ प्रतिषेधे पशुग्रहणं अन्यत्रापि यः पशुरग्नीषोमीयादिस्तत्र न स्यातामित्येवमर्थं भवति । तदाऽनिष्टिप्रकृतित्वात् सोमस्याप्राप्ताज्यभागप्रतिषेधो नान्तरिक्षे न दिवीतिवदभागिप्रतिषेधस्स्यात्, तौ न पशौ करोतीत्येतावति सूत्रे विकल्पाश्रयणात् निषेधस्य सावकाशपशुमात्रान्वयात् आज्यभागौ यजतीत्यस्य प्रकरणेनैवान्वयात् परस्परावा[1]धेन विधिर्निरूढविषयत्वं निषे[2]धस्य स्यादिति तत्परिहारार्थं [3] भवति । नापि न सोम इत्यनेनैकवाक्यताऽभ्युपगन्तव्या । अतो न सोम इत्यभागिप्रतिषेधो दृष्टान्तः । तस्मादग्नीषोमीयपशावपि निषेध इति ? नैतत्पशुग्रहणस्य प्रयोजनम्, अनिषेधः पशुपुरोडाश इत्युक्तम्; षोडशिग्रहणाग्रहणवद्विहितप्रतिषिद्धत्वा[4]द्विकल्पोऽन्तरेणापि वचनं भवति[5]। अस्मिन्नेव प्रकरणे प्रयोजनलाभात् पशुशब्दस्य प्रयोजनान्तरान्वयात् न सावकाशनिरवकाशन्यायः । यथा एष पशुबन्धस्याहवनीय इति । एवं चाभागिप्रतिषेध इत्यानर्थक्यं च न भवति ।

नन्वेवमपि तस्य निरूढपशुबन्धवत्कल्प इत्यनेन तत्रापि पाक्षिके प्रतिषेधे सिद्ध आनर्थक्यं तदवस्थमेव, मैवम्; पशुधर्मा हि निरूढपशुबन्धवदग्नीषोमीये[6]भवन्ति । प्राकृताः पदार्थाः प्रकृतितः प्राप्यन्ते चोदकेनोभयत्र अतः पृथङ्निषेधः । अतो वेदं निधाय सामिधेनीभ्यः प्रतिपद्यत इत्यत्र वेद्यन्तपरिस्तरणाद्यत्र निवृत्तमप्यग्नीषोमीये क्रियते ।

**सोमेऽपि–न्ये**—न सोम इत्याविशेषात् सोमाङ्गभूतेष्टिपशुषु सर्वेषु प्राप्तावाज्यभागौ न कर्तव्यावित्यन्ये ।

---

[1] धेन विषयं निरूढ–ख. ग. [2] स्य सावकाशपशुमात्रविषयत्वं स्यादिति–ख. ग. च. [3] भवताऽपि–ख. ग. घ. [4] द्विकल्पान्तरेणापि–ख. द्विकल्पपितरेणापि ?–घ. [5] ति तवस्मिन्नेव. [6] संभवतीति ?–छ.

यदापशौ–पदेशः—न पशाविति पशुशब्दस्य साङ्गप्रधानपरत्वात् पुरोडाशेन पृथक्प्रयोज्याविति । अस्मिन् पक्षे सोमेऽपि प्रतिषेध इष्टयर्थः । अग्नीषोमीयादिष्वनेनैव सिद्धत्वादिति पूर्वोक्तसकलदोषाशङ्का दृढपरिहारा ।

(सू.) [1] स्वाहा देवेभ्य इति पूर्वं परिवप्यं हुत्वा जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामादाय [2] हिरण्यशकलमुपरिष्टात्कृत्वाऽभिघारयति ॥ ९ ॥
॥ ३१ ॥ १७०० ॥

[परिवप्यपदार्थः जुहूपदफलंवपायामवदामन्त्रविरहहेतुः]

(भा) परिवप्यमिति होमनाम[2] संव्यवहारार्थम् । जुहूग्रहणादिहैव हिरण्यहोमे जुह्वामुपस्तरणाभिघारणे । शतकृष्णलायामुपस्तरणाभिघारणे न भवत इति ख्याप्यते । नावदानमन्त्रो वपायाः कृत्स्ना यस्मान्नावखण्ड्यते तस्मादर्थलोपान्निवृत्तिः ।

[परिवप्यपदार्थे मानम्]

(वृ) परिवप्य–रार्थम्—पूर्वौ परिवप्यावभिहूयमानावित्यादिषु पूर्वं परिवप्यमिति निर्देशात् अभितो वपां जुहोतीति कालवचनः, न देशवचनः ।

---

[1] परितो वपां हूयेते इति परिवप्या नाम होमौ । आद्यस्वाहापदकमन्त्रेषु अन्ते स्वाहाकारस्यावश्यकत्वानावश्यकत्वविचारमारभ्य पैतृकमन्त्रं बह्वृचश्रौतगृहीतं च मन्त्रमुदाहृत्य एकाधिकपदव्यवधानाभावेनान्ते पुनःस्वाहार इत्युक्त्वा पुरस्तात्स्वाहारा अन्ये इत्युक्त्या व्यवधाननियमानावश्यकतामाशङ्क्य पुरस्तकेचित् पश्चद्धोमभाजः परे इति तदर्थमपपाद्य । अभितो वपां जुहोतीति विधिरुक्तोऽर्थवादो न व्याख्यान्तरेण घटत इत्युपपाद्य तस्माद्यथोक्त एवार्थोऽवदातः । इति हिरण्यशकले भारद्वाज बोधायनयोरनुग्रहोक्तिः । साान्नाय्यविकारत्वेऽपि वपाया हस्तेनैवादानं न स्रुवेण । स्रुवहस्तस्वधितीनां द्रवाद्यवदेयेषु योग्यतया व्यवस्थानात् । बोधायनस्त्वाह स्रुवेण वपां समवलम्प्यन्नाहैन्द्राग्निभ्यां छागस्येति । नात्रावदानमन्त्रः खण्डनाभावात् (रु) ।
[2] नामासंव्य. नामनासंव्य ।

[जुह्वग्रहणप्रयोजनोपपत्तिः]

**जुहूग्र–ख्याप्यते**—वपाहोमे जुह्वाः प्राप्तत्वेऽपि जुह्वामुपस्तीर्येति जुहूग्रहणाद्धिरण्यहोमेष्वत्रैव आज्येनोपस्तरणाभिघारणे । अन्येषु शतकृष्णलादिषु आज्येनोपस्तरणाभिघारणे न भवत इति ख्याप्यते ।

[वपायामवदानमन्त्रविरहोपपत्तिः]

**नावदान–न्निवृत्तिः**—माभेर्मा संविक्था इति खण्डितशेषैकदेशप्रकाशकत्वात् वपायां खण्डनाभावात् नावदानमन्त्रः । अतोऽन्यत्राप्येककपालादिषु सर्वहुतेषु नावदानमन्त्रः ।

(सू.) **एवं पञ्चावत्ता भवति ॥ १० ॥ ३२ ॥ १७०१ ॥**

**चतुरवत्तिनोऽपि पञ्चावत्तैव स्यात् ॥ ११ ॥ ॥ ३३ ॥ १७०२ ॥**

विंशी खण्डिका

———

[पञ्चावत्ततोपपत्तिः उपदेशपक्षश्च]

(भा) शकलाभ्यां सह पञ्चावत्ता चतुरवत्तिनोऽपि वचनात् स्रुवेण चावदानम् । वपावदानं हस्तेनेत्युपदेशः ।

[भाष्योक्तोपपत्तिविवरणम्]

(वृ) **शकलाभ्यां वचनात्**—हिरण्यशकलानामपि होमद्रव्यतयाऽवदेयत्वात् सर्वेषां पञ्चावदानमेव । चतुरवत्तिनोऽपि हिरण्यशकलयोरनिवृत्तेः ।

[स्रुवेणावदानमित्यत्र हेतुः]

**स्रुवेणावदानमिति**—सान्नाय्यधर्मत्वात् । खण्डनाभावान्न स्वधितिना । हिरण्यशकलयोरवदानं हस्तेन असान्नाय्यविकारत्वात् कठिनद्रव्यत्वाच्च ।

[उपदेशपक्षाशयः]

**वपाव–शः**—साकम्प्रस्थायीये दोहयोः कृत्स्नहोमे स्रुवानन्वयात् । स्रुवस्वधितिहस्तानां शक्तितो व्यवस्थानात् द्रव्ययुक्तचोदनाभावाच्च । पुरोडाशविकारेऽपि हस्तेनैव ।

(सू) इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽनुब्रूही-
न्द्राग्निभ्यां वपाया मेदसः प्रेष्येति [1]संप्रैषौ ॥ १ ॥
॥ ३४ ॥ १७०३ ॥

जातवेदो वपया गच्छ देवान् इति वषट्-
कृते [2] हुत्वा प्रत्याक्रम्य देवेभ्यस्स्वाहेत्युत्तरं परि-
वप्यं हुत्वा वपोद्धरणमभिघारयत्युत्तरतस्तिष्ठन् ॥
॥ २ ॥ ३५ ॥ १०७४ ॥

[वषट्कारहोमे स्वाहाकारतन्माने, हुतानुमन्त्रणे विशेषः मतिभेदश्च]

(भा) वषट्कारहोमेष्वपि मन्त्रवत्सु स्वाहाकारः । प्रस्तर स्वाहाकार-प्रतिषेधात् भरद्वाजमताच्च । हुतानुमन्त्रणं वपाहविषोरिन्द्राग्नियोरहं देवयज्ययेन्द्रियावी भूयासमितीन्द्रयाजिनः । यस्य महेन्द्रस्य प्राप्तिस्तस्य जेमानं महिमानं गमेयमिति । उपदेशः पुरोडाशवदनुमन्त्रणम् ।

(वृ) वषट्कार—दनुमन्त्रणम्—उपदेशमते पुरोडाशविकारत्वात्पशो-रिन्द्रियाव्यन्नादो भूयासमित्यनुमन्त्रणम् ।

(सू) प्रतिप्रस्थाताऽऽहवनीये वपाश्रपणी [3]प्रहरति।
स्वाहोर्ध्वनभसं मारुतं गच्छतामिति प्राचीं द्विशू-
लां प्रतीचीमेकशूलाम् । एतद्वा विपरीतम् ॥ ३ ॥
॥ ३६ ॥ १०७५ ॥

अथैने अध्वर्युः संस्रावेणाभिजुहोति ॥ ४ ॥
॥ ३७ ॥ १७०६ ॥

(भा) संस्रावेणाभिजुहोति वपाश्रपण्योः[4] ।

---

1 संप्रैषाविवं भवतः । संप्रैषकालस्तु प्रकृतावेवोक्तः अवद्यन्नमुष्मा अनुब्रूहीति (रु).
2 हुते सान्नाय्यवद्धुतानुमन्त्रणम् । वपोद्धरणमुत्तरतस्तिष्ठन्नभिघारयति । तथापश्वभि-घारणेऽपि वक्ष्यत्युत्तरतः परिक्रम्येति ॥ (रु). 3 उभे व्यत्यस्ताग्रे कृत्वा सह प्रहरति ; गच्छतमिति लिङ्गात् (रु). 4 ण्या—क.

(सू) अत्र यजमानो [1]वरं ददात्यनड्वाहं तिस्रो वा धेनूस्तिस्रो वा दक्षिणाः ॥ ५ ॥ ३८ ॥ ॥ १७०७ ॥

[वरयितव्ये विशेष औचित्यं च]

(भा) तूष्णीं वरो वरयितव्यः। अनः—शकटं तद्वहतीत्यनड्वान्। तं वरयितव्यमनड्वाहं ददाति। केचिद्वरं ददातीति गोजातिमात्रम्। अथवाऽनड्वाहमित्याहुः। दक्षिणाचोदनासु गोजातिरेव प्रसिद्धा। देवांश्च याभिर्यजते ददाति चेति लिङ्गात्।

(वृ) अत्र यजमानो वरं ददात्यनड्वाहमित्येकं सूत्रम्। वरविशेषोऽनड्वान् देयः।

केचि—त्रम्—गौर्वै वर इति।

अथवा—ङ्गात्—गोप्रकाशके सूक्ते देवांश्च याभिर्यजते ददाति चेति सामान्येन दक्षिणादानचोदनासु गोजातीयस्य प्राप्त्यनुवादात्। तिस्रो वा दक्षिणा इति गाव एव तिस्रो देयाः॥

(सू) समुत्क्रम्य सहपत्नीकाः पञ्चभिश्चात्वाले मार्ज[2]यन्ते। आपोहिष्ठामयोभुव इति तिस्रः। इदमापः प्रवहतावद्यं च मलं च यत्। यद्वाभिदुद्रोहानृतं यद्वा शेपे अभीरुणम्। आपो मा तस्मादेनसो विश्वान्मुञ्चन्त्वंहसः निमा मुञ्चामि शपथान्निर्मा वरुणादधि। निर्मा यमस्य पड्वीशात् सर्वस्माद्देव किल्बिषादथो मनुष्यकिल्बिषादिति ॥ ६ ॥ ॥ ३९ ॥ १७०८ ॥

एकविंशी खण्डिका

---

[1] अनड्वाहं वरमिति सामानाधिकरण्ये वरग्रहणानर्थक्याद्भेदेन योजनीयम्। वरं-गोजातीयमात्रं वा ददात्यनड्वाहं धुर्यमेव वा वरं धेनूः पयस्विनीर्वा तिस्रः—दक्षिणाः याः काश्चिद्वा गास्तिस्रः इति (रु). [2] दक्षिणां विधिवत्प्रतिगृह्य सर्वे समुत्क्रम्य सहगत्वा मार्जयन्ते। व्याख्यातं मार्जनम् (रु).

[समुत्क्रमणपदार्थः तत्र विशेषश्च]

(भा) समुत्क्रमणं समुदितैर्गमनम् सह पत्न्या चात्वालसमीपे। मार्जनं युगपादित्युपदेशः।

इति धूर्तस्वामिभाष्ये सप्तमे प्रश्ने षष्ठः पटलः.

---

[समुत्क्रमणफलं उपदेशपक्षाशयश्च]

(वृ) समुत्क्र–पे—तत्र मार्जनार्थम्।

मार्ज–देशः—सहशब्दात् मार्जनं कुर्वन्त्या सर्वेषां सहभावेन भवितव्यमिति। स्वमतं तु सहपत्नीकाः पश्चिमिश्चात्वाले मार्जयन्त इति। एतावता चात्वालगमनमर्थात्सिद्धं भवति। मार्जने च साहित्ये सिद्धे समुत्क्रम्येत्युत्क्रमणसाहित्यानियमात् प्रत्येकं मार्जनावृत्तिर्न्याय्येति।

इति श्रीरामाग्निचित्कृतायां धूर्तस्वामिभाष्यवृत्तौ
सप्तमे प्रश्ने षष्ठः पटलः॥

---

(सू) पशुपुरोडाशस्य पात्रसंसादनादि कर्मप्रतिपद्यते ॥ १ ॥ १ ॥ १७०९ ॥

[पश्वर्थपुरोडाशस्यदेवतासंस्कारत्वे मानम्]

(भा) पश्वर्थः पुरोडाशः[1]—पशुपुरोडाशः। देवतासंस्कारः। अन्यदेवत्योपि पशुदेव[2]तां वर्धय[3]तीत्याश्वलायनमतिः॥ ६-२२-९॥

[भाष्योक्तदेवतासंस्कारत्वोपपत्तिः]

(वृ) पश्व–स्कारः—पशुपुरोडाश इति निर्देशात् पशुदेवता संस्कारार्थः। पश्वर्थः पुरोडाश इति पशुदेवतार्थ इत्यर्थः।

अन्यदे–मतिः—नियमार्थत्वादुपादानस्य।

(सू) [4]यथार्थं पात्रयोगः ॥ २ ॥ २ ॥ १७१० ॥

---

[1] शः देवतासं–क. ङ. छ. [2] वत्यां ?–ङ. [3] यन्ती–ख. ग.

[4] यैरर्थः पुरोडाशस्य तानि प्रयुनक्ति (रु).

[1] निर्वपणकाले व्रीहिमयं पुरोडाशं निर्वपत्येकादशकपालं द्वादशकपालं वा ॥ ३ ॥ ३ ॥
॥ १७११ ॥

[2] यद्देवतः पशुस्तद्देवतो भवति ॥ ४ ॥ ४ ॥
॥ १७१२ ॥

[कपालसंख्याविषये पात्रासादने तद्देशे च विशेषः । इडाप्रणीताविषयेमतिभेदः । विधाभेदेप्रयोगक्रमः । तत्र विशेषश्च]

(भा) व्रीहिमयो न यवमयः । † कपालसंख्या चान्यदेवत्याऽप्येषैव । यान्यासादितानि प्रात्राणि तानि पुनर्न साद्यन्ते । पशुपुरोडाशस्यापि तान्युपकुर्वन्ति । [3] अपरिसमाप्तत्वात्पशोस्तन्त्रस्य । कपालशूर्पादीन्यष्टावपरतः । पात्रीं प्राशित्रहरणं अश्मानं सोमविधे पुरतः प्रणीताप्रणयनं चेष्टिविधे । आसादितान्यप्यासाद्यन्ते जुहूपभृद्ध्रुवाणि । अन्यच्चेडापात्रं प्रणीताप्रणयनं च नित्यमित्युपदेशः । इतरथा तु न्यायः । पवित्रे कृत्वा यजमान! वाचं यच्छेत्युक्त्वा संमृश्य पात्राणि अग्निहोत्रहवण्यादानादि हविष्कृदन्तमिष्टिविधे । प्रणीताप्रणयनमप्यु[4]पदेशेनचानिष्टिविधेऽपि यज्ञयोगश्च । इह न यज्ञयोगः कृतत्वात् ।

[पशुपुरोडाशेसर्वदाकपालसंख्यैक्ये हेतुः]

(वृ) कपालसं–ष्यैव—ऐन्द्राग्नमधिकृत्य पशुधर्मोपदेशादेवैकादशद्वादशसंख्ययोः प्राप्तत्वेऽप्येकादशकपालमित्युपादानात् । सर्वदैव पशुपुरोडाशेष्वेकादशकपालसंख्या ।

---

[1] पवित्रे कृत्वा पात्राणि संमृश्य निर्वपणम् । न प्रणीता भवन्ति । पश्वर्थानामेवोपजीवनादिष्टिविधे । सोमविधे तूक्तमन्या वायजुपात्पूयति । भरद्वाजश्चाह । बोधायनस्तु प्रोक्षणी शेषेण पिष्टानि संयुयादिति । पुनः पुरोडाशवचनात्पशु पुरोडाशः सर्वो व्रीहिमयो भवति न यवमयः । कपालसंख्या प्येषैवै सर्वत्र (रु). [2] इदमपि सार्वत्रिकं वेदितव्यम् (रु). †कपालसंख्येत्यादि भाष्यपर्यालोचने यद्देवत्येत्यादि सूत्रं निर्वपणेत्यादि सूत्रादुत्तरं प्रतीयते, तदुपरितनं स्यात् 'यथार्थम्' सूत्रम् इत्यादि । [3] अपरिसमाप्तस्यातन्त्रस्य ? क. अपरिसमाप्तत्वात्तन्त्रस्य–ङ. अपरिसमाप्तत्वात्पशुतन्त्रस्य–ख. ग. [4] पदेशश्चानिष्टिविधेऽपि–क.

[पात्रासादने भाष्योक्तविशेषहेतुविवरणम्]

यान्यासादितानि—नित्यमित्युपदेशः—पूर्वमाज्यभागं प्रति स्रुचावाचे न निदधाति निषेधात्। जुहूपभृतोर्धारणाशक्तावन्यत्र स्थापनान्नासाद्यते। अन्येषां तु पात्राणां यथार्थं पात्रप्रयोग इति। वचनात्सर्वेषामासादनम्। अन्यच्चेडापात्रं पश्वर्थं प्रयुक्तस्यैतदिडाकाल एवासादनदेशादुपादानमिति पुरोडाशपात्रान्तरम्। प्राशित्रहरणमप्येवम्। पशोः पुरोडाशविकारत्वे रक्षोहननार्थं सोमविधेऽपि प्रणीता प्रणयनं प्रयोक्तव्यम् ॥

[तत्र न्यायपक्षाशयः]

इतरथा तु न्यायः—यथार्थं पात्रप्रयोग इति न्यायप्राप्तानुवादत्वात्। प्रयुक्तानामसमाप्तकार्याणां प्रसङ्गसंभवात् अप्रयुक्तानां प्रयोग इति।

[भिन्नविधेऽपि क्वचित्साम्यम्]

पवित्रे–ष्टिविधे—सोमविधेऽपि रक्षोहननार्थं [1]प्रणीताः प्रणयेत्।

[यज्ञयोगसदसद्भावहेतू]

यज्ञयोगश्च—कर्तव्यः; औषधार्थत्वादित्युपदेशः।

इह न यज्ञयोगः कृतत्वात्—पशौ; इति न्यायः।

(सू) हविष्कृता वाचं विसृज्य पशुं विशास्ति ॥५॥ ॥५॥१७१३॥

(भा) विशास्ति—विशासयति शमित्रा।

[अध्वर्योरन्य एव शमितेत्यत्र मानम्]

विशासयति शमित्रा—[2]न तु स्वयमध्वर्युर्विशसनं करोति। शमित्रा विशसनं कारयेत्। शमितरेषा तेऽश्रिस्स्पष्टाऽस्त्विति शमितुर्विशसनार्थमश्रिविशेषप्रज्ञापनस्योक्तत्वात्। गुदं मा निर्ल्लैषीरित्यादिविशसनप्रकारैः[3]परप्रेषणाच्च शमिता विशसनकर्ता ॥

---

[1] प्रणयनं प्रयोक्तव्यम्–छ. [2] न स्वय–ख. ग. घ. [3] प्रकारप्रैषपर–ख. छ. प्रकारप्रैपश्चव–ग

(सू) हृदयं जिह्वा वक्षो [1] यकृद्वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि । दक्षिणं दोर्गुदतृतीयमिति सौविष्टकृतानि । क्लोमानं प्लीहानं पुरीततं वनिष्ठुमध्यूर्नीं मेदो जाघनीमित्युद्धरति ॥ ६ ॥ ६ ॥ १७१४ ॥

[वक्षनादिपदार्थस्वरूपविवरणम्]

(भा) वक्षः—उरः श्येनाकृतिर्यथा भवति तथा गृह्यते । [2] यकृत् खण्डमन्तर्भवति । वृक्यौ पार्श्वयोराम्रफलाकृती । सव्यं दोः—सव्य बाहुः । पार्श्वे षड्विंशत्या वंक्रिभिः सह । श्रोणिः—स्फिग्दक्षिणा गुदकाण्डं येन शकृन्निर्गच्छति । स्विष्टकृदर्थे[3] बध्नोति दक्षिणं बाहुं [4] सव्यां च श्रोणिं गुदं च । तस्योत्तरत्र विभागः । क्लोमानं—[5] एष्ट. लघः पापसम् ! प्लीहानं—प्लीहः ॥ पुरितंतं—[6] पारि । वनिष्ठु—स्थविरान्त्रम् । अध्युद्धि[7]—उघसो मांसम् । मेदः—[8] चन्द्रकम् ; वृक्ययोर्हृदये च तद्भवति । जाघनी—येन मशकानपनयति । एतानि समस्तानि अनूनं कृणुतादिति ॥

(सू) गुदं मा निर्लैषीरिति संप्रेष्यति ॥ ७ ॥ ७ ॥ ॥ १७१५ ॥

---

[1] यकृद् कालखण्डं नाम ग्रदीधो मांसम् । वृक्यौपार्श्वगतौ पिण्डौ । गुदंत्व विभक्तमेवोद्धरति । विभागस्त्वस्य परस्ताद्भविष्यति । क्लोमादीनामिडार्थं उद्धारः । क्लोमा नाम यकृत्सदृशं तिलकाख्यं मांसम् । प्लीहा–गुल्मः । पुरीतत्–अन्त्रम् । वनिष्ठु–स्थविष्टान्त्रम् । अध्यूर्ध्नी-उधस्थानीयं मांसम् । मेदः–चर्महृदयस्य वृक्ययोश्च । जाघनी–पुच्छम् (रु). [2] यकृत्कादेवमन्त ? क. कालकमन्त ? ख. ग. घ. [3] थैऽवदधाति–ङ. छ. [4] सव्यं च–ख. ग. छ. [5] ऐष्टलवः–ङ. एष्टलसः–क. वेपसां ऐष्टलवः-ज. [6] वारि–ङ पारी–ज. [7] द्विस्तूधसो–ङ, अत्युधिर–क. द्वि–ऊधसो–ख. ग. [8] चिद्र कम्–क.

मा विपर्यास्त [1]इत्यर्थो भवति ॥ ८ ॥ ८ ॥
॥ १७१६ ॥

[मानिर्त्वेंधीसौत्रस्यागम्यागम्भीरविवृतस्यविशदं विवरणम्]

(भा) मा विपर्यास्तः—मा विपर्यासं कुरु गुदकाण्डस्य स्थविरान्त्रस्य च योऽभ्यन्तरप्रदेशः तं मा कुरु बहिः ।

(वृ) परिवृत्य हि लोके शोधयन्त्यान्त्राणीत्याशङ्कयाऽऽह—मानिव्लेर्षीरितिप्रैषम् ।

(सू) उदकपवित्रे [2]कुम्भ्यां पशुमवधाय शूले प्रणी-
क्ष्य हृदयं शामित्रे श्रपयति ॥ ९ ॥ ९ ॥ १७१७ ॥

[शामित्राग्निस्वरूपं तत्र कर्तव्यं प्रतितपनादि हृदयश्रपणं च]

(भा) गार्हपत्यविकारश्शामित्रः । अतश्शामित्रे हृदयशूलकुम्भीशाखापवित्रोपवेषाणां प्रतितपनादि शाखापवित्रात्याधानन्तं कृत्वा देवस्त्वा सविता पुनात्वित्यवदानानि कुम्भ्यां पवित्रवत्यां क्षिपति । मांसस्य विप्रुडभावान्न विपुषोऽनुमन्त्रणम् । स्थगयति यथा न निर्गच्छत्यूष्मा । शूले पणीक्ष्य-आरोपयित्वा शूलेन शामित्रे श्रपयति हृदयं शमिता ।

[शमित्रस्यगार्हपत्यविकारत्वे हेतुः]

(वृ) गार्हपत्यविकारश्शामित्रः—श्रपणार्थत्वात् ।

[ऊष्मनिरोधके स्थगने मानम्]

अतश्शामित्रे—च्छत्यूष्मा—अन्तरेवोष्माणं वारयतात् इति प्रेषितत्वात् ।

---

[1] रुद्रदत्तस्तुविपर्यास्थाः इति पाठमादृत्य गुदं वनिष्ठुं च माविपर्यास्थाः—सदृशाकृत्योर्मिथोविपर्यासं मा कृथा इत्यर्थः । तयोस्सुषिरपरिवर्तनं विपर्यास इत्यन्ये । विपर्यास्थ इति पठतां प्रामादिकस्तकारः इत्याह. [2] कुम्भ्यादीनां प्रतितपनादि पवित्रनिधानान्तं कर्म शामित्रे कृत्वा उदकपवित्रायां कुम्भ्यां कृत्स्नमुद्धृतं पशुं दुग्धसेचनमन्त्रेण पुनरादधाय श्रपयति । हृदयं तु हृदयशूलप्रोतं कृत्वा प्रत्यक्षेण श्रपयति । श्रपणं तु शमितृकर्म शृतं हवीश्शमितरिति लिङ्गात् । अग्नेश्शामित्रसमाख्यानाच्च (रु).

(सू) अ[1]वहननादिकर्म प्रतिपद्यते ॥ १० ॥ १० ॥
॥ १७१८ ॥

[सूत्रे आदि पदार्थः तत्र विशेषः । प्राशित्रसंमार्गपक्षनिरासश्च]

(भा) अवहननाद्याप्येलपनिनयनान्तं कृत्वा पवित्रापिसर्गः स्तीर्णे प्रस्तरे मन्त्रेण। तत उद्वासनाद्यासादनान्तं अभिमर्शनं चासन्नस्य। केचित् विभज्य प्राशित्रस्य संमार्गमपि ; तदनुपपन्नम् ; अप्रधानत्वात्पशुपुरोडाशस्य। साकं प्रस्थाय्यीये प्रधानत्वाद्विभागः ।

[उक्तसंमार्गे पराशयः, तद्दूषणाशयश्च]

(वृ) केचित्–मपि—स्रुक्संमार्जनकाले वेदाग्राणि प्रतिविभज्येह प्राशित्रहरणसंमार्गमपि कुर्वन्ति ।

[पशुपुरोडाशसाकंप्रस्थायीययोर्वेदाग्रविभागसदसत्त्वदावेहेतुः]

तदनु–शस्य—प्रधानभूतपशुप्रयुक्तत्वाद्वेदाग्राणां पशुपुरोडाशस्याप्रयोजकत्वान्न वेदाग्रैकदेशेन प्राशित्रसंमार्गः।

साकंप्र–भागः—सायं सायं दोहाभ्यमित्यस्मिन् पक्षे तुल्यप्रधानत्वात् प्रातः प्रयोगार्थमग्रविभागः ॥

(सू) वपया प्रचर्य पुरोडाशेन प्रचरति शृते वा [2]पशौ ॥
॥ ११ ॥ ११ ॥ १७१९ ॥

[वपयाप्रचर्येतिपुनर्वचनप्रयोजनविवरणम्]

(भा) वपया प्रचर्येति पुनर्वचनात् पशुमालभ्य[3] पुरोडाशं निर्वपतीत्युपाकृतमा[4]त्रेऽपि पशुपुरोडाशो लभ्यते। पत्रासंसादनाद्यासादनान्तम्। ततः पशुकर्मोपाकरणात्परम् । प्रचर्य वपया पुरोडाशेन प्रचारः। पक्षे वा प्रचरति आसाद्य विरमति।

---

[1] अवहननादि प्रतिपद्याप्येभ्यो निनीय लौकिकैर्दर्भैः प्राशित्रं संमार्ष्टि। ऊहेनादाय ततः प्रस्तरे पवित्रे अपिसृज्यपुरोडाशमुद्वास्यासादयति.
[2] व्यवस्थितविकल्पार्थो वाशब्दः । एवं वपाप्रचारानन्तरं पुरोडाशं निरुप्यासाद्य शृते पशौ तेन प्रचरति । यद्वा पशुमालभ्यपुरोडाशं निर्वपति समेधमवैनमालभते वपया प्रचर्य पुरोडाशेन प्रचरतीति ब्राह्मणानुसारेण पशुसंज्ञपनानन्तरमेव पुरोडाशं निरुप्य वपाप्रचारानन्तरं तेन प्रचरतीत्यर्थः । भरद्वाजबोधायनाभ्यामप्येतदुक्तम् (रु). [3] भ्येत्युपाकृत–क. घ. ङ. छ. [4] मात्रोऽपि–ख. ग.

[पुनर्वचनत्वोपपादनम् । भाष्योक्तलाभश्च]

(वृ) वपया–णात्परम्—अस्यार्थः—वपामार्जनान्ते पशुपुरोडाशस्य पात्रसंसादनादि[1] विधानादेव पशुपुरोडाशस्य वपाप्रचारोत्तरकालत्वे सिद्धेऽपि वपया प्रचर्य पुरोडाशेन प्रचरतीति पुनर्वचनं पक्षान्तरद्योतनार्थम्। पशुमालभ्य पुरोडाशं निर्वपतीत्युपाकृत्य पञ्चहोमानन्तरं पशुपुरोडाशस्य पात्रसंसादनादि प्रियेणेत्यासादनान्तं ततः पशुकर्म मन्थनादि ।

[वपाप्रचारोत्तरपुरोडाशप्रचारस्य याजुषपक्षता]

प्रचर्य–प्रचारः—अयमस्मच्छाखीयः पक्षः ।

[भाष्योक्तपक्षान्तरलाभः मतान्तरं च]

पक्वेवा–मति—इति पक्षान्तरं शृते वा पशामिति यथासूत्रम् । वपामार्जनान्ते पात्रसंसादनाद्यासादनान्तं कृत्वा पक्के पशौ पुरोडाश प्रचारः । ततः शृतं हवीरित्यादि ।

केचित् पशुमालभ्य पुरोडाशं निर्वपतीत्यस्मिन् पक्षे शृते वा पशाविति विकल्पः संबध्यते इत्याहुः ।

(सू.) इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति संप्रैषौ ॥ इन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रूहीन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति वा ॥ १२ ॥ १२ ॥ १७२० ॥

अग्न[2]येऽनुब्रूह्यग्नये प्रेष्येति स्विष्टकृतः संप्रैषौ ॥ ॥ १३ ॥ १३ ॥ १७२१ ॥

॥ द्वाविंशी खण्डिका ॥

---

[प्रैषाकारभेदात् संप्रैषभेदः नारिष्ठविषयपक्षभेदादिश्च]

(भा) यदाऽवदीयमानस्येति प्रैषः तदाऽवद्यन्निति संप्रैष्यति । हुत्वा नारिष्ठानग्नयेऽनुब्रूहीत्युपदेशः । पुरस्ताद्वनस्पतेर्नारिष्ठाः तानेवोपजीवन्ति[3]

---

[1] दिविदाना ? घ. [2] नात्र नारिष्ठाः नचान्तः परिध्यर्पां निनयनम् । पश्वर्थानामेव प्रसङ्गाद्धुतानुमन्त्रणेऽप्यग्नेरहमिति विकारः (रु). [3] वति–घ.

यथाऽनूयाजादी[1]निति न्यायः। ऐन्द्राग्नवत्पशुपुरोडाशस्य हुतानुमन्त्रणम्। अग्नेरहं देवयज्ययाऽऽयुष्मानिति स्विष्टकृतः।

[नारिष्टहोमविषये उपदेशन्यायपक्षयोराशयः]

(वृ) यदाऽवदी–पदेशः—स्विष्टकृतः पुरस्तान्नारिष्ठहोमाः कर्तव्याः। पुरोडाशस्विष्टकृतः प्रथमभावित्वाद्धुत्वा नारिष्ठानग्नयेऽनुब्रूहीति स्विष्ठकृत्प्रैषः। किं च इडान्तत्वात्पशुपुरोडाशस्य तदुत्तर[2]मनुष्ठितैर्नारिष्ठहोमैःपुरोडाशस्योपकारा[3]सिद्धेरपीहानुष्ठानमित्युपदेशः।

पुरस्ता–तिन्यायः—पशुपुरोडाशस्यापि ब्राह्मणतर्पणान्तत्वात् पश्चाद्भाविनामप्यनूयाजादीनामिवोपकारकत्वसंभवात् प्रधानप्रयुक्त प्रसक्तित्वात्पुरोडाशस्य पुरस्ताद्वनस्पतेः स्विष्टकृद्विकारादनुष्ठानं नारिष्ठानामिति।

ऐन्द्राग्न–न्त्रणम्—इन्द्रियाव्यन्नाद इति हविस्सामान्यात्।

(सू) प्राशित्रम[4]वदायेडां न यजमानभागम् ॥ १ ॥ ॥ १४ ॥ १७२२ ॥

[5]हविराहुतिप्रभृतीडान्तस्संतिष्ठते॥ २ ॥ १५ ॥ ॥ १७२३ ॥

[इडान्तशब्दार्थः पक्षान्तरेविशेषश्च]

(भा) इडान्तो मार्जनान्तः। यजमानभागप्रतिषेधात् पिष्टलेपफलीकरणहोमयोरपि निवृत्तिः वचनकृतत्वादिडान्तस्य, सूत्रकारैस्तु बन्धन-

---

[1] दीनीति. [2] दुत्तरकालमनु-ख. ग. छ. [3] सिद्धेरिहा. [4] अवद्यतीति विपरिणामेनान्वयः। तेषांप्राशित्रेडामेवावद्यति न तत्सदृममयं यजमानभागमित्यर्थः (रु). [5] यदतोऽङ्गजातं प्रयाजानूयाजादि तत्सर्वं पश्वर्थमेवानुष्ठितं प्रसङ्गेनोपकरोतीति भावः। एवं च तत्रालब्धप्रसङ्गं यद्वैशेषिकमङ्गं पुरोडाशस्य यथा फलीकरणहोमः कपालविमोचनं चेति तत्रैव कर्तव्यमित्युक्तं भवति। तत्र च लिङ्गं सवनीयानामिडान्ते वैशेषिकाणामनुक्रमणम्। भरद्वाजसत्याषाढौ चाहतुः। अत्र पशुपुरोडाशस्य पिष्टलेपफलीकरणहोमौ जुहोति कपालविमोचनं चेति स्वकाले कार्याणीत्यपरं उत्कर्षेदित्यपरमिति लिङ्गात्। यजमानभागस्य तु वाचनिको निषेधः। केचित्तुवाचनिकमिडान्तामिष्टानान्यदपि प्रतिषेधन्ति। तेषां यजमानभागावदानप्रतिषेधोऽनर्थकस्स्यात् प्राशनाभावादेवावदाननिवृत्तेः (रु).

मनपेक्ष्य श्रुतिं ये कुर्वन्ति तेषां यजमानभागप्रतिषेधो वचनकृत इति। हविराहुति प्रभृति च यदा कृतावाज्यभागौ। यदा त्वकृतौ तदा कृत्वाऽऽज्यभागौ हविराहुतिः।

[इडान्तपदस्य मार्जनान्तपरत्वे उपपत्तिः]

**इडान्तो मार्जनान्तः**—इडां प्राश्य वाग्यता आसत आप्राशनादिति प्राशनस्य मार्जनान्तत्वनिर्देशादि[1]हेडान्तस्संतिष्ठत इत्युक्त्वा पूर्ववत् प्रस्तरे मार्जयित्वेति सिद्धवदनुवादाच्च।

[पिष्टलेपफलीकरणहोमयोर्निवृत्तिहेतुविवरणम्]

**यजमान–न्तत्वस्येति**—पशुमालभ्य पुरोडाशं निर्वपती[2]त्यत्र कृत्स्नतन्त्रप्राप्तावपीडान्तस्संतिष्ठत इति वचनाद्दीक्षणीयादिवदुपरितनानां वैशेषिकाणामप्यङ्गानां निवृत्तिरिति।

**सूत्रकारै–वचनकृतः**—अस्यार्थः—सूत्रकारैस्तु बन्धनं वाचनिकमिडान्तत्वमित्येतदनादृत्य पशुमालभ्य पुरोडाशं निर्वपति वपया पचर्य पुरोडाशेन प्रचरतीति श्रुतौ कृत्स्नतन्त्रप्रयोगविधानादैष्टिकतन्त्रप्राप्तौ पशुतन्त्रोपजीवित्वात् पशुपुरोडाशस्य प्रयाजादीनां पृथगनुष्ठेयत्वाभावात् हविराहुतिप्रभृतीडान्त इति न्यायप्राप्तवैशेषिकाहवनीयकर्मणामनुवाद[3]त्वादापराग्निकवैशेषिकपिष्टलेपादिकर्मणामनिवृत्तिरिति येषां पक्षस्तेषां यजमानभागप्रतिषेधेन तावन्मात्र प्रतिषेध इति इडान्तस्संतिष्ठत इति सूत्रकारवचनं तदन्ताङ्गरीतिविधायकमितीमं पक्षमनादृत्य श्रुतिप्राप्तसर्वतन्त्रप्राप्तिं ये कुर्वन्ति य आद्रियन्ते इति ग्रन्थार्थः।

[पक्षान्तारीयविशेषविवरणम्]

**हविरा–तिच**—तेषां पक्षे प्रयाजादीनां प्रसङ्गसिद्धेर्वैशेषिकानिर्देशो हविराहुतिप्रभृति च।

**यदा–गौ**—पशौ।

---

[1] दिहचेडा–ख. ग. घ. त्यकृत्स्न ? [3] त्वादत्रापरीाग्नक–घ.

(सू) उपहूतां मैत्रावरुणषष्ठा [1] भक्षयित्वा पूर्ववत्प्रस्तरे मार्जयित्वा स्रुवेण पृषदाज्यस्योपहत्य वेदेनोपायम्य त्रिः पृच्छति शृतं हवीः ३ शमितरिति ॥ ॥ ३ ॥ १६ ॥ १७२४ ॥

[मैत्रावरुणषष्ठतानियमः। उपहवेविशेषः क्वचिच्च तन्त्रंभक्षणमार्जनयोः। मार्जनमिडाभक्षणाङ्गिः उपघतपदार्थश्च]

(भा) भक्षण एव मैत्रावरुणषष्ठः। प्रकृतिवदुपहवः। नचान्वारभते। नचाप्युपहूत[2] इत्याहः। [3] यजेति वचनात् अध्वर्युविकारोऽपि सन्पूर्ववत्। भक्षणं मार्जनं च तन्त्रेण मैत्रावरुणस्यापि। इडाभक्षणाङ्ग मार्जनमिह विधानात्। अत इडान्ते क्रियतेऽन्यत्रापि। उपघातो-ग्रहणं पृषदाज्यधानीस्थस्य। हृदयाभिघारणे वनस्पतौ च इतरस्यानूयाजार्थत्वात्।

(वृ) प्रकृतिवदुपहवः—इडायाः।
नचान्वारभते—मैत्रावरुणः।
नचाप्युपहूतः— पशुमानसानीत्याह।

यद्यपि ;—

यजेतिवचनात्-णस्यापि[4]—अस्यार्थः ;—भक्षणे मार्जने च उभयत्र पूर्ववदिति संबध्यते। उपहूतामित्यादि पूर्ववदित्यन्तमेकं सूत्रम्। तथा पूर्ववत्प्रस्तरे मार्जायत्वेति सूत्रान्तरम्। पूर्ववदिति तन्त्रेणोपात्त उभयत्र मन्त्रवाग्यमनादिप्राप्त्यर्थम्। पूर्ववद्वचनात् ?—

---

[1] भक्षणवचनं मैत्रावरुणाय विधानार्थम्। तस्य चाप्राकृतस्यापि अनुवाक्याप्रैषयोर्वक्तव्यत्वेन होत्रध्वर्युविकारत्वाद्भक्षणप्राप्तिरिति भावः। मार्जनवचनं तु भक्षणशेषत्वं मार्जनस्य प्रापयितुम्। अतो यद्यदिडान्तमुक्तं तन्मार्जनान्तं भवति पृषदाज्यग्रहणं स्थालीगतस्येष्टम् ; स्रुग्गतस्यानूयाजार्थत्वात् (रु). [2] तः पशुमानसानीत्याह —ख. ग. [3] यद्यपियजे. [4] स्यापि ;—भक्षण—घ.

इडाभ-धानात्—इति पूर्वं व्याख्यातम्।

[भाष्यास्थान्यपदार्थः]

अत इडान्ते-त्रापि— आतिथ्यादिष्वपि मार्जनान्तम्।

[उपघातस्य ग्रहणरूपत्वे हेतुः, वैलक्षण्यं, ग्रहणोपयोगः, तत्र विशेषाश्च]

उपघातो-स्थस्य—स्थाल्यां शेषयितव्यत्वे प्रमाणाभावात्। यथा आज्यस्थाल्यामाप्यायनवति संयाजार्थं शेषः। एवं च प्रयाजार्थादाज्यात् स्रुच्याघारतदनूयाजार्थाद्धृदयाभिघारणं वनस्पतीज्या चेति। अस्मिन् पक्षे प्रयाजशेषाभिघारणं न स्थालीस्थस्य पृषदाज्यस्य। न च स्कन्दनादौ प्रायश्चित्तम्। नचासन्नाभिमन्त्रणम्। इमे स्थाल्याविति उपयोगाभावात्।

[उपयमनकर्म]

उपय-रणम्—वेदस्य।

(सू.) शृतमितीतरः [1] प्रत्याह ॥४॥१७॥१७२५॥

[शृतप्रश्नस्योत्तरयिता, तस्यैव वक्तृता च]

(भा) शतमिति शमिता प्रत्याह। स पक्ता पशोर्नाग्नीध्रः अर्थलक्षणस्य हि पक्ता सः।

[अत्र शमितुः कर्तृताश्रौती। अन्यत्रान्ययोस्तत्]

(वृ) शृत-क्ता सः—यद्यपि शमयतीति शमितेति संज्ञपनयोगात् शमितृत्वम् तथाऽपि शृतं हवीश्शमितरिति श्रपणप्रश्नस्य शमितृविषयत्वात्। स एव पशोरर्थलक्षणस्य श्रपणस्य कर्ता। अध्वर्युरङ्गाराध्यूहनादिचोदितश्रपणस्य कर्ता। प्रकृतौ प्रातर्दोहे त्वाग्नीध्रो हवींषि सुश्रृतानि करोतीत्याग्नीध्रोऽर्थलक्षणस्य कर्ता।

(सू.) अर्धाध्वे [2] द्वितीयं प्राप्य तृतीयम् ॥५॥१८॥ ॥१७२६॥

---

[1] शमिता तु सुपरीक्षितपाकः प्रत्याह (रु). [2] द्वितीयं तृतीयं पृच्छतीत्यन्वयः.

[द्वितीयतृतीयप्रश्नयोरवसरः । तन्निषेधावसरश्च]

(भा) अर्धमध्वनः आधाध्वम्। तत्र द्वितीयं पृच्छति प्राप्य कुम्भीं तृतीयं पृच्छति । यदा त्वशृतं तदा शृतमिति न वक्तव्यम् दोषवचनात्॥ अशृते मा द्वितीयं पृच्छेति प्रतिषेध्योऽध्वर्युः तेन च पाकः प्रतीक्ष्यस्तद्देशस्थेन ।

[मिथ्योत्तरदोषः]

(वृ) दोषवचनात्—योऽशृतं शृतमाह स एनसा युक्तो भवतीति शमितुर्दोषदर्शनात् न शृतमिति वक्तव्यम् ।

[निषेधहेतोः प्रथमप्रश्ने सत्वेऽपितदुपपत्तिः पाकप्रतीक्षोपपत्तिश्च]

अशृते–शस्थेन—हविः प्राप्तयर्थगमने प्रवृत्तस्य किं शृतं नेति प्रथमप्रश्नोपपत्तेः अशृते मा द्वितीयमिति प्रतिषेधे प्रतिनिवृत्तिहेत्वभावात् तद्देशस्थेनैवाध्वर्युणा[1]पाकः प्रतीक्ष्यः। शृतमिति द्वितीयादिप्रश्नः ।

(सू) पूषा मा पशुपाः पात्विति [2]प्रथमेऽभिप्रव्रजति।
पूषा मा पथिपाः पात्विति द्वितीये पूषा माऽधिपाः
पात्विति तृतीये ॥ ६ ॥ १९ ॥ १७२७ ॥

[3]शूलात्प्रवृह्य हृदयं कुम्भ्यामवधाय संते
मनसा मन इति पृषदाज्येन हृदयमभिघारयत्युत्त-
रतः परिक्रम्य ॥ ७ ॥ २० ॥ १७२८ ॥

[प्रावृह्येत्येतदर्थः हृदयाभिघारणेमन्त्रः । ततो गमनादि]

(भा) शूलादपनीय हृदयं स्वाहेन्द्राग्निभ्यां त्वा जुष्टमभिघारयामीत्यभि-

---

[1] सुपाक–छ. [2] प्रथमे द्वितीये इति प्रश्ने कृते इति शेषः । तथा पृष्ट्वाऽभिक्रामेत्पूषा मेति । द्वितीयं पृष्ट्वापक्रामेत्पूषामेत्येव बोधायनः. [3] तृतीयेन गमनमन्त्रेणोत्तरतः परिक्रम्य हृदयमभिघारयति । न चात्रोत्तरसूत्रेण सह योजना शङ्कनीया त्रिभिः प्रश्नैस्त्रिभिर्मन्त्रैः त्रिभिश्चाध्वनोऽवच्छेदैर्विशिष्टस्य गमनस्योभयोरपि हृदयपश्वभिघारणयोरङ्गत्वात् तस्यचानिर्वृत्तत्वात् । व्यक्तोक्तत्वाच्च भरद्वाजसत्याषाढाभ्याम् । उत्तरतःपरीत्य पृषदाज्येन हृदयमभिघारयतीत्यर्थः (ट).

धारणं हृदयस्य । उत्तरतो गच्छति पशोस्तृतीयेन पूषा माघिपा इति मन्त्रेण। अन्योऽस्याज्यस्थाल्या आज्यमानयति अभिघारणार्थं गमनमिति। पृषदाज्येन हृदयमभिघारयति ।

(वृ) शूला-यम्—कुम्भ्यामवधाय ।

स्वाहे-यस्य—पृषदाज्येन ।

[उत्तरत इत्यादि भाष्यं परिक्रमणविवरणम्]

उत्तरतो-मन्त्रेण—प्राप्य तृतीयमिति वचनात् कुम्भीं प्राप्य पृष्ट्वा श्रृतमित्युक्ते पूषा माघिपा इति मन्त्रेण कुम्भ्या उत्तरतो गच्छति । एतदुत्तरतः परिक्रमणम् ।

[आज्यानयने विशेषः]

अन्यो-नमिति—नाध्वर्युः प्रतिनिवृत्त्याज्यमानयति किंत्वन्य आनयति । पृषदाज्येन हृदयमभिघारयति उत्तरतः परिक्रम्येतिच्छेदः ।

आज्येन [1]पशुं यस्त आत्मा पशुषु प्रविष्ट इति ॥ ८ ॥ २१ ॥ १७२९ ॥

[परिक्रमणोत्तराभिघारणयोर्देशैक्याद्विशेषविवक्षयात्रैव प्रदर्शनम्]

(भा) तृतीयेन गमनमन्त्रेणोत्तरतः [2]परिक्रामति । ततो हृदयमभिघारयत्युत्तर[3]तोऽवस्थितः । आज्येन पशुं तत्रैव स्थितः । उपदेश उत्तरतः परिक्रमणमाज्येनाभिघारणार्थम् । हृदयाभिघारणार्थमेवमन्त्रेण गमनमिति न प्राप्नोति [4]पूषा माघिपा इति । ईषद्गत्वा हृदयमभिघारयति ।

[उपदेशपक्षाभिप्रायः]

(वृ) उपदेश-रयति—अस्यार्थः, शूलात्प्रवृह्येत्यादौ हृदयमभिघारयतीत्यन्तमेकं सूत्रम् । समानकर्तृकत्वेन क्रियाविधानात् ।

---

[1] पशुम्—आज्येन आज्यस्थाल्या आनीतेनाभिघारयति (रु). [2] परिक्रमणम्—घ. [3] तः स्थितः—क. ङ. छ. [4] इति मन्त्रः उत्तरतः परिक्रमणे—ख. ग.

18*

[अत्र सांप्रदायिकसूत्रविभागः, कर्मक्रमः, उपदेशपक्षश्च]

तथोत्तरतः परिक्रम्याज्येन पशुमभिघारयतीति सूत्रान्तरम् समानकर्तृकविध्यन्तरात्। कथमस्मिन् पक्षे पूषा माधिपा इति गमनं कूम्भीं प्राप्य तृतीयं पृष्ट्वा शृतमित्युक्ते पूषामाऽधिपा इतीषद्गत्वा हृदयाभिघारणम् ॥

ततस्तूष्णीमुत्तरतः परिक्रम्य यस्त आत्मेत्याज्येन पशुमभिघारयतीत्युपदेशः।

**(सू) स्वाहोष्मणो व्यथिष्या इत्युद्यन्तमूष्माणमनुमन्त्रयते ॥ ९ ॥ २२ ॥ १७३० ॥**

उद्यन्तं—ऊर्ध्वं यन्तं ऊष्माणम्।

**पशुं [1]हरन् पार्श्वतो हृदयशूलं धारयत्यनुपस्पृशन्नात्मानमितरांश्च ॥ १० ॥ २३ ॥ १७३१ ॥**

[हृदयशूलधारणप्रकारः]

कुम्भी पार्श्वे धार्यते हृदयशूलो बद्धो यथैनं न स्पृशति प्राकृतानितरांश्च।

[प्रकृतः प्राकृतपदार्थः]

यथैनं-श्च—एनं-अध्वर्युम्। प्राकृतान् ऋत्विजः। इतरांश्च पुरुषान्। तथा पार्श्वतो धार्यते बध्वा।

**(सू) अन्तरा यूपमाहवनीयं च दक्षिणातिहृत्य पश्वहोत्रा पड्ढोत्रा वा दक्षिणस्यां वेदिश्रोण्यामासाद्य चतसृपूपस्तृणीते जुहूपभृतोर्वसाहोमहवण्यां [2] समवत्तधान्यामिति ॥ ११ ॥ २४ ॥ १७३२ ॥**

---

1 साान्नाय्यवत्पशुमुद्वास्य हरन् कुम्भ्याः पार्श्वतो हृदयशूलं धारयति न च तेन हस्तधृतेनोपस्पृशत्यन्नान्तरमन्यांश्च। धारणमपि तस्य रज्वादिना बद्धा न तु साक्षाद्धस्तेनेत्येके। (रु). 2 समवत्तधानी—इडापात्रम्। तत्रेदमिन्द्रियमित्यासन्नाभिमर्शनमन्त्रे हविर्मयि श्रयतामितिसन्नामः। तत्र च लिङ्गानि छागस्य हविषोऽनुब्रूहि मनोतायै हविषोऽवदीयमानस्य। अथ हविषा प्रचरति यदि वपाहविरवदानं वेत्यादीनि। आश्वलायनश्चाह;—वपा पुरोडाशो हविरिति पशोः प्रदानानीति.

[समवत्तधानीपदव्युत्पत्तिः]

(भा) समवत्ता-गृहीता यस्यां पार्श्विडा धार्यते सा समवत्तधानी।

(सू) [1] जुहूपभृतोर्हिरण्यशकलमवधाय बर्हिषि प्लक्ष-शाखायामवदानान्यवद्यन् संप्रेष्यति ॥ १२ ॥ ॥ २५ ॥ १७३३ ॥

त्रयोविंशी खण्डिका.

---

(सू) मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति ॥ १ ॥ ॥ २६ ॥ १७३४ ॥

हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसो याथाकामीतरेषाम् ॥ २ ॥ २७ ॥ १७३५ ॥

[कर्मक्रमः, अवदानमन्त्रावृत्तावहरणेस्वधितिकरणकत्वे च मतिभेदः]

(भा) अवदानमन्त्रेण छिनत्ति स्वधितिना हृदयम्। पश्चान्मनोतासंप्रैषः। अवदानेऽवदाने मन्त्रावृत्तिः भिन्नत्वात्। स्वधितिनाऽवहरणमवदानस्य। उपदेशो नावदानमन्त्रो न स्वधितिनाऽवहरणम्॥

[संप्रैषस्यावदानसमकालता]

(वृ) अवदानम-संप्रैषः—अवद्यन् संप्रैष्यतीति वर्तमाननिर्देशात्।

[अवदानमन्त्रावृत्तिहेतूपपत्तिः]

अवदा-न्नत्वात्—हृदयादीनां हविषां स्वधितिनाऽवहरण-मवदानस्य छेदनादिनिधानपर्यन्तत्वादवदानस्य।

[अवदानमन्त्रस्य नावृत्तिरित्युपदेशपक्षाशयः]

उपदेशो-हरणम्—माभेरित्यत्र अवदानानि ते प्रत्यवदास्या-

---

1 बर्हिःप्लक्षशाखयोस्तत्तदङ्गं निधाय स्वधितेरक्तया धारयऽवदानमन्त्रेण छिनत्ति। प्रक्रान्ते चावदाने मनोतायै संप्रैषः (रु).

मीति दर्शनात् प्रत्यभिघारसम्बन्धिनामेव हविषामवदानेऽवदानमन्त्रः। न च हृदयादिषु प्रत्यभिघारणं युक्तम्; न च त्र्यङ्गेभ्यः प्रधानावदानम् इति नावदानमन्त्रः। न च स्वधितिना हरणमित्युपदेशपक्षे पुरोडाशविकारत्वाद्धस्तेनावदानमिति ॥

(सू) [1]मध्यतो गुदस्यावद्यतीत्युक्तम् ॥ ३ ॥ २८ ॥
॥ १७३६ ॥

[2]यथोद्धृतं वा ॥ ४ ॥ २९ ॥ १७३७ ॥

(भा) यस्मिंश्च काले विभज्यते[3] गुदं तस्मिन्नेवोपभृति तत [4]इडायां च क्षिप्यते इति च।

[गुदावदाननिधानयोः कालादौमतिभेदः, सूत्रार्थश्च]

(वृ) यस्मिन्+क्षिप्यते इति च--इत्येवमन्त उपदेशपक्षः अवदानरूपत्वाच्छेदनस्य। त्रेधा छिन्नस्य गुदस्य तदानीमेव तेषु निधानमित्युपदेशः। [5]स्वपक्षे तु सौविष्टकृतैडयोर्गु[6]दभागयोरितरैस्सह। तत्काले स्रुवेणावदानं वपावत इति मध्यतो गुदस्यावद्यतीत्युक्तमित्यस्यार्थः।

(सू) [7]दैवतानां द्विर्द्विरवदाय जुह्वामवदधाति। उपभृति सौविष्टकृतानां सकृत्सकृत् ॥ ५ ॥ ३० ॥
॥ १७३८ ॥

---

[1] उक्तमिदं ब्राह्मणे मध्यतो गुदस्यावद्यति मध्यतो हि प्राण उत्तमस्यावद्यतीति। तेन दैवतानामवदानानां मध्यतोऽन्ततो वा गुदावदानमित्यर्थः (रु). [2] यः प्रथम उद्धरणे क्रम उक्तः स एवावदानेऽप्यस्तु (रु). [3] ज्यते तस्मिन्नेवो–ख. ग. [4] इडायाश्च–क. अ. [5] स्वमते–घ. [6] गुदकाण्डयोः–घ. [7] दैवतसौविष्टकृतविभागः प्रागेव दर्शितः। तत्र दैवतानि सर्वाण्यवदाय सौविष्टकृतस्यावद्यति। भरद्वाजेनाप्युक्तम्। पञ्चावत्तिनस्तु त्रिस्त्रिर्दैवतेभ्यो द्विर्द्विस्सौविष्टकृतेभ्य इति द्रष्टव्यम्; पञ्चावत्तं सर्वत्रेति नियमात् स्वधितिना धारां छिनत्ति द्विःपञ्चावत्तिन इति लिङ्गाच्च(रु).

[गुदविभागे मन्त्रावसरः, क्रमः, उपदेशपक्षश्च]

(भा) [1]दैवतानां मध्येऽन्ते वा गुदविभागः उत्तमस्यावद्यतीति । दैवतार्थं यदा विभजति गुदं तदा मन्त्रः । सर्वाणि दैवतानि गृहीत्वा सौविष्टकृतानि प्रत्यभिघार्यावद्यति । उपदेशस्तु यदा गुदविभागस्तदा सौविष्टकृतान्यपि गृहीत्वेति ॥

(वृ) उत्तमस्यावद्यतीति—उत्तमस्य गुदस्य अन्त्यभूतस्येत्यर्थः ।

दैवता-मन्त्रः—द्व्यवदानतया ।

सर्वाणि-वद्यति—स्विष्टकृदर्थत्वात्प्रत्यभिघारणस्य ।

[उपदेशपक्षाशयः]

उपदेशस्तु-हीत्वेति—गुदविभागात्पूर्वमेव सौविष्टकृतान्यवदाय गुदाविभागेनैव स्विष्टकृदर्थं निदधाति ; विभागस्य छेदनरूपावदानत्वात् ॥

(सू) [2]गुदं त्रेधं विभज्य स्थविमदुपयड्भ्यो निधाय मध्यमं द्वेधं विभज्य दैवतेष्ववदधाति । आणिमत्सौविष्टकृतेषु ॥ ६ ॥ ३१ ॥ १७३९ ॥

[अवत्तानां निवेशः द्विर्द्विरवदानविषयः]

(भा) उपयड्यागार्थं स्थविमत्—स्थूलतमम् । अनूयाजानां वषट्कृते वषट्कृते हूयते । अणिमत्—अणुतमम् । तद्दैवतानि गृहीत्वा सौविष्टकृतेषु क्षिप्यते पञ्चावत्तिनस्त्रिस्त्रिर्दैवतानां सौविष्टकृतानि [3]द्विर्द्विः ।

(सू) [4]अपिवा द्वेधं विभज्य स्थविमदुपयड्भ्यो निधायेतरत्त्रेधं विभज्य मध्यमं द्वेधं विभज्य दैवतेष्वव-

---

[1] यदि च दैवतानां—क. ङ. छ. ज. ञ. [2] गुदस्यावदानकालः प्रागेवोक्तः तस्यैवेदानीं विभागप्रकार उच्यते । यदा दैवतार्थं गुदादवद्यते तद्दैवतं त्रेधा-विषमं विभज्य स्थूलखण्डमुपयड्ढोमार्थं निधाय मध्यमपरिमाणं खण्डमवदानमन्त्रेण द्वेधा छित्वा दैवतेष्ववदधाति । अणु तु खण्डं स्वकाले सौविष्टकृतेषु । पञ्चावत्तिनस्तत्रापि त्रेधा द्वेधा च विभागः पूर्ववत् (रु). [3] द्विः—छ. [4] गुदादपीडावदानमिच्छ ।ऽयं विभागः (रु).

दधाति। आणिमत्सौविष्टकृतेषु स्थविमादिडायाम् ॥ ७ ॥ ३२ ॥ १७४० ॥

[उक्तविषये पूर्वोक्ताद्वैलक्षण्यम्]

(भा) स्थविष्ठमिडायां। ऐडानि सप्त गृहीत्वाऽवदधाति।

(सू) [1]त्रेधा मेदोऽवद्यति द्विभागं स्रुचोस्तृतीयं समवत्तधान्याम् ॥ ८ ॥ ३३ ॥ १७४१ ॥

(भा) मेदश्च।

(वृ) मेदश्च—अवदधाति।

(सू) [2]यूपे मेदोऽवधाय मेदसा स्रुचौ प्रावृत्य हिरण्यशकलावुपरिष्टात्कृत्वाभिघारयति ॥ ९ ॥ ॥ ३४ ॥ १७४२ ॥

[ऐडग्रहणावसरः, इडा मन्त्रनिषेधश्च]

(भा) सौविष्टकृतानि गृहीत्वा यूपे मेदोऽवधायेत्येवमाद्यभिघारणान्तं कृत्वा ऐडानि गृह्णाति। नेडामन्त्रः।

(वृ) सौविष्ट–गृह्णाति—दैवावदानाशिष्टानि षडाद्यानि कृत्स्नानि गृह्णाति।

नेडामन्त्रः—मनुना दृष्टामितिकृत्स्नसग्रहाणादप्राप्तकालत्वाच्च।

(सू) [3]समवत्तधान्यां षडाद्यानीडामवद्यति वनिष्टुं सप्तमम् ॥ १० ॥ ३५ ॥ १७४३ ॥

---

[1] अवत्तेषु सौविष्टकृतेषु मेदस्त्रेधा विभज्य तृतीयमिडार्थं निधायेतरौ भागौ स्रुचोः क्षिपति (रु). [2] यूपे-पशुरसे मेदो मज्जयित्वा तेन स्रुग्गतान्यङ्गानि प्रच्छादयति (रु) [3] अवशिष्टानामङ्गानां मध्ये यथोद्धृतं षडाद्यानि कृत्स्नानीडामवद्यति। वनिष्टुं च सप्तमम्। अत एव च नावदानमन्त्रः। न च यजमानभागः। यदा तु षड्न्द्व तदा सर्वं प्रकृतिवत्। (रु).

[सप्तभ्य इति पक्षे मन्त्रावृत्तिः]

(भा) यदा तु सप्तभ्यः तदा मन्त्रः पुनः पुनः तेभ्यश्च दक्षिणार्धात् ।

[सप्तभ्य इति पक्षे क्रमः मन्त्रश्च]

**यदातु–णार्धात्**—षड्भ्यो वा वनिष्ठोस्सप्तमादित्यस्मिन् पक्षे दैवतसौविष्टकृतान्यवदायाभिघार्य षड्भ्यो वनिष्ठोश्च दक्षिणार्धेभ्यो मन्त्रेणेडावदानम् । अवद्याम्येकत इति संबन्धात् ।

**[1]अनस्थिभिरिडां वर्धयति** ॥ ११ ॥ ३६ ॥ ॥ १७४४ ॥

[इडावर्धने ग्राह्याणि]

(भा) येषामस्थीनि न विद्यन्ते जाघनीव[2]र्जानां सहाध्युद्धिना तैर्वर्धयतीडाम् ।

**येषाम–तीडाम्**—अनस्थिभिरिडां वर्धयतीति ।

**[3]क्लोमानं प्लीहानं पुरीततमित्यन्ववधाय यूष्णोपसिच्याभिघारयति** ॥ १२ ॥ ३७ ॥ १७४५ ॥

चतुर्विंशी खण्डिका.

---

[अध्युद्ध्ययभावपक्षः जाघनीफलम् यूश्शब्दार्थश्च]

(भा) नाध्युद्धिरुपदेशेन । तिष्ठत्येव जाघनी पत्नीसंयाजार्थम् । यूः–पशुरसः तेनोपसिच्याभिघारयति ।

[अध्युद्धिनिषेधहेतुः]

**नाध्युद्धिरुपदेशेन**— पुरीततमित्यन्ववधायेत्यत्राध्युद्धेरनुपादानात् । वनिष्ठोस्सप्तमादित्येतावन्मात्रोपदेशाच्च ।

---

[1] शिष्टेष्वङ्गेषु यान्यस्थीनि तैरिडां वर्धयति । (रु). [2] इति करणोऽध्युध्रीमे दस्तृतीययोः प्रदर्शनार्थः । तत्र भेदः पूर्वमवदाय ततः क्लोमादीनीत्यपरे । (रु).
[3] र्जानि–क. ङ. न.

[तिष्ठत्येवेत्येतदर्थः]

तिष्ठत्येव–जार्थम्—तिष्ठत्येवेति क्वचिन्निधीयते नावदीयते। तेनोप–रयति—इडाम्।

इति श्रीकौशिकेन रामेणाग्निचिता विरचितायां
आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्यवृत्तौ
सप्तमे प्रश्ने सप्तमः पटलः.

---

(सू) अपां त्वौषधीनां रसं गृह्णामीति वसाहोमहवन्यां [1] वसाहोमं गृह्णाति ॥ १ ॥ १ ॥ १७४६ ॥

(भा) वसाहोमः–पशुरस एव।

[वसाहोमपदस्य रसपरत्वोपपत्तिः]

(वृ) वसा–एव—वसाहोमं गृह्णातीति वसाहोमशब्दो ग्राह्यवचनः। हूयत इति होमशब्दस्य कर्मणि व्युत्पत्त्या।

(सू) [2] स्वधितिना धारां भिनत्ति ॥ २ ॥ २ ॥ ॥ १७४७ ॥

(भा) स्वधितिना–छुरिकया धाराच्छेदः।

(सू) द्विःपश्चावात्तिनः ॥ ३ ॥ ३ ॥ १७४८ ॥ ॥ १५६५ ॥

श्वरिसीति पार्श्वेन वसाहोमं [3] प्रयौति ॥ ४ ॥ ॥ ४ ॥ १७४९ ॥

(भा) प्रयौति–घट्टयति।

---

[1] वसापशुरसः। स एव होमः तत्साधनत्वादभिप्रेतः तं वसाहोमं गृह्णाति। श्रुतिप्रसिद्ध्या तु तथा निर्देशः (रु). [2] दक्षिणेन गृह्णन् सव्येन छिनत्ति (र). [3] लोडयति (र).

(सू) **वातस्य त्वा ध्रज्या इति तेनैवापिदधाति । स्वधितिना वा प्रयौति । स्वधितिना वापिदधातीत्येके ॥ ५ ॥ ५ ॥ १७५० ॥**

(भा) तेनैव स्थगयति अपिदधाति ।

(सू) **अथयन्न शीर्ष्णोऽवद्यति नां[1]सयोर्नाणूकस्य नापरसक्थ्योरनवदानीयानि ॥ ६ ॥ ६ ॥ १७५१ ॥**

[सूत्रे पदयोजनया विवक्षितार्थलाभः]

(भा) यस्मादेतान्यनवदानीयानि शिर आदीनि अत एभ्यो नावद्यति । अंसः—बाहुमूलयोरन्तरालम् । अणूकाः पृष्ठकाण्डः । अपरसक्थिः-पश्चिमपादयोरन्तरालम् । सकलान्येतान्यशृतानि ।

(सू) **[2] तानि शृतैस्संनिधाय संमृशत्यैन्द्रः प्राणो अङ्गे अङ्ग इति ॥ ७ ॥ ७ ॥ १७५२ ॥**

[अभिमर्शार्थसन्निधानस्वरूपादि]

(भा) दैवतसौविष्टकृतैडैस्संनिधाय एकीकृत्य अभिमृशति । उभयानि शृताशृतानि मदन्त्वित्यन्तेन ।

[अभिमर्शनविषयसङ्कोचप्रसङ्गपरिहारः]

(वृ) **दैवत-मृशति**—यद्यप्यनवदानीयानि तानि शृतैः सन्निधायाभिमृशतीत्यनवदानीयानामभिमर्शनं प्रतीयते ; तथाऽपि सन्निधाय संमृशतीति हविस्संस्कारत्वादभिमर्शनस्य संनिधाय हवींषि संमृशति[3] ॥

---

[1] अंसौ-स्कन्धौ । तावन्तरा अस्थिविशेषोऽणूकः । श्रोण्योरुपरिदेशावपरसीक्थनी । एतेभ्योऽङ्गेभ्यो यन्नावद्यत्यनुद्धरणात् तेनैताननवदा-नीयानीत्याख्यायन्ते । यया सुराग्रहा ध्यानवदानीयानि च वाजसद्भय इत्यादौ स्वयं च वक्ष्यति मारुत्या अनवदानीयानीति (रु). [2] अस्त्वेवं किं तैरिदानीम् (रु). [3] शति नाहविः—छ.

(सू) अथ [1]हविषा प्रचरति ॥ ८ ॥ ८ ॥ १७५३ ॥
इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीन्द्राग्निभ्यां छागस्य हविषः प्रेष्येति संप्रैषौ ॥ ९ ॥ ९ ॥
॥ १७५४ ॥

याज्याया [2]अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति घृतं घृतपावनः पिबतेति ॥ १० ॥ १० ॥ १७५५ ॥

[मन्त्राद्यन्तस्वाहाकारफलं प्रमाणम्, एवं निर्णयफलं च]

(भा) अथशब्दोऽर्थकृत्यप्रतिषेधार्थः । आदावन्ते वा स्वाहाकारः प्रदानार्थः । पुरस्तात्स्वाहाकारा वा अन्ये देवा उपरिष्टात्स्वाहाकारा अन्ये इति लिङ्गात् । अतः मध्ये स्वाहाकारो न प्रदानार्थः । अतः स्वाहात्वान्तारिक्षाय स्वाहेति वसाहोमे पुनस्स्वाहाकारः क्रियते ॥

(सू) उद्रेकेण दिशः प्रदिश इति प्रतिदिशं जुहोति मध्ये पञ्चमेन ॥ ११ ॥ ११ ॥ १७५६ ॥

(भा) उद्रेकः-शेषः । तेन योगः प्रतिदिशम् । मध्ये जुहोति पञ्चमेन मन्त्रेण ॥

(सू) प्रां[3]श्चमुत्तमं संस्थाप्य नमो दिग्भ्य इत्युपतिष्ठते ॥
॥ १२ ॥ १२ ॥ १७५७ ॥

[उद्रेकहोमोपस्थानयोः परतो विशेषः]

(भा) उत्तमं होमं प्राञ्चं प्रागपवर्गं संस्थाप्य—समाप्तिमस्य कृत्वा प्राचीनं षष्ठस्य । कृते दिगुपस्थाने याज्याशेषं होताऽऽह ।

(वृ) संस्थाप्य—ष्ठस्य—उपतिष्ठते ।

---

[1] हविश्शब्दोऽङ्गावदानेषु प्रसिद्धः (रु). [2] मन्त्रमध्यगस्स्वाहाकारो न प्रदानार्थः । मध्यमे स्वाहाकार इति लिङ्गात् ; तेनान्ते स्वाहाकारेण जुहोति (रु).
[3] षष्ठं होमं मध्यादारभ्य समाप्य प्राञ्चं समाप्य ता एव दिश उपतिष्ठते (रु).

(सू) वषट्कृते जुहो[1]ति ॥ १३ ॥ १३ ॥ १७५८ ॥
अत्र वा दिशः प्रतिय[2]जेत् । उपरिष्टाद्वा वनस्पतेः स्विष्टकृतो वा ॥ १४ ॥ १४ ॥ १७५९ ॥

[दिग्यागावसरविकल्पाः]

(भा) हुते वा हविषि दिशां यागः । उपरिष्टाद्वा वनस्पतिहोमस्य स्विष्टकृद्धोमस्य वा कृते वैश्वानरे ह[3]विरिति प्रतिप्रस्थातुर्दिशां यागः ।

[कृते वैश्वानर इत्यत्र हेतुः]

(वृ) कृतेवै–रिति—तस्य स्विष्टकृदङ्गत्वात् ।

[दिग्यागो सर्वत्र प्रतिप्रस्थातुः कर्तृत्वोपपत्तिः]

प्रतिप्र–यागः—सर्वत्र । अत्र वा दिशः प्रतियजेदिति पक्षे अध्वर्युकर्तृकत्वे संभवत्यपि प्रतिप्रस्थातुर्वचनात् स एव सर्वत्र दिशां यागं कुर्यात् ।

(सू) प्र[4]त्याक्रम्य जुह्वामुपस्तीर्य सकृत्पृषदाज्यस्योपहत्य द्विरभिघार्य वनस्पतयेऽनुब्रूहि वनस्पतये प्रेष्येति संप्रैषौ । वषट्कृते जुहोति ॥ १५ ॥ १५ ॥
॥ १७६० ॥

[कर्मक्रमेण नारिष्ठहोमावसरः तत्र विशेषः पृषदाज्यग्रहणे विशेषश्च]

(भा) दैवतानि हुत्वा प्रतिनिवृत्त्य नारिष्ठहोमाः । ततो वनस्पतिहोमः । इह न नारिष्ठहोमाः पशुपुरोडाश एवोपदेशेन । द्विः पृषदाज्यग्रहणं पञ्चावत्तिनः ।

---

[1] हीवीरतिंशिषः । साान्नाय्यवद्धुतानुमन्त्रणम् (रु). [2] वसाहोमस्तु याज्याया अर्धर्च एव (रु). [3] हविरिदमिति–ज. [4] प्रत्याक्रम्य हुत्वा नारिष्ठान् पृषदाज्यं गृह्णाति स्थाल्याः ; स्रुग्गतस्यानूयाजार्थत्वात् । द्विस्तु पञ्चावत्तिनः (रु).

(सू) स्विष्टकृद्वद्यजमानोऽनुमन्त्रयते ॥ १६ ॥ १६ ॥ ॥ १७६१ ॥

[पृषदाज्यग्रहणानुमन्त्रणे मन्त्रः]

स्विष्टकृद्वनस्पतेरहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्यनुमन्त्रणम् ।

(सू) उपर्याहवनीये जुह्वामा[1]पभृतानि विपर्यस्यन्नाहाग्नये स्विष्टकृतेऽनुब्रूह्यग्नये स्विष्टकृते प्रेष्येति संप्रैषौ ॥ १७ ॥ १७ ॥ १७६२ ॥

[स्विष्टकृत्सम्प्रैषावसरः]

(भा) तथागत एवाहवनीयस्योपरि जुह्वामौपभृतानि निक्षिपन्नाहाग्नये स्विष्टकृतेऽनुब्रूहीति ॥

(सू) वषट्कृते हुत्वा प्रत्याक्रम्यायतने स्रुचौ सादयति ॥ १८ ॥ १८ ॥ १७६३ ॥

पञ्चविंशी खण्डिका.

---

[स्रुक्सादनकालः तत्र विशेषः उपदेशपक्षश्च]

(भा) प्रत्याक्रम्य वैश्वानरे हविरिति कृत्वा स्रुक्सादनम् । अनाज्यभागपक्षेऽपीहैव स्रुक्सादनं यथा स्यान्न पूर्वमित्यतो विधीयते । उपदेशो यदा न कृतावाज्यभागौ तदा पूर्वमपि स्रुक्सादनमविरुद्धमिति ।

[अत्र स्रुक्सादनविधेराशयः]

(वृ) प्रत्याक्रम्य–विधीयते—आयतने स्रुचौ सादयतीति । यद्यपि वैश्वानरे हविरित्यस्यानन्तरं स्रुचौ सादयतीति स्रुचोस्सादनं प्राप्तम्, तथाऽपि पूर्वमाज्यभागं प्रति स्रुचावात्त इत्याज्यभागप्रभृतिधार्यमाणयोरास्विष्टकृत इत्यवधिनिर्देशादनाज्यभागपक्षे न भवतीति शङ्कायां तस्मिन्

---

[1] दक्षिणतः स्थित एवौपभृतानि जुह्वां गमयन्नाहानुवाक्यासंप्रैषं ततोयाज्या इत्यर्थः (रु).

पक्षेऽप्यत्रैव सादनार्थं पुनर्वचनम् । पूर्वमाज्यभागमिति कालोपदेशपरत्वात् ॥

[उपदेशपक्षाभिमतो हेतुः]

उपदे–द्धमिति—आज्यभागप्रभृति धारणपक्ष एवात्र सादनविधानादिति ।

(सू) अत्रे[1]डाया निरवदानमेके समामनन्ति ॥ १ ॥
॥ १९ ॥ १७६४ ॥

[निरवदानपदार्थः तत्र विशेषः उपदेशपक्षेण निरवदानपदार्थश्च ]

(भा) निरवदानं ग्रहणम् । अत्र वा प्राकृतकाले[2]इडा न पूर्वम् । उपदेशस्तु निश्शेषमवदानं [3]निरवदानम् । निरवदानमित्यत्र इडां गृह्णन्नस्थीन्यपि हविश्शेषार्थं नावशेषयति षड्भ्यो वेत्येतच्च न लभ्यते इति ।

[भाष्यस्थात्रपदार्थः]

(वृ) अत्रवा–इडा—वैश्वानरे हविरित्यस्योपरिष्टात् ।

[भाष्यस्थपूर्वपदार्थः]

न पूर्वम्—प्रधानावदानकाले ।

[उपदेशपक्षे हेतुः]

उपदे–शेषयति—निरवदानश्रवणात् ।

(सू) [4]अवान्तरेडामवद्यति ॥ २ ॥ २० ॥ १७६५ ॥
मेद उपस्तीर्य मेदसाऽभिघारयति ॥ ३ ॥ २१ ॥
॥ १७६६ ॥

[सूत्रोक्तोपस्तरणादेस्सकृत्त्वम् ]

(भा) सकृदुपस्तरणाभिघारणे मेदसोऽवान्तरेडायाः ।

---

[1] अत्र स्रुक्सादनानन्तरं प्राकृत एव काले इति भावः । निरवदानं पृथक्करणम् (रु). [2] काले इडाया--ख. ग. काले–घ. [3] निरवदानं इत्यत्रे–घ. ज. देश-निश्शे–छ. [4] उत्तरविवक्षयानुवादः (रु).

(सू) यं कामयेतापशुस्स्यादित्यमेदस्कं [1] तस्मा इत्युक्तम् ॥ ४ ॥ २२ ॥ १७६७ ॥

[सूत्रस्य प्रतिषेधपरत्वम् ]

(भा) अपशुस्स्यादिति प्रतिषेधः ।

[प्रतिषेधस्य श्रुतिसिद्धता]

(वृ) अप–धः—यं कामयेतापशुस्स्यादित्यमेदस्कं तस्मा इत्युक्तं ब्राह्मणे ।

(सू) उपहूतां मैत्रावरुण[2]षष्ठा भक्षयन्ति ; प्रतिप्रस्थाता सप्तमः ॥ ५ ॥ २३ ॥ १७६८ ॥

[मैत्रावरुणादेरिडाभक्षणप्रापकोपाधिः]

(भा) होत्रध्वर्युविकारत्वान्मैत्रावरुणस्य भक्षणमिडायाः । वपाश्रपणं प्रतिप्रस्थातुः । श्रपणमाग्नीध्रकर्मैकदेशः । तदस्यानेन कृतम् ।

(वृ) श्रपण–कृतम्—तस्यापि भक्षणम् ।

(सू) [3] वनिष्टुमग्नीधे षडवत्तं संपादयति ॥ ६ ॥ २४ ॥ ॥ १७६९ ॥

[आग्नीध्रस्येडाभक्षणे विशेषः]

(भा) द्वितीये कल्पे आग्नीध्रभागवत्कृतं वनिष्टुमैडैस्सह भक्षयत्याग्नीध्रः इडायां तस्यान्तर्भावात् । वैशेषिको वनिष्ठोः अनस्थित्वात् ।

(वृ) द्वितीये कल्पे—वनिष्ठोस्सप्तमादिति पक्षे ।

---

[1] तस्मादादर्तव्यं वेद इति भावः (रु). [2] पशुपुरोडाशादवशिष्टमेव षण्णां भक्षणम् । प्रतिप्रस्थाताऽप्यत्राधिकः तस्यापि पश्वङ्गभूतवपाश्रपणात्मकप्राकृतकार्यान्वयादिति भावः (रु). [3] यदा कृत्स्नो वनिष्ठुरिडायामवत्तः तदा तमिडांशेन सहग्नीधे प्रयच्छति स चेडावद्भक्षयति । यदा वनिष्ठ एकदेशोऽवत्तशिष्टं मार्जनान्ते प्रयच्छति सत्वाग्नीध्रभागवद्भक्षयति (रु).

[वनिष्ठोरिडान्तर्भावोपपत्तिः]

इडा-भावात्—इडावदान[1]शिष्टस्य वनिष्ठोरनस्थित्वादिडांश-वृद्ध्यर्थतया इडायामन्तर्भावाच्चतुर्धाकरणभक्षणाभावादैडैस्सह तन्मन्त्रेण भक्षणम् ।

[वनिष्ठोः षडवत्तत्वयोगः]

वैशेषि-त्वात्—इडायां तस्यान्तर्भावेऽपि वैशेषिको वनिष्ठो-ष्षडवत्तत्वं धर्मः ।

(सू.) [2]अध्यूध्नीं होत्रे प्रहरति ॥ ७ ॥ २५ ॥ १७७० ॥

[अध्यूध्नीभक्षणे इडासाहित्यादि, उपदेशपक्षश्च]

(भा) इडाया नित्योद्धिः । अतस्तमैडैस्सह भक्षयति होता । उपदेशः कृते मार्जने वनिष्ठुर्दीयते । यदा कृत्स्नो न क्षिप्यते इडायामध्युद्धिमनि-क्षिप्ये[3]डायां नित्यं कृते मार्जने दीयते ।

[इडाया नित्योद्धित्वे हेतुः]

(वृ) इडाया नित्योद्धिः—अनस्थित्वादिडावृद्ध्यर्थत्वाच्च ।

तमैडै-होता—कृत्स्नम् ।

उपदेशः-दीयते—अग्नीधे ।

[पक्षान्तरे वनिष्ठ्वादेर्दाने विशेषः]

यदा कृत्स्नो-दीयते—होत्रे इत्युपदेशः । अस्यार्थः—मैत्रा-वरुणषष्ठा भक्षयन्तीति विधाय भक्षणोत्तरकालं वनिष्ठुमग्नीध इति विधानात् मार्जनान्ते वनिष्ठोर्दानमध्युद्धेश्च । अध्युद्धेस्तु वनिष्ठुं सप्तम-मितिवदिडानन्तभावादिडायामनिक्षिप्यैव दानं होत्रे ।

(सू) [4]अग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं च

---

[1] वदाननिष्ठस्य—ख. ग. [2] अध्यूध्नी अपीडायामेवाधिकांशो हेतुर्नियम्यत अनस्थित्वात् (रु). [3] डायामन्ते—क. [4] उपयजो नाम वक्ष्यमाणा होमाः । तदर्था औपयजाः तेषां होतोपयष्टा (रु).

सकृत्सकृत्संमृड्ढीति संप्रेष्यति ॥ ८ ॥ २६ ॥
॥ १७७१ ॥

[1] आग्नीध्रादौपयजानङ्गारानाहरति । होत्रीय [2] उपयजति ॥ ९ ॥ २७ ॥ १७७२ ॥

[औपयजपदार्थः, आहर्ता यष्टा तत्कार्यं च]

(भा) [3] उपयड्भ्योऽर्था औपयजाः । तानाहरत्याग्नीध्रः पूर्वम् । उपयजति गुदकाण्डेन देवानित्युपयष्टा प्रतिप्रस्थाता । स [4] चोपविशत्युत्तरस्यां वेदिश्रोण्यामङ्गारसमीपम् । प्रस्थास्यामोऽनूयाजार्थं गमिष्याम इत्यात्मानमाह । आग्नीध्र ! त्वमुत्तराणि कर्माणि कुर्विति प्रैषार्थः । औपयजानाग्नीध्रादानीय होत्रीये जुहोति सोमे ।

(वृ) पूर्वम्—संप्रैषक्रमेण ।

उपय–मीपम्—वेद्यन्तप्रदेशे शामित्रेणाग्निनिधानम् । तत्समीपं प्रति प्रतिप्रस्थातोपसीदति ।

(सू) [5] शामित्रान्निरूढपशुबन्ध उत्तरस्यां वेदिश्रोण्याम् ॥ १० ॥ २८ ॥ १७७३ ॥

[गुदावदानप्रकारः]

(भा) [6] शामित्रादानीय उत्तरस्यां निरूढे यथान्तरा भवति यथा न भिद्यते तथा छिनत्ति गुदम् ।

---

[1] नन्वेतेऽङ्गाराः कुत्राहर्तव्याः ? कुत्र चोपयष्टोपसीदति ? कश्चासौ ? तत्सर्वं क्रमादाह (वृ). [2] सौमिके पशाविति शेषः । लाघवार्थमिह वचनम् (वृ). [3] उपयड्भ्योऽर्थे औ–क. ज. ञ. (उपयमेभ्योऽर्था)–च. [4] स चोपसीदति–क. [5] शामित्रादाहरति श्रोण्यामुपजीवतीत्यर्थः । आहवनीयादेवोदीचोऽङ्गारान्निर्वर्त्य तेषूपयष्टोपयजेदिति बोधायनः । तेन पशुश्रपणादूर्ध्वं शामित्रानुगतौ उपयजामप्रयोजकत्वेऽप्याहवनीयाङ्गारेषूपयागो युक्तः न तु गुदहोमलोपः (वृ). [6] शामित्रान्निरूढे–ख. ग. शामित्रान्निरूढ उत्तरस्यां–घ. ञ. शामित्रादानीयोत्तरस्यां वेदिश्रोण्यां सादयति यथा–ख. ग. घ. शामित्रादानीयोत्तरस्यां वेदिश्रोण्यां निरूढे यथा–ङ. छ. क.

[अन्तराभवनकर्तृ]

(वृ) यथान्तरा भवति—वेदिः ।

(सू) गुदकाण्डमेकादशधा तिर्यक् छित्वाऽ[1]संभिन्दन्नपर्यावर्तयन्ननूयाजानां वषट्कृते वषट्कृत एकैकं गुदकाण्डं प्रतिप्रस्थाता हस्तेन जुहोति समुद्रं गच्छ स्वाहेत्येतैः प्रतिमन्त्रम् ॥ ११ ॥ २९ ॥ ॥ १७७४ ॥

[असंभेदपर्यावर्तनयोस्स्वरूपम्]

(भा) असंभिन्दन् यथा न भिद्यते । न च पर्यावर्तयति अन्तर्यो देशः तं न बहिः करोति ।

(वृ) असंभिन्दन्—इति हि भेदाभावपरः न संसर्गाभावपरः ।

[भाष्यस्थदेशपदार्थसंबन्धि]

देशः—गुदस्य ।

(सू) सर्वाणि हुत्वाऽद्भ्यस्त्वौषधीभ्य इति बर्हिषि लेपं निमृज्य मनो मे हार्दि यच्छेति जपति । पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेनैकादशानूयाजान् यजति ॥ १२ ॥ ३० ॥ ॥ १७७५ ॥

[मनो म इत्यादि मन्त्रोत्तरावधिः]

(भा) मनो मे हार्दि यच्छेत्यशीयान्तो मन्त्रः ।

(सू) देवेभ्यः प्रेष्येति [2]प्रथमं संप्रेष्यति । प्रेष्य प्रेष्येतीतरान् ॥ १३ ॥ ३१ ॥ १७७६ ॥

---

1 संभेदः सङ्करो दारणं वा । सुष्यभ्यन्तरभागस्य बहिः परिवर्तनं पर्यावर्तनम् (रु). 2 प्रथममनूयाजं प्रति देवेभ्यः प्रेष्येति प्रशास्ततरं संप्रेष्यति । केवलं प्रेष्येतीतराननूयाजान् (रु).

[एकादशानूयाजेषु प्रकृतिभावः तत्तत्संख्यत्वोपपत्तिरित्यादि]

(भा) बर्हिः प्रथमः । नराशंसोऽष्टमः । तयोर्मध्ये आग[1]न्तवःषट् । तयोर्विकाराः । उत्तमविकारो[2] वनस्पतिः स्विष्टकृच्च । ताभ्यां[3] भिद्यन्त इतरे । प्रथमविकारो [4]बर्हिष्वाद्दशमः । देशा अपि यथाधिकारम् । द्वियजावुत्तरावनूयाजौ । नराशंसस्विष्टकृद्विकारेषूभौ चोदयतः । द्वारामहं देवयज्यया प्रजावान् भूयासम् । एवमुत्तरयोर्दशमे च देवयज्यादि । उषासानक्तयोरहं जोष्ट्र्योरहं बर्हिषो वारितीनामहं ऊर्जाहुत्योरहं देवयज्यया पशुमान् भूयासम् । एवमुत्तरेषु देवयज्यादि । दैव्ययोर्होत्रोरहं तिसृणां तिसृणां देवीनामहं नराशंसस्याहं वनस्पतेश्च स्विष्टकृतश्च पूर्ववत् ।

(वृ) बर्हि–ष्टमः—तौ प्राकृतौ ।

[षण्णां विकारत्वे प्रकृतिस्थानव्यवस्था तदुपपादनं च]

तयो–षट्—समप्रविभागेन ।

तयोर्विकाराः—प्रथमविकारास्त्रयः । ऊर्जाहुतिप्रभृतयो नराशंसविकाराः ।

[इतरपदार्थः संभेदमानं च]

उत्तम–इतरे—प्रथमद्वितीयविकाराः, प्राञ्चमुत्तमं संस्थापयन् इतरावनुसंभिद्येति तयोः प्राप्तत्वात् ।

[बर्हिष्ट्वपदार्थः]

प्रथम–शमः—बर्हिर्लिङ्गात् ।

[पूर्वोक्तदेशस्मारणम्]

देशा अपि–रम्—पूर्वार्धे प्रथमसमिधीत्यादि ।

---

[1] न्तवः समप्रविभागेन तयो–च. ज. न्तवस्समप्रविभागेन उत्तमविका–च. छ. ञ. न्तवस्समप्रविभागे नोक्तयेर्विकाराः–छ. [2] कारौ वन–ज. [3] भ्यां संभिद्यन्त–ङ. [4] बर्हिषां दशमः–ख. बर्हिष्मान्–क. ङ. च. छ. ज.

[उत्तरपदार्थः]

द्वियजा-दौ—उत्तमविकारेषु ।

[चोदनाकारः]

नराशंस-यतः—होतारं यजेति ।

[उत्तरपदार्थः, तत्रत्यविशेषाश्च]

द्वारामहं-ज्यादि—समानम् । उषासानक्तयोरहं जोष्ट्र्योरहं बर्हिषो वारितीनामहं ऊर्जाहुत्योरहं पशुमान् भूयासम् । एवमुत्तरेषु देवयज्यादि समानम् ।

देव्यो-पूर्ववत्—आयुष्मान् यज्ञेनेति ।

[अनूयाजयागावसरे यजमानकर्तव्यम् ]

(सू) तान् यजमानः [1]प्राकृतैरनुमन्त्रयते ॥ १४ ॥
॥ ३२ ॥ १७७७ ॥

षड्विंशी खण्डिका.

---

[अनुमन्त्रणमन्त्राणां विशिष्य विनियोगः]

प्रथमेनाद्यांश्चतुरो दशमं च । द्वितीयेन प्राग्वनस्पतेः ॥ १ ॥ ३३ ॥ १७७८ ॥

---

[1] हुतानुमन्त्रणमन्त्रैः (रु). [2] आद्याश्चत्वारो दशमश्च प्रथमविकाराः । ततः परे चत्वारो द्वितीयस्य । नवमैकादशावुत्तमस्य । अतस्तेन तेन मन्त्रेण तांस्ताननुमन्त्रयते । यथा बर्हिषोऽहं देवयज्यया प्रजावान् द्वारामहं देवयज्यया प्रजावान् बर्हिषो वारितीनामित्यादि । तथोर्जाहुत्योरहं देवयज्यया पशुमान् दैव्ययोरहं तिसृणां देवीनामहमित्यादि । तथा वनस्पतेरहं देवयज्ययाऽऽयुष्मानित्यादि । तथा तत्तद्विकाराणां तत्तद्देशत्वमप्यनुसन्धातव्यम् (रु).

[1] उत्तरयोर्विकारेपूभौ होतारं चोदयतोऽध्वर्यु-
मैत्रावरुणश्च यजेति ॥ २ ॥ ३४ ॥ १७७९ ॥

(सू.) [2] अत्र स्वरोरञ्जनमेके समामनन्ति ॥ ३ ॥
॥ ३५ ॥ १७८० ॥

[सूत्रोक्ताञ्जने प्राप्तिव्यवस्था]

(भा) द्वितीयं स्वरोरञ्जनमेकेषां मतेन स्वरुसंस्कारः । पूर्वं तु विद्यत एव पश्वर्थत्वात् ।

[पश्वर्थत्वं स्वरुसंस्कारकतया]

(वृ) द्वितीयं स्वरो-र्थत्वात्—इदं तु केवलं स्वरुसंस्कारार्थम् ।

(सू.) प्रत्याक्रम्य जुह्वां स्वरुमवधाया[3]नूयाजान्ते
जुहोति द्यां ते धूमो गच्छत्वन्तरिक्षमार्चिः पृथिवीं
भस्मना पृणस्व स्वाहेति ॥ ४ ॥ ३६ ॥ १७८१ ॥

[अनूयाजान्तपदार्थः, व्यूहनविषये मतिभेदः, अञ्जनमन्त्रावृत्ति-संभवः अञ्जनकरणं च]

(भा) अनूयाजा यस्मिन् देशे हुताः तस्य प्रदेशस्यान्ते स्वरुं जुहोति द्यां ते धूम इति । वसाहोमहवन्या अपि व्यूहनम् । केचिन्मन्त्र-वत्सादितानामेव व्यूहनम्; अतः पृषदाज्यधान्याः । वसाहोम-हवनी तु न सादितेति न तस्याः । सर्वास्वञ्जनमन्त्रावृत्तिः यदि न शक्यते युगपत् । परिधिसंस्कारत्वाज्जुह्वैवाञ्जनम् ।

---

1 दर्शितमेतत्प्रकृतौ यदुत्तरावनूयाजौ द्वियजाविति । इदानीं तद्विकारा-णमपि संपाद्यत इति वेदितव्यम् (रु). 2 द्वितीयमत्राञ्जनं स्वरोः पक्षे विधीयते । न तु पूर्वस्यैवाञ्जनस्य कालविकल्पमात्रम्; तस्य पशुसंस्कारार्थत्वेन तत्रैव नित्य-त्वात् । तथा च मन्त्रवर्णः;—घृतेनाक्तौ पशुं त्रायेथामिति । व्यक्तं चैतद्वारद्वा-जीयादौ नित्यवदुभयत्राञ्जनवचनात् (रु). 3 अनूयाजान्ते इति वैचित्र्यार्थम् । अनूयाजसमाप्तिदेश इत्येके (रु).

[अनूयाजान्तपदस्य देशार्थत्वे हेतुः]

(वृ) अनूया-धूम इति—अनूयाजान्ते जुहोतीति देशविधानार्थो न क्रमार्थः, क्रमस्य पाठादेव प्राप्तेः ।

[केषांचित्पक्षस्याशयः]

केचित्-हनम्-अस्यार्थः—आसादितानां विमोचनार्थत्वाद्व्यूहनस्य सादनकाले आज्यानि सादयतीति[1] आज्यानामेव सादनवचनात्तासामेव [2] मन्त्रवद्व्यूहनम् ।

[वाक्यशेषपूरणम्]

अतः पृ-न्याः—अपि व्यूहनम् ।

वसाहो-न तस्याः—व्यूहनम् ।

[आवर्तनीयो मन्त्रः]

सर्वास्व-पत्—द्वयोर्द्वयोर्युगपदसंभवे अक्तं रिहाणा इति मन्त्रावृत्तिः ।

परिधि-ञ्जनम्—वसुभ्यस्त्वेत्यादिभिः ।

(सू) [3] समानमाप्रत्याश्रावणात् ॥५॥३७॥१७८२॥

सूक्तवाकप्रैषो [4] विक्रियते ॥ ६ ॥ ३८ ॥ ॥ १७८३ ॥

[5] तं मैत्रावरुणो ब्रूयादग्निमद्य होतारमवृणीतेति ॥७॥ ३९ ॥ १७८४ ॥

ध्रुवावर्जं चतसृभिः परिधीनभिजुहोति ॥ ८ ॥ ॥ ४० ॥ १७८५ ॥

---

1 तीति साज्याना-ख. ग. 2 मन्त्रवत्सादितत्वाद्व्यूहनम्-ख. ग. छ.

3 तत्राह भरद्वाजः-सर्वा जुहूपभृतो वाजवतीभ्यां व्यूहति सर्वासु स्रुक्षु प्रस्तरमनक्तीति (रु). 4 विक्रियते कर्तृतः कर्मतश्च (रु). 5 कथम्? इषिता दैव्या इत्याध्वर्यवप्रैषो निवर्तते (रु).

[ध्रुवावर्जनोपपत्तिः, संस्रावे करणं च]

(भा) पत्नीसंयाजान्तत्वादग्नीषोमीयस्य ध्रौवसमाप्तिर्नारिष्ठहोमे चैकस्मिन् वनस्पतौ च। अतो ध्रुवाया रिक्तत्वात् ध्रुवावर्जमिति प्रतिषेध उपपद्यते। जुहूद्वयेनोपभृद्द्वयेन च संस्रावः।

[निरूढपशौ ध्रुवाया अप्रतिषेधे प्रकृते तत्प्रातिषेधे चोपपत्ति-विवरणम्]

(वृ) ध्रुवाव–द्यते—अस्यार्थः—संस्रावो नाम कृतकार्येष्वाज्य-पात्रेषु अवशिष्टाज्यस्य प्रतिपत्तिः दृष्टार्थत्वाय। तस्यैव परिध्यभिहोम-रूपत्वाद्वसवो वै रुद्रा आदित्या इति देवतासंयोगोऽपि। एवं च निरूढपशौ प्रकृतिवत् प्रायश्चित्तसमिष्टयजुषोर्जौहवाज्यसाध्यत्वादरिक्त-त्वाद्ध्रुवायाः संस्रावान्वयासम्भवाद्ध्रुवावर्जमिति प्रतिषेधोऽनर्थकः। अग्नीषोमीयस्य तु पशोः पत्नीसंयाजान्ततया ध्रौवसमाप्तेः ध्रुवाया रिक्ता-यास्संस्रावे प्राप्तत्वात्तदर्थं ध्रुवावर्जमिति प्रतिषेधः।

[ध्रुवाप्रतिषेधोपपत्त्यन्तरम्]

अथवा प्रकृतौ जुह्वामुपभृतोऽग्रमवधायेति जौहवौपभृतप्रातिपत्तिरूपस्य विवक्षितत्वाद्ध्रुवायाः प्रतिषेधो नित्यानुवादः।

[संस्रावे करणव्यवस्थाहेतुः]

जुहूद्व-स्रावः—वसाहोमहवनीपृषदाज्यधानीस्थस्याज्यस्य जुहू-पभृत्स्थाज्यकार्यकरत्वात्॥

**(सू) [1] दक्षिणेन विहारं जाघनीं हुत्वा तया पत्नीस्सं-याजयन्ति॥ ९॥ ४१॥ १७८६॥**

---

[1] पूर्वस्मिन् गार्हपत्ये पत्नीसंयाजाः। तत्र पाशुक्योरपि स्रुचोः कस्तम्भ्यां सादनं विमोचनार्थत्वात्। भरद्वाजेनाप्युक्तम्। सादनमन्त्रस्य तूहः प्रकृतावेव दर्शितः (रु).

[जाघन्यानयनदेशः, पत्नीसंयाजाङ्गसादनविषयमतिभेदश्च]

(भा) जाघ[1]नीमग्रेणाहवनीयं नीत्वा दक्षिणाग्नेश्च दक्षिणतो गार्हपत्यसमीप[2]मानीयते। अग्नेर्वोपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीस्सुम्ने मा धत्त धुरि धुर्यौ पात। सर्वास्साद्यन्तेऽपोह्यन्ते च। उपदेशोऽभिहोममात्रमेव चतसृभिः नाञ्जनादि।

[जाघन्यानयनदेशनिष्कर्षः]

(वृ) जाघनी–यते—दक्षिणेन विहारमितिवचनात् अविशेषात्सर्वेषां दक्षिणतो नीत्वा शालामुखीयोत्तरदेशं प्रापयेज्जाघनिम्।

[भाष्ये मन्त्रप्रदर्शनं नाम्नाताकारस्य]

अग्नेर्वो–पात—इति मन्त्रविकारः।

[उपदेशपक्षाशयः]

उपदेशो–नादि—चतसृभिः परिधीनभिजुहोतीत्यभिहोममात्र एव चतसृणामुपदेशात्। अक्त रिहाणा इति अञ्जनादिषु[3] न सर्वासामन्वयः।

(सू.) आज्येन सोमत्वष्टाराविष्ट्वा [4]उत्तानायै जाघन्यै देवानां पत्नीभ्योऽवद्यति। नीच्या अग्नये गृहपतये॥ १०॥ ४२॥ १७८७॥

[अपेक्षितो विशेषः उत्तानापदार्थः प्रकृतावदानसंख्यादि च]

(भा) उपस्तरणाभिघारणे च जाघन्या होमद्वयेऽपि। उत्ताना यत्र न लोमानि जायन्ते। जाघन्या एव [5]चत्वार्यवदानानि आज्यप्रत्याम्नानात्। यतो लोमानि ततोऽन्यद्भवति। पुनर्वचनात् नित्यम्। [6]सर्वावदानानि जाघन्या एव।

---

[1] नी अग्रेण–ञ. [2] मानयते–क. ङ. मानयति–च. छ. [3] दिषु सर्वासा?–घ. [4] यत्र न सन्ति लोमानि स उत्तानो भागः। इतरोऽन्यः। सर्वाण्यवदानानि जाघन्या एव भवन्ति आज्यस्थानापन्नत्वात्। तथा जाघनीं प्रकृत्याह भरद्वाजः —चतुःकृत्वश्चतुरवदानस्य पञ्चकृत्वः पञ्चावदानस्य नात्रोपस्तरणाभिघारणानि भवन्तीति (रु). [5] चतुरव–ञ. [6] सर्वाण्यव–ख. ग.

[उपस्तरणभिघारणविषयहोमद्वयम्]

(वृ) उपस्तर–येपि—देवपत्नीनां गृहपतेश्च ।

[उत्तानपदस्य भाष्योक्तार्थकत्वे हेतुः]

उत्ताना–यन्ते—आज्येन चतुरवत्तहोमस्थानापन्नत्वात् ।

[जाघन्यवदानात्परो विशेषः]

जाघन्या–नानि—प्रधानयागवदुपस्तरणाभिघारणे ।

[होमद्वयभिन्नस्थानत्वोपपत्तिः]

यतो–वति—प्रायेण छागस्य लोमरहितभाग[1] उपरि बहिर्भवति । अतो लोमभागोऽधो भवति । अतो नीच्या इत्युच्यते ।

[पुनर्वचनफलविवरणम्]

पुनर्व–त्यम्—दक्षिणेन विहारं जाघनीमित्युक्त्वा उत्तानायै जाघन्या इत्यादिपुनर्वचनादाज्य[2]स्य वा यथा गृहीतेनेति प्रकृतिवद्विकल्पेनाज्यं न भवति ।

(सू) उत्तानायै होत्र इडामवद्यति नीच्या अग्नीधे ॥ ॥ ११ ॥ ४३ ॥ १७८८ ॥

[होत्रग्नीदिडयोः प्रकृते जाघनीसंबन्धित्वम्]

(भा) इडाया[3]मुपदेशेनापि ।

[भाष्यस्थापिशब्दस्वारस्यविवरणम्]

(वृ) इडायामुपदेशेनापि—यद्यप्याज्येडेति नामधेयम्; तथाऽपि उत्तानायै होत्र इडामिति निर्देशाज्जाघन्या एव चत्वारि षट् चावदानानि । इडायामप्युप[4]देशेन जाघन्या एव सर्वाणि ।

(सू) तां पत्न्यै प्रयच्छति तां साऽध्वर्यवेऽन्यस्मै वा ब्राह्मणाय ॥ १२ ॥ ४४ ॥ १७८९ ॥

---

[1] उपरि भवति–ख. [2] स्य न यथा–छ. [3] इडाऽस्मानित्यनुमन्त्रणे घृतशब्दस्यानूहः प्रकृतावेव दर्शितः (र). [4] देशमतेन–ख. ग.

[उक्तेडाया दानपरम्परा ब्राह्मणस्यैव प्राश्या च]

(भा) तामनन्तरं पत्न्यै प्रयच्छत्यध्वर्युः ।

(वृ) तामनन्त–र्युः—तस्यामुपहूतायाम् ।

(सू) [1] बाहुं शमित्रे ॥ १३ ॥ ४५ ॥ १७९० ॥

(भा) बाहुं पादं शमित्रे ॥

(सू) [2] तं स ब्राह्मणाय यद्यब्राह्मणो भवति ॥ १४ ॥ ॥ ४६ ॥ १७९१ ॥

(भा) अब्राह्मणः—क्षत्रियादिः ।

[पिष्टलेपफलीकरणहोमविषयमतिभेदः]

प्रकृतिवत् पिष्टलेपफलीकरणवर्जम्, पशुपुरोडाशे पिष्टलेपफलीकरणहोमाविह केचित्कुर्वन्ति ।

[सूत्रे अब्राह्मणपदं यजमानपरमिति मीमांसकपक्षः]

(वृ) अब्राह्मणः–क्षत्त्रियादिः—तं स ब्राह्मणाय यद्यब्राह्मणो भवतीत्यब्राह्मणयोः क्षत्रियवैश्ययोः यजमानयोरिति मीमांसकाः; अध्वर्योरेव शमितृत्वादब्राह्मणत्वशङ्काया अभावात् ।

[शमितृपरमिति याज्ञिकपक्षः]

याज्ञिकानां त्वन्यस्य शमितृत्वात् क्षत्रियवैश्ययोरेव शमितृत्वसंभवात् तं स ब्राह्मणाय यद्यब्राह्मणः इत्यन्वयात् क्षत्रियवैश्ययोश्शमितृत्वे तं स ब्राह्मणायेत्येतदिति । अब्राह्मण इति नञः न सदृशवृत्तित्वम् ।

प्रकृतिवत्पि–र्जम्—शेषं कर्तव्यम् ।

[केचिदित्युक्तपक्षे हेतुः]

पशुपु–र्वन्ति—पशुतन्त्रोपजीवित्वादिष्टेः [3] तन्त्रक्लृप्तक्रमबाधयैव केचित्कुर्वन्ति ।

---

[1] बाहुर्दोः । स त्वेको हविश्शेषभक्षणदशायामभक्षितस्तिष्ठति (रु). [2] अत एव च लिङ्गादिप्रशिष्टं मांसं ब्राह्मणाय देयं भक्ष्यं चास्येति सिद्धं भवति (रु). [3] तन्त्रे क्लृ–छ.

(सू) यज्ञ यज्ञं गच्छेति [1]समिष्टयजूंषि हुत्वाऽनुपस्पृशन् हृदयशूलमुदङ्परेत्यासंचरेऽप उपनीय शुष्कार्द्रयोः संधावुद्वासयति शुगसीति द्वेष्यं मनसा ध्यायन्॥ ॥१५॥४७॥१७९२॥

[2]सुमित्रा न आप ओषधय इति तस्मिंश्चात्वाले वा सहपत्नीका मार्जयित्वा धाम्नोधाम्नो राजन्नुदुत्तममित्यादित्यमुपस्थायैधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते ॥ ॥१६॥४८॥१७९३॥

सप्तविंशी खण्डिका

---

[समिष्टयजुर्होमादिक्रमः तत्रत्याविशेषाश्च]

(भा) त्रीणि हुत्वा समिष्टयजूंषि यजमानभागप्राशनम् । यदा षड्भ्य इडा तदा यजमानभागः पूर्वार्धात् प्रातर्दोहवच्च भक्षणम् । यदा पुरोडाशविकारस्तदा संयज्ञपतिः । इहापि मध्यमे स्वाहाकारे बर्हिरनुप्रहरेत् । उपोषणस्याविधानात् । अभिस्तरणं च होतृषदनैः । केचिदुपोषणं कुर्वन्ति ।

---

[1] संपत्नीयादि समानमासमिष्टयजुषः । ततस्त्रीणि समिष्टयजूंषि हुत्वा प्राकृत एव स्थाने बर्हिरनुप्रहृत्य ततः प्रातर्दोहवद्यजमानभागप्राशनं यदा षड्भ्य इडा भवति । ततो वेद्यभिस्तरणादि आध्वर्यवशेषं संस्थाप्य पूर्ववदनुपस्पृशन् हृदयशूलं हृत्वा द्विपदां चतुष्टदां च पशूनामसंचरेऽपास्यति । तत्र च शुगसि तमभिशोचेत्येव मन्त्रः, न तु शत्रोर्नामग्रहणं अनदश्शब्दात् मनसा ध्यायन्निति वचनाच्च (रु). [2] व्याख्यातं मार्जनम् । तत्तस्मिन् हृदयशूले कुर्वन्ति । तस्योपरिष्टादप उपस्पृशन्तीत्याश्वलायनः । समिधामेकैकश्येनाधानम् मन्त्रलिङ्गात् । समिदसीत्येतावान् द्वितीयो मन्त्रः । पत्नयास्तूपस्थानमन्त्रे पयस्वत्यग्न आगमं तां मेति विकारः (रु).

[पशौ इष्टिविधसोमविधयोर्विशेषाः]

इह सोमविधे पशौ यूपोपस्थानान्तं सोमतुल्यः सोमविध इति। अभिस्तीर्णायां प्रणीतामार्जनमितीष्टिविधे। उपवे-[1]षोदसनं कपालविमोचनं च येषां नेडान्तः पशुपुरोडाशः। ततो हृदयशूलोद्वासनम्। अयं तु विधिः कृत्वाऽभिस्तरणं [2]उपवेषोद्वासनं हृदयशूलोद्वासनम्। उपदेशो न पशुपुरोडाशश्चेडान्त एवेति। असंचरे पशूनां जनस्य च।

[द्विष्यध्यानमार्जनोपस्थानसमिदाधानेषु विशेषाः, उपदेशपक्षः, अपेक्षितो विशेषश्च]

शुष्कार्द्रयोस्सन्धौ शुगसि तं देवदत्तं पाप्मानं इति ध्यानम्। द्विष्मान्तो मन्त्र उद्वासने मार्जने च। तस्मिन् उद्वासनदेशे चात्वाले वा सह यजमानेन [3] पत्न्या च मार्जनं आदित्योपस्थानं च। [4]एकैकेन समिदाधानम्। एकवचनान्ता मन्त्रा इह। पत्न्याश्च विकारः पयस्वत्यग्न आगमं तां मा संसृज इति। उपदेश आधानोपस्थाने कृत्वा अयाडग्निरित्युपस्थाय ब्रह्मा निष्क्रामति। ततो विष्णुक्रमवर्जं विष्ण्वतिक्रमादि सोमविधे। सर्वं याजमानं अर्वाग्यज्ञशंचमात्। ततो यूपोपस्थानम्।

[यजमानभागप्राशने समिष्टयजुर्होमानन्तर्यलाभः]

(वृ) त्रीणि–प्राशनम्—त्रीणि समिष्टयजूंषीत्येतावता सिद्धेऽपि हुत्वेति पुनर्वचनस्य क्रियान्तरापेक्षत्वादनन्तरं यजमानभागप्राशनम्।

[यजमानभागाभावपक्षः, तत्र हेतुश्च]

यदाप–र्धात्—षडाद्यानिति [5]पक्षे तु यजमानभागो नास्ति। इडावदानसाहित्यात्तिष्वेवाङ्गेषु भवति। तेषां च कृत्स्नावदानं षडाद्यानिति पक्षे। अतो न यजमानभागः।

---

[1] षोद्वासनं–क. ङ. [2] उपवेषोदसनं छ. ञ. [3] न पत्नया मा–ङ.
[4] एकैकस्यैकैकेन–ङ. [5] पक्षे यज–घ.

[भक्षणे प्रातर्दोहतौल्ये तद्विकारत्वं हेतुः]

प्रातर्दो-णम्—दोहविकारे पशौ ।

[तदा संयज्ञपतिरितिवाक्याशयः]

यदा-ज्ञपतिः—हुत्वेति निर्देशस्य प्रयोजनकथनप्रसङ्गाद्यजमानभागप्राशनमुक्तम् । इदानीं त्रीणि यजूंषीत्यत्रैवोच्यते ।

[मध्ये बर्हिरनुप्रहरणेक्तेराशयः]

इहापि-नात्—पत्नीसंयाजान्तोऽग्नीषोमीयस्सन्तिष्ठत इत्यत्र भाष्यकारोऽग्नीषोमीयस्य सर्वसंस्था[1]प्रथनपरे ग्रन्थे 'उपोषणस्याग्नीषोमीयविकारेषु जैमिनिना बन्धनात्' इति वदन् यजमानेन वेद्युपोषणस्याग्नीषोमीयार्थतामपि दर्शयति । ततश्च निरूढस्याग्नीषोमीयाविकारत्वे सत्यपि उपोषणस्यानिर्देशात्समिष्टयजुर्मध्ये बर्हिःप्रहरणम् ।

अभिस्तरणं कुर्वन्ति—सौमिकोपोषणप्राप्तिः । पश्चादभिस्तरणं होतृषदनैः ।

[इष्टिविधे प्रणीतामार्जनातिरिक्तविशेषः]

आभिप्र-डाशः—इडान्तपक्षे यावत्कपालविमोचनं इष्टितन्त्रानुवृत्त्यभावान्न कपालविमोचनम् ।

[अयं त्वित्याद्युक्तस्य स्वपक्षीयता]

अयं तु विधिः-सनम्—स्वपक्षे ।

[सन्धावित्युक्तसंधिपदार्थः]

असंचरे-सन्धौ—अपां निनयनदेशस्य शुष्कदेशस्य च सन्धावुद्वासयति ।

[ध्यानमार्जनमन्त्रगतो विशेषः]

द्विष्मान्तो-ने च—शुगसीति मन्त्रस्य सुमित्रा न इत्यस्य च वयं द्विष्म इत्येवान्तः ।

---

[1] प्रदर्शन-घ.

[मार्जनकर्तृलाभस्सूत्रतः, मार्जने विशेषश्च]

तस्मिन्नु-र्जनम्—पत्नीशब्दस्य पशुसम्बन्ध्यनृत्विक्कर्तृप्रदर्शनार्थत्वात् । सर्वे सह युगपज्जलमुपनीय मार्जयन्ते सहैवेति वचनात् ।

[पत्नीकर्तृकोपस्थानमन्त्रे विशेषहेतुः]

पत्न्याश्च विकारः—पयस्सम्बन्धाभावात् । पयस्वानिति तु स्तुतिमात्रम् ।

(सू) [1] इष्टिविधो वा अन्यः पशुबन्धः सोमविधोऽन्यः । स यत्रैतदपः प्रणयति पूर्णपात्रं निनयति विष्णुक्रमान् क्रामति स इष्टिविधोऽतोऽन्यः सोमविध इति वाजसनेयकम् ॥ १ ॥ ४९ ॥ १७९४ ॥

यूपं यजमान [2] उपतिष्ठते नमस्स्वरुभ्यस्सन्नान्मावगातात्पश्चाद्दघ्वान्नं भूयासम् । शृङ्गाणीवेच्छृङ्गिणां सं ददृश्रिरे चपालवन्तस्स्वरवः पृथिव्याम् । ते देवासस्स्वरवस्तस्थिवांसो नमस्साखिभ्यस्सन्नान्मावगात आशासानस्सुवीर्यमिति च ॥ २ ॥ ५० ॥ १७९५ ॥

---

[1] अथ प्रणीतामार्जनविष्णुक्रमेषु याजमानक्रमप्राप्तेषु तेषां प्रवृत्तिविकल्पं शाखान्तरोक्तं दर्शयति । इष्टेरिव विधाऽस्य । के पूनस्ते विधे? सोऽयं कर्ता यत्रैतद्यथाप्रसिद्धं पश्वर्थमपः प्रणयति ताश्चान्तेऽन्तर्वेदि निनयति विष्णुक्रमांश्च क्रामति स इष्टिविधः । यत्रैतत्तथं न करोति स सोमाविधः । एतदुक्तं भवति—त्रयमेव तत् पशौ कर्तव्यं वा न वेति । तत्र यदा दृष्टार्थाः प्रणीताः तदाऽर्थलुप्तत्वादासां दृष्टार्थपक्षे प्रणयनमुच्यते । यदा त्वदृष्टार्था तदा नित्यप्राप्तौ पक्षे निवर्त्यन्ते । विष्णुक्रमाणां तु नित्यप्राप्तानामेव पक्षे निवृत्तिर्वचनादिति द्रष्टव्यम् (रु). [2] यत्प्राग्यज्ञशंचम इति जपात् तत्कृत्वोपतिष्ठते। तथाचोत्तरसूत्रेऽपि वक्ष्यति (रु).

[1]उपस्थाय यज्ञ शं च म इति जपति ॥ ३ ॥
॥५१॥ १७९६ ॥

[इष्टिविधसोमविधपशुबन्धयोरवान्तरविशेषाः, तत्तत्समाख्याप्रवृत्तिनिमित्ते, मानान्तरसंवादश्च]

(भा) नमस्स्वरुभ्य आशासान इति ततो यज्ञ शं च म इति जपः। वृष्ट्यादि[2] ब्राह्मणभोजनान्तम्। इष्टिविधे तु विष्णुक्रमा अपि। उपदेशो [3]निष्क्रान्ते ब्रह्मणि यदीष्टिविधः ततो [4]विष्णुक्रमाः ततो यूपोपस्थानम्। अथ सोम[5]विधः यूपोपस्थानमेव। ततो यज्ञ शं च म[6] इत्युपस्थाय वायवेष त इत्युप[7]स्थानं ब्राह्मणभोजनान्तम्[8]। इष्टेरिव विधानं यस्य स इष्टिविधः। अन्य एक इत्यर्थः। सोमस्येव विधानं यस्य स सोमविधः। तत्र श्रुतिरेव व्याचष्टे। स पशुबन्धः। यत्रापां प्रणयनं पशुपुरोडाशे तस्यैव च पूर्णपात्रनिनयनम्। [9]वेद्यां स्तरणे कृते अपो अन्वचारिषामिति कृते आहवनीयोपस्थाने विष्णुक्रमाः। एष इष्टिविधः। यत्रैतानि न सन्ति स सोमविधः। तत्रान्या वा यजुषोत्पूयेति पशुपुरोडाशे संयवनं च। तच्च बद्धं भरद्वाजेन—न प्रणीताप्रणयनं यजुरुत्पूताभिरद्भिः पुरोडाशं श्रपयतीति। उपदेशः पशावेव पवित्रे कृत्वा प्रणीताप्रणयनमदृष्टार्थम्। तस्य वेद्यभिस्तरणे कृते निनयनम्। सोमविधे विध्यन्त एव प्रणीताः पशुपुरोडाशे इति केषांचिदनुक्रान्तः सोऽन्यः पशुबन्धः। सोमविधे वेद्युपोषणादिधूमोपस्थानान्तं[10] कथं [11]क्रियेतेति क्रमार्थं यावन्तं क्रियत इति वर्ण्यते। यूपोपस्थानं विसर्गार्थम्। यत्र बह्वर्थो यूपः [12]तत्रान्त एव क्रियते।

---

[1] यूपमुपस्थाय जपति। सोमेन पशुना वेष्ट्वा जपतीत्यनेनैव सिद्धत्वात् क्रमार्थमिदं वचनम् (रु). [2] दि समित् भोज–छ. [3] निष्क्रान्ते यदीष्टि–घ. [4] विष्णव-तिक्रमः–छ. [5] विधे यू–घ, [6] मे वायवेष–घ. [7] स्थाय वृष्ट्यादिब्रा–घ. [8] न्तं इत्युपदेशः। घ. [9] वेद्याभिस्तर–घ. [10] न्तं क्रियते इति वर्ण्यते–घ. [11] क्रियत इति वर्ण्यन्त–छ. [12] त्रान्त्य–घ.

अनूबन्ध्यायां यदाऽनूबन्ध्या न क्रियते सवनीयेन पशुना वेष्टेति सिद्धे पुनर्वचनं यूपोपस्थाने कृते कथं क्रियते ? क्रमार्थं यज्ञशंचम इति पाठः ।

(वृ) **यज्ञशं-जपः**—यज्ञशंचम इति जपतीति यूपोपस्थानक्रमार्थो निर्देशः ।

**वृष्ट्यादि-न्तम्**—ब्राह्मणतर्पणान्तम् ।

**एष इष्टिविधः**—प्रथमस्सशब्दो यजमानपरः ।

**सोऽन्यः पशुबन्धः**—तृतीयः ।

[यूपाभिमन्त्रणमन्त्रव्याख्या यूपाभिमन्त्रणप्रयोजनम्, तत्र मतिभेदः अभिमन्त्रणप्रभेदाश्च]

(सू) **[1] आहुत्यै वा एतं वनस्पतिभ्यः प्रच्यावयन्त्युपयज्य मनुष्याः प्रयान्ति । यूपो वै यज्ञस्य दुरिष्टमामुञ्चते । यद्यूपमुपस्पृशेद्दुरिष्टं यज्ञस्यामुञ्चेत्तमभिमन्त्रयेत [2] वायवेष ते वायविवित्येकम् । वायवेतौ ते वायविविति द्वौ । वायवेते ते वायविविति बहून् ॥ ॥ ४ ॥ ५१ ॥ १७९७ ॥**

(भा) आहुत्यै-आहुत्यर्थम् । एतं यूपं वनस्पतिभ्यः [3]प्रच्यावयन्ति [4]लोके यजमानाः वनस्पतीज्याभिरस्याराधनं करिष्याम इति [5]उपयज्य

---

[1] आहुत्यै—आहुत्यर्थम् । वनस्पतीज्ययाऽस्योपकर्तुमेनं यूपं वनस्पतिसकाशाद्यज्ञार्थं निर्वहन्ति मनुष्याः, तेनोपयज्य पश्विज्यां कृत्वा गृहान् प्रयान्ति च । अत एव लिङ्गादवगतं उदवसाय पशुना यष्टव्यामिति । आत्मन्यारोपयति (रु). [2] वायवेष त इति । तत्र यूपैकादशिन्यादौ द्विबहूनां युगपत्काले स्पर्शने द्वितीयतृतीयाभ्यामभिमन्त्रणं न त्वाद्यस्यावृत्तिः तयोराम्नानसामर्थ्यात् । एष सर्वार्थो विधिर्न केवलं यजमानस्य । कस्मात् ? संस्थिते कर्मणि सर्वेषामेव यूपस्पृष्टौ दोषस्मरणात् । हिरण्यकेशिना सर्वाधिकारेण गृह्यकाण्डे तद्वचनाच्च (रु). [3] प्राच्याव—क. [4] लोके वनस्पतीज्याराधनं—क. लोके वनस्पतीत्याराधनं—अ. [5] उपभुज्यमानं कृत्वा—अ.

इज्यां कृत्वा मनुष्या [1]गृहान् पुनः [2]प्रयान्ति । अस्माल्लिङ्गादुदवसाय पशुः कर्तव्यः । [3]अन्ये त्वाहुः—इज्यां [4]कृत्वा शरीरपातोत्तरकालं सर्वान् लोकाननुप्रयान्तीति । न तेषामुदवसाय पशुः । यूपो वै यज्ञस्य दुरिष्टमामुञ्चते—लङ्गयति आराधितत्वादाहुतिभिः । अतस्तस्याभि[5]मर्शने कृते यज्ञसमाप्त्युत्तरकालं सर्वस्य वायवेष त इति यूपाभिमन्त्रणं प्रायश्चित्तम् । एतदेव गृह्ये हिरण्य[6]केशिनोक्तम् । उपदेशः समाप्त्युत्तरकालमभिमर्शनं प्रतिषिद्धम् । तत्र प्राणायामादिनियमातिक्रमप्रायश्चित्तं कर्तव्यम् । इह तु नित्यमभिमन्त्रणमिति । [7]वायवेष ते ते वायवित्येकस्याभिमन्त्रणम् । अस्पृष्टस्य[8] वाय[9]वेतौ ते [10]वायाविति द्वयोः । वायवेते ते वायव इति बहूनां स्पृष्टानामभिमन्त्रणम् । [11]बहुत्वाभिधायिनो मन्त्रार्थः पाठः ।

(वृ) लङ्गयति—गृह्णाति । दुरिष्टं दुष्कृतम् ।

आराधितत्वादाहुतिभिः—तत्कृतदोषमपि लङ्गयति ।

[यूपस्पर्शप्रायश्चित्तस्य साधारण्यम् , अन्यसमुच्चयश्च]

अतस्तस्य-श्चित्तम्—यज्ञसमाप्त्युत्तरकालं यूपोपस्पर्शने कृते । सर्वस्य-सर्वपुरुषाणां पशुसम्बन्धिनामन्येषां च वायवेष त इति प्रायश्चित्तम् । पुरुषापराधत्वान्नियमातिक्रमे चान्यस्मिन्निति प्राणायामादि समुच्चीयते ।

एतदेव-नोक्तम्—प्रायश्चित्तम् ।

[उपदेशपक्षाशयः]

उपदेशः समा-भिमन्त्रणम्—उपदेशस्सर्वप्रायश्चित्तं स्पर्शने तमभिमन्त्रयत इत्यादिविधिर्नित्यः—क्रत्वर्थः । तमिति प्रकृतयूप-

---

1 ह्रात्पुनः–ञ. 2 प्रयाति–ञ. 3 अन्ये त्वित्थमाहुः–घ. च. अन्येऽन्यथार्थमाहुः–ज. 4 कृत्वा पशुपातो–ञ. कृत्वा मनुष्याः शरीर–ज. 5 मर्शने यज्ञ–ज. 6 केशिनामुक्तं–क. ञ. वाजसनेयिनामुक्तम्–ज. 7 वायवेतौ ते–क 8 स्पृष्टस्य–ज. ञ. 9 वेते ते–क. 10 वायो इति–ज. 11 द्विबहुत्वा–च.ज.ञ.

परामर्शात्। अत उपस्थानोत्तरकालं क्रत्वर्थतया यूपाभिमन्त्रणं वायवेष त इत्यादिना ।

वायवेष–न्त्रणम्—स्पृष्टस्य ।

[द्व्यादियूपस्पर्शस्थले विशेषः]

द्वयोः—स्पृष्टयोः प्रायश्चित्तार्थम् । ऊहपक्षे मन्त्रत्वाभावाद्यजुर्भैषप्रायश्चित्तं न भवति ।

(सू) [1]ऐन्द्राग्नो निरूढपशुबन्धः सौर्यः प्राजापत्यो वा ॥ ५ ॥ ५२ ॥ १७९८ ॥

[निरूढपशुबन्धदेवताविकल्पयोर्विशेषः]

(भा) यदा सौ[2]र्यः तदा सूर्याय त्वा जुष्टमुपाकरोमीति [3]नियोजनाद्यप्येवं पूर्ववत् । प्रजापतये त्वा जुष्टमुपाकरोमीति प्राजापत्ये ।

(वृ) यदाऽसौ–द्यप्येवम्—नियोजनादिष्वप्येवं चतुर्थम् ॥

अतः ;—

[उक्तपक्षयोः पक्षभेदेन प्रकृतिभेदः]

प्रजाप–पत्ये—एतयोः पुरोडाशविकारत्वे आग्नेयविकारत्वम् । सान्नाय्यविकारत्वे ऐन्द्राग्नविकारत्वम् ।

(सू) [4]तेन संवत्सरे संवत्सरे यजेत षट्सु षट्सु मासेष्वित्येके ॥ ६ ॥ ५३ ॥ १७९९ ॥

[निरूढपशुबन्धस्य कालः]

(भा) तेन यागस्संवत्सरे [5]संवत्सरे पुनः पुनः क्रिया । आदावेव संकल्पः ऋत्वादावेव करोमीति । तदा [6]षट्कृत्वस्संवत्सरे ।

[1] एतास्तिस्रो देवता नित्ये पशौ विकल्पन्ते (रु). [2] र्यः निरूढपशुः । तदा–ख. ग. [3] नियोगाद्येवं–क. [4] तेन प्रतिसंवत्सरं सकृद्यजेत । षट्सु षट्सु वा मासेषु (रु). [5] संवत्सरे इत्यन्तमेवात्र भाष्यम्–ख. ग. संवत्सरे संवत्सरे पूर्णे पुनः–ञ. [6] षट्कृत्व एवं सं–ख. ग.

[तत्र प्रथमादिपशुबन्धारम्भकालः]

(वृ) **संवत्सरे**—पूर्णे पुनः पुनः क्रियते । आधानदिवसादारभ्य संवत्सरपूरणदिवसानन्तरदिवसे प्रथमः पशुः । द्वितीयादिपशुः पूर्वपशुकरणदिवसात्संवत्सरे पूर्णे कर्तव्य इत्येकः ।

[सङ्कल्पावसरविशेषाः]

**आदावेव संकल्पः**—संवत्सरे ऋतुव्यावृत्तावित्यत्र । एतच्च प्रदर्शनम् । सर्वपक्षेष्वादावेव संकल्पः । वैकल्पिकेषु बहुषु कार्येष्वन्यतरः कल्पः संकल्प्य प्रयोक्तव्यः 'प्रक्रमे तु नियम्यते' इति वैमृधोक्तन्यायप्रदर्शनार्थ[1]त्वात् । तदा षट्कृत्वस्संवत्सर इत्यृतुपक्षे ; षड्तव इति ॥

(सू) **[2]ऋतुव्यावृत्तौ सूयवसे आवृत्तिमुख आवृत्तिमुखे वा ॥ ७ ॥ ५४ ॥ १८०० ॥**

[पशुबन्धकालविकल्पाः]

(भा) [3]एवं संवत्सरे संवत्सरे । सूयवसे प्रावृषि प्रावृषि । आवृत्तिमुखे अयनादावयनादौ षट्सुषट्सु मासेषु ।

(वृ) **एवं संवत्सरे**—संवत्सरे संवत्सरे करिष्यामीत्यादावेव सङ्कल्पः ।

[पशुबन्धसंवत्सरान्तर्गतकालविधिपक्षभेदः]

**सूय–षि**—संवत्सर एव । एवं सूयवसे प्रावृषीति पक्षान्तरम् ।

---

[1] नार्थम् । [2] ऋतुव्यावृत्तिः ऋत्वन्तः । नवसलिलसम्बद्धाः शोभना यवसाः शष्पाणि यस्मिन् काले स सूयवसः प्रावृडिति यावत् । आवृत्तिमुखमित्ययनाख्या । तदयमर्थः—यदा सकृत्संवत्सरेज्या तदा यस्य कस्य चिदृतोर्व्यावृत्तौ सूयवसे यजेत, यदा तु षट्सु मासेषु तदाऽऽवृत्तिमुखयोरिति । कात्यायनेनाप्युक्तम् । केचित्पुनः ऋतुव्यावृत्तावित्यनेन षट्स्वप्यृतुव्यावृत्तिषु षट्कृत्वः संवत्सरस्य यागमुक्तं मन्यन्ते, तदयुक्तं मन्यन्ते । आवृत्तिमुखवदनभ्यासादेकवचनाच्च । एवं सकृद्द्विर्वा संवत्सरस्य पश्विज्या कार्येत्युक्तम् (रु). [3] तत्तत्संवत्सरे कृत्वा सूयवसे प्रावृषि–अ.

इतरथा [1]एवं सूयवस इति संवत्सरेणोपसंहारे संवत्सरे संवत्सरे इति वीप्सासिद्धेः पुन[2]र्वीप्सानिर्देशः। प्रावृषि प्रावृषीति सूयवसे प्रावृषीति सूयवसशब्दव्याख्यानार्थत्वाच्च। एवं संवत्सरे सूयवसे प्रावृषीत्येक-वाक्यत्वासम्भवः; तथा सति एवमिति प्रकारोपदेशासम्भवात्। किं च संवत्सरसू[3]यवसशब्दयोरेकवाक्यत्वे संवत्सरे पूर्णे इति व्याख्या नोपपद्यते। तेन संवत्सरपूरणे षण्मासपूरणे सूयवसपर्वण्ययनादावृत्वादा[4]विति पञ्च काल[5]विषय इति केचित्। संवत्सरे सूयवस इत्येकं [6]वाक्यम्। आवृत्ति मुखेऽयनादौ षट्सु षट्सु मासेष्विति चैकं वाक्यमिति कालत्रय[7]विधिमेक-आहुः। तच्चिन्त्यम्॥

[आहिताग्नेः पशुबन्धानुष्ठानावश्यकत्वम्]

(सू) मांसीयन्ति ह वा अग्नयोऽजुह्वतो यजमानस्य। ते यजमानमेव ध्यायन्ति। यजमानं संकल्पयन्ति। पचन्ति ह वा अन्येष्वग्निषु वृथा मांसम्। अथै-तेषां नान्या मांसाशा विद्यते। यस्यो चैते भवन्ति तं ततो नानीजानं पशुना संवत्सरोऽतीयात्। आयुष्यो ह वा अस्यैष आत्मनिष्क्रयण इति वाज-सनेयकं भवति ॥८॥५५॥१८०१॥

(भा) निपाता ब्राह्मणेष्वनर्थकाः।[8] मांसमिच्छन्ति-मांसीयन्ति।[9]अस्य

---

1 एवं संवत्सरे सूयवस इति–ख. ग. एवं ऋत्वादावृत्वादौ संवत्सरस्य। सूयवसे सूयवसे प्रावृषि प्रावृषि संवत्सरे संवत्सरे। एवमावृत्तिमुखे अयनादावयनादौ षट्सुषट्सु मासेषु–च. ज. 2 वीप्साशब्दोऽनर्थकः प्रावृ–छ. 3 यवसयोरेक–छ. 4 वित्येवं पञ्च–ख. ग. 5 विषयः। यवस इत्येतावता संवत्सरकालसिद्धेः संवत्सरे संवत्सर इति विध्यन्तरमनर्थकम्। केचित्. 6 वाक्यम्। अयनादौ–ख. ग. 7 विधिरेवेत्याहुः–ख. ग. 8 निपाता ब्राह्मणेष्वनर्थकाः मांसीयन्ति हवा पचन्ति हवा इत्यादयो निपाताः। मांसमात्मन इच्छान्ति–ख. ग. 9 यस्य–ख. ग.

यजमानस्य [1] अजुह्वतोऽग्नयस्ते यजमानमेव ध्यायन्ति [2]दास्यत्यस्माकं मांसमिति। [3] यदा तु न यजते पशुना तदा संकल्पयन्त्येनं मारयितुम्। किं कारणम्? वृथामांसं लौ[4]किकं तत् पच्यते[5] अन्येष्वाग्निषु लौकिकेषु[6]। एतेषु[7] न पचन्ति न चान्यत् अचोदितं कुर्वन्ति कर्मनिय [8]मात्। यदन्वाहार्यपचनेऽन्वाहार्यं पचन्तीति श्रुतेः। [9]अत एषामन्या मांसाशा न विद्यते। पशुमेव कामयन्ते, [10] तस्याक्रियायां च [11] यजमानस्य [12]मांसं तस्यैते[13] भवन्त्यग्नयः। [14] ततोऽग्न्युत्पत्तेरुत्तरकालमनीजानमनिष्टवन्तं पशुना संवत्सरो नातिक्रमेदिति पुनरध्याहारः। अतस्संवत्सरे[15] यत्र तत्र कर्तव्यमिति विध्यन्तरम्। कालातिक्रमे दर्शपूर्णमासविकाराणां पथिकृद्वैश्वानरौ प्रकृतिवत्। आयुषे हितं आयुष्यम्।

अस्य यजमानस्यैष आत्मनिष्क्रयणः पशुः आत्मनो[16] निष्क्रयणं [17] करोति। [18] अत उच्यते कथं नित्यं क्रियत इति वाजसनेयिब्राह्मणवचनं सर्वान् [19]लोकानभिजयतीति। कामस्योक्तत्वात् अकामनेऽपि नित्यत्वे न दोषः अकामहत[20]श्रुतेः।

इति श्रीमदापस्तम्बश्रौतसूत्रभाष्ये धूर्तस्वामिविरचिते
सप्तमे प्रश्ने अष्टमः पटलः.
समाप्तस्सप्तमः प्रश्नः.

———

1 स्याग्नयोऽजुह्वतः पशुना ते–ख. ग. घ. स्याग्नयोऽजुह्वतो वा ते यज–ज. 2 दास्यन्त्यस्मा–ख. ग. 3 यदा न–ञ. 4 किकः स तत्प–क. 5 ते तत्पच्यन्तेऽन्येष्वग्निषु–ज. 6 षु न पचन्ति–ञ. 7 षु तु न–ख. ग. घ. 8 मात्कर्मणो यदन्वा–ख. ग. घ. 9 अत एतेषामग्नीनामन्यमांसा–ज. 10 तस्यां क्रियायाम्–क. ङ. 11 यजमानमांसस्यैते–ङ. 12 संकामयन्ते। अतः–ख. ग. 13 यस्यैते–क. 14 तं ततो–ख. ग. 15 यत्र यत्र–ज. 16 निष्क्रय एव करोति–ञ. 17 करोति उच्यते–ञ. 18अथ उच्यते–क. 19 लोकानिति–ञ. 20 श्रुतेरिति–ज.

(वृ) **यदन्वा–ति श्रुतेः**— दक्षिणाग्नेः पाकसाधनत्वेऽपि अन्वाहार्यपाकनियमात् न मांसपाक इति ।

**एषाम्**—गार्हपत्यादीनाम् । तत इति अग्न्युत्पत्तेरनन्तरमित्यध्याहारः । ततस्संवत्सरो नातीयादिति यावत्संवत्सरपूरणं प्रथमस्य पशोः कालः । अस्मिन् पक्षे द्वितीयादिष्वनियम इति केचित् ।

**अतः–न्तरम्**—प्रथमस्य पशोः ।

**कालाति–तिवत्**—विकृतीनामपि नित्यवत्कर्तव्यानां चोदितकालातिक्रमे प्रकृतिवत्प्रायश्चित्तं भवति ।

**कथं नित्यं–वचनम्**—आत्मनिष्क्रयणार्थत्वा(त्सोमादिवदिदन्नि)त्यत्वसिद्ध्यर्थं वाजसनेयिब्राह्मणवचनम् । आत्मनिष्क्रयणश्रुतिपाठोऽस्मच्छाखायाम् ; स एतांश्चतुर्होतॄनात्मस्परणानपश्यदित्यत्र पशुबन्धस्य नित्यत्वश्रवणात् । तेन संवत्सरे संवत्सरे यजेतेत्यभ्यासविधानाच्च सर्वान् लोकानिति नित्यानुष्ठानस्यैव कामसाधनत्वं कामनायां सत्यामित्येकः पक्षः । वाजसनेयिब्राह्मणवचनं सर्वान् लोकानभिजयतीति ।

**कामस्यो–दोषः**—वाजसनेयिशाखान्तरादिति केवलनित्यपक्षः । मुमुक्षोरपि नित्यकर्मणां कर्तव्यत्वात् श्रोत्रियस्य चाकामहतस्येति कामात्मताया निषिद्धत्वात् । कामनाविरहेण नित्यतया निरूढपशुः कर्तव्य [1] इति समर्थमुपपादितम् ॥

इति श्रीरामाग्निचित्कृतायां धूर्तस्वामिभाष्यवृत्तौ
सप्तमे प्रश्ने अष्टमः पटलः.
समाप्तः सप्तमः प्रश्नः.

---

[1] इत्येवमर्थमुपपादितम्–ग.

## अथ पशुबन्धहौत्रं मैत्रावरुणीयं च ।

[उत्तरवेद्यग्निप्रणयने होत्रा पठनीया मन्त्राः]

अग्नये प्रणीयमानायानुब्रूहीत्युक्ते 'प्रदेवं देव्या' इति सप्रणवमुपांशु त्रिः परिदधाति । 'अयमुष्य' इत्युच्चैः । प्राणसं[1]तानमग्निमनुगच्छति । पश्चात्पाशुबन्धिकाया वेदेस्तिष्ठति । निहितेऽग्नौ 'कुलायिनं' इति प्रतिपद्यते । 'त्वं दूतः' इति परिधानीयां त्रिः ।

[यूपाञ्जनोच्छ्रयणपरिव्ययनेषु मन्त्राः]

यूपायाज्यमानायानुब्रूहीत्युक्ते 'अञ्जन्ति त्वां' इति त्रिः । तृतीयाया अर्धर्चे विरम्य; उच्छ्रीयमाणायानुब्रूहीत्युक्ते 'यदूर्ध्वः' इति प्रतिपद्यते । सर्वत्रार्धर्चे विरमणम् । 'स मर्य आ विदथे वर्धमानः' इति विरम्य; परिवीयमाणायानुब्रूहीत्युक्ते 'पुनन्ति धीराः' इति प्रतिपद्यते । 'युवा सुवासाः' इति परिधानीयां त्रिः । उपविष्टेनाञ्जनानि ।

[अग्नेर्मन्थनकाले तदुत्पत्त्यनन्तरं च होत्रा पठनीया मन्त्राः]

मथ्यमानायानुब्रूहीत्युक्ते 'अभि त्वा' इति त्रिः । 'समीधे दस्युहन्तमं' इति विरम्य; जातायानुब्रूहीत्युक्ते 'धनञ्जयम्' इति प्रतिपद्यते 'न बिभ्रति' इति विरम्य; प्रह्रियमाणायानुब्रूहीत्युक्ते 'विशामग्निं' इति प्रतिपद्यते । 'यज्ञेन यज्ञम्' इति परिधानीयां त्रिः । मन्थनाद्युत्थितः अपरेणारणी प्रकृतिवत् कृते ? समिध्यमानवतीं समिद्धवतीं [2]चान्तरेण पृथुपाजवत्यौ धाय्ये । 'त्वं वरुण' इति परिधानीयां सर्वेषाम्, पुनः पशौ विधानात् ।

[प्रयाजविषयो मैत्रावरुणकर्तृकहोतृकर्मकप्रैषः, प्रशास्त्रा दण्डप्रतिग्रहश्च]

समिद्भ्यः प्रेष्येति चोक्ते 'होता यक्षदग्निं समिधा सुषमिधा समिद्धं' इति प्रयाजप्रैषो मैत्रावरुणस्य । पूर्वमेव तु वरणे कृते होता

---

[1] तानमनुगच्छति—क. [2] चोत्तरेण—सायणार्यपाठः.

मैत्रावरु[1]णश्च । प्रशास्तारं तीर्थेन प्रपाद्य दण्डमस्मै प्रयच्छति होता 'मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामि' इति । 'मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रतिगृह्णाम्य[2]वक्रो विथुरो भूयासम्' इति प्रतिगृह्णाति प्रशास्ता । यथाऽन्तरा दण्डो भवति तथा परिहरति । वेद्यां दण्डमवष्टभ्य दक्षिणतो होतुः प्रह्वस्तिष्ठन् प्रैषानन्वाह प्रशास्ता ।

[प्रयाजयाज्या आप्रीसंज्ञका मन्त्राः]

एकादश प्रयाजप्रैषाः । नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानां तनूनपादन्येषाम् । प्रयाजयाज्या आप्रियो होतुः । 'समिद्धो अद्य' [3]इत्येतत्सर्वगोत्राणाम् । अस्माकमैन्द्राग्न आम्नानात् । [4]बह्वृचानां तु जमदग्नीनामेवैताः ।

[मैत्रावरुणपठनीयाः पर्यग्निकरणार्था मन्त्राः]

पर्यग्नये क्रियमाणायानुब्रूहीत्युक्ते मैत्रावरुणः 'अग्निर्होता नो अध्वरे' इत्याद्युत्तमां च त्रिराह । ऋक्षु त्रिर्वचनमाद्यन्तयोः, न प्रैषेषु । ऋक्ष्वेव च प्रणवो याज्यावर्जम् ।

[अध्रिगुप्रैषवादिनो होतुर्मैत्रावरुणकर्तृकप्रैषे होतुरध्रिगुप्रैषे च मन्त्राः, अध्रिगुप्रैषमन्त्राणां विवरणं च]

उपप्रैष्येत्युक्ते 'अजैदग्निः' इत्यध्रिगुप्रैषं मैत्रावरुणः । 'दैव्याश्शमितारः' इत्याध्रिगुं होता यथा[5]प्रेषितं कुर्वन्ति । अग्निर्वायुश्च दैव्यौ शमितारौ—शमनस्य पशुमारणस्य कर्तारौ 'उभौ देवानां शमितारौ' इति । तयोः पूजार्थं बहुवचनं शमितार इति । उतशब्दोऽप्यर्थे, अपि मनुष्याः शमितारः, एकत्वाच्छमितुः ऋत्विग्भिस्सह बहुवचनम् । आरभध्वम्—आलभध्वं, इमं पशुं दैव्याश्च मनुष्याश्च

---

[1] णं च–छ. [2] म्यवक्रो–छ. [3] इत्येव सर्व–क. [4] ब्रह्मजानां तु जमदग्निव्यातिरिक्तनामेवैताः–क. [5] प्रेषितः.

शमितारः ! मेधो यज्ञः तत्र भवा मेध्या दुरः । अन्तरा चात्वालोत्करौ [1]तदा तमुपनयत द्वारं चात्वालोत्करावन्तरेण नयत । पशुर्मेधः तस्य पतिरिन्द्रश्चाग्निश्च आशासाना एतामाशिषमिच्छतः यथामेधपतिभ्यां मेधः पशुर्भवति इन्द्रस्य चाग्नेर्मेधमिच्छतः मेध्या द्वारा एता उपनयत । [2]हरतेर्भकारादेशो 'हृग्रहोर्भश्छन्दसि' इति । प्रहरतास्मै पशवे पाकार्थमग्निमिति आग्नीध्र उच्यते । सर्वत्र पूजार्थं बहुवचनम् ।

उपाकरणदर्भस्य स्तरणं कुरुत, यत्र पशोर्मारणं भवतीत्यध्वर्युरुच्यते । विशिष्टं हि श्रेयः पशुः प्राप्नोति, यत्प्राप्यते दानतपोभिः, अग्निः पशुरासीदिति लिङ्गात् स्मृतेश्च । अत एनं मात्रादयोऽप्यनुमन्यन्तामिति पशुसंस्कारः । [3]यथा हि राजा पुत्रं प्रयोजयते युध्यमानं मात्रादयोऽप्यनुमन्यन्ते । जयेऽपि सुखं, मरणेऽपि स्वर्ग इति एवमिहापि माता अनुमन्यते । पातीति पिता रक्षतीति । भ्राता भर्तव्य इति । सगर्भ्य इति समाने गर्भे भवः । सखा मित्रम् । समाने यूथे भवः सयूथ्यः ।

उदीचीनानस्य पदो निधत्तात् स्थापयेति शमितोच्यते । चक्षुरादीनि यथालोकं गमयतेति दैव्याश्शमितारः । तेषां सामर्थ्याच्चक्षुरादीनि यथालोकं गमयतेति, तत उत्पत्तेः ।

वातं प्राणमन्ववसृजतादिति यस्मात्सृष्टं तस्मिन्नेव च क्षेप्तव्यमिति । दिग्भ्यश्श्रोत्रं तत्रैव नयिते । असवः प्राणाः । तेऽस्य सन्तीत्यसुमत् शरीरम्, लोपो मतुपः । अन्तरिक्षं द्यावापृथिव्योरन्तरम्, तदस्य शरीरेण नयत । यत्पूर्वं तत्र हीन्द्रस्य स्थानं हृदये सुरैरपि [4]सुराक्षितम् । पशुदेवतानां लोकाः पशोः श्रूयन्ते । 'तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षत्' इति लिङ्गात् । [5]शरीरमस्थ्यादि पृथिवीम् । एकधा

---

[1] तदाभमुप. [2] तै-ब्राह्मणस्थस्य (तै. ब्रा. ३-६-६) प्रभरतेत्यस्य प्रक्रिया प्रदर्श्यतेऽत्र [3] यथा हि राजन्यपुत्रं प्रयोजने युध्यमानं—छ. [4] सुरक्षिताः पशुदेवतानां लोकाः पशौ श्रूयन्ते–छ. [5] शरीरं पृथिवी अस्थ्यादि–छ.

एकीभूतं अस्य त्वक् चर्म आच्छयतात् छेदनमस्य कुरुत मा विभक्तम् ।

पुरा-पूर्वमुत्पन्नाया नाभ्या वपां अपिशसस्थानं दक्षिणेन नाभिमावर्तस्यान्तः। तस्माद्वपामुत्खिदत उत्पाटयत ।

अन्तर्यथा कुम्भ्या भवत्यूष्मा तथैनं वारयत । स्थगयत कुम्भीम् ।

वक्षः उरः, श्येनं श्येनाकृति यथा भवत्युरः तथा कुरुत। प्रशसा असी इव कुरुत बाहू, प्रश[1]स्तौ वा कुरुत ।

[2]शला-शकलौ गृह्णीत शकलावेव कुरुत दोषर्णी निर्मांसे। दोरिति बाहुमूलस्याख्या ।

कश्यपा-कच्छपाकृति कुरुतांसौ । ग्रीवाबाहुमध्यमंसः । स्पिचौ श्रोणी अच्छिद्रे-अच्छिन्ने सकले कुरुत ।

कवषोरू-[3]खगाभिधानं कवषः तदाकृती कुरुत उरू । स्रेको गुल्मः तत्पत्राकृती कुरुत । अष्ठीवन्तौ अस्थिमन्तौ, योनिप्रदेशः ।

[4]वक्रत्वाद्वंक्रयः पार्श्वाः, ताः अनुष्ठ्या अनुष्ठानेन यत्नेन उच्च्यावयत [5]सर्वाः पृष्टीर्वङ्क्रीणाम् ।

गात्रं गात्रं यद्यद्ग्रहणाय चोद्यते तत्तत् अस्य अनूनं सकलं कृणुत कुरुत, मा गृह्णीतैकदेशम् ।

ऊवध्यं-पुरीषं, तद्यत्र गूह्यतेऽवटे तदूवध्यगोहं; तत् खनत पृथिव्याम् ।

असृक्—लोहितं, तेन यथा रक्षसां सर्गो भवति तथा कुरुत बर्हिरक्त्वा लोहितेन रक्षसामर्थे परित्यजतेत्युच्यतेऽध्वर्युः ।

[1] स्तौ कु–छ. [2] दोषर्णी प्रकोष्ठौ शला शलाकाकारे कुरुत इति सायणः. [3] उपाधान्याभिधानं–छ. [4] सक्रत्त्वात् वङ्क्र्यः पशवः ताः–क. [5] सर्वाषष्ठीवङ्क्रीणाम्–छ.

वनिष्ठुः स्थविरान्त्रः; तदस्य मा राविष्ट मा [1]लाविष्ट। उरूकं वपां मन्यमानाः स्थविरान्त्रस्य लवनं मा कुरुत। न इत् वस्तोके[2]तनये न भाविष्यति वः किञ्चिदशुभम्। मा एवं कुरुतां यत्नं कुर्वतां पुत्रे वा पौत्रे वा। तोकः–पुत्रः। तनयो नप्ता। रविता–लविता [3]यस्मिन् विद्यते शमिता कर्मणि तत्तावद्भवति नवितरासत्कर्म? शमितार इत्यृत्विज आमन्त्र्यन्ते। यस्मादत्र शमिता लविता न विद्यते तस्माद्यत्नं कुरुत। यथाऽन्यस्य लवने कर्तव्येऽन्यो न लूयते एवं कुरुत पुत्रस्य वा पौत्रस्य वा न भवत्यशुभमिति। अप्लुतगमनत्वाद-ग्निरध्रिगुः। तस्यामन्त्रणमध्रिगो इति। शमीध्वं–शमनं पशोर्मारणं कुरुत। सुशमि शमीध्वम्–सुष्ठुशमनं कुरुत। दृढार्थं लोकवत्पुनर्वचनम्।

अध्रिगुरग्निः अपापो वायुरलेपकत्वात्। एतौ देवौ मारणस्य कर्तारौ। ताविमं पशुं श्रपयतां, अतिप्रकृष्टाविद्वांसौ। यथा यथा–येन येन प्रकारेण साधु, तथा तथा–तेन तेन प्रकारेण श्रपणं भवद्भ्यां कर्तव्यम्।

शमीध्वमध्रिगो३इति प्लुतिः। अपापेत्युपांशु। अध्रिगो शमी-ध्वमित्येवमादि अपापान्तं इति त्रिः। अध्रिगुश्चापापश्चेत्येवमादि सकृत्।

[स्तोकविषया मैत्रावरुणानुवचनमन्त्राः, वपापुरोडाशस्विष्टकृतां पुरोऽनुवाक्याः प्रैषा होतुर्याज्याश्च]

स्तोकेभ्योऽनुब्रूहीत्युक्ते 'जुषस्व सप्रथस्तमं' इति मैत्रावरुणः प्रथमां त्रिः। 'उत्तमां त्रिः। 'ओजिष्ठं ते मध्यतो मेद उद्भृतम्' इति।

---

1 लोपिष्ट–छ. 2तनये भविष्यति यः स किञ्चिदशुभमेव कुरुतात् पुत्रो वा पौत्रो वा। लोकः पुत्रः पौत्रश्च। तनयो नप्ता–छ. 3 स यस्मिन् विद्यते कर्मणि तत्तावत्कर्म। शमितार इत्यृत्विज आमन्त्रयन्ते। यस्मात् शमिता लविता न विद्यते तस्माद्यत्नं कुरुत। यथाऽन्यस्य लवने कर्तव्येऽन्यो न लूयते शमित्रा एवं कुरुत पुत्रस्य पौत्रस्य वा न भवत्यशुभमिति–छ.

'आ वृत्रहणा' इति पुरोऽनुवाक्याः प्रैषाश्च मैत्रावरुणस्य वपापुरोडाशस्विष्टकृताम्। 'गीर्भिर्विप्रः' इत्यादि तेषामेव याज्या होतुः।

[मैत्रावरुणानुवचनीयं मनोतासूक्तम्]

मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्युक्ते मैत्रावरुणः 'त्वं ह्यग्ने प्रथमो मनोता' इति त्रिः। 'पुरूण्यग्ने' इति परिधानीयां त्रिः।

[हविर्वनस्पतिस्विष्टकृतां मैत्रावरुणीयाः पुरोनुवाक्याप्रैषयाज्यामन्त्राः तेषामेव होतुर्याज्याश्च]

'आभरतम्' इति पुरोऽनुवाक्याः प्रैषाश्च हविर्वनस्पतिस्विष्टकृतां मैत्रावरुणस्य। 'उपोह यद्विदथं वाजिनो गूः' इति होतुरेतेषामेव याज्या। 'प्रमतिमिच्छमानाः' इत्यर्धर्चे विरामो वसाहोमार्थम्।

[अनूयाजसूक्तवाकानां मैत्रावरुणप्रैषा होतुर्याज्याश्च]

'देवं बर्हिस्सुदेवं देवैः' इति प्रैषा मैत्रावरुणस्यानूयाजानाम्। उत्तरा याज्या होतुः। 'अग्निमद्य' इति सूक्तवाकप्रैषो मैत्रावरुणस्य।

[आज्यभागीयपुरोऽनुवाक्यादि]

यदा आज्यभागौ तदा अग्नय आज्यस्यानुब्रूहीत्युक्ते 'अग्निः प्रत्नेन' इति पुरोनुवाक्या।

अग्नय आज्यस्य प्रेष्येत्युक्ते 'होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज' अथवा न हविश्शब्द [1] आग्नेये सर्वत्रास्य प्रकृतिवत्।

सोमायाज्यस्यानुब्रूहीत्युक्ते 'सोम गीर्भिष्ट्वा वयं' इति।

सोमायाज्यस्य प्रेष्येत्युक्ते 'होतायक्षत्सोममाज्यस्य जुषतां हविर्होतर्य ज' इति नित्यो हविश्शब्दः। 'रभिष्टया रशनयाऽधित। यत्राग्नेराज्यस्य हविषः प्रिया धामानि, यत्र सोमस्याज्यस्य हविषः प्रिया

---

1 आग्नेयः–क.

धामानि, यत्रेन्द्राग्नियोश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेरिति, न देवतोपलक्षणं होतुस्सर्वत्र मैत्रावरुणेनोपलक्षितत्वात् ।

पशुस्विष्टकृद्वर्जं याज्यादेवतानिगमा वनस्पतौ । ये यजामहे— 'भूर्भुवस्सुवरयाड्वनस्पतेरग्नेः प्रिया धामानि, अयाट्सोमस्य प्रिया धामानि, अयाडिन्द्राग्नियोः प्रिया धामानि, अयाड्देवानामाज्यपानां प्रिया धामानि, यक्षद्वनस्पतेः प्रिया धामानि, यक्षत्स्वं महिमानमित्येवमादि। 'जुषतां हविर्वनस्पते रशनया' इति याज्या । उपदेशः व्याहृतरिक्ता 'वनस्पतिमभिहि पिष्टतमया रभिष्टया रशनयाऽधित' इति पूर्ववदुक्त्वा जुषतां हविर्वनस्पते[1] रशनया ' इति कुर्वन्ति ।

'होता यक्षदग्निंस्स्विष्टकृतमयाडग्निरग्नेराज्यस्य हविषः प्रिया धामान्ययाट्सोमस्याज्यस्य हविषः प्रिया धामान्ययाडिन्द्राग्नियोश्छागस्य ' इत्येवमादि। याज्यायामप्येवं व्याहृतीरुक्त्वा 'अग्निःस्विष्टकृतम्' इत्येवमादि। 'पचन् पक्तीः पचन् पुरोडाशं गृह्णन्नग्नय आज्यं गृह्णन् सोमायाज्यं बध्नन्निन्द्राग्निभ्यां छागंसूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनेन्द्राग्निभ्यां छागेनाघस्ताम् ' इत्येवमाद्यविकृतम् ।

इति धूर्तस्वामिभाष्ये पशुहौत्रं मैत्रावरुणीयं च
समाप्तम्.

———

[1] रशनयेति केचित्कुर्वन्ति । होता—क.

## अथ अष्टमः प्रश्नः.

(सू)　[1] अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति ॥ १ ॥ १ ॥ १८०२ ॥

[चातुर्मास्ययागफलं, तदन्येषां कर्मणां नैरर्थक्यपरिहारादि च]

(भा) चातुर्मास्यैरिष्टवान् चातुर्मास्ययाजी, तस्य चातुर्मास्ययाजिनोऽक्षय्यं भवति[2] । न शक्यं क्षेतुं अक्षय्यम् । शोभनं कृतं सुकृतम् । चतुर्षु चतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि । तद्याजिनः पुण्यमक्षय्यं [3]भवति चातुर्मास्यानां फलम् । न चान्येषां कर्मणामानर्थक्यम् । अन्यथालक्षणस्य सुखविशे[4]षस्य तै[5]रुपजननात् । कर्मसमुदायनाम चातुर्मास्यानीति ॥

[सूत्रभाष्यस्थाक्षय्यपदार्थः]

(वृ) अक्षय्यम्—मोक्षरूपत्वान्नित्यमिति यावत् । तदेतत् चातुर्मास्यानां फलम् ।

[चातुर्मास्येतरकर्मणामानर्थक्यशङ्कापरिहारौ]

सर्वफलसाधारणसुकृतशब्दनिर्देशात् सर्वफलानां चातुर्मास्यैः सिद्धत्वात् कर्मान्तरानर्थक्यशङ्कायामाह—**नचान्ये–पजननात्**—नानाकर्मसु स्वर्गफलवत् । एतच्च पशुबन्ध एव विस्तरेण दर्शितम् ।

---

[1] नित्यत्वसामान्याद्धविर्यज्ञसामान्याच्च चातुर्मास्यानि व्याचष्टे। नित्यत्वं चैषां नित्यैः समभिव्याहारात् । नित्याधिकारे वचनात् । नित्यकाम्यविभागोऽत्र प्रदर्शितो भारद्वाजेन (रु). [2] भवति न च शक्यं क्षपयितुम्–**ङ.** भवति सुकृतं, न च शक्यते क्षेप्तुमित्यक्षय्यम्–**ञ.** भवति सुकृतं न शक्यते क्षेतुमक्षय्यम्–**छ.** भवति सुकृतं क्षेतुं न शक्यमक्षय्यम्–**ज.** भवति सुकृतं न शक्यं क्षपयितुमित्यक्षय्यम्–**घ.** भवति कृतं न शक्यते क्षेप्तुम्–**क.** भवति न शक्यं क्षपयितुमित्यर्थः–**ख. ग.** [3] भवति तदेतत् चातु. [4] षस्य कर्मान्तरैरुपार्जनात्–**ख. ग.** [5] रुपादानात्–**ञ.**

[चातुर्मास्यकर्मसमुदायघटकानां निर्देशः]

**कर्मसमुदा–नीति**---वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणां कर्मणां समुदायनाम चातुर्मास्यशब्दः ।

**(सू) [1]फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा [2]वैश्वदेवेन यजते ॥ २ ॥ २ ॥ १८०३ ॥**

[वैश्वदेवयागकालः, तन्नामनिर्वचनं च]

**(भा)** फल्गुनीभ्यां युक्ता पौर्णमासी फाल्गुनी । तथा चैत्री । यस्माद्विश्वैर्देवैरग्निरिष्टोऽनेन समुदायेन, अतोऽस्य संज्ञा वैश्वदेवमिति । 'यद्विश्वे देवास्समयजन्त' इत्यस्य [3]निर्वचनम् । तेन वैश्वदेवेन यजेत, यस्यां पौर्णमास्यां वसन्तो भवति ।

[सूत्रभाष्यस्थफल्गुनीपदस्य उत्तरफल्गुनीपरत्वं, हस्तयोगेऽपि वैश्वदेवं कदाचित्]

**(वृ) फल्गुनीभ्यां–ल्गुनी**—उत्तरफल्गुनीभ्यां युक्ता । 'एषा वै जघन्या रात्रिस्संवत्सरस्य यत्पूर्वे फल्गुनी' इति पूर्वफल्गुनीयुक्तायास्संवत्सरान्ततया शिशिरत्वात् । 'वसन्ते वैश्वदेवेन' इति विरोधात् । 'एषा वै प्रथमा रात्रिस्संवत्सरस्य यदुत्तरे फल्गुनी' इत्युत्तरफल्गुनीयुक्तायाः [4]संवत्सरादितया वसन्तत्वात् तस्यां वैश्वदेवं कुर्यात्[5] । तदा हस्तयोगस्य कदाचित्संभवेऽपि वसन्तत्वम् । पूर्वफल्गुनी[6]युक्तव्युदासेन फाल्गुन्यामिति निर्देशस्य वासन्तिकपौर्णमासीपरत्वात् हस्तयुक्तायामपि वैश्वदेवम् ।

---

1 चैत्रफाल्गुनयोश्चान्द्रमसमासयोरन्यतरस्य । चतुर्णामपि पर्वणामुदगयने प्रयोगो द्वादशाहेनापवर्गश्चोक्तो बोधायनभरद्वाजाभ्याम् । यथाप्रयोगमित्यौपमन्यव इति बोधायनवचनात् । द्वादशाहाद्यावत्प्रयोगभाविना कालेनापवर्गं मन्यन्ते केचित् ; तदयुक्तम्, प्रयोगकालावधिकब्रह्मचर्यनियमपरत्वात्तस्य । एतच्च पूर्वापरपर्यालोचनयैवाध्यवसानम् (रु). 2 आमिक्षादेवतात्वेन विश्वदेवसंबन्धात् तैरिष्टत्वेन पुराकल्पश्रवणाच्च प्रथमस्य पर्वणः समाख्या वैश्वदेवमिति (रु). 3 निर्वचनात्–ज. 4 संवत्सरस्यादितया. 5 कुर्यात् । हस्त–घ. च. 6 युक्तत्वव्युदासेन–ग.

[चित्रायुक्तायां स्वातीयुक्तायां वा वैश्वदेवम्]

**तथा चैत्री**—तथा चित्रायुक्ता चैत्री । अत्रापि स्वातीयुक्ताया अप्युपलक्षणम् । [1] वासन्तिकद्वितीयपौर्णमासीपरत्वाच्चैत्रशिब्दस्य ।

[मीमांसकाभिमतवैश्वदेवपदार्थः, भाष्ये ब्राह्मणोक्तनिर्वचनाश्रयणफलं च]

**यस्माद्विश्वे–र्वचनम्**—अस्य-वैश्वदेवशब्दस्य । यद्यपि मीमांसकैर्वैश्वदेव्यामिक्षासाहचर्याद्दण्डिन्यायेन वैश्वदेवशब्दस्य प्रवृत्तिरुक्ता । तथाऽपि [2] तेषामेवमभिधानप्रवृत्तिस्संभाव्यत इत्येतावन्मात्रपरत्वात् । अत्र तु ब्राह्मणोक्तनिर्वचनमाश्रियते । अत्रेदं प्रयोजनम्—आग्नेयाद्यष्टकर्मसमुदायेन अग्न्याख्यः परमात्मा यष्टव्य इति ज्ञानम् ।

**तेन वैश्व–न्तो भवति**—पूर्वफल्गुनीयुक्तपौर्णमासीव्युदासार्थं सवितुर्मीनमेषस्थित्यन्तर्भावरहितपौर्णमासीव्युदासार्थं च । तदेतद्वसन्ते वैश्वदेवेनेत्यत्र प्रपञ्चयिष्यते ॥ २ ॥

(सू) **पूर्वस्मिन् पर्वणि पञ्चहोतारं मनसाऽनुद्रुत्याहवनीये सग्रहं हुत्वा [3] अन्वारम्भणीयामिष्टिं निर्वपति वैश्वानरं द्वादशकपालं पार्जन्यं चरुम् ॥ ३ ॥ ३ ॥ १८०४ ॥**

[सूत्रस्थपर्वशब्दार्थः]

(**भा**) इह पूर्वं पर्व चतुर्दशी, न पौर्णमासी । पौर्णमास्यामिज्यावचनात् । साकमेधेषु च पौर्णमास्या विप्रकर्षात् ।

---

[1] वासन्तिक प्रथमपौ—छ. [2] तेषामेव प्रधानप्रवृत्तिस्सं—ख. ग.
[3] अन्वारभ्यन्तेऽनया चातुमास्यानीत्यन्वारम्भणीया वैश्वानरपार्जन्या । वैश्वानरस्य चाग्निर्वैश्वानरो देवतेति दर्शितं पुनराधेये । न च पञ्चहोत्रन्वारम्भणीययोः समानाग्नित्वम् , उभयोरारम्भार्थयोः स्वतन्त्रत्वात् । वैश्वानरपार्जन्या पञ्चहोता च नाभ्यावर्तेतेति पृथगुपादानाच्च (रु).

[पर्वशब्दस्य चतुर्दशीपरत्वे प्रमाणविवरणम्]

(वृ) इह पूर्वं-वचनात्—श्वोभूते पात्रसंसादनकाल इति पञ्चदश्यां यागवचनात् । न च प्रतिपद[1]भिप्रायः श्वोभूतशब्दः, श्वोभूते पौर्णमास्येष्टेति प्रतिपदि पौर्णमासीयागदर्शनात् । अतः पूर्वं पर्व चतुर्दशी ।

साकमे-कर्षात्—साकमेधेषु च पूर्वं पर्व चतुर्दशी । इतरथा पौर्णमास्याः प्रतिपत्कालविप्रकर्षः स्यात् । उभयत्रायं हेतुः ।

(सू) वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य याज्यानुवाक्ये । पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे । स नो यवसमिच्छतु । अच्छा वद तवसं गीर्भिराभिः स्तुहि पर्जन्यं नमसा विवास । कनिक्रदद्वृषभो जीरदानू रेतो दधात्वोषधीषु गर्भमिति पार्जन्यस्य । हिरण्यं वैश्वानरे ददाति, धेनुं पार्जन्ये । सिद्धमिष्टिस्संतिष्ठते ॥ ४ ॥ ४ ॥ ॥ १८०५ ॥

[चातुर्मास्यसंकल्पः, तत्पूर्वाङ्गवैश्वानरपार्जन्येष्टीतिकर्तव्यता दक्षिणादानादि, तत्र तत्रोपदेशतदितरपक्षौ च]

(भा) हुतेऽग्निहोत्रे चतुर्दश्यां सङ्कल्पः; चातुर्मास्यैर्यक्ष्ये [2]अक्षय्यं मे सुकृतं भवत्विति । ततो विहृत्याग्निं मनसा हूयते [3]सर्वः पञ्चहोता । तस्मिन् परित्यक्तेऽन्वारम्भणीया । विद्युदसि, ततो [4] विहरणम् । ततोऽग्न्यन्वाधानादि । उपदेशः कृत्वा विद्यु[5]दसि अन्वारम्भणी[6]या ।

---

[1] भिप्रायेण श्वो–घ. [2] अक्षय्यं भवति–ङ. अक्षय्यं सुकृतं भवति–ज. [3] सर्वतः पञ्च–ङ. [4] ततोऽग्न्यन्वा–ख. ग. घ. [5] दसि अन्वा–ङ. [6] यार्थः क्रतुसंकल्पः–ज.

[1]अत्र पक्षे क्रतुसङ्कल्पः [2]कामः पञ्चहोता [3]मनसा ग्रह उपांशुर्वा । [4]न पुनर्विद्युदसि । पुनर्विहरणमन्वारम्भणीयेति । पर्जन्याय [5]जुष्टं निर्वपामि पर्जन्य हव्यं रक्षस्व पर्जन्याय वो [6]जुष्टं प्रोक्षामि पर्जन्यमावह पर्जन्यस्या[7]हम् । उभावाग्नेयविकारौ । अन्नादो भूयासमिति मन्त्रेणाभिघारणाभिमर्शनचतुर्धाकरणानि क्रियन्ते । ब्राह्मणा इमे वो हिरण्यधेनू । उपदेशः हिरण्यं वैश्वानराय वो ददामि धेनुं पार्जन्यायेति ।

[भाष्यस्थसर्वपदार्थः]

(वृ) सर्वः—सग्रहः ।

[अन्वारम्भणीयेष्टिः तदितिकर्तव्यताविवरणं च]

तस्मिन्—या—पञ्चहोत्रर्थेऽग्नौ परित्यक्ते विहरणादिब्राह्मणतर्पणान्ता । ततो वैश्वदेवं संकल्प्य ।

विद्युदसि ततो विहरणम्—पाशुकमैष्टिकं वा ।

ततोऽग्नयन्वाधानादि—अस्मिन् पक्षे अन्वारम्भणीयोत्तरकालमेव विद्युत्, प्रातिस्विकप्र[8]योगाङ्गत्वात् । न प्रथमं साधारणसङ्कल्पानन्तरम् ।

[विद्युदस्यन्वारम्भणीययोः पौर्वापर्यमात्रं विवक्षितं नानन्तर्यम्]

उपदेशः–णीया—सर्वसाधारणसङ्कल्पेऽपि यक्ष्यमाणत्वात् । अत्र कृत्वा विद्यदासिमन्वारम्भणीयेति नानन्तर्यार्थं, अन्वारम्भणीयोत्तरकाले न विद्युदसि, विद्युदस्युत्तरकालमन्वारम्भणीयेत्येवमर्थम् ।

अत्र पक्षे–उपांशुर्वा—त्यक्त्वाऽग्निमन्वारम्भणीयासङ्कल्पः ।

---

[1] अधिकृतसंकल्पः कामः-क. अथ क्रतुसंकल्पः–घ.च.ङ. यथा क्रतुसंकल्पः–झ. [2] कामः विद्युत् पञ्च –च. ख. घ. [3] मनसा संग्रह उपांशुः क. मनसा संग्रह ख. ग. ङ. मानसग्र ज. [4] पुनार्विद्युदसि क. [5] जुष्टम् । पर्ज क. च, [6] जुष्टम् । पर्ज क. घ. ङ. च. [7] हमन्नादो भूयासम् । उभावा–ज. [8] योगवत्त्वात्–ख. ग.

न पुनर्विंद्युदसि—पूर्वस्य प्रसङ्गात् ।

[उपदेशपक्षविवरणं पक्षान्तरं च]

पुनर्विंह–येति—उपदेशपक्षः । पक्षान्तरे त्वन्वारम्भणीयार्थो विद्युद्भवत्येव । यद्यप्युपदेशपक्षे 'प्राणा वा एते यच्चतुर्होतारः' इति भरद्वाजोक्तश्रुतिबलेन चतुर्होत्रर्थाग्नौ प्रधानकर्म; तथाऽपीहान्वारम्भ-[1] णीयाव्यवधानात्तस्याः पृथक्तन्त्रत्वात् पञ्चहोत्रर्थस्य परित्यागः । ततः प्रणीयान्वारम्भणीयेत्युपदेशपक्षः ।

[हिरण्यदानपदं शतमानदानपरं, तत्र मानं च]

ब्राह्मणा इमे–जन्यायेति—हविर्भेदेन दक्षिणाभेदात् व्यवस्थया दानमिति । हिरण्यमात्रचोदनायां शतमानदानं कात्यायनवचनात् । किञ्च अस्मदीये ब्राह्मणे यथा वै पुत्रो जात इत्यनुवाके उत्न्यनाशे पुनरुत्पत्तौ हिरण्यं ददातीति हिरण्यमात्रे विहिते सूत्रकारेण शतमानं हिरण्यं दक्षिणेत्युक्तत्वाच्च ।

[2] प्राचीनप्रवणे वैश्वदेवेन यजते ॥ ५ ॥ ५ ॥
॥ १८०६ ॥

[ वैश्वदेवतदङ्गान्वारम्भणीयानुष्ठानार्हभूलक्षणम् ]

(भा) तदङ्गत्वादन्वारम्भणीयाऽपि प्राचीनप्रवणे । उपदेशो दर्शपूर्णमासवद्देशः । आन्वारम्भणीय२हविरिदमेषां मयीति । अन्येषां समे दर्शपूर्णमासाभ्यामीति विधिः । अतः प्राचीनप्रवणत्वविधानमिति । अनुदवसितस्यापि प्राचीनप्रवणा भूमिः क्रियते । वरुणप्रघासेषूदव[3]-सानविधानात् ।

[वैश्वदेवाङ्गान्वारम्भणीयायाः पुरुषसंस्कारकत्वाभावः]

(वृ) तदङ्ग–प्रवणे—अन्वारम्भणीयायाः सर्वपर्वाङ्गतया वैश्वदेवस्या-

---

[1] णीयया व्यवधानात्तस्याः छ, णीया । तस्याः-ख. ग. [2] प्राचीनप्रवणे यजते । पूर्वस्मिन्नेव देशे देशान्तरे वा । साधारणनिर्देशात् वरुणप्रघासेषूदवसाननियमाच्च । सत्याषाढश्चाह । प्राचीनप्र+जेतोदवसाय वेति (ब).
[3] सानात्–छ. सायाविधानात्–क. ङ.

प्यङ्गत्वात् प्रधानदेश एव प्राचीनप्रवणे [1] कर्तव्या । न चास्या दर्शपूर्णमासार्थान्वारम्भणीयावत्पुरुषसंस्कारद्वारेणोपकारकत्वम्; पुरुषसन्बन्धाश्रवणात् । अतः कर्माङ्गकत्वमेव । यद्यपि न वैश्वदेवस्याङ्ग, तथाऽपि वैश्वदेवकालवत्तद्देशस्यापि प्राप्तिः ।

उप-देशः—वैश्वदेवचोदनाननुप्रवेशात् ।

आन्वारम्भ – मयीति — यद्यपि वैमृधवद्वैश्वदेवाद्यङ्गता; तथाऽपि पृथङ्नामधेयत्वादान्वारम्भणीयं हविरिदमेषां मयीति याजमानम् ।

[प्राचीनप्रवणविधानस्योपपत्तिः]

अन्येषां समे-धानमिति—यद्यपि दर्शपूर्णमासयोः प्राक्प्रवणां प्रागुदक्प्रवणां वेति विहितत्वात् तद्विकारत्वाद्वैश्वदेवे प्राचीनप्रवणत्वं प्राप्तमेव, तथाऽप्यन्येषां शाखिनां समे दर्शपूर्णमासाभ्यामिति विहितत्वादिहापि तथा प्राप्नोतीति प्राचीनप्रवणविधानम् । अस्माकं तु नियमार्थम् ।

अनुद-यते—नात्रोदवसानम् [2] ।

(सू) [3] पशुबन्धवद्गार्हपत्यादग्निं प्रणयन्नोद्यतहोमं जुहोति ॥ ६ ॥ ६ ॥ १८०७ ॥

[अग्निप्रणयनं, उपदेशपक्षः, उद्यतहोमनिवृत्तिश्च]

(भा) त्यक्तेऽग्नावन्वारम्भणीयार्थे वैश्वदेवेन यक्ष्य इत्युक्त्वा विद्युदसि । ततः पशुबन्धवत्प्रणयनं प्रकृतिवद्वा । उपदेशस्सर्वत्रादौ विद्युदसि । उद्यतहोमस्य निवृत्तिः, पूर्वो यत्सन्नपरो भवासीति लिङ्गात् । अन्यसंभार[4] निवृत्तिः ।

---

[1] कर्तव्यत्वात्—क. [2] सानं नियतम्—छ. [3] अथ वैश्वदेवायाग्नीं अप उपस्पृश्य पशुबन्धस्यावृताऽऽहवनीयं प्रणयति । नात्रोद्यतहोमं जुहोति । पूर्वो यत्सन्नपरो भवासीति लिङ्गविरोधादिति भावः (रु). [4] निवृत्तिस्तु—क.

(वृ) त्यक्तेऽग्ना–द्युदसि— न कामः, कृतत्वात् । न विद्युदसि । [1]यदि कृतः पूर्वम् ।

[अग्निप्रणयने पक्षद्वयम्]

ततः पशुः–यनम्–प्रकृतिवद्वा—पशुबन्धवदग्निं प्रणयति, नानुत्तरवेदिके पाशुकं प्रणयनं विद्यत इति पक्षद्वयोपदेशात् ।

उपदे–दसि—इति पूर्वमेवोक्तम् ।

[उद्यतहेमनिवृत्तौ हेतुः]

उद्यतहो–निवृत्तिः— पूर्वभूतस्यापरभावित्वमाहवनीयादुत्तरवेदिप्रणयने सति संभवति । इह तु तदभावात् । मन्त्रलिङ्गविरोधादुद्यतहोमस्य निवृत्तिः । पाशुकप्रणयनेऽपि गुग्गुल्वाद्यन्यसंभारनिवृत्तिः ।

(सू) [2]ऊर्णावन्तं प्रथमस्सीद योनिमिति होतुरभिज्ञायाहवनीयायतन ऊर्णास्तुकां निधाय तस्यामग्निं पतिष्ठापयति ॥ ७ ॥ ७ ॥ १८०८ ॥

[ऊर्णास्तुकानिधानं तत्राग्निप्रतिष्ठा उपदेशपक्षश्च]

(भा) ऊर्णा[3]स्तुकैव अन्तराश्रृङ्गीया? परिसङ्ख्यानात्; अतिमुक्तयन्तं पूर्ववत् । ततोऽग्नयन्वाधानम्, [4]वैश्वदेवं हविरिदमेषां मयीति । [5]अपाशुकेऽप्यूर्णास्तुकेत्युपदेशः ।

(वृ) ऊर्णास्तु–ख्यानात्—अन्यसंभारेषु प्राप्तायामपि तस्यामूर्णास्तुकां निधायेति पुनर्वचनात् ।

[याजमानस्यान्वाहितजपान्तत्वे हेतुः]

अतिमु–मयीति—याजमानम् । अत्र नित्यं याजमानमन्वाहितजपान्तं द्व्यहकालत्वात् ।

---

[1] इदं–घ. छ. पुस्तकयोरेव दृश्यते. [2] पुनरूर्णास्तुकाग्रहणात्संभारान्तराणि परिसंख्यातानि भवन्तीति तस्यामग्निं प्रतिष्ठाप्य समानमातिमुक्तिभ्यः (वृ). [3] स्तुकैव श्वेतापेत्वस्यान्तरा? घ. [4] वैश्वदेवं मा हवि–क. [5] अपाशुके पूर्णाहुतौ नोस्तुके?–व

[पाशुकसमुच्चयः]

**अपाशु-देशः**—ऊर्णास्तुकां निधाय तस्यामग्निमिति वैश्वदेवा-[1]ङ्गतया साधारणोपदेशात् केवलाया उपदेशादनया पाशुकान्यपि- समुच्चीयन्ते।

(सू) **नानुत्तरवेदिके पाशुकं प्रणयनं विद्यत इत्यपरम् ॥ ॥ ८ ॥ ८ ॥ १८०९ ॥**

[सोत्तरवेदिकेषु नित्यं पाशुकप्रणयनम्]

(भा) [2]अनुत्तरवे[3]दिकवचनाद्यत्रोत्तरवेदिर्वरुणप्रघासेषु महाहविषि च तत्र नित्यं पाशुकं प्रणयनम्, इतरथा वैश्वदेववद्विकल्पस्स्यात्।

(सू) [4]**अग्नीनन्वाधाय शाखामाहृत्य वैश्वदेव्या आमिक्षाया वत्सानपाकरोति ॥ ॥ ९ ॥ ९ ॥ १८१० ॥**

[अन्वाधानशाखादेरनुक्रमणविधानम्]

(भा) अपूर्वमुपादिष्टमित्यन्वाधानादेः प्रकृतिसिद्धस्यापि पुनरनुक्रमणम्। मध्येऽशननिवृत्त्यर्थमित्युपदेशः। विश्वेभ्यो देवेभ्यो देवभागम्। आमावास्यं तन्त्रम्, शाखाधर्माणां [5]पूर्वं प्रवृत्तेः।

[अनुक्रमणविधिफलम्, तत्र उपदेशपक्षश्च]

(वृ) **पुनरनुक्रमणम्**—पूर्वं पशुबन्धवत्प्रणयन-विधानात् पश्चात्प्रसूमयादिविधानात् मध्यवर्तिनां निवृत्तिशङ्कायां अन्वाधानशाखादेरनुक्रमणम्।

**मध्येशन-देशः**--अग्न्यन्वाधानमशनमित्येकीयमतात्प्राप्तस्य पुरा-

---

[1] तयोपदेशात् अनया पाशुकान्यपि—घ. ङ्गतया केवलाया—छ. [2] इदमेवाह रुद्रदत्तः. [3] वेदिवचनात्-क. [4] आमावास्यतन्त्रतामस्य पर्वणः ख्यापयितुं अग्न्यन्वाधानादेरनुक्रमणम्। तत्र च वैश्वदेवं हविः। विश्वेभ्यो देवेभ्यो देवभागं विश्वेभ्यो देवेभ्यश्शरदो दुहाना इत्यादयो विकाराः प्रत्येतव्याः (रु). [5] पूर्वप्रवृ— क. ख. ग. ज. ञ.

वत्सानामपाकर्तुरमावास्यायामिति च मध्ये प्राप्तस्याशनस्य निवृत्त्यर्थमग्नीनन्वाधाय शाखामाहृत्य वत्सानपाकरोतीत्यनुक्रमणमित्युपदेशपक्षः। अस्मिन् पक्षे प्रसूमयं बर्हिरिति बर्हिराद्यनुवादेन प्रसूमयत्वादिविकारविधानादेव शङ्कानिवृत्तिः [1] प्राकृतपदार्थानाम्। अशनं तु पुरा बर्हिष आहर्तोरित्यादिकाले भवति, तत्कालस्य पर्वद्वयसाधारणत्वात्। स्वमतेऽपि शाखाहरणानन्तरमशनं निषिध्यते, शाखामाहृत्य वत्सानपाकरोतीति विधानात्।

**विश्वेभ्यो–भागम्**—इति निगमः।

[आमावास्यातन्त्रविद्युपपत्तिः]

**आमावा–वृत्तेः**—यद्यपि पौर्णमासविकाराणां देवतानां प्राथम्याद्भूयस्त्वाच्च तत्तन्त्रप्राप्तिः; तथाऽपि आमावास्यतन्त्रस्यारब्धत्वादेव- [2] तत्तन्त्रम्।

(सू) [3] **प्रसूमयं बर्हिः प्रस्तरश्च ॥ १० ॥ १० ॥**
॥ १८११ ॥

**[चातुर्मास्यप्रकरणे बर्हिर्ग्रहणेन प्रस्तरग्रहणाग्रहणपक्षौ]**

(भा) पुष्पिता दर्भाः प्रसू[4]मयाः, प्रस्तरस्य पुनर्विधानात्। चातुर्मास्यप्रकरणे बर्हिर्ग्रहणेन प्रस्तरो न गृह्यते। [5] अतस्त्रेधा बर्हिस्सन्नद्धं भव- [6] तीति न प्रस्तरेण सह बध्यते। तथा च यत्सान्तपनीयस्य बर्हिस्तद्गृहमेधीय[7]स्येति न सान्तपनीयः प्रस्तरो गृहमेधीयस्य। अतस्सान्तपनी-

---

[1] प्रकृतपदा–छ. [2] तन्त्रम्–छ. [3] प्रसः पुष्पम्, तद्वन्तो दर्भा लाव्या इत्यर्थः। शरमयं बर्हिरित्यादिवत् बर्हिर्ग्रहणेनैव प्रस्तरस्य सिद्धे ग्रहणे परमतनिरासार्थं पृथक्प्रस्तरग्रहणम्, कल्पान्तरकारैः कैश्चिदन्यतरस्य प्रसूमयत्ववचनात्। आदरार्थं वा ब्राह्मणपरिव्राजकन्यायात्। यथा प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा इत्यादौ (रु). [4] मयाः पुनर्वि–क. [5] तत स्त्रेधा–घ. [6] तीति विना. प्रस्तरेण बध्यतेति न प्रस्तरः। तथा–च. ज. तिनप्रस्तरः। तथा च. घ. [7] स्येति सान्तपनीयस्य सूक्तवाके–क.

[1]यस्य सूक्तवाके प्रस्तरः [2]प्रह्रियते। गृहमेधी[3]ये वाऽन्य आह्रियते। [4]अत्र तु बर्हिर्ग्रहणेन प्रस्तरोऽपि [5]गृह्यते। यथा शरमयं बर्हिरिति प्रस्तरोऽपि शरमय एव। केचिदाहुः बर्हिर्ग्रहणेन [6]प्रस्तरस्य ग्रहणसिद्ध्यर्थं पुनर्वचनमिति।

[सोमेष्टीर्विना बर्हिर्ग्रहणेन प्रस्तरग्रहणं]

(वृ) प्रस्तरोऽपि गृह्यते—विना सोमेष्टिषु।

[बर्हिर्ग्रहणेन प्रस्तरस्य ग्रहणमिति पक्षस्य विमर्शः]

यथा शरमयं–वचनमिति—सोमे बर्हिर्ग्रहणेन प्रस्तरस्याग्रहणात् चातुर्मास्ये तथा मा भूदिति बर्हिर्ग्रहणेन प्रस्तरस्यापि ग्रहणसिद्ध्यर्थमिह प्रस्तरग्रहणमिति केचित्; तन्न; इह बर्हिर्ग्रहणेन प्रस्तरस्याग्रहणात् सोमे बर्हिर्ग्रहणेन प्रस्तरग्रहणसिद्ध्यर्थं तदेव प्रस्तर-[7]परिधीति प्रस्तरग्रहणमित्यपि वक्तुं शक्यत्वात्। प्रकृतौ च दर्भमयं बर्हिराहरतीति प्रस्तुत्य बर्हिर्देवसदनमारभे इत्यादिभिर्मन्त्रैः संनखं मुष्टिं लुनाति स प्रस्तर इति वचनादेव बर्हिर्ग्रहणेन प्रस्तरग्रहणे सिद्धे यत्र विशेषस्तत्राग्रह[8]णमेव युक्तम्।

(सू) [9]त्रेधा सन्नद्धं पुनरेकधा ॥ ११ ॥ ११ ॥
॥ १८१२ ॥

[10]तस्मिन् मन्त्रः ॥ १२ ॥ १२ ॥ १८१३ ॥

---

1 यस्येति सूक्त. 2 प्रणीयते–क. 3 ये चान्य आ–क.ख.ग.घ.च.ज. 4 अन्यत्र ब–क. घ. च. ञ. अन्यत्र तु–ख. ग. ज. 5 गृह्यते। तथा–छ. 6 प्रस्तरग्रह–घ. 7 परिधिरिति–छ. 8 णमित्येव. 9 तदेतदुभयात्मकं बर्हिर्बहुनिधनोपपन्नमपि प्रथमं त्रेधा विभज्य संनह्य त्रीनपि तान् भागान् पुनरेकधा संनह्यतीत्यर्थः (रु). एतद्भाष्यकृत्तु—'त्रेधा' इत्यादि 'मन्त्र' इत्यन्तमेकं सूत्रमिति मन्यत इति भाति. 10 तस्मिन्—एकधा सन्नहने। प्रथमानि तु सन्नहनानि तूष्णीं भवन्ति। तत्र त्रेधा सन्नद्धस्य बर्हिषः प्रस्तररहितौ भागौ प्रथमं बर्हिर्मन्त्रेण संभृत्य तयोः प्रस्तरवन्तं भागं बर्हिर्मन्त्रेण प्रस्तरमन्त्रेण चात्याधाय ततस्सर्वं सन्नहनमन्त्रेणैकधा सन्नह्यति (रु).

[तूष्णीं त्रेधा बद्धानां बर्हिषां पुनरेकधा संनहन एव मन्त्रः]

(भा) एकधा सन्नहने मन्त्रः। त्रेधा तूष्णीं बध्यते। निधनबहुत्वेऽपि [1]त्रिरेव सम्भरणमेकीकृतत्वात्। अलु[2]भिता योनिरिति प्रस्तरस्य सम्भरणम्। त्रेधा [3]येषां बर्हिर्ग्रह[4]णेन प्रस्तरो गृह्यते तेषां सह[5]प्रस्तरेण त्रेधा बन्धनम्। प्रस्तर[6]मन्त्रलोपः॥

[एकधा संनहन एव मन्त्र इत्यत्र हेतुप्रदर्शनम्]

(वृ) एकधा-न्त्रः—कृत्स्नबर्हिस्संनहने प्रकृतौ मन्त्रदर्शनादिहापि तत्रैव मन्त्रः॥

त्रेधात्-तत्वात्—त्रेधा बर्हिस्सन्नद्धं भवतीति कृत्स्नस्य बर्हिषो विधानात् एकीकृत्य निधनानि सर्वाणि त्रेधाकरणम्।

अलुभिता-न्धनम्—तदानीं बन्धनकाले प्रस्तरत्वेन गृहीतस्यान्यतमबन्धने निवेशः। तस्य चोपरि [7]निधानं सुसंभृतेति।

[अलुभितेति भाष्यस्य मतान्तरदूषणपरत्वं]

प्रस्तर-लोपः— [8]अलुभितेति प्रसज्येतेत्यन्यमतदूषण[9]मेव, न तन्मताङ्गीकारेण प्रयोगः।

(सू) [10]तथेध्मः॥ १३॥ १३॥ १८१४॥

[इध्मोऽपि पुष्पितखदिरसम्बन्धी पुष्पितपलाशसम्बन्धी वा ग्राह्यः]

(भा) तथेध्मः प्रसूमयः। पुष्पितानां खादिराणां पलाशानां वा।

(सू) त्रयोविंश[11]तिदारुः॥ १४॥ १४॥ १८१५॥

---

1 त्रेधैव-ज, 2 भिदा-ख ग. 3 येषां तु बर्हि-ख. ग. घ. 4 णेन गृह्यते-ख. ग. 5 प्रस्तरेण त्रेधा बन्ध-ख. ग, 6 मन्त्रस्य च लो-छ. 7 निधानं सुसंभृतेति-घ. छ. 8 अलुभिता योनिरित्यस्य प्रसज्येतेत्यन्यमतादूषणमेव, तन्मताङ्गीकारेण प्रयोगकथनप्रयोजनम्-छ. 9 मेव तन्मताङ्गीकारेण न प्रयोगः-घ. 10 तथेध्मोऽपि प्रसूमयः पुष्पितशाखाद्वृक्षादाहार्य इत्यर्थः (रु). 11 तिर्दारुः ?-ङ,

[दारुसङ्ख्या परिधिभिस्सह]

(भा) त्रयोविंशतिदारुः सह परिधिभिः ।

(सू) [1]त्रीन् कलापान् संनह्यैकधा पुनस्सन्नह्यति पूर्ववत् ॥ १५ ॥ १५ ॥ १८१६ ॥

[पुनःसंनहनविधिफलं, संनहनमन्त्रे पक्षभेदः, श्रपणाधिश्रयणयोः यथाप्रकृतित्वं च]

(भा) परिधिभिस्सह त्रेधा बध्यत इति पुनरुच्यते त्रीन् कलापानिति। एकधा पुनस्सन्नह्यति । पूर्ववदेकधा संनहनस्यैव मन्त्रः । तदेव तु मन्त्रवत्सन्नहनम् । उभयत्र मन्त्र इति केचित् । पूर्ववत् सायं दोहं दोहयति वैश्वदेव्याः । यथा कृतो विधिः प्रकृतौ यद्याहवनीये श्रपणं इहापि तथैव येन मन्त्रेणाधिश्रिता कुम्भी इहापि स एव मन्त्र इति ।

[त्रीन् कलापानिति सौत्रवचनस्य फलम्]

(वृ) तथेध्म इत्यनेन सिद्धेऽपि त्रेधा संनहने पुनस्त्रीन् कलापानिति वचनं परिधीनां इध्माद्भिन्नकार्यतया प्रस्तरवदिध्मैस्सह त्रेधा करणं [2]नास्तीति शङ्कया ।

[पूर्ववत्पदस्य पूर्वसूत्र एवान्वयपक्षः]

एकधा–मन्त्रः—एकधा पुनस्सन्न[3]ह्यति पूर्ववदिति सूत्रान्वयात् । अतः तथेध्म इति सूत्रमिध्मस्वरूपगतप्रसूमयत्वादिप्राप्त्यर्थम् । न त्वेकधासंनहन एव मन्त्रप्राप्त्यर्थमपि । न तु पूर्ववदित्युत्तरेण संबध्यते । वैश्वदेव्यास्सायं दोह [4]इत्येव दोहधर्मसिद्धेः ।

[पुनर्वचनस्य पक्षान्तराभिप्रायकत्वम्]

तदेव–नम्—पुनर्वचनं [5]पक्षान्तराभिप्रायेण ।

---

[1] तत्रापि प्रथममष्टाभिरष्टाभिस्सप्तकेन च तूष्णीं त्रीन् पुञ्जान् सन्नह्य ततस्तान् संनहनशुल्वे मन्त्रेण संभृत्य ततस्सन्नहनमन्त्रेणैकधा संनह्यति (रु). [2] नास्तीति– ख. ग. [3] ह्यतीति–छ. [4] इत्येवं–छ. [5] पक्षान्तरप्रतिपादनाय–क.ग.घ.छ.

[पक्षद्वयेऽपि सूत्रार्थसमन्वयः, युक्तपक्षकथनं च]

पूर्व—न्त्र इति—अस्माल्लिङ्गात् सर्वविकल्पेषु 'प्रक्रमात्तु नियम्यते' इत्याश्रयणीयं प्रकृतावपि। उभयत्र मन्त्र इति पक्षे एकधा पुनस्सन्नह्यतीति सूत्रच्छेदः, पूर्ववदित्युत्तरशेषः। बर्हिषस्त्रेधा संनहने प्राकृतमन्त्रप्राप्तिः। तत्र [1]च प्रयुक्तत्वात्पुनरेकधा संनहने प्राप्त्यभावाद्वचनं 'तस्मिन्मन्त्रः' इति। 'तथेध्मः' इतीध्मेऽतिदेशादुभयत्र मन्त्र इति। अयं पक्ष इध्माबर्हिषोस्साधारणः। दोहस्य पूर्ववद्वचनं प्रकृतावनुष्ठितस्यैव कल्पस्येहाप्यनुष्ठानार्थमिति। येषां कलापसन्नहने एकधा सन्नहनेऽपि मन्त्रो भवति न तु तेषां चोद्यम्। एकधा सन्नहन एव प्रकृतौ मन्त्रः। त्रेधा सन्नहन एव दृष्टश्चोद्यः। दोहस्य प्रकृतौ नियतानुष्ठानाभावात्तत्रानुष्ठितपक्षाविशेषप्राप्त्यर्थं पूर्ववद्वचनं पक्षे निरर्थकं स्यात्। अतो न त्वेष परमार्थ उभयत्र मन्त्र इति। एकधा पुनस्सन्नह्यति पूर्ववदित्येवान्वयः।

(सू) [2]वैश्वदेव्यास्सायं दोहं दोहयति ॥१६॥

॥१६॥१८१७॥

---

प्रथमा खण्डिका

[आमिक्षाविधौ सांनाय्यातिदेशः, तत्र मन्त्रोहप्रकारः उपदेशपक्षश्च]

(भा) वैश्वदेव्यास्सायं दोहं दोहयति सान्नाय्यवत् तद्विकारत्वात्। "विश्वेभ्यो देवेभ्यो हविरिन्द्रियम्, विश्वेभ्यो देवेभ्यो हव्यम्,

---

[1] च युक्तत्वात्—घ. [2] रुद्रदत्तस्य तु पूर्ववदितिपदं न पूर्वसूत्रसंबद्धमिति मतम्। पूर्ववत्—सान्नाय्यवत्। तत्र च यवाग्वा सायं सायं होमः। 'इह वो विश्वे देवा रमयन्तु गाव' इत्यादयो मन्त्रविकाराः (रु).

विश्वेभ्यो देवेभ्यो दधि, विश्वेभ्यो देवेभ्यो हविः कृण्वन्त" इत्यूह [1]उपदेशेन ।

[उपवेषकरणमन्त्रभाष्यसूचितोपदेशपक्षतदितरपक्षयोर्विवरणम् ]

(वृ) **उपदेशेन**—उपवेषकरणमन्त्रे 'इन्द्राय हविः कृण्वन्तः शिवश्शग्म' इति देवतासम्बद्धहविःकरणनिर्देशात् समवेताभिधानमित्युपदेशः। स्वमते तु उपवेषप्रकाशकत्वात् कृण्वन्त इति वर्तमानापदेशकतयाऽनुवादकत्वात् न समवेताभिधानमिति ।

**(सू) श्वोभूते पात्रसंसादनकाले पालाशं वाजिन-**
**[2]पात्रं प्रयुनक्ति स्रुचं वा ॥ १ ॥ १७ ॥**
**॥ १८१८ ॥**

[वाजिनपात्रस्य जुहूधर्मकत्वनिषेधः]

(भा) प्रकृतिवदारण्याशनान्तं कृत्वा श्वोभूते पात्रसंसादनकाले पृषदाज्यधानी द्वितीयोपभृत् द्वे आज्यस्थाल्यौ प्रातर्दोहपात्रान्ते पालाशं वाजिनपात्रम् । न चास्य जुहूधर्माः । इहाबन्धनात्, सूत्रकारेण पालाशग्रहणाच्च । अन्यत्र तु [3]सर्वं सम्बध्नाति । [4]शेषत्वाद्वाजिनस्याप्रयोजकत्वात् ।

[वाजिनपात्रतदितरपात्राणामजुहूजुहूधर्मकत्वे मानम् ]

(वृ) **न चास्य—णाच्च**—पालाशं वाजिनपात्रमिति जुहूधर्मकपक्षे पालाशत्वप्राप्तेः पालाशग्रहणमनर्थकम् ।

**अन्यत्र—ध्नाति**—प्रचरण्यादिषु 'तस्या जुहूवत्कल्पः' [5]इत्यादि ।

---

1 उपदेशो न ?—ख. ग. घ. च. ज. ङ. उपदेशः—ङ. उपदेशेनोपवेषोऽपि—छ. 2 पात्रं—चमसम् । चमसेन जुहोति स्रुचा वेत्यनुवादात् । कंसं चमसं वेति तु कल्पान्तरकाराः । न च तयोर्जुहूधर्माः । अवचनात् । पालाशवचनाच्च । तेन प्रातर्दोहपात्रैस्सह प्रयोगः (रु). 3 सर्वत्र बन्धनातिशेषत्वाद्वाजि—क. सर्वत्र बध्नाति—ख. ग. च. ज. ञ. सर्वं बध्नाति—घ. 4 शेषभूतत्वाद्वाजि—ज. 5 इत्यादिषु इत्यादि (च)—छ.

[1]शेषत्वा–कत्वात्—न जुहूधर्मप्राप्तिः। स्रुचं वेति पालाशीम्।

(सू) निर्वपणकाल आग्नेयमष्टाकपालमिति [2] यथासमाम्नातमष्टौ हवींषि निर्वपति ॥२॥१८॥ ॥१८१९॥

[वैश्वदेवे हविस्सङ्ख्या]

(भा) यथासमाम्नातं राजसूये तेनैव पाठक्रमेण अष्टावेव हवींषि। यद्यपि द्वयोः पात्रयोरामिक्षोद्ध्रियते; तथाऽप्येकं हविरामिक्षा।

[हविषो देवतासम्बन्धविधायकत्व एव सूत्रतात्पर्यं, न हविर्ग्रहणरूपनिर्वापस्य विधौ]

(वृ) यथास–णेति—यद्यप्यामिक्षाधर्मस्य [3]पूर्वं प्राप्तिः, तथाऽपि पाठक्रमेणैव यागः। नन्वत्र निर्वापो विधीयते, तत्रामिक्षायाः कः प्रसङ्गः? उच्यते—न निर्वापविधिः, किंतु यागश्चोद्यते, अष्टौ हवींषि निर्वपतीति आमिक्षासहितानां वचनात्। निर्वापशब्दश्चोत्पत्तिवाक्यगतो यागपरः, न हविर्ग्रहणमात्रपरः। सौर्यं चरुं निर्वपेदित्यादिवत् नैतदुत्पत्तिवाक्यम्। उत्पन्नानां [4]कर्मणामत्र निर्वापश्चोद्यते निर्वपण[5]काल इति चेन्न, अत्र निर्वापो न विधेयः, चोदकप्राप्तत्वात्। अग्न्यादीनामष्टानां देवतानमप्राप्तौ हविस्संबन्धो विधीयते। निर्वापप्रभृत्येव विशेषधर्म[6]प्रयुक्तेः निर्वपणकाल इति वचनमिति।

अष्टा–र्वींष—यथा समाम्नातमिति सिद्धेऽष्टौ हवींषीति निर्देशात्।

---

[1] किंच शेष–घ. छ. [2] राजसूयिकान्याग्नेयादीनि द्यावापृथिव्यान्तानि हवींषि समाम्नातानि क्रमेण निर्वपति (रु). [3] पूर्वप्राप्तिः–घ. [4] कर्मणां यत्र–छ. [5] काल इति वचनादिति अष्टावेव हवींषि?–घ. [6] प्रसक्तेः–छ.

(सू.) तेषां पौष्णान्तानि पञ्च [1]सञ्चराणि ॥ ३ ॥ ॥ १९ ॥ १८२० ॥

[सञ्चरनामनिर्वचनम्]

(भा) सञ्चरन्ति पर्वचतुष्टयमिति पञ्च सञ्चराणि ।

(सू.) [2]पिष्टानां पौष्णं श्रपयति ॥ ४ ॥ २० ॥ १८२१ ॥

[निर्वापाधिवापसंवापप्रविभागादिकं, तत्र क्रमो मन्त्राश्च]

(भा) [3]पिष्टानां तण्डुलानां पौष्णश्चरुस्सर्वत्र अदन्तकत्वहेत्वाविशेषात् । अग्नये जुष्टं निर्वपामीति सोमाय जुष्टमित्यादि [4]समानम् । सवित्रे सरस्वत्यै पूष्णे मरुद्भयः द्यावापृथिवीभ्यां अग्ने हव्यं रक्षस्वेति समानम् । [5]सोम सवितः सरस्वति पूषन् मरुतो हव्यं रक्षध्वं द्यावापृथिवी हव्यं रक्षेथाम् । तण्डुलप्रक्षालननिनयने [6]कृते यथाभागं [7]व्यावर्तेथामिति चरुपुरोडाशीयानां विभागः । व्यावर्तेथामित्युपदेशः । यत्र द्वेधा व्यवस्थानं पुरोडाशार्थानां अभिमर्शनम् । इदमग्नेः सवितुः पूष्णो मरुतां द्यावापृथिव्योः [8]इति पुरोडाशीयान् । इदं सोमस्य सरस्वत्या इति [9]चर्वर्थानाम् । ततः [10]कृष्णाजिनादि अग्नये जुष्टमधिवपामि सवित्रे पूष्णे

---

[1] सञ्चरन्ति पर्वान्तराण्यपीति सञ्चराणि पर्वचतुष्टयसाधारणानीति यावत् । यथा तत्र तत्र समाम्नातम्—एतद्ब्राह्मणान्येव पञ्च हवींषीति (रु).
[2] पिष्टैस्तण्डुलैस्तत्र चरुपुरोडाशगणन्यायेन प्रागधिवपनात् पौष्णार्थानामपि पुरोडाशीयैस्सह विभागः, न चरव्यैः पेष्टव्यत्वसामान्यात् । उभयोश्च राश्योर्यथाभागं व्यावर्तध्वमिति विभज्य देवतोपदेशनं बहुत्वाद्विभाज्यानाम् । ततः पात्र्यां पिष्टेषु समाप्तेषु प्रणीताभिस्संयुतेषु च पौष्णार्थानां पूर्ववद्विभागः । आहतुश्च भरद्वाजसत्याषाढौ । ततश्चाधिश्रयणकाले चरुवद्यजुरुत्पूतास्वप्सु पौष्णमोप्य श्रपयति कपालोपधानकाले भृगूणामाङ्गिरसां तपसा तप्यस्वेत्यूहेनैककपालेऽङ्गारानध्यूह्य प्रातर्दोहः (रु).
[3] पिष्टानां पौष्णश्चरुः सर्वत्र अदन्तकत्वात्—क. ङ. [4] समानं सर्वत्र । सवित्रे.
[5] सोममरुदादिसर्वं पदं हव्यपदानुषक्तं पठ्यते—ख. ग. च. [6] क्रियते.
[7] व्यावर्तध्वमिति.. [8] इदं—ज—पुस्तके न दृश्यते. [9] चर्वर्थयोः [10] कृष्णाजिनादाना—घ. कृष्णाजिनादानादि—छ.

जुष्टमधिवपामि मरुद्भ्यो जुष्टमधिवपामि द्यावापृथवीभ्यां [1]जुष्टमधिवपामि धान्यमसि धिनुहि देवानित्यधिवापः । एवं संवापः । जुष्टादनन्तरं संवपामीति क्षेपः अग्नये जुष्टं संवपामीति । एवमुत्तरत्रापि । उपदेशोऽधिवापसंवापयोः [2]समासेन । अग्नये सवित्र इति जुष्टादि समानम् । तण्डुलानामुत्पवने कृते पौष्णार्थ[3]चरोः पुनरुपदेशेन विभागः । यथाभागं व्यावर्तेथामिति । इदमग्नेस्सवितुर्मरुतां द्यावापृथिव्योरिदं पूष्णः पिष्टानामेव धर्मोऽसीत्यधि[4] श्रयण[5]मिति[6]। यथा तु न्यायः चरोरिवास्य पाकः पुरोडाशवत्पिण्डं कृत्वा [7] कपालेऽधिश्रयणमन्त्रेण स्थाल्यां कपालधर्मिण्यां क्षिप्यते। व्यावर्तध्वमित्याग्ने[8]यमवच्छिद्य व्यावर्तेथामिति चरू। बहुवचनेन [9]द्वाववच्छिद्य पुरोडाशा-[10]वुत्तमौ द्विवचनेन विभजति इदं सोमस्येदं सरस्वत्या इति चर्वोः [11] कृत्वा इदं मरुतामिदं द्यावापृथिव्योरित्युत्तमयोः । एवं क्रमेणाधिश्रित्य स्वकाले कृते [12]प्रातर्दोहे मारुतमधिश्रित्य ।

[चरुपदार्थः]

(वृ) पिष्टानां–पादिति—पिष्टानां तण्डुलानामिति चूर्णीकृततण्डुलानां विकारश्चरुः ।

[भाष्ये शेषपूरणम्]

अग्नये जुष्टं नि-भ्याम्—इति निर्वापः ।

[विभागे हेतुप्रदर्शनम्]

तण्डुलप्र-विभागः—हविर्बहुत्वात् ।

व्यावर्तेथामित्युपदेशः-र्थानाम्—द्रव्यस्य द्वेधाऽवस्थितत्वात् ।

---

[1]जुष्टमधिवपामीत्याधिवापः-ज. [2] समानाग्नये ?-क. [3] चरोरुपदेशो न विभागः-ख. ग. [4] धिश्रपण ?-क. [5] कालेऽधिश्रयण-ख. ग. [6] उपदेशः स्थाल्यां पौष्णं चर्वर्थानाम्-ख. ग. [7] कालेऽधि-ख. ज. [8] यं वच्छिद्य-क. [9] द्वावपच्छिद्य-ख. द्वावच्छिद्य-ज. [10] वन्तिमौ-क. [11] र्वोः इदं म-क. [12] दोहे सायंदो-क.

[अभिमर्शनमन्त्रोच्चारणक्रमः]

संहितयोच्चारणं न विरम्य विरम्य।

[कृष्णाजिनदानकालः, अधिवापसंवापयोर्मन्त्रश्च]

ततः कृष्णाजि-समानम्—पुरोडाशीयानुक्रमणान्ते। समानं अग्नये जुष्टमित्यादि, अधिवापसंवापयोः मन्त्रब्राह्मणयोर्जुष्टशब्दस्यापाठात्। सूत्रकारेण सकृज्जुष्टशब्दस्योक्तत्वात्। सर्वदेवतानिर्देशं कृत्वाऽन्ते जुष्टादि सकृत्।

[भाष्ये शेषपूरणम्]

तण्डुलानामु-विभागः—कृतः।

[व्यावर्तेथामिति द्विवचने हेतुः, तत्र पाठान्तरं च]

यथाभा-थामिति—द्वेधा विभागद्द्विवचनम्। व्यावर्तध्वमिति वा।

[भाष्ये शेषपूरणम्]

इदमग्ने-ष्णः—इत्यभिमर्शनम्।

पिष्टाना-मिति—अधिश्रयणकालेऽधिश्रयणमित्युपदेशः। स्थाल्यां-पौष्णचर्वर्थानाम्।

[संवपनादयोऽपि पिण्डीकरणसंस्काराः, प्रणीतासंसर्जनादयो न पिष्टधर्मा इत्युपदेशपक्षश्च]

यथा तु न्या-क्षिप्यते—यथासम्भवं, प्राकृतधर्मानुग्रहाय संवपनादि पिण्डीकरणान्तं पिण्डसंस्कारं कृत्वा। उपदेशस्तु पिष्टानां पौष्णं श्रपयतीति वचनात् न प्रणीता[1]संमार्जनादयः [2]पिष्टधर्मा इति।

व्यावर्तध्व - चरू—आग्नेयादिपुरोडाशचतुष्टयं पौष्णार्थात् पिण्डात् बहुवचनेनाग्नेयमपच्छिद्य तदनन्तरभावित्वात् सौम्यचरोश्चरुद्वयार्थतण्डुलानां द्विवचनेन विभागः।

---

[1] संसर्जनादिपिष्ट—ख. ग. [2] पिण्डधर्मा—छ.

**बहुवचनेन - विभजति** — द्वौ–पुरोडाशौ सावित्रपौष्णौ । उत्तमौ–मारुतद्यावापृथिव्यौ ।

**इदं सोम–मयोः** —इदं पुरोडाशयोरभिमर्शनम् । प्रागधिवपनाद्विभागे हीदंशब्द[1]स्तन्त्रम् अत्र त्विदमग्नेरित्याग्नेयं इदमग्नीषोमयोरित्यग्नीषोमीयमिति भेदेन पाठादिदंशब्दभेदः ।

**(सू.) तप्ते प्रातर्दोहे सायंदोहमानयति[2] ॥५॥२१॥ ॥१८२२॥**

[आमिक्षाविधानक्रमः, तत्संस्कारे केचित्पुरोडाशधर्माः, केषांचिदर्थलोपान्निवृत्तिश्च]

**(भा)** एवं क्रमेणाधिश्रित्य स्वकाले कृते प्रातर्दोहे मारुतमधिश्रित्य तप्ते प्रातर्दोहे सायंदो[3]हानयनम् । पश्चादेक[4]कपालस्याधिश्रयणम् । पुरोडाशमधिश्रित्यामिक्षावत्पयस्यां करोतीति निर्देशात् । सर्व[5]पुरोडाशधर्माश्चरुषु । अर्थलुप्तस्य निवृत्तिः । प्रथनश्लक्ष्णीकरणपरितपनाभिज्वलनाध्यूहनादेर्निवृत्तिः । [6]चरुगतासु यजुरुत्पूतास्वधिश्रयणं पुरोडाशवत् । यावदुक्ताः पुरोडाशधर्मा इत्युपदेशः ॥

[भाष्यगतस्वकालपदार्थः, उपदेशपक्षश्च]

**(वृ) एवंक्रमेण–नयनम्**—स्वकाले उपधाय कपालानिति न पुरोडाशाधिश्रयणोत्तरकाले ।

**पश्चा–णम्**—अधिश्रयणकाले[7] प्रातर्दोहे सायंदोहानयनम् । सर्वपुरोडाशानामधिश्रयणो[8]त्तरकालमित्युपदेशः ।

---

[1] स्तन्त्रतः–ख. ग. [2] मारुताधिश्रयणानन्तरमानयति पुरोडाशमधिश्रित्यामिक्षावत्पयस्यां करोतीति लिङ्गात्, व्यक्तोक्तत्वाच्च बोधायनेन (रु). [3] हमानयति–ख. ग. [4] कपालस्य । पुरोडाश–ङ. [5] सर्वेषु पु–ङ. च. [6] चरुतन्त्रेषु–ज. [7] काले तप्ते प्रा–छ. [8] त्तरमित्यु–छ.

पुरोडाश-निर्देशात्–[1] सर्वत्र पुरोडाशाधिश्रयणानन्तरं सायंदोहानयने लिङ्गमिति ।

[भाष्यस्थादिशब्दग्राह्यसङ्ग्रहः]

सर्वे पुरो-निवृत्तिः—आदिशब्देनाप्यलेपनिनयनोद्धृत्योद्वासनादेर्ग्रहणम् ।

[भाष्यगतचरुशब्दार्थः]

चरु-वत्– चरुशब्दः स्थालीवचनः । स्थालीगतासु यजुरुत्पूतास्वप्सु तण्डुलानां मन्त्रेणाधिश्रयणम् ।

[पुरोडाशधर्मान्तरनिवृत्तौ कारणम्]

यावदु-देशः—उत्पवनादीनां केषां चित्पुरोडाशधर्माणामनुक्रमणादितरेषां निवृत्तिरिति ।

(सू) [2]यत्संवर्तते साऽऽमिक्षा । यदन्यत्तद्वा जिनम् ॥

॥ ६ ॥ २२ ॥ १८२३ ॥

[आमिक्षावाजिनयोः स्वरूपम्]

(भा) कठिन[3]भावेन यत्संवर्तते साऽऽमिक्षाद्रव्यम् । यदन्यत्तद्वाजिनम् ।

(सू) [4]पशुवत्संप्रैषः । तथाऽऽज्यानि ॥ ७ ॥ २३ ॥

॥ १८२४ ॥

[संप्रैषे उपदेशपक्षः]

(भा) संप्रैषकाले प्राप्ते पशुवन्नित्यस्संप्रैष इत्युपदेशः ।

---

[1] अस्यार्थः — इन्द्राय पुरोडाशं मित्रावरुणाभ्यां पयस्यामिति पाठक्रमादेव पुरोडाशाधिश्रयणानन्तर्ये पयस्यायास्सिद्धे पुनः पुरोडाशमाधिश्रित्यामिक्षावत्पयस्यां करोतीति वचनं सर्वपुरोडाशाधिश्रयणानन्तरं सायंदोहानयने लिङ्गमिति-छ. [2] तत्र-यद्घनीभूतं संपद्यते तदामिक्षाहविः, अवशिष्टं तु वजिनम् । तच्चोभयमपि तथैवावस्थाय द्यावापृथिव्याधिश्रयणादि करोति (रु). [3] भागेन–च. [4] पशुवदाज्येन दध्नोदेहीति विकृतस्संप्रैषः । तथा आज्यानि चतुर्गृहीतानि भवन्ति पृषदाज्यवन्ति च (रु).

[पशुवत्संप्रैषपक्षोपपादनं, भाष्यकृतपक्षश्च]

(वृ) पशुवन्नित्यस्संप्रैषः—पृषदाज्यस्य नित्यत्वात् पशुवदाज्येन दध्नोदेहीति संप्रैषे प्राप्ते पशुवच्चतुर्गृहितान्याज्यनीति । संप्रैष इति वचनं संप्रैषनियमार्थं अपि वा न संप्रैषं ब्रूयादित्येतन्न भवति । स्वमते तु दर्शपूर्णमासवद्विकल्प एव । [1] पशुवद्ग्रहणस्य तथाऽऽज्यानीतिवत् प्राप्तस्मरणार्थत्वात् । आज्यान्यपि पशुवत्—पशुवदेव चतुर्गृहीतानि ॥

(सू) [2] पृषदाज्ये विकारः । महीनां पयोऽसीति पृषदाज्यधान्यां द्विराज्यं गृह्णाति द्विर्दधि सकृदाज्यम् ॥८॥२४॥१८२५॥

[आज्यग्रहणे मन्त्रप्रकारादिः, उपदेशतदितरपक्षौ च]

(भा) महीनामित्यनेनैव द्विराज्यं गृह्यते, दधि द्विः, सकृदा[3]ज्यम् । पञ्चकृत्वो महीनां पयोऽसीति । त्रिरुपदेशः । केचिन्नित्यं दधिसंस्कारमाहुः । आग्नेयसावित्रसारस्वतपौष्णा[4]नामभिमन्त्रणाभिघारणाद्याग्नेयवत् । तूष्णीमितरेषाम् । प्रातर्दोहवदामिक्षा[5]याः ।

[भाष्योक्तोपदेशतादितरपक्षयोर्हेतुप्रदर्शनम्]

(वृ) महीनामि–पदेशः—आज्यसंस्कारत्वाद्दध्नोऽप्रधानत्वात् प्रधानभूताज्यग्रहणे मन्त्र इति त्रिरेव मन्त्रः ।

केचिन्नित्यम्—अत्र नित्यो दधिसंस्कारः, पशौ नैतस्य दध्न इत्येतस्येति विशेषणोपादानात् ।

---

[1] पशुवदिति वचनस्य–घ. [2] दध्याज्ये पृथगेव गृह्णाति, न तु दधन्याज्यमानीय । तथा महीनां पयोऽसीति पुनर्वचनात् ज्योतिरसीति वचनं निवर्तते । सादनकाले तु दधिस्थाली नासाद्या, कार्याभावात् । अभिघारणकाले सौम्यवर्जं पौष्णान्तानामाग्नेयविकारत्वात् मन्त्रेणाभिघारणम्, तूष्णीमितरेषां प्रातर्दोहवदामिक्षायाः (र). [3] ज्यमिति पञ्च–क. च. ञ. [4] नां मन्त्रेणाभिघारणाद्या–ज. [5] क्षायाम्–क.

(सू) [1]उद्वासनकाल आमिक्षां संहृत्य तयोः पात्रयोरुद्धृत्य वाजिनैकदेशेनोपसिञ्चति ॥ ९॥ ॥ २५ ॥ १८२६ ॥

[उद्वासनेतिकर्तव्यता तत्र केषांचित्पक्षश्च]

(भा) मारुतमुद्वास्यामिक्षां संहृत्य वाजिनं कृत्वा तामेव द्वयोः पात्रयोः कृत्वा वाजिनेन सिञ्चति, न ह्यनुद्वासितायाः कार्त्स्न्येनोद्धरणं शक्यते कर्तुम् । यथैव मेषयोर्लोमशत्वम् । केचिदनुद्वास्योद्धृत्यैकस्मिन् पात्र आमिक्षामेकस्मिन् पात्रे वाजिनम् । पश्चादेककपालस्योद्वासनम्। [2]ग्राहकयुक्तैका [3]पात्री ।

[भाष्योक्तपक्षद्वयाशयकथनम्]

(वृ) मारुतमु–ञ्चति—उद्वास्योद्धरणाद्यामिक्षायाः ।

न ह्यनु–शत्वम्—उद्वासितयोरेव मेष[4]योर्यथा लोमशकरणम्, इतरथा अशक्यत्वात्, तथाऽऽमिक्षाया अपि ।

केचिदनुद्वा–जिनम्—उद्वासनकाल आमिक्षामित्युक्तत्वात् । उद्वासनकाले प्राप्ते चरोरुद्धरणादिविधानात् तदा हस्ता[5]दिना कथंचिदुद्धृत्यामिक्षां पात्रयोर्निदध्यात् ।

पश्चादेक–पात्री—पौष्णद्यावा[6]पृथिव्ययोः पृथग्धारणार्थं द्यावापृथिव्यस्याभिपूरणादिधर्मदर्शनात ॥

(सू) अलङ्करणकाल आज्येनैककपालमभिपूरयत्याविःपृष्ठं वा कृत्वा व्याहृतीभिर्हवींष्यासादयति ॥ १० ॥ २६ ॥ १८२७ ॥

---

1 उद्वासनकाले मारुतोद्वासनानन्तरमामिक्षां सान्नाय्यवदुद्वास्य संनहनाद्युपसेचनान्तं कृत्वा ततो द्यावापृथिव्यमुद्वासयति (रु). 2 ग्राहकद्वययुक्तैका-ङ. ग्राहकैरेका–क. ग्रहकैरेकपा–च. ग्राहकैर्युक्ता एका–घ. 3 पात्रे-ख. ग. 4 योर्लोमशत्वक–छ. 5 दिना वा कथं–छ. 6 पृथिव्योः–ख. ग.

[अलंकरणकालकर्तव्यविधिः]

(भा) आमिक्षावाजिनवर्जमलङ्कृत्यालङ्करणमन्त्रेण पूरयत्येककपालम् । भूर्भुवस्सुव[1]रित्यासादनम् । युगपत्सम्भवे त्वावृत्तिः ।

(वृ) अलङ्कृत्य–पालम्—अलङ्करणमन्त्रेण मारुतमलङ्कृत्यैककपालमिपूरणम् । अलङ्करणकार्यत्वादभिपूरणस्य ।

भूर्भुव–त्वावृत्तिः—समन्त्रस्यासादनस्य ।

(सू) [2]उत्करे वाजिनम् ॥ ११ ॥ २७ ॥ १८२८ ॥

[वाजिनासादनस्यामन्त्रकत्वं, उत्करे वेदिधर्माभावः, तत्र केषांचित्पक्षः उपदेशपक्षश्च]

(भा) न व्याहृतिभिर्वाजिनम् । विकृतौ धर्म उच्यमानः प्रधानार्थो भवतीति । न च प्राकृतो मन्त्रः, अप्रयोजकत्वात् । न चोत्करे वेदिधर्माः, एतस्मादेव । सूत्रकारमतिश्च अष्टौ हवींषि निर्वपतीति अष्टावेव हविर्ग्रहणेन गृह्यन्त इति । केचित् प्रियेणेत्यासादयन्ति । कुर्वन्ति च वेदिधर्मानुत्करे, सान्नाय्यविकारत्वात् । उपदेशस्तु व्याहृतिभिर्वाजिनासादनम्, उत्करे न वेदिधर्माः ।

(वृ) न व्याहृ–जिनम्—आसाद[3]यति ।

न च प्रा–कत्वात्—वाजिनस्य ।

न चोत्क–देव—अप्रधानत्वादप्रयोजकत्वाच्च ।

[उत्करे वेदिधर्माभावे हेतुकथनम्]

सूत्रकार–ह्यन्त इति—वाजिनस्य हविर्ग्रहणेनाग्रहणाद्धविरासादनार्थं वेदिधर्मा उत्करे न कर्तव्याः ।

---

[1] रित्युत्सादनम् । युगपदसम्भवे त्वावृत्तिः–छ. [2] वाजिनं तु तूष्णीमासादयति न व्याहृतिभिः, न प्रियेणेति । प्रधानहविर्मन्त्रप्रत्याम्नायत्वादुभयोर्मन्त्रयोः, अप्रधानत्वाच्च वाजिनस्य । यथोक्तमष्टौ हवींषि निर्वपतीति (रु). [3] यन्ति–ख. ग.

[केषांचित्पक्षे उत्करस्य सवेदिधर्मत्वे वाजिनासादनस्य समन्त्रकत्वे च हेतुकथनं, तस्यायुक्तत्वं च]

केचित्—रत्वात्—दधिपयस्साध्यत्वाद्वाजिनस्य सान्नाय्यधर्मप्राप्तेर्वेदिधर्मा उत्करे कर्तव्याः । आसादनं च प्रियेणेति । दर्शपूर्णमासौ चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवींषीति प्रधानहविरर्थत्वाद्व्याहृत्यासादनस्य प्रियेणेत्यासादनम् । नैष सम्यक्पक्षः, पूर्वोक्तयुक्तिविरोधात् ।

[भाष्योक्तोपदेशपक्षाशयः]

उपदे – धर्माः—व्याहृतीभिर्हवींष्यासादयतीत्युक्ते हविष्ट्वेन वाजिनस्याप्यासादने प्राप्ते वैयर्थ्य उत्करविधानाद्वेदिर्निवर्तते, न मन्त्रो निवर्तते, वेदिशब्दस्य गार्हपत्यादिशब्दवत्संस्कारपरत्वात् । यत्र वेदिधर्माः क्रियन्ते सा वेदिरेव स्यात्, उत्करत्वं न स्यात्, तस्मान्न वेदिधर्मा इति ।

(सू.) [1] पञ्चहोत्रा यजमानः सर्वाणि हवींष्यासन्नान्यभिमृशति ॥ १२ ॥ २८ ॥ १८२९ ॥

[हविरभिमर्शनविधिः, तत्रोपदेशपक्षश्च]

(भा) सर्वाभिमर्शनप्रत्याम्नायः पञ्चहोता । साधारणवैशेषिकाभिमर्शनं कृत्वाऽधिकः पञ्चहोतेत्युपदेशः । आग्नेयवच्च सावित्रस्य । दध्नः प्रातर्दोहविकाराभ्यां मन्त्राभ्यामामिक्षाभिम[2]र्शनम् ।

[भाष्योक्तहविरभिमर्शने हेतुप्रदर्शनम्]

(वृ) सर्वाभि–होता—अमावास्यातन्त्रत्वात् पञ्चहोतृप्राप्तावपि पुनः पञ्चहोतृविधानात्सर्वप्रत्याम्नायः ।

---

[1] आमावास्यतन्त्रत्वादेव सिद्धे पञ्चहोतुः पुनरुपादानमितरमन्त्रपरिसंख्यानार्थम् । आगन्तुकोऽयमधिकः प्राकृतेभ्य इत्यन्ये । तदा त्वैन्द्राग्नवदभिमर्शनं मारुतस्य । भरद्वाजेन चोक्तम् । सान्नाय्यमन्त्रयोश्चामिक्षायामूहो वपया व्याख्यातः । तस्याश्चोभयदोहविकारत्वं वरुणप्रघासेषु वक्ष्यति (रु). [2] र्शः—च. स.

**साधारण-देशः**—यावत्सम्भवतो बाधो न स्यादिति ।

**आग्नेयवच्च सावित्रस्य**—अभिमर्शनम् ।

**दध्नः प्रात-मर्शनम्**—विकाराभ्यामिति विकारवद्भ्यां मन्त्राभ्याम् । सान्नाय्यविकारत्वादामि[1]क्षायाः दधिपयसोरभिमर्शनार्थौ ताभ्यां विकृताभ्याम् ।

अथवा [2]विकारवद्भ्यामिति पाठः । सहाभिमर्शनमामिक्षाया इति सायं दोहस्य पयस्संस्कारार्थत्वात्पयोविकार आमिक्षेति न्यायः । यदाहु-र्मीमांसकाः—

पय एव घनीभूतमामिक्षेत्यभिधीयते ।

इति ॥

**[3]पशुवन्निर्मन्थ्यः सामिधेन्यश्च ॥ १३ ॥ २९ ॥**

॥ १८३० ॥

[निर्मन्थ्यसामिधेन्यादिकं पशुवत् ]

(भा) [4]लौकिकमधिमन्थ[5]नशकलं स्रुवेणाभि[6]होमान्तम् । अग्निमन्थनं कृत्वा वेद[7]निधानम् । सप्तदशसामिधेन्यः । त्वं वरुण इति सर्वेषां परिधानीया । दुरो अग्न आज्यस्य वियन्तु, उषासा नक्ताऽग्न आज्यस्य वीताम्, दैव्या होताराऽग्न आज्यस्य वीताम्, तिस्रो देवीराग्न आज्यस्य वियान्त्विति ।

---

[1] क्षाया यौ दधि—घ. [2] विकाराभ्यामिति—ग. [3] हवींष्यासाद्य पशुवन्निर्मन्थ्यः। सामिधेन्यश्च सप्तदश (ङ). [4] 'पूर्वसंकल्पितस्य शकलस्य मन्थनार्थस्य निधानम्' इति पशौ धूर्तस्वामिभाष्यम्। अत्रापि 'पशुवत्' इत्येव सूत्रम् । अथापि अधिमन्थनशकलमादाय बर्हिषि निदधाति वृषणौ स्थ इति प्राञ्चौ दर्भौ शकले निदधाति' इति सत्याषाढः । अतः तस्य संस्कार इष्टस्तस्येति तद्व्यावर्तनाय भाष्यकारः तस्य लौकिकत्वमाहेति भातीत्यादि विमर्शनीयम् । [5] न्थनं शकलम्—च. ञ. [6] होमान्तं कृत्वा—क. ङ. च. छ. ज. [7] निधानादि—ज. (वेदं निधायेति सत्याषाढसूत्रे दृश्यते).

(वृ) सप्तदश सामिधेन्यः—पशौ तस्य पठितत्वात्, पशुवत् सामिधेनीविधानाच्च ।

दुरो—वियन्त्विति—पाशुक्यो याज्याः ।

नव प्रयाजाः ॥ १४ ॥ ३० ॥ १८३१ ॥

चतुर्थोत्तमावन्तरेण पाशुकाश्चत्वारो दुरःप्रभृतयः [1]प्रैषप्रतीकयाज्याः ॥ १५ ॥ ३१ ॥ १८३२ ॥

(भा) प्रतीकं मुखम् । [2]प्रैषमुख्या याज्याः ॥

पशुवत्समानयनम् [3] ॥ १६ ॥ ३२ ॥ १८३३ ॥

[पशुवत्समानयनं, तत्र मीमांसकपक्षः हविरष्टकानुमन्त्रणप्रकारश्च]

(भा) पशुवत्समानयनं चतुर्थाष्टमयोः । पशुवच्चानुम[4]न्त्रणं स्यात् । अयं [5]सूत्रकाराभिप्राय [6]उपदेशश्च । न्यायस्तु—चतुर्णामागन्तुकत्वात् द्वौ

---

श्रौतपदार्थनिर्वचने च पशुबन्धे चातुर्मास्ये च निर्मन्थनस्थले शकलस्य लौकिकत्वमुच्यते बोधायनानुसारिणाऽपि । मुद्रिते पशुप्रश्ने (प्रयोगे) 'अधिमन्थनशकलं निधाय, इति.

तालवृन्तनिवासिकृतदीपिकायां तु-पशुबन्धे पशोः उपाकरणे 'अग्नेर्जनित्रमसीति पूर्वनिहितं शकलं निदधाति' इत्युच्यते, न तु तत्र लौकिकपदं प्रयुज्यते ॥

प्रयोगग्रन्थेष्वपि तस्य लौकिकत्वं नोक्तम् ।

अत्रैव प्रकरणे 'निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति' इति बोधायनः । पशौ च 'अधिमन्थनशकलं निदधाति' इति स एव । एवं सत्याषाढोऽपि ।

[1] प्रैषाणां प्रतीका आदयो याज्या येषां ते तथोक्ताः, तद्यथा दुरो अग्न आज्यस्य वियन्त्वित्याद्यनुमन्त्रणाश्चैषां पशुवदेव द्रष्टव्याः (रु).

[2] प्रैषवमुखा योज्याः ?–च.

,, याज्याः–क. च.

,, खादाज्यादिः–ञ.

,, खं याज्याः–ग.

[3] चतुर्थाष्टमयोरित्यर्थः (रु). [4] मन्त्रणं स्याचायं सू–क. मन्त्रणं स्याद्वाऽयं सू–ग. मन्त्रणं सोऽयं सू–ञ. [5] सूत्रकृतोऽभि–च. [6] उपदेशस्तु न्यायस्तु–क, उपदेशश्च । न्यायः–ज. उपदेशः, न्यायस्तु–ख. ग.

बर्हिर्विकारौ, द्वावुत्तमस्य, अतश्चतु[1]र्थसप्तमयोस्समानयनम्। अनुमन्त्रणं च यो यस्य [2]विकारस्तदर्थः पशौ यथा चतुर्थोत्तम[3]विकारादौ समानयनम्। एवमिहापि। सोमस्याहं देवयज्यया वृत्रहा भूयासम्, सवितुरहं देवयज्ययाऽन्नादो भूयसम्। मरुतामहं देवयज्ययेन्द्रियाव्यन्नादो [4] भूयासम्। पञ्चानां प्रत्यक्षाम्नातानि।

[भाष्योक्तानुमन्त्रणविधौ हेतुः]

(वृ) **पशौ चतु-मिहापि**—पशुवदिति न चतुर्थाष्टमयोस्समा[5]नयनार्थम्। अपि तु [6]तद्विकारादौ [7]न्याय्य इति।

**सोमस्या-सम्**—प्रकृतिदेवतात्वेन अग्नीषोमीयविकारत्वात्।

**सवितुरहं दे-भूयासमिति**—बहु[8]दैवतत्वादग्नीषोमीयविकारत्वेऽपि प्राप्ते अक्षरसंख्यासादृश्याद्व्य[9]वस्थायां द्व्यक्षरत्र्य[10]क्षरा ऐन्द्राग्नविकाराः, अग्निषोमीयस्य [11] चतुरक्षरत्वाच्च चतुरक्षरप्रभृतयोऽग्नीषोमीयविकाराः। अत इन्द्रियाव्यन्नादो भूयासमित्येव।

**पञ्चानां प्रत्यक्षाम्नातानि**—यद्यपि यथालिङ्गं वैकृतीरित्यत्र द्यावापृथिव्योरित्यादि चतुर्णामा[12]म्नातमन्त्रत्वम्, तथाऽप्याग्नेयस्य प्रकृतौ प्रत्यक्षपाठादूह्यताभावात् पञ्चानां प्रत्यक्षाम्नातानीत्युक्तम्। अत एव भाष्यकारः सोमस्याह[13]मित्याद्यनुक्रान्तवान्। अतः सरस्वत्या अहं देवयज्यया वाचमन्नाद्यमित्यादयः पठिता एवात्र प्रयोक्तव्याः।

---

1 र्थाष्टमयोः—ख. 2 विकारः, तदा त्वयमर्थः ख. ग. ज. 3 विकारौ समा ?—ज. विकारस्तदर्थः पशुवत्समानयनमित्यस्य पशौ चतु—ख. 4 न्नादः। पञ्चा—घ. 5 नयनार्थः—घ. 6 किं तु त—छ. 7 न्याय्ये इति—छ. न्याय इति—ग. 8 देवतात्वाद—छ. देवतत्वाद—घ. 9 वस्था। द्वय—घ. छ. 10 क्षर ऐ ?—ग. 11 स्यतु चतु—घ. 12 ग्नेयस्यापि—ख. ग. 13 मित्याद्यानुक्रामति—ख मित्यनुक्रामत्—घ.

(सू) [1]प्रचरणकाल उपांशु सावित्रेण प्रचर्य पूर्ववदेकक-पालेन प्रचरति ॥ १७ ॥ ३३ ॥ १८३४ ॥

[एककपालप्रचरणे विशेषाभिधानम् ]

(भा) [2]यद्यप्येककपालानां [3]वैश्वदेविकः प्रकृतिः आग्रयणे कर्मणि [4]तद्बद्धमिति । पूर्ववदेक [5]कपालेन[6] प्रचरतीत्युच्यते । उद्धृत्य बर्हिषदं कृत्वा इत्येवमाद्याप्रचरणात् । सवित्रे सवितः सवितारं सवितुः सवितेदं हविः, सरस्वत्यै सरस्वति सरस्वतीं सरस्वत्याः सरस्वतीदं हविः, पूष्णे पूषन् पूषणं पूष्णः [7]पूषेदं हविः, मरुद्भ्यः मरुतः मरुतां मरुत इदं हविरजुषन्त, विश्वेभ्यो देवेभ्यः विश्वान् देवान् विश्वेषां देवानां विश्वे देवा इदं हविः, रजुषन्त, द्यावापृथिवीभ्यां द्यावापृथिवी द्यावापृथिव्योः द्यावापृथिवी इदं [8]हविः, अजुषत अजुषेतां अजुषन्त अवीवृधत अवीवृधेतां [9]अवीवृधन्त, अक्रत अक्रातां अक्रत ।

(वृ) यद्यप्ये–तिः—ब्राह्मणे तत्र धर्मोपदेशात् ।
[10]आग्रयणे–मिति—तदङ्गजातं बद्धं सूत्रकारेण ।
पूर्ववदेक–रतीति—सूत्रकारेणोच्यमाने ।

---

1 तत्रामिक्षायास्सकृत्सकृदवदानम् । पात्रद्वयादेकस्माद्वा यागः । इतरस्माच्छेषकार्याणि, हविरेकत्वात् । केचित्तु पात्रद्वयाद्द्विर्द्विरवद्यन्ति द्वयोरुद्धरणस्यार्थवत्त्वाय । पूर्ववत्-- आग्रयणैककपालवत् । यद्यप्ययमेव प्रकृतिः सर्वेककपालानाम् ; तथाऽपि तत्रैव धर्माणां सूत्रकृता प्रथमोक्तेस्तदतिदेशः । हुतानुमन्त्रणं चाग्नीषोमीयवत्सौम्यस्य आग्नेयवत्सावित्रस्य ऐन्द्राग्नवन्मारुतस्य । प्रत्यक्षाम्नातास्त्वितरेषामनुमन्त्रणाः (रु).
2 यद्येककपालानां–क. ङ. ञ. 3 वैश्वदेवः प्र–ज. 4 तत्सिद्धमिति–ञ.
5 कपालेनेत्युच्यते–क. च. कपालेनेदं सरस्वत्यै प्रच–ञ. 6 प्रचरतीति–घ.
7 पूषन्निदं–ज. 8 हविरजुषेतां अवीवृधेतामहो ज्यायोऽक्रातां–क. ख. ग. ङ. च.
9 इदं रूपत्रयं–च. ङ. पुस्तकयोर्न दृश्यते. तथाऽपि—आग्रय–छ.

उद्धृत्य–रणात्—कर्तव्यम् ।[1]

(सू.) मधुश्च माधवश्चेति चतुर्भिर्मासनामभिरेककपालमभिजुहोति ॥ १८ ॥ ३४ ॥ १८३५ ॥

[मासनामभिरेककपालहोमः]

(भा) [2] उपर्येककपालस्य होमो मासनामभिः । ततो नारिष्टादि ।

(सू.) दाक्षिणाकाले प्रथमजं वत्सं ददाति मिथुनौ वा गावौ ॥ १९ ॥ ३५ ॥ १८३६ ॥

[सौत्रवत्सदानविधेः समातृकवत्साभिप्रायकत्वम्
दक्षिणाय अन्वाहार्यधर्मकत्वं च]

(भा) तस्मिन् संवत्सरे यो जातः पूर्वं सर्ववत्सेभ्यः स दीयते सह मात्रा, इतरथा हि म्रियेत वत्स इति, [3] न च दानोपकारस्स्यात् । वत्सस्य तु प्रतिग्रहणं [4] सवत्सचोदनासु । अन्वाहार्यधर्मो दक्षिणानां दर्शपूर्णमासविकाराणां [5] न तूपदेशः । मिथुनं—स्त्री पुमांश्च ।

(वृ) इतरथा–स्स्यात्—प्रतिगृहीतस्योपयोगार्थं प्रतिग्रह इति ।

[धेनुदाने सवत्सायाः प्रतिग्रहमन्त्रः, केवलवत्सदाने तु
मातृसहितवत्सदानेऽपि वत्समात्रविषयकः प्रतिग्रहमन्त्रश्च]

वत्सस्य प्र–नासु—दोहनिमित्तत्वाद्धेनुशब्दस्य वत्साभावे दोहासंभवात् धेनुदाने सवत्सायाः प्रतिग्रहमन्त्रः । केवलवत्सचोदनासु वत्सशब्दस्य वयोवस्थाविशेषवत्समात्रवचनतया तस्यैव दानम् । तत्प्राणरक्षणार्थं माता दीयते, न चोदनाऽत्रेति न मातुः प्रतिग्रहमन्त्रः ।

अन्वा–नाम्—वत्सादिदक्षिणानां प्रतिग्रहमन्त्रस्य प्रत्यक्षाम्नानात्तद्दानमिति प्रकारभेदाच्च तत्कार्यापत्त्यभावादन्वाहार्यधर्मा न भवन्ति ।

---

[1] सवित्रे अक्त—इति यथालिङ्गम्–छ. [2] यथाक्रमेणोपर्येक–ज. [3] न चादानुपकारस्स्यात्–ञ. [4] वत्सा–ख. ग. छ. [5] नेत्युपदेशः–छ.

(सू) पृषदाज्यं जुह्वामानीय पृषदाज्यधानीमुपभृतं कृत्वा तेन नवानूयाजान्यजति ॥ २० ॥ ३६ ॥ ॥ १८३७ ॥

षड्विंशी खण्डिका.

---

(सू) [1]अष्टावाद्याः पाशुकाः प्रैषवर्जम् ॥ १ ॥ ॥ ३७ ॥ १८३८ ॥

[नवस्वनूयाजेष्वादिमानामष्टानां पाशुकसमानता]

(भा) पाशुकाः पठिता याज्याः देवं बर्हिर्वसुवने वसुधेयस्य वे[2]त्विति [3]विना प्रैषैः प्रथमविकाराश्चत्वारः। एक उत्तमविकारः, [4]पशुवच्च सर्वम् ।

(वृ) एक उ--सर्वम्—प्रथमेनाद्यांश्चतुर इत्यादि ।

(वृ) चत्वारः—-[5]नराशंसविकाराश्चत्वारः ।

(सू) उत्तमेनोत्तमम् ॥ २ ॥ ३८ ॥ १८३९ ॥

[नवमानुयाजस्य प्राकृतसमानता]

(भा) उत्तमेन प्रकृतिपठितेन, देवो अग्निः स्विष्टकृदित्याद्युत्तमः तेन यजति ।

(सू) [6]देवान् यजेति प्रथमं संप्रेष्यति यज यजेतीतरान् ॥ ३ ॥ ३९ ॥ १८४० ॥

---

[1] आदितस्तावदष्टावनूयाजाः मैत्रावरुणवर्जम् । आदित एवाष्टभिः पाशुकैः समानास्ता एवैषां याज्याः । त एव च हुतानुमन्त्रणा इत्यर्थः (रु).
[2] वेत्वित्याषा:—घ. [3] विना प्रैषः ?—क. ञ [4] पशुवत्, स च सर्वम्—ञ.
[5] पञ्चमप्रभृतिद्वितीयविकाराश्चत्वारः [6] एवं प्रकृतिवदेव संप्रेष्यति, न पशुवत्संप्रेष्यतीत्यर्थः । ननु मैत्रावरुणाभावात् प्रैषवर्जमिति वचनाच्च प्रकृतिवदेव संप्रैषो भविष्यति, तत्किमर्थमारम्भः । सत्यं तथा भविष्यति। भ्रमस्त्वन्यः प्रादुःष्यात् । प्रकृतौ हि सर्वार्थेनाद्यसंप्रैषेण प्रातिस्विकेन च द्वितीयेन मध्यमोत्तमयोरेव द्वियजत्वं दृष्टम् । तथा पशावपि तद्विकारणामेव द्वियजत्वमुक्तम्, उत्तरयोर्विकारेष्विति । वक्ष्यति च पितृयज्ञे देवौ यजेति प्रथममिति । तेनात्रापि तद्विकाराणां पञ्चमप्रभृतीनामेव द्वियजत्वं, न तु प्रथमविकाराणां द्वितीयतृतीयचतुर्थानामिति । तस्मात्क्रमनिवृत्त्यर्थो युक्तः पुनरारम्भः (ध).

[प्रैषेषु एकयजत्वद्वियजत्वव्यवस्था उपदेशपक्षश्च]

(भा) देवान् यजेति [1]प्रथममनुयाजप्रैषः । यज यजेति मध्यमोत्तमविकारेषु, तेषां [2]द्वियजत्वात् । उपदेशो यजेति प्रथमविकारेष्वप्युच्यते इतरानि[3]त्यविशेषवचनात् ।

[भाष्योक्ते हेतुप्रदर्शनम्]

(वृ) देवान् य-पः—प्रथमानूयाजं प्रति प्रथमप्रैषः । पाशुकयाज्यात्वेऽपि प्रैषाभावात् प्राकृत एव द्वितीयादिषु यजेति प्रैषो न भवति, प्रथमविकाराणामेकयजत्वात् प्रथमोक्तस्य च सर्वार्थत्वात् ।

(सू) [4]संवत्सरीणाऽस्वस्तिमाशास्ते दिव्यं धामाशास्ते इति सूक्तवाकस्याशीःषु होताऽनुवर्तयते ॥ ४ ॥ ४० ॥ १८४१ ॥

[सूक्तवाकाशीःषु होतृकर्तव्यम्]

(भा) दिव्यं धामाशास्त इत्यस्य पुरस्तात् संवत्सरीणां स्वस्तिमाशास्त इति क्षेपः ।

(वृ) संवत्स-पः—संवत्सरीणां स्वस्तिमाशास्ते दिव्यं धामाशास्त इति क्रमार्थः पाठः ।

[5]एवं यजमानो जपति । आशासे इति मन्त्रं संनमति ॥ ५ ॥ ४१ ॥ १८४२ ॥

[सूक्तवाकाशीष्षु आदावन्ते च यजमानजपप्रकारः]

सा मे सत्याशी[6]रिति जपित्वा संवत्सरीणां स्वस्तिमाशास [7]इति यजमानजपः । [8]ततो रोहितेन त्वेति ।

---

[1] प्रथमानूयाज–घ. [2] द्वियजि-ङ. च. द्वियज–घ. द्विविधत्वात्–अ. [3] त्यविशेषः--च. [4] अथ पशुवद्धयूहनादि सहोपभृता पृषदाज्यधान्याः । सूक्तवाके तु होता दिव्यं धामाशास्त इत्यस्य पुरस्तात्संवत्सरीणां स्वस्तिमाशास्त इत्यावपति (रु). [5] यजमानोऽपि सा मे सत्याशीरित्यस्य यजुषोऽनन्तरं 'संवत्सरीणां स्वस्तिमाशास्त इति जपति (रु). [6] रित्युक्त्वा–क. च. [7] इति जपः–ख. ग. इति यजमानस्य, अधो म–ख. इति यजमानजपः, अधो म–घ. [8] ततो रोहितेन त्वेत्यादि–ख. तच्चिरोहितेन त्वेत्यादि–ग. ततो रोहितेनेत्यादि–घ.

**(वृ) सा मे—त्वेति।** अघो म आगच्छत्वित्यन्ते।

**[1]परिधीन् प्रहृत्य संस्रावान्तं कृत्वा वाजिनपात्र उपस्तीर्यान्तर्वेदि बर्हिरनुविषिञ्चन् वाजिनं गृह्णाति ॥६॥४२॥१८४३॥**

**[संस्रावहोमस्य परिधिप्रहरणाङ्गत्वं, वाजिनग्रहणक्रमश्च]**

**(भा)** यदि संस्रावान्तं कृत्वेत्येतावदुच्येत प्रहृत्य परिधीन् जुहोतीति श्रुतेर्विकल्पः स्यात्। अतः संस्रावस्य परिधिप्रहरणाङ्ग[2]त्वं ख्याप्यते। अतो हारियोजनोऽपि संस्रावान्त एव गृह्यते। यथा बर्हिषि विषिच्यते तथा वाजिनं गृह्णाति। अन्तर्वेदिस्थे वाजिनपात्रे [3]स्थाल्या च क्षिपति।

**[संस्रावस्य परिधिप्रहरणाङ्गत्वाभावेऽनिष्टापादनं, इष्टसिद्धौ गमकं च]**

**(वृ) यदिसं—ल्पः स्यात्**—परिधिप्रहरणानन्तरं हारियोजनसंस्रावयोः।

**अतः सं—प्यते**—प्रहृत्य संस्रावान्तं कृत्वेति ल्यप्प्रत्ययेन।

**अतो हारि—ते**—अपूर्वत्वाद्वाजिनेज्यायाः।

**[वाजिनक्षेपः स्थाल्यैव न स्रुवेण]**

**यथा ब—पति**—स्रुवेणावदानाभावात् अनुविषिञ्चतीति श्रवणाच्च स्थाल्यैव वाजिनपात्रे क्षेपो न स्रुवेण।

**[4]नाभिघारयति ॥७॥४३॥१८४४॥**

**(भा)** द्विर्गृहीतमेव।

---

[1]संस्रावान्तं कृत्वेत्येतावतैव सिद्धे परिधीन् प्रहृत्येति वचनं प्रहृत्य परिधीन् जुहोतीति वाजिनब्राह्मणस्याप्ययमेवार्थ इति दर्शयितुम्। तेन संस्रावः परिधिप्रहरणाङ्गमिति ख्यापितं भवति (रु). [2] त्वं संख्याप्यते—ख. ग. त्वात् ख्याप्यते—च. [3] स्थाल्यैव क्षिपति—ख. ग. [4] अभिघारणप्रतिषेधादवदानवचनाच्च द्विर्गृहीतेनैवेज्या, न चतुर्गृहीतेन (रु).

[द्विर्गृहीतेनैव यागो न चतुर्गृहीतेन,
उपस्तरणविषयेऽपि विशेषः]

(वृ) द्विर्गृहीतम्—उपस्तरणं ग्रहणं चेति द्विर्गृ[1]हीतम् ।

वाजिभ्योऽनुब्रूहि वाजिनो यजेति संप्रैषौ ।
वषट्कृते चमसेन जुहोति ॥ २८ ॥ ४४ ॥
॥ १८४५ ॥

[चमसेन होमे कालविधिः, हविश्शेषणस्य फलं च]

(भा) आश्राव्य प्रत्याश्राविते वाजिनो यजेति चमसेन जुहोति, यदि चमसो वाजिनपात्रम् । अनुविषिच्य[2] मानया अन्यत्रापि [3]स्कन्दमान या[4] स्रुचा जुहोति । अनुवषट्कारे च होमः । शेषस्य च स्थापनं दिग्यागभक्षणार्थम् ।

[भाष्यानुक्तांशस्य पूरणं भाष्यस्थस्रुक्पदस्य जुहूपरता च]

आश्राव्य प्र-होति—यजेत्युक्त्वा वषट्कृते चमसेन जुहोति ।
स्रुचा—जुह्वा ।

[भाष्ये दिग्यागभक्षणपदे द्वन्द्वसमासो विवक्षितः]

दिग्याग-र्थम्—दिग्यागार्थं भक्षणार्थं च ।

(सू) [5]ऊर्ध्वज्ञुरासीनोऽनवानं होता यजति ॥
॥ ९ ॥ ४५ ॥ १८४६ ॥

[होतुरूर्ध्वजानुतायां कालविशेषः, सौत्रानवानपदार्थः,
तद्विषये पक्षान्तरं च]

(भा) [6]याज्यायामूर्ध्वज्ञुः । केचित्पुरोऽनुवाक्यायामपि । अनवानं—अनुच्छ्वसन्न[7]र्धर्चं संदधाति । केचिद्विरम्यार्धर्चेनोच्छ्[8]वसन्तीत्याहुः ।

---

1 हीतिः—ख. 2 मानायाः ?—च. 3 स्कन्द्यमानया—च. 4 या जुहोतीति—च. 5 अनवानम्—अनुच्छ्वसन्नर्धर्चे । साम्नाय्यवद्धुतानुमन्त्रणम् । नेत्यन्ये, प्रधानार्थत्वात्तस्य (र). 6 यज्ञयाम् ?—छ. 7 र्धर्चसं—छ. 8 च्छ्वसिती—घ. छ.

(वृ) याज्या-त्त्रुः — आसीनोऽनुवाक्यायाम् , उभयोर्यागकरणार्थत्वात् ।

[भाष्यस्थानवानपदविवरणे प्रमाणकथनम् ]

अनवानम्- धाति-–बह्वृचवचनात् ।

केचिद्धि-त्याहुः — अनवानशब्देन प्राणसंतानमात्रमुक्तमिति ।

[1] वाजिनस्याग्ने वीहीत्यनुयजति ॥ १० ॥ ४६ ॥ ॥ १८४७ ॥

[अनुवषट्कारयाज्या]

(भा) वाजिनस्य वीहीत्यनु[2]वषट्कारस्य याज्या ।

(सू) [3] त्रयाणां ह वै हविषां स्विष्टकृतेन समवद्यति सोमस्य वाजिनस्य घर्मस्येति ॥ ११ ॥ ४७ ॥ ॥ १८४८ ॥

[स्विष्टकृदर्थं पृथग्ग्रहणाग्रहणपक्षौ]

(भा) त्रयाणां हविषां स्विष्ट[4]कृतेऽग्नये होमार्थं न समवद्यन्ति न गृह्णन्ति । सोमादीनां पृथक् देवतयैव सह गृह्णन्ति । अथवा [5] स्विष्टं करोतीति स्विष्टकृतोऽग्निः । छान्दसोऽकारस्समासान्तः । तेनाग्निना स्विष्टकृतेन समवद्यन्ति सह गृह्णन्ति सोमादीनां हविषां देवतया सह । अन्यत्र तु पृथक् । अनुवषट्कारः स्विष्टकृत्सोमादीनाम् । वाजिनामहं देवयज्यया जेमानं महिमानं गमेयमिति महेन्द्रयाजिनः । इन्द्रियावी

---

[1] अनुवषट्कारस्य स्विष्टकृदर्थत्वादग्नेरहमायुष्मानित्यनुमन्त्रणम् (र). [2] वषट्कारस्तस्य याज्या—क. [3] समवदानं सहग्रहणम् । सोमादीनां त्रयाणां ग्रहणेऽनुवषट्कारात्मकास्विष्टकृदर्थं न पृथग्गृह्णाति, किं तु देवतेज्याविशिष्टेनैव यजतीत्यर्थः । अन्ये त्वाहुः—त्रयाणां हविषामयमेवानुयोगः, न तु स्विष्टकृदिज्याऽस्तीति (र). [4] कृदग्नये—क. [5] स्विष्टकृतं करोतीति ?—ङ.

भूयासमितीन्द्रयाजिनः । अग्नेरहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्यनुवषट्कारस्य, नोभयस्य, उपदेशेन ॥

[सोमादित्रयग्रहणेऽनुवषट्कारस्यैव स्विष्टकृत्स्थानीयता]

(वृ) त्रयाणां–पृथक् — अनुवषट्कारस्य स्विष्टकृत्स्थानीयत्वेऽपि सोमादीनां [1] प्रधानार्थं [2] ग्रहणात् तेनानुवषट्कारः । स्विष्टकृदर्थं न गृह्णन्ति, किंतु प्रधानदेवतार्थग्रहणस्य परिमाणाभावात् अनुनिष्प[3]न्नेनानुवषट्कारः ।

अथवा–या सह—स्विष्टकृतेनेति [4] तृतीया ।

देवतया—प्रधानदेवतया ।

अन्यत्र तु पृथक्—गृह्णन्ति । अस्मिन्पक्षे सहग्रहणं नानुनिष्पन्नम् ।

अनुव–दीनाम् —अनुवषट्कारः सोमादीनां द्रव्याणां स्विष्टकृत्स्थानीयः ।

[हुतानुमन्त्रणं नास्तीत्युपदेशपक्षः]

वाजिना–पदेशेनेति — वाजिनस्यानुपूर्वत्वात् सान्नाय्यविकारत्वाभावान्न हुतानुमन्त्रणमित्युपदेशः ।

(सू) [5] उद्रेकेण पशुबन्धवद्दिशः प्रतीज्यान्तर्वेदि शेषं सर्वे समुपहूय भक्षयन्ति ॥ १२ ॥ ४८ ॥ १८४९ ॥

[शेषभक्षणे कालोऽधिकारी देशश्च]

(भा) उद्रेकः शेषः । तेनेज्य । दिगुपस्थाना[6]न्तं प्रतिनिवर्त्य स्थापयित्वाऽन्तर्वेदि समुपहवः । पश्चादन्यत्र भक्षणम् ।

---

[1] प्रधानयागार्थग्रहणात्. [2] ग्रहणात् पृथक्तेनानु–घ. [3] न्नेन परिशिष्टेनानुव–छ. [4] तृतीयान्तः–ग. छ. [5] प्रतीज्य प्रतियागं कृत्वाऽन्तर्वेदि सादितं शेषं सर्वे सर्वानुपहूय भक्षयन्ति पात्रादादाय (रु). [6] न्तं कर्म प्र–छ.

[सौत्रान्तर्वेदिपदार्थान्वयकथनं]

(वृ) अन्त-क्षणम्—अन्तर्वेदि शेषमिति न भक्षयतिना संबन्धः। अन्तर्वेदिस्थितं शेषं समुपहूयान्यत्र भक्षयन्तीत्यर्थः।

(सू) [1]असावसावुपह्वयस्वेति कर्मनामधेयेनामन्त्रयते ॥ १३ ॥ ४९ ॥ १८५० ॥

[उपह्वप्रकारः, यजमानेन द्विर्भक्षणं, वाजिनभक्षणानन्तरं शेषभक्षणं च]

(भा) होता अध्वर्यवुपह्वयस्व ब्रह्मन्नुपह्वयस्व यजमानोपह्वयस्वेति। अध्वर्युर्होतरुपह्वयस्वेत्येवमादिः। ब्रह्माग्नीध्रयजमानश्च तथैव। द्विर्भक्षयति यजमानः। वाजिनं भक्षयित्वा हविश्शेषभक्षणम्।

(वृ) होता-तथैव—होतरुपह्वयस्वेत्यादि स्वव्यतिरिक्तानामुपहवः।

[यजमानेन द्विर्भक्षणे मतभेदेन कालभेदः]

द्विर्भ-नः—आदावन्ते चैकेषां मतेन।

[वाजिनभक्षणानन्तरमेव शेषभक्षणे कारणप्रदर्शनम्]

वाजिनं-णम्—प्रकृतौ संस्रावानन्तरम[2]त्रैव ऋत्विजो हविश्शेषं भक्षयन्तीत्युक्तेऽ[3]पि संस्रावानन्तरं वाजिनप्रचारोपदेशात् तद्भक्षणानन्तरं हविश्शेषभक्षणम्।

[4]उपहूत इति प्रतिवचनः ॥ १४ ॥ ५० ॥ ॥ १८५१ ॥

[5]होता प्रथमो भक्षयति यजमान उत्तमः। यजमानः प्रथमश्चोत्तमश्चेत्येके ॥ १५ ॥ ५१ ॥ ॥ १८५२ ॥

---

[1] कर्मनामधेयेन कर्मनिमित्तेन नाम्ना यथा होतरुपह्वयस्वाध्वर्यवुपह्वयस्वेत्यादि (रु). [2] त्रैवमृत्वि-ग. [3] पीह सं-ग. [4] प्रतिवचनो मन्त्र इति शेषः। उपहूतोऽसि मयेत्यर्थः। (रु). [5] अनियतक्रमास्त्वितरे प्रवर्ग्यपितृयज्ञयोरिव विशेषावचनात्। होताऽग्रेऽथाध्वर्युरथ ब्रह्माथाग्नीदथ यजमान इति भरद्वाजः (रु).

[1] वाजिनां भक्षो अवतु वाजो अस्मान् रेतस्सिक्त-
ममृतं वलाय। स न इन्द्रियं द्रविणं दधातु मारिषा-
म वाजिनं भक्षयन्तः। तस्य ते वाजिभिर्भक्षं कृतस्य
वाजिभिस्सुतस्य वाजिपीतस्य वाजिनस्योपहूत-
स्योपहूतो भक्षयामीति भक्षयति ॥ १६ ॥ ५२ ॥
॥ १८५३ ॥

[2] पशुवत् समिष्टयजूंषि॥ १७ ॥ ५३ ॥ १८५४ ॥

[3] सिद्धमिष्टिस्संतिष्ठते॥ १८ ॥ ५४ ॥ १८५५ ॥

तृतीया खण्डिका.

[यजमानकर्तृकामिक्षाप्राशनमन्त्रौ दर्शवत्संस्था तत्रोपदेशपक्षश्च]

(भा) समिष्टयजूंषि त्रीणि। 'दधिक्राव्णः' इदं हवि[4]रित्या[5]मिक्षा-यजमानभागस्य मन्त्रद्वयेन प्राशनम्। [6]दर्शवदन्यद्ब्राह्मणभो[7]जनान्तम्। न विकृतौ यज्ञ शंचमः पशु[8]वर्जं भवतीत्युपदेशः।

[भाष्योक्तसमिष्टयजुःपदार्थः, यजमानकर्तृकामिक्षाप्राशनजपयो-रुपदेशपक्षे च हेतूपन्यसनम्]

(वृ) समि–णि—यज्ञ यज्ञमि[9]त्यादीनि।

दधि-[10]शनम्—न दधिक्राव्ण इति न्यायः प्रातर्दोहविकार आमिक्षेत्युक्तत्वात्।

दर्शव–वर्जम्—दर्शपूर्णमासाभ्यां सोमेन पशुना वेष्ट्वा जपतीति नियमात्।

भवतीत्युपदेशः—याजमानकाण्डं [11] सर्वं सर्वत्र कुर्वन्त्युपदेश-मतेनेत्युक्तत्वात्।

---

[1] भक्षयिता यो यस्स सर्वोऽनेन भक्षयति (रु). [2] यज्ञ यज्ञमिति त्रीणि (रु). [3] दर्शवत्संस्था। आमिक्षा यजमानभागो दधिपयोमन्त्राभ्यां प्राश्यः (रु). [4] रित्यादियजमा–ङ. [5] मिक्षाया यज–ग. [6] दर्शवद्ब्राह्मण–ग. [7] जनान्तं विकृतौ यज्ञशंचमः–ञ. [8] वर्जे–ङ. [9] त्यादि–ख. ग. [10] शनम्—दधिक्राव्ण–ग. [11] काण्डं सर्वं कुर्व–ग. काण्डं कुर्व–घ.

(सू) श्वोभूते पौर्णमास्येष्ट्वा प्रसूता देवेन सवित्रा दैव्या आप उन्दन्तु ते तनुं दीर्घायुत्वाय वर्चसे [1]इत्युपोद्य त्र्येण्या शलल्येक्षुकाण्डेनेक्षुशलाकया वा लौहेन च क्षुरेणौदुम्बरेण नि केशान्वर्तयते वापयते श्मश्रूणि ॥ १ ॥५५॥ १८५६ ॥

[यजमानस्य केशश्मश्रुणोः छेदनवपने, तत्साधनायुधं च]

(भा) समाप्तेऽग्न्यन्वाधानं पौर्णमा[2]सस्य ब्राह्मणभोजनान्ते प्रसूता देवेनेति क्लेदयत्युद[3]केन यजमानस्य केशान्। त्रीण्येतानि [4]यस्याः सेयं त्र्येणी। शलली—श्वाविच्छ[5]लाका। इक्षुकाण्डेन तस्य पुष्पशलाकया [6]। लोहस्य विकारो लौहम्। उदुम्बरं—ताम्रम्, तद्विकार [7] औदुम्बरम्, [8] लौहेनौदुम्बरमिश्रेण निवर्तयते केशान्। न निर्मूलान् छेदयते। वापयते तु [9] समूलं श्मश्रूणि। वैश्वदेवे छेदनमेव केशानां नियतम्। पर्वस्वन्येषु वापनमपि। श्मश्रूणां कृत्वा वपनं तत उपपक्षौ। ततः प्रसूता देवेनेति केशानामुन्दनम्।

---

[1] अद्भिः क्लेदनमुपोन्दनम् (रु). त्रीणि श्वेतान्येतानि यस्यास्सा त्र्येणी। शल्यकमृगस्याङ्गरुहा सूचिः शल्ली। इक्षुकाण्डं—इक्षोरनन्तरं काण्डं शलाका वा। उदुम्बरं—ताम्रम्। औदुम्बरेणेति लोहविशेषणम्, लोहितायसेन निवर्तयत इति श्रुतेः। तत्र तु ताम्रस्य केवलस्य वपनासामर्थ्यात्तन्मिश्रेण कालायसेन क्षुरं कुर्वन्ति। तेनेक्षुशललीभ्यां गृहीतेन क्षुरेण केशोन्निवर्तयते छिनत्ति। शललीक्षुभ्यां केशान्विनीय क्षुरेण निवर्तयत इति कल्पान्तरम्। श्मश्रूणि वापयते। स्वार्थिको णिच्। वापयते वाऽध्वर्युणा यजमानः। सर्वं वापयत इति सत्याषाढः (रु).
[2] सस्य। तस्य ब्रा—क. ख. ग. घ. [3] केन केशान्—ख. ग. घ. च.
[4] यस्यां—क. [5] च्छल्यकः ?—ख. ग. [6] यापि—क. [7] रमौदु—घ. [8] लोहितौदुम्बरेण—क. लोहेनौ—ख. [9] समूलं:—क.

[ताम्रमिश्रमायसं क्षुरमेकमेव वपनसाधनम् ]

(वृ) लोहेनौ–शान्—लोहेन च क्षुरेणौदुम्बरेणेति न द्रव्यद्वयेन क्षुरद्वयम् । ताम्रमिश्रकार्ष्णायसेने[1]ति यावत् । क्षुरद्वयस्य चानपेक्ष[2]णात् क्षुरकर्मणः ।

[यजमानकेशच्छेदनेऽध्वर्योः कर्तृता]

न निर्मृ–श्रूणि—अध्वर्युणा । मन्त्रसाध्यत्वान्निवर्तनस्याध्वर्योः प्रकृतत्वादध्वर्यु[3]कर्तृकता ।

[वैश्वदेवेतरपर्वसु समूलं केशानां छेदनम् ]

वैश्वदे–मपि—[4]सर्वं वापयेदिति तेपूपदेशात् ।

[वपनविधौ क्रमः, केशानामुन्दनं च]

श्मश्रू–पक्षौ—श्मश्रूणामग्रे[4]वपनम् । अथोपपक्षौ । सश्मश्रूण्यग्रेऽवपत अथोपपक्षौ अथ केशानिति क्रमश्रुतेः[5] ।

ततः प्रसूता–न्दनम्—केशनिवर्तनकाले तेषामुन्दनं युक्तमिति ।

(सू) [6]ऋतमेव परमेष्ठ्यृतं नात्येति किंचन । ऋते समुद्र आहितः ऋते भूमिरियꣳश्रिता । अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा । शिरस्तपस्याहितं वैश्वानरस्य तेजसा । ऋतेनास्य निवर्तये सत्येन परिवर्तये । तपसाऽस्यानुवर्तये शिवेनास्योपवर्तये शग्मेनास्याभिवर्तये इति निवर्तयति ॥ २ ॥ ॥ ५६ ॥ १८५७ ॥

---

[1] ति शलल्याद्यपेक्षया चशब्दः । क्षुर–छ. ति शलल्याद्यपेक्षया वाशब्दः । क्षुर–ख. ग. [2] णात्–छ. [3] कर्तृता–ग. [4] सर्वं वा वप–घ. वापनम्–घ. [5] श्रुतेरर्थः – ख. [6] अनेन मन्त्रेण केशानध्वर्युर्निवर्तयति । श्मश्रूणि तूष्णीं वपतीति (रु).

[यजमानकेशच्छेदनेतिकर्तव्यता, वपने समर्थं चेत्क्षुरं ताम्रमयमेवेति पक्षश्च]

(भा) शलली मिक्षुकाण्डं [1] च हस्ते गृहीत्वा कृष्णायसेन ताम्रमिश्रेण क्षुरेण ऋतमेव परमेष्ठीति छिनत्ति केशान्, न तु निर्मूलान् करोति। केचिदाहुः—लोहितायसेन निवर्तयत इति [2] श्रुतेः तेन लोहितोदुम्बरेणेति तस्यैव विशेषणमिति यदि [3] समर्थं छेदने ताम्रमयं ततोऽयमर्थः।

(वृ) ततोऽयमर्थः—आयसशब्दो लोहोपलक्षणमिति ताम्रमयमेव क्षुरं केशच्छेदनादिसमर्थं चेत्। असमर्थं चेल्लोहितामिश्रेणेत्येवार्थः।

(सू) तद्दतं तत्सत्यं तद्व्रतं तच्छकेयं तेन शकेयं तेन राध्यासमिति यजमानो जपति ब्राह्मण एकहोतेति चानुवाकम् ॥ ३ ॥ ५७ ॥ १८५८ ॥

[केशानां निवर्तनकाले यजमानकर्तृको जपः]

(भा) तद्दतं ब्राह्मण एकहोतेति च [4] निवर्त्यमानेषु यजमानस्य जपः ॥

(वृ) तद्दतं त—जपः—शनैर्निवर्त्य[5]मानेषु केशेषु यजमानस्य जपः।

(सू) [6] तस्य पर्वस्वन्तरालव्रतानि ॥ ४ ॥ ५८ ॥ ॥ १८५९ ॥

(सू) [7] न मांसमश्नाति न स्त्रियमुपैति ॥ ५ ॥ ५९ ॥ ॥ १८६० ॥

---

[1] च सह हस्ते कृत्वा—ज. [2] श्रुतेरर्थः। केन लोहेन औदुम्बरेणेति—ख. ग. छ. श्रुतौ केन—क. अ. श्रुतेः केन—च. ज. [3] समर्थं नाम यच्छेदने ततो—क. समर्थश्छेदने ताम्रमयः ततो—ख. ग. [4] निवर्तमानेषु—क. [5] मानेषु यज—घ. [6] यजमानस्य वैश्वदेवादिषु पर्वसु चातुर्मास्यसंबन्धिषु तत्तदन्तरालकालिकानि व्रतानि वक्ष्यन्ते (रु). [7] रागप्राप्तस्य प्रतिषेधः। नित्ये पशौ वैधमिडामांसहविर्भक्षणं भवत्येव (रु).

[यजमानस्य चातुर्मास्यपर्वमध्ये मांसाभक्षणादिव्रतानि, नित्येडाभक्षणं तु न निषिध्यते, तदपि प्रतिषिध्यत इत्युपदेशपक्षश्च]

(भा) स्वार्थस्य मांसभक्षणस्य प्रतिषेधः। इडाभक्षणं तु नित्ये पशौ क्रत्वर्थत्वात्। उपदेशस्तस्यापि प्रतिषेधः।

(वृ) **स्वार्थस्य**—अचोदितमांसभक्षणस्य।

**इडा-र्थत्वात्**—अवश्यंभावि कर्तव्यमिति।

[भाष्योक्तोपदेशपक्षे हेतूपन्यासः]

**उपदेश-धः**—न मांसमश्नातीत्यविशेषश्रवणान्नित्यभक्षणस्यापि प्रतिषेधः, न यजमानोऽग्नीषोमीयस्याश्नातीतिवत्। पश्विडाभक्षणविधेरन्यत्रलब्धावकाशत्वात्, प्राप्त एव तद्भक्षणेऽत्र निषेधाच्च।

(सू) [1]**ऋत्वे वा जायाम्** ॥ ६ ॥ ६० ॥ १८६१ ॥

[यजमानस्य जायोपगमनविधौ नियमः]

(वृ) **ऋत्वे वा जायाम्**—ऋताविव जायामुपेयादिति नियमात् सर्वत्रगमनं वर्णान्तरगमनं च प्रतिषिध्यते।

(सू) [2]**नोपर्यास्ते** ॥ ७ ॥ ६१ ॥ १८६२ ॥

[यजमानस्य पीठखट्वाद्यासनशयनप्रतिषेधः]

(भा) उपरिशयनस्यापि प्रतिषेधः।

(वृ) **उपरि-धः**—नोपर्यासीत इत्युपर्यासप्रतिषेधः नह्यनुपविष्टेन शक्यते शयनं कर्तुमिति।

(सू) [3]**जगुप्सेतानृतात्** ॥ ८ ॥ ६२ ॥ १८६३ ॥

[अनृतवर्जनपुनर्विधिः क्रत्वर्थता

(भा) जुगुप्साऽनृतस्य वर्जनं। क्रत्वर्थः पुनर्विधिः।

---

1 ऋतौ महिषीं जायामुपैति वा (रु). 2 नोपरि पीठादावास्ते शयीत वा। प्रदर्शनार्थं त्वासनवचनम्। अधश्शयीतेत्याश्वलायनः (रु). 3 जुगुप्सया वर्जनं लक्ष्यते। वर्जयेदनृतम्। आहिताग्नित्वादेव सिद्धस्य पुनर्वचनमादरार्थम् (रु).

(सू) प्राङ् शेते ॥ ९ ॥ ६३ ॥ १८६४ ॥

(भा) प्राक्शिरा भूमौ, न स्थण्डिले शेते ।

(सू) [1] अमध्वश्नाति ॥ १० ॥ ६४ ॥ १८६५ ॥

(भा) अमधु मधुवर्जमश्नाति । 'मधुमांसलवणवलेखनानि वर्जयेत्' इत्याश्वलायनः ।

(वृ) अमधु-श्नाति—अमध्वश्नातीत्यकारप्रश्लेषेण व्याख्यानोपपत्त्यर्थमाश्वलायनमतोपन्यासः ।

(सू) [2] मध्वशनस्स्यादित्येकम् । व्यञ्जनमात्रमित्यपरम् ॥
॥ ११ ॥ ६५ ॥ १८६६ ॥

[यजमानकर्तृकमध्वशने पक्षभेदः, पत्न्या अपीदं व्रतम्]

(भा) मधु अशनमस्येति मध्वशनः । मध्वशनो वा भवेद्यजमानः । एतदेकं विधानम् । मधु प्राश्यान्यदश्नाति सामर्थ्याद्भोजयितव्यमोदनापूपादि । तत्र मधुव्यञ्जननिवृत्तिः, स्त्रियोऽपि विधिः मधुनैवाश्नातीति । अन्ये त्वाहुः—मध्वश्नातीति श्रुतिः तस्या मध्वशनः स्यादिति द्वावर्थौ । ['मध्वशनस्स्यादित्येकम्' इति सूत्रस्यार्थः 'प्राङ्शेतेमध्वश्नाति' इत्यस्मिन् सूत्रपाठे अमध्विति च्छेदपक्षश्च]

(वृ) मधु अशन-विधानम्—अमध्वश्नातीत्यस्य विधेर्मधुमात्रानस्य निवृत्तिः ।

---

[1] अत्र सूत्रे 'मध्वश्नाति' इति पाठं मन्यते, व्याचष्टे च तथैव रुद्रदत्तः.

[2] मध्वशनं स्यादित्येकं इति पाठो रुद्रदत्तस्य ॥ "ओदनत्वेन व्यञ्जनत्वेन वेति संशये निर्णयमाह" इत्यवतार्य "मध्वश्नातीति श्रुत्यर्थस्य विशयित्वादिति भावः । अत्रानुग्रहमाह भरद्वाजः—मध्वलाभे दैव्यं मधु वेति विज्ञायते वनस्पते मधुना दैव्येन, इति दैव्यं मधु घृतमित्यर्थः । बोधायनश्च मध्वश्नातीति प्रकृत्याह 'घृतमित्येवमुक्तं भवति दैव्यं मध्विति विज्ञायते' इति । आश्वलायनस्तु मधुमांसलवणत्रयवलेखनानि वर्जयेदिति" इति व्याख्यातं च तेन.

मधुप्रा-ञ्जननिवृत्तिः—अपरं तु विधानम् ।

[पत्न्या अपि भोजननियमविधौ हेतुप्रदर्शनम्]

स्त्रियोऽपि-तीति—उभयप्रकारम् । पत्न्या अपि स्वामित्वाविशेषात् ।

[प्राक्प्रदर्शितसूत्रसंहितापाठे मध्विति विच्छेदपक्षः, तत्र विशेषश्च]

अन्ये त्वा-वर्थौ—नाकारप्रश्लेषः । तस्याः श्रुतेः, मध्वशनं स्यादित्येकं व्यञ्जनार्थमित्यपरमिति । अस्मिन् पक्षे ब्रह्मचारि[1]णोऽपि मधुप्रतिषेधः ।

(सू) [2] ऋतुयाजी वा अन्यश्चातुर्मास्ययाज्यन्यः ॥ १२ ॥
॥ ६६ ॥ १८६७ ॥

[चातुर्मास्ययाजिद्वैविध्यम्]

(भा) ऋतौ प्राप्ते यजतीत्यृतुयाजी, स एकः । एकश्चातुर्मास्ययाजी ।

(सू) [3] यो वसन्तोऽभूत्प्रावृडभूच्छरदभूदिति यजते स ऋतुयाजी । अथ यश्चतुर्षुचतुर्षु मासेषु स चातुर्मास्य-

---

[1] णोऽपि न मधुप्रतिषेधः-छ. [2] वैश्वदेवादीनां पर्वणां संवत्सरकालसाध्यानां प्रवृत्तिद्वैविध्यमनेन प्रदर्श्यते । स एष चातुर्मास्ययाजी द्विविधः— एक ऋतुयाजी इतरश्चातुर्मास्ययाजी । तत्र यो वसन्तादीनृतूंनेव प्रतीक्षमाणस्तत्तौ जाते तेन तेन पर्वणा यजेत न तु चतुर्मासावधिः फाल्गुन्याषाढ्यादि चापेक्षते स ऋतुयाजी । यस्त्वेवमुभयमप्यपेक्ष्य यजते स चातुर्मास्ययाजी । एतदुक्तं भवति—वक्ष्यमाणप्रकारेण चतुर्षु चतुर्षु मासेषु चातुर्मास्यैर्यजेत वसन्ताद्यृतुषु वा जातेषु तस्य तस्यर्तोरादिम आदिमे पर्वणीति. [3] ऋतुयाजिविषय एवायं विधिः न चातुर्मास्ययाजिविषयः, साकमेधादीनां शरद्विधाने चातुर्मास्यावधिविरोधात् । फाल्गुन्याषाढ्यादिविधिनैव सिद्धेः वसन्तप्रावृड्विधिवैयर्थ्याच्च । न च वाच्यं सौरे वसन्ते या फाल्गुनी या प्रावृषि चाषाढी तत्रैव प्रवृत्त्यर्थं वसन्तप्रावृड्विधानमिति, चान्द्रमासानुसारेणैव चातुर्मास्यप्रवृत्तेर्दर्शयिष्यमाणत्वात् । (रु).

**याजी । वसन्ते वैश्वदेवेन यजते प्रावृषि वरुणप्रघासैः शरदि साकमेधैरिति विज्ञायते ॥ १३ ॥**
**॥ ६७ ॥ १८६८ ॥**

चतुर्थी खण्डिका. प्रथमः पटलः.

---

[वसन्तादावित नियमस्य न ऋतुयाजिपरत्वं, किंतु चातुर्मास्ययाजिपरत्वम् ]

(भा) तत्र श्रुतिरेव व्याचष्टे। यो वसन्तो जातः प्रावृड्जाता शरज्जातेति यजेत न फाल्गुनीं चैत्रीं वाऽपेक्षते अन्ते वसन्तस्य कृत्वा वैश्वदेवं प्रावृडादौ वरुणप्रघासैर्यागः, न पौर्णमासीचतुष्टये । पर्वनियमस्तु यदीष्ट्या यदि पशुनेति सर्वत्र स ऋतुयाजी। यस्य मासचतुष्टये नियमः स चातुर्मास्ययाजी । समानो विधिरुभयोः । पुनर्वसन्तादिनियमात् चातुर्मास्ययाज्यप्रतिपन्ने वसन्ते फाल्गुन्यां चैत्र्यां करोति वैश्वदेवम् ।

इति धूर्तस्वामिभाष्ये अष्टमे प्रश्ने प्रथमः पटलः

---

[ऋतुयाजिनस्तस्मिन् ऋतौ यस्मिन् कस्मिन् वा पर्वणि यागः]

(वृ) यो वसन्तो–क्षते—वसन्तादौ प्राकृडादौ शरदादौ इति नियमो नास्त्युतुयाजिनः। वसन्तस्यादेर्द्विधासंभवात् द्वयोरुपादानं फाल्गुनीं चैत्रीं वेति। ऋतुयाजिनस्तु तस्मिन् ऋतौ यस्मिन् कस्मिन् वा पर्वणि यागः। तदाह—

[ऋतुयाजिनोऽपि पर्वोपवासादिनियमः]

अन्ते वसन्तस्य–इति सर्वत्र– ऋतुयाजिनोऽपि सर्वेषु वैश्वदेवादिसाकमेधान्तेषु पर्वनियमः ।

[चातुर्मास्ययाजिनाऽनुष्ठेयः प्रकारः]

स ऋतुयाजी–स्ययाजी—वैश्वदेवाद्यनुष्ठानपौर्णमासप्रभृति पञ्चम्यां पौर्णमास्यां वरुणप्रघासादि यस्य क्रियते स चातुर्मास्ययाजी ।

[ऋतुयाजिनस्तु वैश्वदेवाद्यनन्तरं दर्शयागोऽपि विशेषः]

**समानो विधिरुभयोः**—ऋतुयाजिचातुर्मास्ययाजिनोरुभयोः प्रयोगस्तुल्यः । ऋतुयाजिनस्तु अत्र पौर्णमास्येष्टिति चातुर्मास्ययाजिपक्षे चातुर्मास्यपौर्णमासस्यानुवादत्वाद्वैश्वदेवाद्यनन्तरं दर्शयागोऽपि संभवतीति ।

[सौरगत्या ऋतुकल्पनक्रमः]

**पुनर्वस--देवम्**—अस्यार्थः—सौरचान्द्रमसभेदन द्विधा वसन्ताद्यृतवो भवन्ति । तत्र द्वादशप्रथमराश्योः सूर्योदयकालः सौरवसन्तो भवति । तत ऊर्ध्वं द्वौ द्वौ मासावृत्वन्तराणि ।

[चान्द्रऋतुकल्पनौ द्वैविध्यप्रदर्शनम्]

चान्द्रमसो वसन्तस्तु द्विधा उत्तरफल्गुनीयुक्तपौर्णमासीयुक्तः तदुत्तरमासश्च । मासद्वयमेकश्चान्द्रमसो वसन्तः, हस्तयोगेन वा । अपरस्तु-चान्द्रमसः चित्रानक्षत्रेण वा स्वातीनक्षत्रेण वा युक्तपौर्णमासीयुक्तः तदुत्तरमासश्च । मासद्वयं कदाचिद्वसन्तः । तत्र फाल्गुन्यां पौणमास्यां चैत्र्यां वेति सूत्रेण वसन्ते वैश्वदेवे प्राप्तेऽपि वसन्ते वैश्वदेवेनेति पुनर्वसन्तग्रहणान्न मेषान्तभावरहितफाल्गुन्यां चैत्र्यां वा वैश्वदेवं कर्तव्यम् ।

[सौरवसन्तसम्बन्धाभावे चातुर्मास्यानारम्भविधिपरतया 'अप्रतिपन्ने' इति भाष्यस्य व्याख्यानम्]

अप्रतिपन्ने वसन्त इत्यस्यायमर्थः—फाल्गुनीचैत्र्योरन्यतरस्याः सौरवसन्तसम्बन्धाभावात् तस्यां वैश्वदेवं न कर्तव्यमिति । अथवा अप्रतिपन्ने वसन्त इत्यस्य अर्थान्तरमुच्यते—प्रारब्धे वसन्त इति वसन्ते वैश्वदेवेनेति पुनर्वचनं वसन्तस्याद्यपौर्णमासीनियमार्थम् । तथाहि—'एष ह वै संवत्सरमाप्नोति यश्चातुर्मास्यैर्यजते' इत्यादिना चातुर्मास्यैः

कृत्स्नसंवत्सराप्तिदर्शनात् संवत्सराद्यपर्वप्रभृति वैश्वदेवाद्यनुष्ठानं न कर्तव्यम् । उत्तरफल्गुनीनक्षत्रयुक्तपौर्णमास्यां वसन्तारम्भसत्त्वात्तस्यामेव वैश्वदेवं कर्तव्यम् । उत्तरफल्गुनीयोगेऽपि वक्ष्यमाणेन प्रकारेण सौरचान्द्रमसयोः समावेशो भवतीति ।

[श्रौतो वसन्ताद्यृतुक्लृप्तिक्रमः]

अत्र वसन्ताद्यृतुक्लृप्तिमनेकधा वदन्ति—सूर्यगत्यनुसारेण चन्द्रगत्यनुसारेण च द्विधा । तथाहि —देव सूर्य सोमं क्रेष्याम इत्यत्र ऋतून् कल्पय दक्षिणाः कल्पयेति चन्द्रमाष्पड्ढोता स ऋतून् कल्पयातीति निर्देशात् सूर्यगत्या चन्द्रगत्या च ऋतुक्लृप्तिरवगम्यते ।

[चैत्राद्येव चान्द्रमासवसन्ताद्यृतुकल्पनमिति पक्षप्रदर्शनम्]

मेषादिस्थे सवितरि यो यो मासः प्रपूर्यते चान्द्रः ।

चैत्रादि स विज्ञेयः तस्मादारभ्यते वसन्तादिः ।

इति चैत्रादिशब्दनिर्वचनात्तदादिसंवत्सरारम्भप्रसिद्धेः चैत्राद्येव चान्द्रमसो वसन्त इति केचित् ।

[फाल्गुनप्रभृतिवसन्ताद्यृतुकल्पनमिति पक्षान्तरस्य सप्रमाणं प्रदर्शनम्]

अन्यथा 'फल्गुनीपूर्णमासे दीक्षेरन् मुखं वा एतत्संवत्सरस्य' इति दर्शनात् । 'उत्तरयोरादधीत एषा वै प्रथमा रात्रिस्संवत्सरस्य' इति च निर्देशात् । सूत्रकारेण च 'अथ पुनरालभमानस्य फाल्गुन्यां चतुर्दश्यां शुनासीरीयेणेष्ट्वा पञ्चदश्यां वैश्वदेवेन यजते' इति विधानाच्च । वैष्णवे पुराणे च—

शरद्वसन्तयोर्मध्ये विषुवं तु विभाव्यते ।

इति वसन्तमध्ये विषुवत्प्राप्तिस्मरणात् फाल्गुनमासादिवसन्त इत्यवगम्यते । तथा कापर्दिस्वामिभाष्ये 'द्वादशप्रथमराश्योः सूर्यो-

दयकालो वसन्तः' इति वचनात् प्रायः फाल्गुनादिवसन्ताव-गतिः।

[पूर्वोक्तरीत्या वसन्ताद्यृतुकल्पविप्रतिपत्तौ निर्णयकरणम्]

अस्यां विप्रतिपत्तौ यथाशक्ति निर्णयः क्रियते---अत्र कपर्दि-स्वामिना 'शिशिरे दीक्षन्ते वसन्त उत्तिष्ठन्ते' इत्यस्मिन् सूत्रे (२१-२-८) द्वादशप्रथमराश्योर्यदा सूर्य उदेति तदा वसन्तः इति, मीनमेषराश्योः सूर्योदयकाले वसन्त इत्युक्तत्वात्। ज्योतिश्शास्त्रे च---

[1] मृगभवना[2]दिराशिद्वयदिनकरभोगस्थितिसमानाः।
शिशिरवसन्तग्रीष्मावर्षा[3]श्शरदो हिमागमः क्रमशः॥

इति मकरादिमासानां शिशिरत्वादिव्यवस्थादर्शनात् [4]मीनादिमासयोः सौरो वसन्तः प्रतीयते। चान्द्रमस[5]पक्षे फाल्गुनचैत्रादि पक्षद्वयदर्शनात् [6]न्यायेनग्रहणाग्रहणवद्व्यवस्थेष्यते। तयोरुभयोः श्रुति-स्मृतिप्रमाणकत्वादन्यतरस्यात्यन्तिकबाधायोगात् उभयाविरोधेन व्यव-स्थोच्यते--यस्मिन् संवत्सरे पूर्वफल्गुनीयुक्ता पौर्णमासी तस्या एषा वै संवत्सरस्य जघन्या रात्रिरिति शिशिरत्वम्। न चात्र फल्गुनीयुक्ताहोरात्र-मात्रस्य संवत्सरान्तत्वव्यपदेशः, पूर्वफल्गुनीनक्षत्रस्य प्रतिमासं विद्यमा-नत्वादविशेषितत्वप्रसङ्गात्। अतः पूर्वफल्गुनीयुक्तपौर्णमास्या द्वादशपौर्णमास्यात्मकसंवत्सरान्तत्वेन जघन्यत्वसम्भवः। तथा भगवता भरद्वाजेनाप्युक्तम्—'आधाने या पौर्णमासी पूर्वाभ्यां फल्गुनीभ्यां युक्ता न तस्यामादधीत' इति। ततस्तस्मिन् संवत्सरे चैत्रादिर्वसन्त-

---

[1] अत्रोत्तरार्धं ब्रह्मगुप्तीयसिद्धान्ते किञ्चिदन्यथाभावेन दृश्यते, मानाध्याये ७मश्लोकस्योत्तरार्धस्समः। पूर्वार्धस्तु तत्रान्यथा 'द्वौद्वौ राशी मकरादृतवष्षट् सूर्यगतिवशा-द्राज्याः' इति दृश्यते। [2] रादिशिशिरद्वय-ख. ग. [3] 'शरदस्सहेमन्ताः' इति (ब्र-सि). [4] मीनमेषयाः-घ. [5] पक्षेऽपि फा-घ. छ. [6] न्यायाद्ग्रहणाद्व्यवस्थो-च्यते-ख. ग. घ.

पक्षः । अत एव कपर्दिस्वामिना 'फल्गुनी पूर्णमासे दीक्षेरन' इति श्रुतिव्याख्यानावसरे 'कदाचित्तत्रापि वसन्तप्राप्तेः' इति व्याख्यातम् ।

यस्मिंस्तु संवत्सरे उत्तरफल्गुनीयुक्ता पौर्णमासी तस्या 'एषा वै प्रथमा रात्रिस्संवत्सरस्य' इति संवत्सरादितया वसन्तत्वात्फाल्गुन्यादि वसन्तपक्षः । एवमाश्रीयमाणे सौरचान्द्रमससन्निपातः प्रायेण भवति ।

अनेनाभिप्रायेण 'मेषादिस्थे सवितरि' इत्याद्यप्युच्यते । अस्य चायमर्थः —अमावास्यायां चान्द्रमसपूर्तिः सा यदि मेषसंक्रान्तेरुपरिष्टाद्भवति तदा तदन्तो मासश्चैत्रः । स च मासो वसन्तारम्भः 'चैत्रादि मासौ मधुमाधवौ' इति वचनात् । 'मधुश्च माधवश्च वासन्तिकावृतू' इति श्रुतेश्च । एवमृतुक्लृप्तावाश्रीयमाणायां शास्त्राणा[1]मविरोधः । तत्रोभयविधसान्निपाते चातुर्मास्यादीनामनुष्ठानं युक्तम् । असम्भवे त्वन्यतराश्रयणमिति ।

इति धूर्तस्वामिभाष्यवृत्तौ कौशिकेन रामाग्निचिता कृतायां
अष्टमे प्रश्ने प्रथमः पटलः.

---

(सू) ततश्चतु[2]र्षु मासेष्वाषाढ्यां श्रवणायां वोदवसाय वरुणप्रघासैर्यजते ॥ १ ॥ १ ॥ १८६९ ॥

---

[1] मप्यविरोधः-छ. [2] पर्वभिश्चातुर्मास्येषु मासान् संचष्ट इति वक्ष्यति । ततः पर्वगणनया वैश्वदेवकालात्पर्वणः फाल्गुनाच्चैत्राद्वाऽऽरभ्य चतुर्षु चान्द्रमसेषु मासेष्वतीतेषु याऽनन्तराऽऽषाढी श्रावणी वा तयोरन्यतरस्यामुदवसाय देशान्तरं गत्वा वरुणप्रघासाख्येन कर्मणा यजेत । आषाढी श्रावणी च फाल्गुनीचैत्रीभ्यां व्याख्याते । उदवसायेति वचनं वैश्वदेववदनियमे प्राप्ते नियमार्थम् । वरुणप्रघाससमाख्या तु यदादित्यो वरुणं राजानं वरुणप्रघासैरयजतेति वरुणस्येज्यत्वस्तवनेनाभिक्षादेवतात्वेन च वरुणसम्बन्धात् शमीपर्णान्युपवपति घासमेवाभ्यामपियच्छतीति घाससम्बन्धाच्च निर्वक्तव्या । शब्दश्चायं नित्यं बहुवचनान्तः पुंलिङ्गश्च प्रयुज्यते । चतुर्मासेष्वाषाढ्यामिति नियमात् अधिकमासवति संवत्सरे न चातुर्मास्यारम्भः (रु).

[सौत्रविकल्पस्य व्यवस्थिताभिप्रायकत्वं, अधिमासे चातुर्मास्यानारम्भकथनं च]

(भा) ततः पर्वण आरभ्य। अषाढाभिर्युक्ता आषाढी। श्रवणेन युक्ता श्रावणी। यदा फाल्गुन्यामु[1]पक्रमस्तदाऽऽषाढ्यां यजेत। यदा-चैत्र्यां तदा श्रावण्याम्। मासचतुष्टयानियमात् यस्मिन् संवत्सरेऽन्त-रालेऽधिकमास[2]उत्पद्यते तत्रारम्भो नेष्यते चातुर्मास्यानाम्। उदवसानं–देशान्तरगमनम्।

(वृ) ततश्चतुर्षुमासेषु—इत्यत्र [3]ततः पर्वण आरभ्येति शेषः।

अषाढा–श्रावणी—[4]उभयोर्व्यवस्थितविकल्पः। उपक्रमः—आरम्भः।

[अधिमासे चातुर्मास्यानारम्भे हेतुः पौर्वाह्णिकपर्वसन्धिमद्वत्सरेऽपि चातुर्मास्यानारम्भ इति केषांचित्पक्षश्च]

मासचतु--स्यानाम्—ऋतुनियमपर्वचतुष्टयनियमयोरसंभवात्त-स्मिन् संवत्सरे चातुर्मास्यानामनारम्भः। [5]तदा चातुर्मास्ययाजि-पक्षे पञ्चमपौर्णमास्यां पूर्वाह्णे पर्वसन्धिर्यस्मिन् संवत्सरे तस्मिन्नपि चातुर्मास्यानामनारम्भ इति केचित्; तस्यां पौर्णमास्यां प्रकृतेः पूर्वा-नुष्ठानस्य कर्तव्यत्वात्। अत्र पौर्णमास्येष्ट्यो[6]न्दनादिति क्रमानुपपत्तेः।

(सू) प्ररूढकक्षे यष्टव्यमिति [7]बह्वृचब्राह्मणं भवति॥
॥२॥२॥१८७०॥

---

[1] पक्रान्तस्तदा–क. पक्रान्तं तदा–ङ. [2] उपपद्यते–ख. ग. [3] तत इति वाक्यशेषः–छ. [4] श्रवणेति अणो लोपो विभाषया। उभयो–छ. [5] तथाचातु-छ. [6] ष्ट्यान्दनादीनि क्रमानुपपत्तेः--छ. [7] बह्वृचब्राह्मणं विकल्पार्थम्। प्ररूढाः कक्षा गुल्माः यस्मिन् देशे तत्र वा यजेत यत्र कश्चिद्वा देशान्तर इत्यर्थः (रु).

[सौत्रप्ररूढकक्षपदस्य देशकालभेदाभिप्रायेण द्विधा व्याख्यानम्]

(भा) कक्षः-कच्छः । प्ररूढाः कक्षा यस्मिन् देशे तृणैः स देशः प्ररूढकक्षः । तस्मिन्नुदवसानं कर्तव्यम् । द्वितीयोऽर्थः—चातुर्मास्ययाजिनः पौर्णमासीनियमादृतुयाज्यर्थः कालविधिः । प्ररूढाः कक्षा यस्मिन् काले स कालः प्ररूढकक्षः । [1] तस्मिन् ऋतुयाजिना यागः कर्तव्यः ।

(वृ) **चातुर्मा–लविधिः**—चतुर्षु मासेष्विति कालनियमात् ।

**प्ररूढाः कक्षा–र्तव्यः**—वर्षेण कक्षप्ररोहकाले वरुणप्रघासाः ।

(सू) **[2]तस्य वैश्वदेववत्कल्पः ॥ ३ ॥ ३ ॥ १८७१ ॥**

[वरुणप्रघासस्य वैश्वदेववत्कल्पकत्वाभिधानाशयः]

(भा) वैश्वदेववत्कल्पः विधिः दक्षिणस्यापि विहारस्य[3] सर्वं वैश्वदेव[4]वत्तन्त्रम् । एतद्ब्राह्मणान्येव पञ्च हवींषीति श्रुतेः । [5] पञ्चसंच[6]राणां मुख्यत्वात् सर्वेषां [7] पर्वणां वैश्वदेवप्रकृतित्वम् । [8] अतः संचराणाम[9]भावात् न प्राप्नोति दक्षिणस्य विहारस्य वैश्वदेववद्विधिः । श्रुत्यन्तराद्वद्धम् यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोति ' [10] इत्यनया । वरुणप्रघासैर्यक्ष्य इत्युक्त्वा समारोप्याग्निं देशान्तरगमनम् । यागदेशं गत्वा मन्थनमुपावरोहणं वा लौकिके, विद्युदसि[11] ।

(वृ) **न प्राप्नोति–द्विधिः**—प्रयोगतयाऽपि ।

**श्रुत्यन्तराद्वद्धम्**—वैश्वदेववत्तन्त्रम् । श्रुत्या वैश्वदेववत्तन्त्रप्राप्तिः पौर्वापर्यनियमश्च दर्शितः । तत्प्रतिपादनार्थं वैश्वदेववत्कल्प इत्युक्तम् ।

---

[1] तस्मिन्नुदवसानं कर्तव्यं ऋतुयाजिना यागश्च कर्तव्यः–ख. ग. [2] तस्येति कर्मापेक्षया पर्वापेक्षया वैकवचनम् । कल्पः-प्रयोगः । (रु). [3] रस्यापि–क. [4] वत् । एत–क. ङ. [5] पञ्चसंवत्सराणाम्–च. छ. ज. ञ. [6] राणामभावाद्दक्षिणस्य–ञ. [7] षां वैश्वदेव–क. ङ. षां तर्पणम् वैश्व–ग. [8] अतः पञ्चसंचरा–क. ङ. [9] भावाद्दक्षिणाविहारस्यानुप्राप्नोति वैश्व–क. ग. ञ. [10] इत्येतया–क. ख. ग. ङ. ञ. [11] दसिः–छ.

[वरुणप्रघासे विद्युदसिविधिकालाभिधानम्]

यद्यपि सर्वार्थं वैश्वदेवात्पूर्वमेव कृतम् । तथाऽपि देशकालभेदात् प्रसङ्गा-[1]भावात् यक्ष्यमाण उपस्पृशतीति प्रयोगाद्यपदार्थत्वात् देशान्तरप्रयोगे तत्रैवाद्यपदार्थः कर्तव्य इति मन्थनोत्तरका[2]लमेव विद्युदसि। सोमे तु देवयजनाध्यव[3]सानस्य विधानाद्दीक्षणीयाया ऊर्ध्वमप्युत्कर्षविधानात् [4]तस्मिन् देवयजने कृत्स्नप्रयोगासंभवात्संकल्पानन्तरमेव कर्तव्य[5]मपा-मुपस्पर्शनम्। यदा संकल्पोत्तरकालं[6] विद्युत्तदैवम् । यदा पूर्वं तदा विद्युदसिसंकल्पः[7]। ततस्समारोप्योदवसानम् ।

(सू.) [8]वेदौ कृत्वाऽग्रेण गार्हपत्यं समे प्राची वेदी भवतः ॥४॥४॥१८७२॥

[वरुणप्रघासे वेदिविधानं, तत्र पक्षभेदश्च]

(भा) यदा शौल्वेन विधानेन निर्मिते वेदी अग्रेण गार्हपत्यं तदा वेदौ कुरुतः अध्वर्युः प्रतिप्रस्थाता च । प्राक्त्वेन समे प्रकृतितुल्ये न पशुबन्धवद्वेदिः । केचित्पशुबन्धवत् । बोधायनस्य तु पाशुबन्धिकी

---

[1] भावः—छ. [2] काल एव—छ. [3] सानविधाना—ख. छ. [4] तत्र हि देव—छ. [5] मप उप—ख. [6] विद्युत्तदेवम्—छ. [7] ल्पः । समा—छ.

[8] आगूर्यापि उपस्पृश्य उदवसाय गार्हपत्ये निहितेऽनन्तरं वेदौ कृत्वा वेद्यौ कार्ये । ते चाग्रेण गार्हपत्यं नापरेणाहवनीयं नापि कल्पान्तराभिप्रायेणाग्रेणाहवनीयम् । प्राची—प्राक्कुन समे द्वे अपि दार्शपूर्णमासिकव्यावित्यर्थः । उत्तरस्याः पाशुबन्धिकत्व-भ्रमनिरासार्थं समवचनम् । कः प्रसङ्गः? अस्ति भ्रमहेतुः उत्तरवेदिसम्बन्धात् । पाशुकी वोत्तरेति कल्पान्तरे, तन्निरासार्थं च । तस्माद्युक्तमेव साम्यवचनम् । तत्राञ्जसा गार्हपत्यस्य प्रतिप्रस्थातृसंचरार्थमन्तरालं मुक्त्वा शिरस्स्थानीयस्य गार्हपत्यस्य बाहुद्वय-वत्पार्श्वयोर्द्वे वेदी भवतः। ब्राह्मणे तासां दक्षिणो बाहुरिति प्रकृत्य तस्माच्चातुर्मास्ययाज्य-मुष्मिन् लोक उभयाबाहुः इति बाहुत्वेन वेद्योः स्तवनात् । तस्मात्पृथमात्रं व्यंसाविति लिङ्गाच्च (र).

उत्तरा दर्शिकी दक्षिणेति । न तु तिर्यक्त्वेन समे। अर्था यथा सिध्यन्ति तथाभावलक्षणं तिर्यक्त्वम् ।

(वृ) केचित्पशुबन्धवत्— उत्तरस्या उत्तरवेदिमत्त्वात् उभयोस्समत्व-विधानात् ।

बोधा–न समे—दक्षिणस्या उत्तरवेदेरभावात् ।

अर्था यथा–क्त्वम्—उत्तरविहारस्य उत्तरवेद्यन्तर्भावानुग्रहेण तिर्यक्त्वम् । दक्षिणस्य विहारस्य तु प्रकृतिवत् ।

(सू) उत्तरामध्वर्युः करोति दक्षिणां प्रतिप्रस्थाता ।

उत्तरे विहारेऽध्वर्यु[1]श्चरति दक्षिणे प्रतिप्रस्थाता ॥

॥५॥५॥१८७३॥

[वेदिकरणाधिकारिकथनम्]

(भा) उत्तरां वेदिमध्वर्युः करोतीति अविहृते वेदी इत्यतः पृथ-गुच्यते ।

[अध्वर्युवेदिकरणविधेः प्रयोजनवर्णनम्]

(वृ) उत्तरां—तीति—अस्य प्रयोजनम् ।

अविहृते–च्यते—अग्निविहरणादूर्ध्वं वेदिकरणे अध्वर्युकर्तृक-[2]त्वदर्शनादिहाविहृतेऽग्नौ वेदिकरणमित्युत्तरमध्वर्युः करोतीत्युच्यते । दक्षिणां प्रतिप्रस्थातेति कर्तृनियमार्थः ।

[उत्तरदक्षिणवेद्योः स्थानप्रदर्शनम्]

[3]अत्रोत्तरा वेदिः [4]प्राकृतस्थाने । दक्षिणा तस्या दक्षिणतः । प्रथमस्याः स्वस्थानाबा[5]धेनान्ते निवेशो युक्त इति ।

---

[1] चरति कर्माणि करोति (रु). [2] त्वस्य दृष्टत्वादिह—घ. [3] अत्र युक्त इती त्यन्तो ग्रन्थः च—ञ-कोशयोर्भाष्य एव दृश्यते. [4] प्रकृतिस्थाने—ख. ग. [5] धेन गन्तोर्नि—घ.

(सू.) उभयत्र [1]कृत्स्नं तन्त्रम् ॥ ६ ॥ ६ ॥
॥ १८७४ ॥

[विहारद्वयेऽपि कृत्स्नाङ्गकत्वम्]

(भा) सर्वोऽङ्गसमुदाय उभयत्र [2]सयजमानकः उभयत्र कृत्स्नं तन्त्र[3]-मिति परोप्यङ्गसमुदाय उभयत्र ।

(सू.) अपि [4]पत्नीसंयाजाः ॥ ७ ॥ ७ ॥ १८७५ ॥

[पत्नीसंयाजादिहोमानामप्युभयकर्तृकत्वम्]

(भा) पत्नीसंयाजा अप्यन्ये [5]होमाश्च राकादयः सम्पत्नीयदक्षिणाग्नि होमाश्च । एकत्वादग्नेरध्वर्युरेव कुर्यात् । अत उभयोर्विधीयते कर्तृ-पात्रभेदात् ।

उभयत्र कृत्स्नं तन्त्रमित्युक्तेऽपि किमर्थं अपि पत्नीसंयाजा इत्यु-च्यते? अत आह—

(वृ) एकत्वादग्ने–र्यात्—गार्हपत्यदक्षिणाग्नि[6]होमान् साधारणद्रव्य-संस्कारवत् ।

[भाष्याभिमतविधौ न्यायोपपादनम्]

अत उ–यते—नेदं वाचनिकम्, किन्तु न्यायप्राप्तमित्याह ।

कर्तृपा–दात्—तत्तत्प्रयोगसाधनभूत[7]कर्तृपात्राणां तत्कर्मा-ङ्गभूताः पराग्निहोमाः कर्तव्या इति न्यायात् ।

---

[1] विहारसंयुक्तं कृत्स्नं तन्त्रमुभयोर्विहारयोर्भवति । उभयदेशभावित्वात्प्रधानानां देशभेदे चाङ्गानामविभवादिति भावः । यथोक्तं न्यायविद्भिः—दक्षिणेऽग्नौ वरुण-प्रघासेषु देशभेदात्सर्वं तन्त्रं क्रियेतेति (रु).

[2] सयाजमानकः । परोऽपि –क. च. ज. ञ.

" " कः कपात्र ?–ङ.

[3] मिति उभयत्रापि–छ. [4] पत्नीसंयाजग्रहणं प्रदर्शनार्थं । अपराग्निहोमानां तेषां त्वेकाग्निकत्वात् कल्पान्तरमताच्च तन्त्रता मा विज्ञायीति पुनर्वचनम् । एकत्वेऽ-प्यग्नेः कर्तृभेदादुभयवैहारिकाणां पृथगुभये कार्या इत्यर्थः । उक्तं च जैमिनिना—एकाग्निवदपरेषु तन्त्रं स्यादिति, नाना वा कर्तृभेदादिति च (रु). [5] होमा राका–घ. [6] होमाः–ख. ग. [7] कर्तृपात्राभ्यां त–ख. ग.

(सू [1] एकवत्संप्रैषः ॥८॥८॥१८७६॥

[उभयाधिकारिकत्वेऽपि संप्रैषवाक्यघटकतिङन्तस्य एकवचनान्ततैव]

(भा) [2] एकस्यैव एकव[3]द्भवति। एकवचनेन सम्प्रैषः[4]; यद्यपि द्वयोरर्थयोर्याच्यते प्रणेष्यामि प्रोक्षिष्यामीत्येवमादि।

[भाष्योक्तैकवचनान्ताभिधानस्य सहेतुकं समर्थनम्]

(वृ) एकवच–वमादि—उभयकर्तृकयोरुभयोः प्रणयनादिक्रिययोर्याच्यमानत्वात् प्रणेष्यावः प्रोक्षिष्याव इत्यादिद्विवचनप्राप्तावप्येकवचनेन संप्रैषः। प्रणयनादिक्रियामात्रस्य वाच्यत्वात् न कर्त्रैकत्वादिविवक्षा प्रैषप्रार्थनादिषु। एकेन प्रार्थिते[5]नापि उभयार्थानु[6]ज्ञानसम्भवात्।

---

[1] अत्र रुद्रदत्तः "युगपत्कालानां निगदानामध्वर्युरेव वक्तेति वक्ष्यति। तत्रार्थद्वयविषया अपि ये संप्रैषास्तेऽप्येकवदेकार्था इवैकवचनेन प्रयोज्याः। यथा अग्नये प्रणीयमानाय अग्नये समिध्यमानाय अग्नीत्परिधींश्चाग्निं च इमां नरः कृणुत वेदिं इध्माबर्हिरुपसादयेत्यादि। तेषां चार्थद्वयविषयत्वेऽपि अग्निमादधीतेत्यादिवज्जात्यभिप्रायेणैकत्वोपपत्तेर्मा भूदार्थबाध इति भावः। संसर्गिद्रव्याभिधायित्वाच्चानूहोऽग्निशब्दस्य, यथाऽऽहुर्मीमांसकाः–संसर्गिषु चार्थस्य स्थिरपरिणामत्वादिति" इत्युक्त्वा; सत्यापाढबोधायनमते प्रदर्श्य 'अतश्च न्यायाद्यजमानेऽप्यग्न्यभिधायिनामनूहः, यथा युनज्मि त्वा समिद्धो अग्निरा हुत इत्यादेः। अत्र च संप्रैष इति वचनात् अन्ये संप्रैषेभ्यो ये निगदाः संवादामन्त्रणादिविषयास्ते द्विवदेव प्रयोज्याः। यथागताममीत्प्रेणष्यावः प्रोक्षिष्यावः निर्वप्स्याव इत्यादयः। केचित्तु आमन्त्रणनिगदानप्येकवत्प्रयोज्यान् मन्यन्ते; तदयुक्तम्, संप्रैषग्रहणात् एकवदामन्त्रितस्य द्विवदनुज्ञावचनविरोधाच्च। सत्याषाढस्तु 'उभाभ्यामप्येकवदामन्त्रणमाह यथोभौ ब्रह्माणमामन्त्रयेते द्विवद्ब्रह्मानुजानातीति' इत्याह (रु). [2] एकस्यैकवद्भव–क. एकस्यैकवचन एकवद्भ; ङ. एकस्यैव एक–ख. च. [3] द्भवतीत्येकव–छ. [4] ष इत्यर्थः–घ. [5] नापि ब्रह्मादिना उभ–ख. ग. घ. [6] ज्ञापन–घ.

(सू) [1] द्विवद्ब्रह्माऽनुजानाति ॥ ९ ॥ ९ ॥ १८७७ ॥

[ब्रह्मानुवचने उभयोद्देश्यकत्व एव द्विवचनान्तता, सौत्रब्रह्म-पदस्य यजमानाद्युपलक्षकत्वं, तत्रोपदेशपक्षश्च]

(भा) द्विवचनेन तु ब्रह्माऽनुजानाति प्रणयतं यज्ञं देवता वर्ध[2]यतमिति। ब्रह्मग्रहणं प्रदर्शनार्थम् । अतः ओंनिर्वपतं अनुप्र[3]हरतमिति च भवति । [4]यत्र यत्र द्वावनुज्ञातव्यौ ब्रह्मानुज्ञायामपि यत्रैकोऽनुज्ञातव्यः तत्र न भवत्यूहः, यथा ओमनुब्रूहीति । द्विवदनुजानातीत्यिवचनात् ब्रह्मानुज्ञास्वेव द्वित्वेऽभिधेये भवत्यूहः, नान्यत्रेत्युपदेशः ।

(वृ) द्विवच–यतमिति—अनुज्ञाप्यभेदात्, मन्त्रे च [5]युष्मदर्थ[6]स्य विवक्षितत्वात् ।

ब्रह्मग्र–र्थम्—यजमानाग्नीध्रादेरपि ।

अत ओं–तम्—इति यजमानः । अनुप्रहरतं अगतमिति च आग्नीध्रः । अर्हन्नित्यस्योहेन अग्निमगं किल प्रस्तरमिति सम्यग्दग्धं किलेत्यर्थः । (किलेति मन्त्रार्थः) अतः प्रस्तरार्थत्वात् द्विवचनेनोहः प्रश्नोत्तरयोः ।

यत्र यत्र–व्यौ—अन्येषामपि होत्रादीनाम् ।

यथा–हीति—होतुरेकस्यानुज्ञातव्यत्वात् ।

द्विवद्–देशः—ब्रह्मग्रहणात् ब्रह्मण एव द्वित्वेन द्विवचनेनोह इति । अन्यथा द्विवदनुजानातीत्येव वदेत् ।

---

[1] ब्रह्मा तु द्विवचनेनानुजानाति ; यथा प्रणयतं यज्ञं देवता वर्धयतं युवां प्रोक्षतमित्यादि । प्रवराश्रवणे त्वामन्त्रणमनुज्ञा चैकवदेव भवतः, आश्रावयितुरेकत्वात् । ब्रह्मग्रहणमनुज्ञाग्रहणं च यजमानादेः संवादादेश्च प्रदर्शनार्थं तुल्यन्यायत्वात् । तस्मादों निर्वपतम् संवदेथां अनुप्रहरतं अगतां इत्याद्यपि द्विवद्भवति (रु). [2] यतं युवामिति–क. ख. ग [3] हरतमागतमिति च–ख. ङ. छ. हरतं अगतमिति–च. [4] यत्र द्वावनु–ख. ग [5] युष्मदस्मदर्थ–घ. [6] स्य च वि–घ.

(सू) द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं [1]पृथमात्रं रथवर्त्ममात्रं सीतामात्रं प्रादेशमात्रेण वा तिर्यग[2]संभिन्ने वेदी भवतः ॥ १० ॥ १० ॥ १८७८ ॥

(वेदिकरणप्रकारस्तत्प्रमाणं च)

(भा) द्व्यङ्गु[3]लादिना परिमाणेन [4] तिर्यगसंभिन्ने—असङ्गते परस्परं[5] प्रति भवतो वेदी । द्व्यङ्गुलान्तरं[6] भवति श्रोणी प्रति ।

(वृ) द्व्यङ्गुलान्तरं-प्रति—श्रोणिदेशे द्व्यङ्गुलाद्यन्तरं मध्ये तु महदन्तरं [7]सन्नततरत्वात् ।

(सू) [8]अन्तरा वेदी प्रतिप्रस्थातुस्संचरः ॥ ११ ॥ ॥ ११ ॥ १८७९ ॥

[वेद्योरन्तरेण प्रतिप्रस्थातुस्संचाराय मार्गक्लृप्तिः]

(भा) [9]वेद्योरन्तरेण संचारः कर्मकर्तुः प्रतिप्रस्थातुः । इतरथा नान्तराऽग्नी संचरतीति प्रतिषेधस्स्यात् ।

(वृ) वेद्योरन्त-स्थातुः—[10]प्राक्प्रत्यक्संचारः प्रतिप्रस्थातुर्वेद्योरन्तरेण ।

इतरथा-धस्स्यात-कुर्म कुर्वतः गार्हपत्यदक्षिणवैहारिकाहवनीययोर्मध्ये प्राचीनगमनस्यापि प्रतिषिद्धत्वात् तत्परिहारा[11]र्थमन्तरा वेदी प्रतिप्रस्थातुस्संचरविधिः ।

---

[1] पृथादयः प्रकृताविव व्याख्याताः (रु). [2] असंभिन्ने-असंश्लिष्टे । एष्वन्यतममुभयोरन्तरालपरिमाणमित्यर्थः । तच्च वेदिश्रोण्योरंसकोट्योरेव भवति, मध्ये तु संनमनवशाद्विस्तारस्संपद्यते (रु). [3] लादीनां-ज. [4] तिर्यक्संभिन्नासङ्गतयोः-ग. [5] रेण भवतो-घ. [6] द्व्यङ्गुलाद्यन्तरं-ख. ग. घ. छ. तद्द्व्यङ्गुलान्तरं-ग. [7] सन्नतत्वात्-छ. [8] अन्तरा वेदी यो देशः स प्रतिस्थातुस्संचरः कर्मार्थः । एवं चोत्तरतउपचारत्वं दक्षिणविहारस्यापि संपादितं भवति (रु). [9] वेद्यावन्तरेण संचरः-ङ. छ. [10] एतद्विवरणभाष्यं-घकोशे न दृश्यते । प्राक्प्रत्यक्प्रतिप्रस्थातु-छ. [11] र्थोऽन्तरा वेदी-छ.

(सू) अपरेणोत्तरां वेदिं स्तम्बयजुर्हरन्नाध्वर्युमाभिपरि-[1]हरति ॥ १२ ॥ १२ ॥ १८८० ॥

(भा) बर्हिर्न भवत्यध्वर्योः स्तम्बय[2]जुरेव नयति ।

(वृ) बर्हिर्न-यति—नाध्वर्युमाभिपारिहरतीति—नाध्वर्यो[3]श्च मध्ये नयति । स्तम्बयजुस्तृणपांसून् ।

(सू) उत्करे निवपति ॥ १३ ॥ १३ ॥ १८८१ ॥

[4]समान उत्करः ॥ १४ ॥ १४ ॥ ॥ १८८२ ॥

(भा) यद्यपि देशभेदः[5] । यदा प्रतिप्रस्थात्रा न्युप्तं स्तम्बयजुः तदोभयमाग्नीध्रोऽ[6]भिगृह्णाति ।

(वृ) यद्यपि देशभेदः—अन्तराणि यज्ञाङ्गानीत्येतद्विहारान्तरसम्बन्धिनामपि भवतीति ।

(सू) [7]पञ्चर्त्विजः ॥ १५ ॥ १५ ॥ १८८३ ॥

[ऋत्विक्सङ्ख्या]

(भा) पञ्चर्त्विजो वरुणप्रघासेषु । अतस्सामान्यचोदनासु पञ्च भवन्ति समिदाधानादिषु ।

(वृ) समिदा-षु—एधोऽस्येधिषीमहीत्यादिषु ।

---

[1] प्रतिप्रस्थातेति शेषः । अपरेण वेदिमिति वचनात् गार्हपत्यवेद्योर्मध्यतो गमनदेशाभावाच्च स्वयं पश्चाद्गार्हपत्यस्य गच्छन् स्तम्बयजुः पुरतो हरति न चाध्वर्योर्बर्हिर्नयति (रु). [2] यजुरन्तरेव-ख. ग. घ. च. छ. यजुरन्तरैव-ज. [3] र्योर्बर्हिर्नयति-विहारस्याध्वर्योश्च मध्ये नयति-ख. ग. घ. [4] एक एवोत्तरो द्वाभ्यामुत्करः । तत्रोभाभ्यां न्युप्तमाग्नीध्रस्तन्त्रेणाभिगृह्णाति । यजमानश्च तन्त्रेणानुमन्त्रयते विभवात् (रु). [5] शब्दभेदः-ख. ग. [6] पि गृह्णाति-क. [7] न तु प्राकृता एव चत्वारः, न च पञ्चभ्योऽधिकाः । दक्षिणवेद्यर्थमपि पृथग्ब्रह्मादय इत्यर्थः (रु).

(सू.) [1] यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता ॥ १६ ॥
॥ १६ ॥ १८८४ ॥

[प्रतिप्रस्थातुरध्वर्युकृतानुकारिता]

(भा) यदेवाध्वर्युः करोतीति कृतानुकारित्वं प्रतिप्रस्थातुः । तस्माद्यच्छ्रेयान् करोति तत्पापीयान् करोतीति वाक्यशेषात् । अतुल्यकालत्वाद्याजमा[2]नावृत्तिः । केचित्त्वाहुः—यद्विधानमध्वर्युः करोति तदेव प्रतिप्रस्थात्रा कर्तव्यम् । [3]यमेव च कल्पमध्वर्युः करोति, यदि पलाशशाखामध्वर्युराहरति सैवानेया प्रतिप्रस्थात्रा न शमीशाखामाहरति। युगपत्कर्तव्यं [4]कर्मेति तेषामूहोऽर्थद्वित्वे याजमाने च ।

(वृ) यदेवाध्व–स्थातुः—अध्वर्युणा कृतं कर्म पश्चात् प्रतिप्रस्थात्रा कर्तव्यम् ।

तस्माद्य–शेषात्—श्रेयसाऽनुष्ठितं कर्म पश्चाद [5]नुतिष्ठति हीनो लोके ।

अतुल्य–माहरति—वैकल्पिकेपूभयोः समानकल्पनार्थं यदेवाध्वर्युः करोतीति ।

आस्मिन् पक्षे—

युगप–माने च—युगपदनुष्ठानात । पूर्वस्मिन् पक्षे याजमानावृत्तिः ।

---

[1] यद्यदेव कर्माध्वर्युः करोति तदेव कर्म तमनु प्रतिप्रस्थाताऽपि स्वस्मिन् विहारे करोतीत्यर्थः । कात्यायनबोधायनाभ्यामप्युक्तम् । एवं च क्रमभावित्वादुभयोः कर्मण आवृत्तिरसम्भवे याजमानानां, यथाऽन्वाधीयमाने जपति वेदिं संमृज्यमानां बर्हिरासाद्यमानम् इत्यादौ । विभवतां तु तन्त्रत्वमेव सर्वत्र, यथाऽन्वाहितेषु जपति बर्हिरासन्नं प्रयाजान् हुतं हुतम् इत्यादौ (रु). [2] न निवृत्तिः–ङ. [3] यद्वै कल्प–**ख. ग.** [4] कर्मोभाभ्यामिति–**ख. ग. छ.** [5] अनुतिष्ठन्ति पापिनो लोके–**छ.**

(सू) [1]यत्किञ्च वाचाकर्मीणमध्वर्युरेव तत्कुर्यात् ॥ ॥ १७ ॥ १७ ॥ १८८५ ॥

[कर्मानुष्ठानमात्रे प्रतिप्रस्थातुरध्वर्युकृतानुकारिता न मन्त्रोच्चारणे]

(भा) [2]वाच आकारान्त[3]ता। वाचा कर्तव्यं कर्म [4]वाचाकर्म। तत्कर्मणि भवं तत्र जातं वा वाचाकर्मीणम्। छान्दसः खः। [5]तत्र मन्त्रजातमध्वर्युरेव कुर्यात्। कर्मैव [6]केवलममन्त्रकं प्रतिप्रस्थाता कुर्यात्।

(वृ) **छान्दसः खः**—तत्रभवत्वादण्प्रत्ययप्रसङ्गात् खप्रत्ययश्छान्दसः। वाचाकर्म मन्त्रसाध्यं कर्म।

**कर्मैव केवलं–कुर्यात्**—एकेनापि कर्मसाधनीभूतमन्त्रोच्चारणे कृते तत्प्रकाशितकर्मानुष्ठानस्योभयोरपि संभवान्न भेदेनोच्चारणं कर्तव्यमिति।

(सू) [7]युगपत्कालान्वा निगदान् ॥ १८ ॥ १८ ॥ ॥ १८८६ ॥

---

[1]पूर्वसूत्रेण सर्वस्मिन्नाध्वर्यवे प्रतिप्रस्थातुरपि प्राप्ते नियम आरभ्यते। वागिति वागिन्द्रियमुच्यते। तज्जन्यो व्यापारो वा कर्म। तत्साध्यं कर्म वाचाकर्मीणम्। तदध्वर्युरेव कुर्यात। मन्त्रोच्चारणं सर्वमध्वर्युरेव कुर्यात्। प्रतिप्रस्थाता तु केवलं कर्माण्यनुतिष्ठेत्। तदुच्चरितैरेव मन्त्रैरुभयोरनुष्ठेयार्थसिद्धिरिति भावः (रु). [2]वाचा. [3]ता वाच्या–**ग.** [4]वाचाकर्म कर्मणि भवं–**च.** वाचाकर्मणि भवं मन्त्रजातं–**ज.** [5]तं मन्त्र–**ङ.** तन्मन्त्र–**ज.** तज्जातम–**च.** [6]केवलं मन्त्रकम् ?–**ज.** [7]यद्वा युगपत्कालमन्त्रविषयोऽयं नियमो भवेत्। तत्रोच्चैःप्रयोगमन्त्रास्तावन्निगदाः संप्रैषादयः। तेषु च द्वयोर्युगपत्प्रयोक्तव्यतयोपस्थिता युगपत्कालाः। यौगपद्यं च नात्यन्तिकम्, किं तु पूर्वसूत्रानुरोधेनानन्तरभावित्वमेव। तेन प्रकारेण ये युगपत्काला निगदाः—उच्चैस्समाहन्तवै, अविदहन्तश्श्रपयत, प्रोक्षणीरासादय, ओश्रावय अगतामग्नीत्, ब्रह्मन् प्रोक्षिष्याव इत्यादयः, तानध्वर्युरेव प्रयुञ्जीत। निगदचोदितानामाग्नीध्रादीनामेवं संस्कारानध्वर्युरेव कुर्यात्। ये त्वयुगप-

[क्वचिदध्वर्युप्रतिप्रस्थातृभ्यामुभाभ्यामपि मन्त्रोच्चारणस्यावश्यकता]

(भा) निगद्यन्त उच्चैरिति निगदाः। ते पुनः प्रैषाः। युगपत्कालो येषां ते युगपत्कालाः, तुल्यकालाः[1]। तुल्यकाला ये प्रैषास्तानध्वर्युरेव कुर्यात्। अन्यैस्तु मन्त्रैः प्रतिप्रस्थाता[2] करोति। कथं [3]कृतानुकारस्य युगपत्कालता निगदानामुपपद्य[4]ते? पुरुष[5]संस्कारत्वात्प्रैषाणाम्। [6]तन्त्र भूतस्य चार्थस्य ब्रह्मयजमानादेः [7]प्रैषसंस्कर्तव्यत्वेन चैकत्वात् तन्त्रेणैवोभाभ्यां संस्कारः प्राप्तः, तुल्यकालत्वादध्वर्युणैव कर्तव्य इति द्वितीयो विधिः प्रोक्षिष्यामि हविर्निर्वप्स्यामीति [8]अग्नीत्परिधींश्च[9]त्येवमादयः ये त्वयुगपत्कालाः[10] उभाभ्यामपि कर्तव्याः उपसृष्टां मे प्रब्रूतादिति प्रतिप्रस्थातुरपि [11]पूर्वदेवताक्रमात्। प्रचरणे च मारुत्या अनुब्रूहीत्येवंप्रकारा अयुगपत्कालाः।

[अध्वर्युकर्तृकमन्त्रोच्चारणविषये पक्षान्तरम्]

(वृ) **अन्यैस्तु–करोति**—इति पक्षान्तरम्। निगदानामेवाध्वर्युणा प्रयोज्यत्वमिति।

**प्रोक्षिष्यामि–मादयः**—इतरेषां मन्त्राणामुभाभ्यां प्रयोगः। तत्प्रयोगाङ्गभूतकर्त्रोच्चारितमन्त्रेणैव तत्कर्म कर्तव्यमिति। तूष्णीं वाऽग्नि

---

निगदा उपसृष्टां मे गां चोपसृष्टां मरुद्भ्योऽनुब्रूहीत्यादयः, ये चान्ये निगदव्यतिरिक्ता मन्त्रास्तान् सर्वान् प्रतिप्रस्थाताऽपि प्रयुञ्जीतेति। तत्रान्यन्मतम्; वाशब्दोऽवधारणार्थः पक्षं व्यावर्तयति पूर्वपक्षमोत्रणोक्तः पूर्वः कल्प इति। कस्मात्? परकर्तृके निर्वापादौ परकर्तृके च मन्त्रे निर्वपामीति मन्त्रवर्णवैयर्थ्यात्। यथोक्तं न्यायविद्भिः मन्त्राश्च सन्निपातित्वादिति॥ (रु).

1 ला इत्यर्थः—ख. 2 ताऽधिकरोति—क. 3 कृतानुकारित्वे. 4 द्यत इति चेत्; 5 पुरुषवचनात्पुरुष—क. 6 तत्र?—ख. च. 7 प्रैषं—च. प्रैषसंस्कर्तव्यस्य चै—द. 8 अग्नीन् परिधीं—च. 9 त्येवमादि ये—क. च. त्येव माद्याः प्रैषाः ये—ख. 10 त्कालास्त उभा—ख. ग. 11 पूर्वं देव—क. च.

चिन्वीतेत्यत्र मन्नवन्तामित्यपरामिति सूत्रकारवचनात् कृते मन्त्रे पुनः करणप्रतीतेः ।

ये त्वयु-क्रमात्—[1] मारुत्यामिक्षा भवति वारुण्यामिक्षेति मारुत्याः पूर्वभावित्वात् तदर्थदोहस्यापि प्रथमभाविता । युगपत्काला-न्वेत्यास्मिन् पक्ष, अतः पूर्वकालत्वादुपसृष्टां मे प्रब्रूतादिति प्रति-प्रस्थातुः पूर्वम् ।

प्रचर-त्कालाः—इहापि तथैव ।

(सू) [2] **साधारणद्रव्यांश्च संस्कारान् ॥ १९ ॥ १९ ॥ ॥ १८८७ ॥**

[केषांचित्कर्मणामध्वर्युणैकेनैवानुष्ठेयता]

(भा) साधारणानि द्रव्याणि सामान्यानीत्यर्थः । गार्हपत्यदक्षिणाग्नि-सभ्यावसथ्याः होत्राग्नीध्रब्रह्मयजमानाश्च । तेषां संस्काराः, अग्नीनां परिस्तरणाद्याः वरणाद्याश्च पुरुषाणां, ते अध्वर्युणैव कर्तव्याः, नोभाभ्यां, अध्वर्योर्मुख्यत्वात् । एकेन च प्रकृतौ तेषां संस्कारः कृत इति ।

(वृ) **एकेन च-कृत इति**—[3] एकेनापि कृते संस्कारस्य कृतत्वात् तत्रापि मुख्येनाध्वर्युणैव कर्तव्य इति न पृथक्पृथक् ।

(सू) [4] **प्रागुत्तरात्परिग्रहात्कृत्वैकस्फ्यया वेदी अनु-संभिनत्ति दक्षिणस्या उत्तरार्यै श्रोणेः प्रक्रम्या-दक्षिणादंसादुत्तरस्याः ॥ २० ॥ २० ॥ १८८८ ॥**

---

[1] इयं वृत्तिः-**ख. ग. घ.**-कोशेषु न दृश्यते । [2] पूर्वसूत्राभ्यां मन्त्रेषु प्रयोक्तृनियम उक्तः । अनेन कर्मस्वपि नियम उच्यते । साधारणद्रव्यविषयानपि संस्कारानध्वर्युरेव गार्हपत्यादीनामन्वाधानपरिस्तरणब्रह्मयजमानासनप्रकल्पनपत्नी-संनहनहोतृवरणपर्वाञ्जनादिरूपान् कुर्यात् । संस्कार्याणामेकत्वादिति भावः ॥ (रु).
[3] इयमपि वृत्तिः-**ख. ग. घ.** कोशेषु. न दृश्यते. [4] एकयत्नेन स्फ्यकृता रेखा एकस्फ्या । तया वेदी अनुसंभिनत्ति सम्बन्धयतीत्यर्थः ॥ (रु).

[स्फ्यादानादेरुभयकर्तृकता वेदिसम्बन्धनप्रकाराश्च]

(भा) [1]पृथक्पृथक् स्फ्यादाना[2]दि कर्मणाध्वर्युः प्रतिप्रस्थाता च कुरुतः स्वां स्वां वेदिम् । [3]याजमानावृत्तिः । [4]तन्त्रेणाभिगृह्यमाणस्योत्करस्य पर्यायेणाग्नीध्रः समुद्धतस्य इमां नरा इत्यध्व[5]र्युरेव । [6]खनने निर्माणे च कृते वेद्योः । एकयत्नेन स्फ्येन क्रियते या रेखा सैकस्फ्या, तया भिनत्ति दक्षिणस्या उत्तरायै श्रोणेरारभ्य लिखति ; यावदुत्तरस्या [7]दक्षिणस्मादंसादिति ।

[यजमानाभिमन्त्रणस्य तन्त्रतायां हेतुः]

(वृ) तन्त्रेण—यजमानाभिमन्त्रणं तन्त्रेण, आग्नीध्राभिग्रहणस्य तन्त्रत्वात् ।

पर्यायेण—निवपति ।

इमां न–वेद्योः—प्राञ्चौ वेद्यंसावुन्नयतीत्यादि मध्ये संनततरेत्यन्ते कृते ।

[वेदिसम्बन्धनप्रकारे मन्त्रलिङ्गकथनम्]

एकय–दंसादिति— पूर्वो यत्सन्नपरो भवासि इति मन्त्रलिङ्गस्य संभवात् ।

(सू) [8]उत्तरस्यां वेद्यां पशुबन्धवदुत्तरवेदिमुपवपति ॥
॥ २१ ॥ २१ ॥ १८८९ ॥

[उत्तरवेदेश्चात्वालस्य च करणम्]

(भा) अध्वर्युस्ततो वेद्यामुत्तरवेदिं करोत्युत्तरस्यामेवान्ते । अन्ततो हि देवानामाधीयत इति वचनात् । शम्यामात्री वित्तायनी मेऽसीत्येवमादि । [9]चात्वालोऽपि क्रियते, उत्तरवेदिप्रयुक्तत्वात् ।

---

1 पृथक्स्फ्या–ङ. 2 दिकर्मणा–क. 3 यजमानावृत्तिः–क. ग. 4 तन्त्रेणातिगृह्य–ङ. 5 र्येरेव–ख. ग. 6 खनने च कृते निर्माणे च–छ. 7 दक्षिणांस इति–घ. दक्षिणोंऽस इति–ख. ग. च. दक्षिणांसादिति–ङ. 8 अन्तरेव वेदेरुत्तरवेदिमुपवपति न त्वाहवनीयायतनवत्पुरतो वेदेः तत्र वेद्यन्ते पशुबन्धवत् वित्तायनी मेऽसीत्यादिविधिना शम्यामात्रीमुत्तरवेदिं कुर्यादित्यर्थः (रु). 9 चात्वालेऽपि–ग.

(सू) [1]लोक पशुबन्धवद्गार्हपत्यादग्नी प्रणयतः ॥ ॥ २२ ॥ २२ ॥ १८९० ॥

[अग्निप्रणयनविधिः, तत्र पक्षान्तरं तत्खण्डनं च]

(भा) दक्षिणतो निस्सारणान्ते कृते अग्न्योः प्रणयनं पशुवत् । उपर्यग्नौ धार्यमाणे व्याघारणादि ऊर्णास्तुकानिधानान्तं वैश्वदेववत् । दक्षिणस्यामपि वेद्यामूर्णास्तुकैव वैश्वदेवप्रकृतित्वात् । विनाऽप्युत्तरवेद्योभयत्रातिमुक्तयन्तेऽन्वाधानम् । उपदेश उत्तरस्यां संभाराः । [2] पूर्ववदुपर्यग्नौ धार्य[3]माणे दक्षिणस्यामूर्णास्तुकैव । कालवचनान्निर्मितायामुत्तरवेद्यां यः प्रणयनकालः तस्मिन्ननुत्तर[4]वेदित्वात् दक्षिणस्यां पाशुकमपि प्रणयनं स्यात् । अतः पशुबन्धवद्वचनादुभयत्र पाशुक[5]म् । पुनश्च पशुब[6]न्धग्रहणादाहवनीयादपि स्यात्, अतो गार्हपत्यग्रहणम् । गतश्रियोऽपि नाहवनीयात्प्रणयनम् । [7]न वा दक्षिणस्यैकस्य, गार्हपत्यादग्नी प्रणयत इति [8] द्विवचनात् । अतो गतश्रियः पृथक्समारोप्योदवसाय मथित्वा[9]ग्निं (देवयजनं कृत्वा) वेदिं कृत्वोत्तरवेदिं च विभज्याहवनीयं प्रणयनीयौ [10] क्षिपतः । ततोऽग्नये [11] प्रणीयमानायानुब्रूहीत्युक्तेऽध्वर्युणाऽति

---

1 संभारनिवपनान्ते दक्षिणतो निस्सारणान्ते वा । तत्र संभारः पूर्ववदूर्णास्तुकैव । सा च दक्षिणविहारेऽपि स्यात् । पशुबन्धवदिति पुनर्वचनमनुत्तरवेदिकेऽपि दक्षिणविहारे नित्यत्वार्थम् । पुनर्गार्हपत्यग्रहणं कल्पान्तरोक्तस्याग्रेणाहवनीयं वेदिं कृत्वाऽऽहवनीयात्प्रणयनस्य निवृत्त्यर्थम् । इध्माभ्यामुभयस्य सर्वं वा विभज्य प्राकृतत्वात्प्रणयनमिति कात्यायनेन विभागस्य दर्शितत्वात् विभक्तस्यैवोद्धरणमिति । उद्धृतस्य वा विभज्य प्रणयनमित्यर्थः । गतश्रियो विभज्य प्रणयनं भवति (रु). 2 पूर्वं वा उप- **ख. ग. ङ.** 3 माणे वाद-**ख.** 4 वेदिं दक्षिणस्य विहारस्य पाशु-**छ.** 5 कं प्रणयनम्-**घ.** 6 बन्धवद्ग्रह ग्र.-**छ.** 7 न च द-**छ.** 8 द्विर्वचनात्-**क.** 9 त्वाग्नीन् वेदी कृत्वोत्तरवेदिश्च विभज्या-**छ.** 10 क्षिपन्तम्-**ग.** 11 प्रणीय इत्युक्ते-**ञ.**

मुक्तयन्तमुभयोर्नयनमर्थलुप्तमुत्तरवेद्याम् । वेद्यां च [1] स्थापयित्वे-त्युपदेशः । कृत्वोत्तरवेदिं विभज्याहवनीयमुत्तरवेद्यां वेद्यां च तूष्णीं स्थापयतः। ततोऽग्न्यन्वाधानमिति । केचिदाहवनीयात्प्रण[2]यनम् ; तद-नुपपन्नम् ; गार्हपत्यादेव वचनात् ।

(सू) नोद्यतहोमौ [3] जुहुतः ॥ २३ ॥ २३ ॥ १८९१ ॥

[उद्यतहोमनिषेधाल्लिङ्गान्नाहवनीयादग्निप्रणयनम् ]

(भा) पुनरुद्यतहोमप्रतिषेधात् कुण्डपायिनामयनेऽपि न भवत्याहव-नीयात्प्रणयनम् । तस्यैवाहवनीयस्य गार्हपत्यचितौ [4] प्रतिष्ठितस्य दक्षि-ण[5]स्यां वेद्यां स्थापनमर्धस्य । [6] यद्यपि वेदिरग्निश्च चितिर्विद्यते । [7] यदि ह्याहवन[8]यात्प्रणीयते उद्यतहोमयोर[9]पि भावस्तत्र स्यात् ; अतस्तयोः प्रति[10]षेधादाहवनीयात्प्रणयनप्रतिषेधोऽनुमीयते उत्तरवेदि[11]र्यथागार्हपत्य-चितिर्भवति । अतस्तथास्थित एवाग्नौ [12] क्रियते विभागः । गार्हपत्य-चितेर्धारणार्थत्वात् । न च सोमार्थः प्रणीतश्चालयितव्यः । सोमाङ्गान्यु-पसदन्तानि तत्र कृता[13]नि । यदा कृता दक्षि[14]णवेदिः तदाऽर्धं स्था-प्यते । तस्यां [15] तूष्णीमभ्यर्धं पशुवन्नी[16]यते ।

[पशुवत्प्रणयनादेवोद्यतहोमप्रतिषेधसार्थक्यसंभवः आहितस्याग्नेरे कत्वात्संसर्गाच्चाग्नयाभिधानानामनूहश्च]

येषां त्वतिप्रणीते हविर्यज्ञ[17]मासाः तेषां महावेद्या दक्षिणतो [18] दक्षिणवेदिः, तथैवाग्निविभागस्तूष्णीम् । पशुवद्वा दक्षिणाग्नेर्नयन-

---

1 स्थापयतोऽग्नी इत्युपदेशः—क. छ. स्थापयित्वाऽग्नी इत्युपदेशः—ग. स्थापयत्यग्नी इति । उप—घ. 2 यनमिति, तत्त्वनु—छ. क. ग. 3 विस्पष्टार्थं पुनर्वचनम् । (रु). 4 प्रतिष्ठापितस्य—घ. 5 स्यां स्थापनमस्य—ग. 6 यदपि—ग. 7 यद्याहव—ग. 8 नीयस्स्यात्प्रणी—ञ. 9 रपि ह्यावस्तत्र स्यात्—क. 10 षेध आहवनी—ञ. 11 र्यदा—ञ. 12 क्रियते गार्ह—क. 13 कृत्यानीति—क. ञ. 14 णा वेदिः—ग. घ. ञ. 15 ष्णीं नह्यर्धं नी—क. घ. 16 न्नीयेत—ञ. 17 मांसं ?—ङ. 18 दक्षिणा वेदिः—क.

मर्थलुप्तं न भवतीत्युद्यतहोमप्रतिषेधस्यार्थवत्त्वम् । प्रणयनप्रैषमध्वर्युरेवाह । नचाग्न्यभिधानानामूहः आहवनीयैकत्वात । एको ह्याहित आहवनीयः न विभक्त इति न द्वित्वमापद्यते[1] संस[2]र्गित्वाच्च । ये लोकवेदयोरुभयथा प्रवर्तन्ते ते संसर्गिणः, यथा प्रचुरोऽग्निः प्रचुरा अग्नयः । यत् त्रेधाग्निराधीयते तस्मादेतावन्तोऽग्नय आधीयन्ते, अतोऽमन्थनेऽप्यनूहः । अग्निद्वित्वेऽप्यनूहे [3]चार्षस्याबाधोऽर्थश्च गम्यत इति ।

(वृ) **यद्यपि वेदिरग्निश्च–भावस्तत्र स्यात्** — पूर्वो यत्सन्नपरो भवासीति मन्त्रलिङ्गस्य सम्भवात् ।

**उत्तर–भवति** — उत्तरविहारस्य गार्हपत्याचितिरेवोत्तरवेदिस्थाने ।

**धारणार्थत्वात्**—अग्निधारणार्थत्वात् । समितमिति तस्य चतसृभिरुख्यं सान्निवपतीति ।

**नच सो–तानीति**—हविर्यज्ञानामग्निहोत्रादीनामपि तत्रैव करणम् ।

**तूष्णीम–पन्नीयते**—एकदेशस्य प्रणयनाविधानात् ।

**येषां त्वतिप्र–मासाः**—कुण्डपायिनामयने केषां चिच्छाखिनां अतिप्रणीते मासाः ।

**तेषां महा–वेदिः**—चयनस्थानादार्जवेन दक्षिणतो दक्षिणविहारः ।

**तथैवाग्नि–ष्णीम्**—अग्निहोत्रकाले प्रणीतवारुणप्रघासिकदक्षिणविहारे विभज्य तूष्णीं स्थापयेत् ।

**पशुव–वतीति**—अर्थलुप्तस्यैव निवृत्तेः, अनर्थलुप्तं नयनं दक्षिणाग्नेः क्रियते, देशान्तरनयनस्य विद्यमानत्वात् पशुवत्सधर्मकं प्रणयनमिति प्रणीताग्नेरेकदेशस्य ।

---

[1] स द्वित्वमा–क. ञ. [2] र्गिकत्वाच्च–ञ. [3] चार्षस्य बाधो–ञ.

उद्यतहो-त्त्वम्—पशुवत्प्रणयनपक्षे उद्यतहोमस्यापि प्राप्तत्वादुद्यतहोमप्रतिषेधस्यार्थवत्त्वम् ।

प्रणयन-र्गित्वाच्च—[1]एवमादि सर्वेषां [2]प्रणयनारम्भः । संसर्गित्वाच्चाग्निद्वयस्य ।

ये लोक-ग्नयः—लोके येषामेकवचनबहुवचनान्ततया एकार्थत्वेऽप्यनियतप्रयोगस्ते संसर्गिणः । तथा वेदेऽपि ।

यत्त्रे-ग्नयः—इत्येकवचनबहुवचनान्तप्रयोगो गार्हपत्यादिष्वेव ।

अतो-नूहः—पशुवन्निर्मन्थ्यावित्युभयोर्भेदेन मन्थनेऽप्यग्नये मथ्यमानायानुब्रूहीत्यनूह एव ।

अग्निद्वि-ष्यत इति—मन्थनोत्पाद्ययोः पूर्वाग्न्योर्द्वित्वेऽपि संसर्गित्वात् । एवं मन्थनमन्त्रेष्वप्यग्न्यभिधानानामनूहः । अतस्सर्वतोमुखेऽपि याजमानेष्वग्न्यभिधानानामनूह एव । अनूहे चार्षस्याबाधोऽर्थश्च गम्यते । एकवचनान्तेऽपि संसर्गित्वादाग्निद्वयावगतिसम्भवादार्षाबाधो युक्त इति ।

(सू) [3]अन्तरा वेदी प्रतिप्रस्थाता प्रतिपद्यते । उत्तरेणोत्तरां वेदिमध्वर्युः ॥ २४ ॥ २४ ॥ १८९२ ॥

[प्रतिप्रस्थातुरध्वर्योश्च कर्मार्थस्संचारे क्रमो देशश्च]

(भा) [4]यदा क्रमेण गृहीतावग्नी तदा अन्तरा वेदी प्रतिप्रस्थाता [5]प्रतिपद्यते, पश्चादध्वर्युरदूरेणोत्तर[6]वेद्याः । न तु वेद्या उपरिष्टा[7]द्धरति ।

---

[1] इत्येवमादि–च. [2] प्रयोगार–घ. [3] प्रतिप्रस्थातुरत्र पूर्वत्वार्थं वचनम् । सहेति भरद्वाजः (रु). [4] तदा क्रमेण–ज. [5] पूर्वं प्रति–ग. ङ. प्रतिपद्यते पूर्वम्–घ. पूर्वः पूर्वः प्रति–ज. [6] वेदेरिति–ख. ग. घ, वेषाम्–ङ. [7] द्रमयति–ङ. द्धारयति–ज.

[अन्तरा वेदी इत्यादिसौत्रपुनर्वचनस्य फलकथनम्]

(वृ) **यदा क्रमेण—त्तरवेद्याः**—अयमर्थः—अन्तरा वेदी प्रतिप्रस्थातुस्सञ्चर इत्युक्ते[1] पुनरन्तरा वेदी प्रतिप्रस्थाता प्रतिपद्यत इति वचनं कृतानुकारित्वेऽपि प्रतिप्रस्थातुः पूर्वं गमनार्थमिति। उत्तरत उपचारो विहार इत्यध्वर्योरुत्तरेण गमने प्राप्तेऽ[2]प्युत्तरां वेदिमध्वर्युरिति वचनं वेदेरुत्तरदेशेऽदूरेणाग्नेर्नयनम्, [3]न तु [4]वेद्या उपरिष्टा[5]द्धरतीत्येवमर्थम्। अन्यत्रानियमः। केचिदिहोत्तरेणेति[6] नियमात् आधाने च दक्षिणतः परिगृह्य हरतीति नियमात् अन्यत्र वेदेरुपरिष्टादित्याहुः।

(सू) [7]**पूर्वोऽध्वर्युरुत्तरवेद्यामग्निं प्रतिष्ठापयति। जघन्यः प्रतिप्रस्थाता दक्षिणस्याम्॥२५॥२५॥ ॥१८९३॥**

[पश्चाच्चलितेनाप्यध्वर्युणा प्रतिप्रस्थातुः पूर्वमग्निः प्रतिष्ठाप्यः]

(भा) [8]पूर्वं चलितः प्रतिप्रस्थाता [9]स्थापनमपि कुर्यात्पूर्वम्। अतः पूर्वोऽध्वर्युरुत्तरवेद्यामित्युच्यते। दक्षिणस्यामिति वचनाद्वेद्यामेव स्थाप्यते तुल्यमुत्तरेण न बहिर्वेदि[10]। वेद्याः पूर्वभागे दर्शनात्।

[जघन्यः प्रतिप्रस्थातेतिसूत्रसार्थक्यकथनम्]

(वृ) **दक्षिणस्यामिति—हिर्वेदि**—[11]एतदर्थं जघन्यः प्रतिप्रस्थाता इति [12]सूत्रम्; इतरथा पूर्वोऽध्वर्युरित्येतावता [13]क्रमसिद्धेः।

---

1 क्तेऽपि—घ. छ. 2 प्युत्तरेणोत्तरां वेदिमध्वर्युरिति—घ. छ. 3 न तु इत्येवमर्थम्—छ. 4 विधा उपरिष्टा—ग. 5 ष्टादध्वर्युरित्येवमर्थम्—घ.. 6 ति वचनादाधा—घ. 7 प्रतिष्ठापने पश्चिम एवेति वेद्यामेवाग्निप्रतिष्ठापनं तुल्यमुत्तरेण (रु). 8 पूर्वं चलितः प्रस्थातेति स्थापन—ज. 9 स्थानमपि—छ. 10 वेदि दर्शनात्—क. ङ. च. छ. वेदि दर्शयन्? ज. 11 एतज्जघन्यः—छ. 12 सूत्रदर्शनाल्लभ्यते।—छ. 13 तोक्तक्रमसिद्धः। यद्वा—दर्शनात् वेद्याः पूर्वभागे दर्शनात्—छ.

वेद्याः-दर्शनात् —अन्ततो हि देवानामाधीयत [1] इति वचनात् दक्षिणस्यां [2] पूर्वभागे ॥

(सू.) [3] अग्नीनन्वाधाय पृथक्शाखे आहरतः ॥ २६ ॥ ॥ २६ ॥ १८९४ ॥

[4] तथेध्माबर्हिषी ॥ २७ ॥ २७ ॥ १८९५ ॥

[5] मारुत्याः प्रतिप्रस्थाता वत्सानपाकरोति वारुण्या अध्वर्युः ॥ २८ ॥ २८ ॥ १८९६ ॥

[अन्वाधानशाखाहरणवत्सापाकरणानां पृथक्कार्यत्वं, अन्वाधीयमानान्वाहितजपयोरावृत्तिसकृत्त्वे च]

(भा) उभयत्रा[6]तिमुक्तयन्ते । [7] अन्वाधानं सर्वेषामध्वर्युः । अन्वाहित आहवनीये अध्वर्युणा प्रतिप्रस्थाता [8] दक्षिणाग्निमन्वादधाति । वर्तमानकालत्वादन्वाधीयमानजपस्यावृत्तिः । यदि [9] सद्यस्कालाः अद्य यज्ञाय [10] वारुणप्र[11]घासिकं हविरिदमेषां मयीति अन्तराऽग्नी जपस्यावृत्तिः । सकृदन्वाहितजपः । [12] वेदी अन्तरेण गत्वा दक्षिणेन दक्षिणमाहवनीयमवस्थाय व्रतोपायनं उभावग्नी अभिसन्धाय, शाखाच्छेदनादि, मारुत्याः पूर्वं वत्सापाकर[13]णविधानात् ।

---

[1] इति दर्शनात्-ग. [2] पूर्वस्मिन् भागे-ग. छ. [3] अतिमुक्तयन्तेऽन्वाधत्तः क्रमेण । गार्हपत्यदक्षिणाग्नी अध्वर्युरेव । अन्वाधीयमानयाजमानानामावृत्तिः । शाखाहरणे प्रतिप्रस्थाता प्रथमः, हविःप्राथम्यात् । तच्चानन्तरमेव वक्ष्यति (रु). [4] प्रथमयत्वादिरपि विशेषोऽत्रानुसंधेयः । ते अपि पृथगाहरतः स्वे स्वे काले । तेषां च वैश्वदेवप्रकृतित्वात् (रु). [5] मरुद्भ्यो देवभागं मरुद्भ्यश्शरदो दुहाना इत्यादि दक्षिणस्याग्नेर्दक्षिणतो व्रतोपायनम् (रु). [6] तिमुक्तयन्तं-ख. ग. घ. च. [7] अग्नयन्वाधानं तु सर्वे-ख. ग. [8] दक्षिणमग्नि-ख. ग. [9] स्काला वरुणप्रघासाः--ख. ग. घ. [10] येतिवारु-ज. [11] घासगृँहवि-ख ग. ङ. [12] वेधा अन्त-ख. ग, वेद्योरन्तरा-ज. [13] णस्य वि-छ.

(वृ) **उभय–न्ते**—पाशुकप्रणयनत्वात् ।

**अन्वाधानं–ध्वर्युः**—दक्षिणवैहरिकव्यतिरिक्तानाम् ।

**अन्वाहित–न्वादधाति**—तत उत्तरं गार्हपत्याद्यध्वर्युः ।

**वर्तमानका–स्यावृत्तिः**—अन्वाधीयमाने जपतीति वर्तमानकालत्वादन्वाधीयमानजपस्यावृत्तिः ।

**यदि स–स्यावृत्तिः**—अन्तराऽग्निदेशभेदात् तत्रावस्थितेनैव जपः कर्तव्यः ।

**सकृदन्वा–भिसंधाय**—अपरेणाहवनीयं वेदिद्वयं दक्षिणाऽतिक्रम्य दक्षिणवैहारिकस्य दक्षिणतः समीपे तिष्ठन् उभावग्नी अभिसंधाय व्रतोपायनं कुर्यात् दक्षिणस्य विहारस्य पूर्वम् ।

**मारुत्याः–धानात्**—तस्य च क्रमार्थत्वात् ।

(सू) [1]**शमीमय्यो हिरण्मय्यो वा स्रुचो भवन्ति ॥**

॥ २९ ॥ २९ ॥ १८९७ ॥

[दक्षिणविहारे स्रुक्स्रुवपात्राणां शमीमयत्वं हिरण्मयत्वं वा दाक्षिणोत्तरयोरुभयोरप्येवमिति केषांचित्पक्षश्च]

(भा) दक्षिणस्य विहारस्य शमीमय्यो हिरण्मय्यो वा स्रुचः सह स्रुवेण[2] उत्तरस्य विद्यमानत्वात्पात्राणाम् । दक्षिणस्य सर्व[3]पात्राणि शमीमयानीति बोधायनः । केचिदुभयोर्विहारयोः, सूत्रकारेणाविशेषितत्वात् ।

(वृ) **दक्षिणस्य वि–त्राणाम्**—तेषां यावज्जीवं कर्माङ्गत्वात् । स्रुवस्य शमीमयत्वम् । एतावसदतामिति मन्त्रलिङ्गादित्युक्तम् ।

**केचि–योः**—स्रुचां शमीमयत्वमित्याहुः ।

---

[1] दक्षिणस्यैव ; उत्तरस्य संपन्नस्रुक्त्वाद्विहरणस्य । पात्रान्तराणां प्राकृत एव वृक्षनियमः । सर्वाण्यपि शमीमयानि प्राकृतानि वेति बोधायनः । शमीमयानि दक्षिणविहारस्यैवेत्येव भरद्वाजः (रु). [2] ण विद्यमानत्वात् ?–ञ. [3] पात्राणीति बो–क.

[उभयोरपि विहारयोः स्रुक्स्रुवपात्राणां शमीमयत्वपक्षे अनुपपत्तिकथनम्]

**सूत्रका-तत्वात्— न तदुपपद्यते[1], एकत्र प्राप्तानां स्रुचां बाधा अन्यत्राप्राप्तेरिति ।**

**(सू.) [2] यथादेवतं सायं दोहौ दोहयतः ॥३०॥ ॥३०॥१८९८॥**

[प्रतिप्रस्थात्रध्वर्युभ्यामामिक्षार्थं दोहादिविधिः तत्क्रमश्च]

(भा) मरुद्भ्यो देवभागं वरुणाय देवभागमिति [3] कृतानुकारित्वे प्राप्ते यथा[4]देवतं क्रमः । यथादेवतं सायं दोहाविति प्रतिप्रस्थातुः पूर्वं क्रमेण दोहनादेकापि [5] शाखा विभवतीति पृथग्विधानम् । इध्माबर्हिश्च [6] विभज्येत । देशभेदात्कर्तृभेदाच्च[7] प्रयोगभेदाः । पृथगुपलक्षिता वत्सा गावश्च [8] दुह्यन्ते । दोहेऽपि साधारणानामध्वर्युः । परिस्तरणमेकस्य प्रतिप्रस्थाता सर्वमन्यत् क्रमेण पृथक्पृथक्। दर्भास्तरणादि विभज्यते उच्छे-[9]षणम् , मरुद्भ्यो हविरिन्द्रियम् , वरुणाय हविरिन्द्रियम्, मरुद्भ्यो देवेभ्यो हव्यमाप्यायताम्, वरुणाय देवेभ्यो हव्यमाप्यायताम्, मरुद्भ्यो दधि, वरुणाय दधि, उभावग्नी इति तन्त्रेण ।

[शाखेध्माबर्हिषां पृथग्विधौ तत्क्रमे च हेतूक्तिः]

**(वृ) इध्माब-ज्येत**—साकंप्रस्थायीयस्रुक्संमार्जनवेदाग्रवत् । अतः पृथग्विधानं [10]शाखेध्माबर्हिषाम् । पृथक्त्वे हेतुरयम् ।

---

1 तदुपपद्यते ?—ग. 2 मरुतो रमयन्तु वरुणो रमयत्वित्यादि । यवागूच्छे-षणस्य द्विभागः (ह). 3 कृतानुकरणत्वे—क. 4 देवतमुपक्रमः—क. 5 शाखा-भवतीति प्रथमात्रिधानम् ?—क. 6 विभज्येति ?—क. विभज्येत वेदाग्रवत् । पृथगु ?—ञ. 7 च भेदः—क. 8 दृश्यन्ते ?—क. 9 षणतः—क. 10 शाखाया इध्माबर्हि—छ.

**देशभेदात्क-दाः**—इति [1]तत्सूत्रक्रमेण [2]पूर्वं वक्तव्यमपि यथादेवतं वत्सायं दोहाविति दोहक्रमाधीन[3]त्वाच्च शाखाहरणक्रमस्य [4]तद्व्याजोनोत्तरकालमुच्यते ।

**पृथगुप-ह्यन्ते**—[5]पृथगुपलक्षिताः [6]पृथक्चिन्तिताः ।

**दोहेऽपि-र्युः**—गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्टे-त्यादीनां वक्ता ।

[आहवनीयेऽधिश्रयणपक्षे परिस्तरणक्रमः]

**परिस्तरणमेकस्य**—अध्वर्योः, गार्हपत्यस्यैकत्वात्। आहवनीयेऽ-धिश्रयणपक्षे उभयोरुभाभ्यां परिस्तरणम् ।

**दर्भास्त--पणम्**—विभज्येतऽवधिद्व्यार्थम् ।

**उभावग्नी—तन्त्रेण**—याजमानमनूहेन ।

(सू) **सद्यस्काला वा वरुणप्रघासाः ॥ ३१ ॥ ३१ ॥ ॥ १८९९ ॥**

[सद्यस्कालत्वे प्रातर्दोहस्यैव सधर्मकता]

**(भा)** यदा सद्यस्कालः तदा प्रातर्दोह एव धर्मवान्[7] ।

**(वृ)** **यदा सद्य-र्मवान्**—लौकिकत्वाद्दध्नः ॥

(सू) **एवं सति लौकिकेन दध्नाऽऽ[8]मिक्षाकर्म स्यात् ॥ ॥ ३२ ॥ ३२ ॥ १९०० ॥**

[सद्यस्कालत्वे लौकिकदध्ना आमिक्षाक्रिया]

**(भा)** आमिक्षाकर्म—आमिक्षाक्रिया, तत्स्या (स्मा) ल्लौकिकेन दध्ना ।

---

[1] एतत्सू-छ. [2] पूर्वं कर्तव्यमपि-छ. [3] त्वाच्छाखा-छ. [4] तद्व्याख्यानो-त्तरका-घ. छ. [5] पृथग्विहिताः-छ. [6] पृथक्चिह्निताः-घ. [7] कर्मवान्-क. [8] आमिक्षाकरणमामिक्षाकर्म-(रु).

(सू) प्रातर्दोहविकारमेक [1] आमिक्षापयस्यमाहुः ॥
॥ ३३ ॥ ३३ ॥ १९०१ ॥

[वरुणप्रघासे आमिक्षायाः प्रातर्दोहविकारत्वं वैश्वदेवे तूभयदोहविकारत्वम्]

(भा) आमिक्षा च पयस्या च आमिक्षापयस्यम् । आमिक्षाशब्देन पयस्याशब्देन [2] च याश्चोदिताः, अतः प्रातर्दोहविकाराः [3]मीमांसकमतात् । लौकिकेन दध्ना आमिक्षा । वैश्व[4]देवे तु प्रकृतित्वात् द्व्यह कालता उभयदोह[5]विकारता चेत्युपदेशः ।

[भाष्यीयामिक्षापदार्थकथने हेतुः]

(वृ) आमिक्षाश–दिताः––उभयोरेकार्थत्वाच्छब्दयोः ।

अतः प्रा–तात्––[6]पय एवामिक्षाद्रव्यं तन्निष्पत्त्यर्थं दधीति । अस्मिन् पक्षे लौकिकेन दध्नाऽऽमिक्षा सद्यस्काल[7]त्वपक्षे च ।

[वैश्वदेवीयामिक्षाया उभयविकारतायां गमकम्]

उभयदो–देशः––वैश्वदेव्यास्सायं दोहं दोहयतीति वचनादुभयविकारता, अत एव द्व्यहकालविधाना (धानता) चेति ।

---

1 आमिक्षापयस्याशब्दाभ्यां चोदितं दधिपयआत्मकं हि सर्वत्र प्रातर्दोहविकारमेवेति केचित् । प्रातर्दोह एव तत्र धर्मवान्, दधि तु तूष्णीकं भवतीत्यर्थः । बोधायनेन चैवमुक्तम् । तन्मते वैश्वदेवस्यापि सद्यस्कालता लभ्यते । स्वमत उभयदोहविकार इति सिद्धम् । (रु).

2 शब्देन वा चोदितायाः–क. ख. ग. घ.
शब्देन वा चोदिता या मन्त्राः–प्रा. क.
शब्देन वा चोदिता यास्ताः–च.
शब्देन च याश्चोदिताः प्रात–ख. ग. घ.

3 इदं–क. च. कोशयोः न दृश्यते. 4 देवी तु–क. 5 विकारा चेत्यु–क. ज. 6 शब्दस्वरूपपरयोर्द्वन्द्व एकवद्भावः । प्रातर्दोहविकारमाहुर्मीमांसकाः पय एवा–छ. 7 लस्य पक्षे च ? ख. लत्वपक्षे च वैश्वदेवप्रकृतित्वाद्द्व्यहकाला–घ.

(सू) [1] निर्वपणकाले आग्नेयमष्टाकपालमिति न-
वोत्तराणि हवींषि निर्वपति ॥ ३४ ॥ ३४ ॥१९०२॥

[अध्वर्युप्रतिप्रस्थातृकर्तव्यकर्मणां विवेचनम्]

(भा) यदा मेषमेष्योर्धर्मवत्त्वं तदा प्रतिप्रस्थातुरप्यपराणि दश। उभयत्र वैश्वदेववत्, न तु [2] दक्षिणे प्राशित्रहरणमिडापात्रं च। यदा कुम्भीपाकस्तदा स्थाली कपालधर्मिणी। यदा पत्नी करोति तदा प्रणीताप्रणयनमपि नास्ति। दक्षिणा वत्सः नान्वाहार्यः। अध्वर्युरेव वृणीते ब्रह्माणम्। ब्रह्मयज [3] मानयोरासनप्रकल्पनं च दक्षिणस्य विहारस्य दक्षिणतः। धुरोऽभिमर्शनमीषामालभ्य जपः। परिणाहापच्छा-दनाद्यभिमन्त्रणान्तमध्वर्युरेव, अवशिष्टाभिमर्शन (मन्त्रण) मन्यदुभौ कुरुतः। देशाभेदादभेदः शकटस्य भेदो वा [4] कर्तृभेदात् पात्र [5] भेदवत्। तदा सर्वमुभौ कुरुतः। [6] पात्रीनिर्वापे च।

(वृ) न तु दक्षि–त्रं च—तन्त्रेण प्रयोगात्।
दक्षिण–र्युः—अतो [7] न स्थाली।
अन्यदुभौ–कुरुतः—अन्यत् विष्णुस्त्वा [8] आहृतमसीत्यादि।
कर्तृभे–दवत्—यथा कर्तृभेदात्पात्रभेदः तथा शकटभेदोऽपि।
तदा–पात्रीनिर्वापे च—सर्वमुभौ कुरुतः।

(सू) सर्वे [9] यवा भवन्ति ॥ ३५ ॥ ३५ ॥ १९०३ ॥

---

[1] पाणिप्रक्षालनादि समानमा निर्वपणात्। तत्र दक्षिणतो दक्षिणविहारस्य ब्रह्म-यजमानासने। नेडाप्राशित्रहरणे दक्षिणे। मेषयोरधर्मत्वे सर्वेषामौषधसंयुक्तानां दक्षिणे न प्रयोगः। सह प्रणीता हरत उत्तरस्मिन्नेवाग्नौ प्रणीता आसादयतइति भरद्वाजः। तथा वरुणप्रघासेषु वा समाः प्रणीता इति। कात्यायनमतात् न प्रणीताः प्रतिप्रस्थातुः। ततो निर्वपणकाले नव हवींषि निर्वपति। कानि पुनस्तानि? स्थितानि तानत्पञ्च संचराणि एतद्ब्राह्मणान्येवेति पञ्च। तत ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालमिति चत्वारि (रु). [2] दक्षिणस्य प्र–ञ. [3] मानायतनप्रकल्पनं–च. छ. [4] कर्तृत्वभे–ख. [5] भेदात्–ख छ. [6] पात्र्यां–च. [7] न तत् स्थाली–छ. [8] आहुत–छ. [9] औषधानामेव यवमयत्वम् (रु).

(सू) [1]अपिवा पौष्णः करम्भपात्राणि मेषाविति यवानां व्रीहीणामितराणि ॥ ३६ ॥ ३६ ॥ ॥ १९०४ ॥

[पौष्णयवादीनां नानाबीजधर्मेण निर्वापः]

(भा) यदा पौष्णादीनि यवानां तदा नानाबीजधर्मो[2]ऽध्वर्योः ।

(वृ) यदा–धर्मः— व्रीहीणामितराणीति विधानात् ।

(सू) [3]एतस्मिन् काले प्रतिप्रस्थाता तूष्णीं करम्भपात्रार्थान् यवान्निर्वपति ॥ ३७ ॥ ३७ ॥ ॥ १९०५ ॥

यजुषाऽध्वर्युर्मे[4]षार्थान् । मेष्यर्थान् प्रतिप्रस्थाता ॥ ३८ ॥ ३८ ॥ १९०६ ॥

---

[1] अत्र नानाबीजधर्मेण निर्वापो व्रीहियवानाम् (रु). [2] धर्मोऽध्वर्युरेकस्मिन् काले-ञ. धर्मोऽध्वर्युरेतस्मिन्–ङ. [3] एतस्मिन् काले–ऐन्द्राग्ननिर्वापानन्तरम् । शमीपत्रमिश्राणि करीराणि करम्भः । तद्धारणार्थानि पात्राणि करम्भपात्राणि । तदर्थान् यवान् (रु). [4] मेषौ तावदामिक्षाभ्यां सह प्रदानात्तयोरेव शेषभूतौ शमीपर्णकरीरवत्, न तु पृथग्घविषी, कुतः? नवोत्तराणि हवींषीति तावदादौ विधानात् । तथा अष्टावुत्तरस्यां वेद्यां हवींष्यासादयत्येकां मारुतीं प्रतिप्रस्थाता दक्षिणस्यामित्यन्ते चानुवादात् तयोरामिक्षावद्दैवतमिति चानयोरामिक्षानुसारित्वप्रदर्शनात् पक्षे तूष्णीत्ववचनाच्च । तेनाप्राप्तस्य तावद्यजुषो विधानं यजुषाऽध्वर्युरिति । ततश्च शकटादिसंस्कारार्थानां यजुषां निवृत्तिः प्रतिप्रस्थातुः । पात्नीनिर्वापे तु सर्वं चोभयोर्भवति । क्रमस्य तु मेषयोरामिक्षाधीनत्वान्मारुतीशेषत्वाच्च मेष्यास्तदर्थानां प्रथमं निर्वापः, ततो मेषार्थानाम् । उक्तं च ब्राह्मणे 'मेषी च मेषश्च भवतः' इति । सूत्रे तु मेषस्य प्रथमोक्तिरध्वर्युप्राधान्याद्वेदितव्या । क्रमपरे तु विधौ विपरीतमेव वक्ष्यति ; यथैन्द्राग्नपर्यन्तान्यधिश्रित्यैकादशसु कपालेषु मेषीमधिश्रयत्यष्टासु मेषमित्यादि । तदयमत्र क्रमोऽवतिष्ठते–अनन्तरमैन्द्राग्नात्करम्भपात्राणां निर्वापस्ततो मेष्यास्ततो मेषस्य ततः कायस्येति । पठित एवायं क्रमो भारद्वाजीये द्रष्टव्यः (रु).

[1] तयोरामिक्षावद्दैवतम् ॥ ३९ ॥ ३९ ॥
॥ १९०७ ॥

[करम्भपात्रार्थादीनां निर्वापकालः, तत्रोपदेशपक्षः, करम्भशब्दार्थश्च]

(भा) एतस्मिन् काले निरुप्ते काये करम्भपात्रार्थानां निर्वापः प्रजानां करीरत्वाय प्रतिपूरुषं करम्भपात्राणि भवन्तीति तत्र चोदितत्वात्। ऐन्द्राग्नान्तेषु निरुप्तेष्वध्वर्युणा प्रतिप्रस्थाता मरुद्भ्यो जुष्टं निर्वपामीति मेष्यर्थान् वरुणाय जुष्टं काय जुष्टमित्यध्वर्युः। करम्भपात्रार्थान् प्रतिप्रस्थाता। उपदेश ऐन्द्राग्नान्तेषु निरुप्तेषु करम्भपात्रार्थानां निर्वापः। ततो मेषस्य मेष्याश्च। काय कस्मा इति वा। शमीपर्णानि च करीरमिश्राणि च करम्भ इत्युच्यते। तस्य धारणार्थानि[2] करम्भपात्राणि।

[करम्भपात्रार्थनिर्वापकर्तृकालादिकम्]

(वृ) **एतस्मिन् का–र्वापः**—प्रतिप्रस्थात्रा कर्तव्यः।

**प्रजानां – दितत्वात्**—काय एककपालो भवतीत्येतदनन्तरम्।

**ऐन्द्राग्ना–त्यध्वर्युः**—मेषार्थान् कायं च।

**करम्भपा – मेष्याश्च**—करम्भपात्रोत्तरकालं यजुषाऽध्वर्युर्मेषार्थानिति वचनात्। स्वमते तु ब्राह्मणे काय एककपालो भवतीति विधाय प्रतिपूरुषं करम्भपात्राणि भवन्तीति निर्देशात्तत्क्रमेण निर्वाप इति।

**काय–ति वा**—यद्यपि कायानुब्रूहीत्युक्तम् तथाऽपि तत्प्रदर्शनार्थम्। उभयथा शब्दप्रयोगदर्शनात्।

---

[1] र्थानि पात्राणि च–क. [2] मरुतो मेष्याः वरुणो मेषस्येत्यर्थः। प्रदाने तथा दर्शनात् (रु).

(सू) [1]आमपेषाणां पत्नी करम्भपात्राणि करोति ॥ ॥ ४० ॥ ४० ॥ १९०८ ॥

[करम्भपात्रमेषमेषीणां निर्माणक्रमः, यजमानपत्न्यादीनां तत्तत्कर्तृत्वं च]

(भा) प्रक्षालिता यवा अतप्ताः क्लेशेन पिष्यन्त इति तापनं क्रियते। तत्करम्भपात्राणां प्रतिपिध्यते मेषप्रतिकृतेश्च ॥

(वृ) तापनं क्रियते–पिष्यते—सौकर्यप्राप्तम् ॥

(सू) यावन्तो यजमानस्या[2]मात्यास्सस्त्रीकाः तावन्त्येकातिरिक्तानि ॥ ४१ ॥ ४१ ॥ १९०९ ॥

(भा) अमा सहयोगे। सह ये भवन्त्येकस्मिन् पात्रे भोजनाय ते अमात्याः। प्रायेण पुत्रपौत्रनप्तारस्सहभवन्तीति सपिण्डा उपलक्ष्यन्तेऽन्यत्र। इह तु त्र्यम्बकेषु 'जाता एव प्रजा वरुणपाशान्मुञ्चति। जाता एव प्रजा रुद्रान्निरवदयते' इति यजमानवंश्यानामेव ग्रहणम्। प्रतिपूरुषश्रुतेः स्त्रियो न स्युः, अतः सस्त्रीका[3] इति। प्रत्ताः स्त्रियो न गृह्यन्ते। स्नुषाश्च। पुरुषस्थानापत्तेः। यजमानस्सहपत्न्या गृह्यते प्रतिपूरुषवचनात्। वचनाभावात्पक्वान्यपक्वानि वा करम्भपात्राणि।

---

[1] समानमवहननादि वैश्वदेवेन। सर्वांस्तुषानवभृथाय निदधाति। पिष्टेषु हविष्षु करम्भपात्राणि तदर्थैः पिष्टैः पत्नी करोति। तत्रातप्तानां यवानां दुष्पेषणत्वात् सौकर्याय तापयित्वा पिष्येरन्निति तत्परिहारार्थमामवचनम् (रु). [2] आमात्याः–सहवासिनो ज्ञातयः पुत्रपौत्राद्याः 'जाता एव प्रजाः जनिष्यमाणा एव प्रजाः' इति श्रुतेः। यावन्तो गृह्याः स्म इति लिङ्गाच्च, यावन्तो यजमानस्य पुत्रपौत्रा भवन्तीत्यिय भरद्वाजः। सस्त्रीकाः सभार्याः (रु). [3] का इत्युच्यन्ते–छ. का उच्यन्ते–घ.

(वृ) **अमा सहयोगे**—अमाशब्दस्सहयोगे वर्तते । एक[1]भाण्डे-पक्वभोजित्वेन ।

**अन्यत्र**—वैसर्जनहोमादिषु ।

**इह-ग्रहणम्**—सपिण्डानां समानोदकादीनां च ग्रहणम् । जाता एव प्रजा इत्यविशेषेऽपि आत्मसम्बन्धिनामेव स्वतो दोषपरिहार-कामना युक्तेति सकुल्या[2] इत्युच्यन्ते ।

**प्रतिपूरु क-इति**—तासामपि सकुल्यत्वात् ।

**प्रत्ताः स्त्रि-न्ते**—स्वकुलजाता अपि; तासां कुलान्तरप्राप्ते-रुद्वाहेन ।

**स्नुषाश्च**—गृह्यन्त इति शेषः ।

**यजमानः-चनात्**—यद्यपि यजमानस्यामात्या इत्युच्यन्ते तथाऽपि यजमानस्यापि सहभोजित्वाविशेषात् सकुल्यत्वेन ग्रहणम् । सस्त्रीका इति वचनात्पत्न्या अपि ।

**वचनाभा-त्राणि**—पेषणोत्तरकालं पाकविधानाभावाद्यथा-सौकर्यं पक्वान्यपक्वानि वा करम्भपात्राणि ।

(सू) [3]**आमपेषाणां मेषप्रतिकृती भवतः ॥४२॥**

॥४२॥१९१०॥

**मेषमध्वर्युः[4] करोति मेषीमध्वर्युः ॥४३॥**

॥४३॥१९११॥

पञ्चमी खण्डिका

———

1 भाण्डभोजि-छ. 2 ल्या उच्यन्ते-घ. 3 आमपेषाणामिति पूर्ववत् (रु). 4 अत्रापि क्रमः पूर्ववत् । पिण्डकरणान्ते कर्मणि कृते मेष्यर्थेन पिण्डेन मेषीं करोति प्रतिप्रस्थाता । ततो मेषार्थं विभज्य तेन मेषमध्वर्युः करोति (रु).

(सू) स्त्रियाः [1]स्त्रीव्यञ्जनानि ॥ १ ॥ ४४ ॥ १९१२ ॥

[मेषमेषीप्रतिकृत्योस्तत्तदसाधारणव्यञ्जनकल्पनम्]

(भा) व्यञ्जनं कथम्? सर्वाणि व्यञ्जनानि क्रियेरन्निति लोके कल्पितैरपि व्यञ्जनैर्मेषो मेषीत्युच्यते ॥

(वृ) व्यञ्जनवि–च्यते—प्रतिकृतिविधानादेव व्यञ्जनसिद्धौ पुनर्व्यञ्जनविधानं कथं सर्वाणि व्यञ्जनानि क्रियेरन्निति।

(सू) पुंसः [2]पुंव्यञ्जनानि ॥ २ ॥ ४५ ॥ १९१३ ॥

[3]अपि वा पूर्वेद्युरन्वाहार्यपचने वितुषानिव यवान् कृत्वा तेषामीषदुपतप्तानां पत्नी करम्भपात्राणि करोति ॥ ३ ॥ ४६ ॥ १९१४ ॥

[4]अत्रापि मेषं मेषीं च करोतीति वाजसनेयकम् ॥ ४ ॥ ४७ ॥ १९१५ ॥

[करम्भपात्रादिनिर्माणे पक्षान्तरम्]

(भा) पूर्वेद्युरौपवसथ्येऽहनि वितुषानेव यवान् कृत्वा ईषदुपतप्तानामपेषणानां मेषमेष्योरपि तूष्णीममन्त्रकं पत्न्याः करणम् लोमशात्वादिसंस्कारोऽपि पूषन् हव्यं रक्षस्व इन्द्राग्नी हव्यं रक्षेथामित्यन्त कृत्वा मरुतो हव्यं रक्षध्वं वरुण हव्यं रक्षस्व क हव्यं रक्षस्व इदमग्नेस्सवितुः पूष्ण

---

1 स्त्रीत्वद्योतकानि स्तनादीनि चिह्नानि करोति। स्त्रि इति ह्रस्वपाठश्छान्दसः प्रमादिको वा (रु) अत्र भाष्यवृत्त्योः रुद्रदत्तवृत्तिस्थः सूत्रपाठविचारो न मातृकासु च स्त्री इति दीर्घस्यैव सर्वत्र पाठो दृश्यते। रुद्रदत्तस्तु प्रवचनसंप्रदाये 'स्त्रि' इति ह्रस्वान्तपाठमभिप्रैति. 2 वृषणादीनि (रु). 3 पूर्वं दुष्कैररप्वामपिष्टैः करम्भपात्राणां मेषयोश्च करणमुक्तम्। इदानीं सुपेपत्वाय पक्वपिष्टैः करणं विशेषान्तरसध्रीचीनं विकल्प्यते। पूर्वेद्युरौपवसथ्येऽहनि यवान्वितुषानिव कृत्वा फलीकरणवर्जं तुषमात्रविमुक्तान् कृत्वा तैरन्वाहार्यपचने किञ्चिद्भर्जीपत्वा पिष्टैः पत्नी पात्राणि करोति (रु). 4 अपिशब्दो भिन्नक्रमः। अत्रावसरे पूर्वेद्युः पात्रकरणानन्तरं तद्वदेव पिष्टैस्तूष्णीं मेषावपि पत्नी करोतीत्यर्थः। तथा तेषामेव मेषं च मेषीं चेति बोधायनः (रु).

इन्द्राग्न्योर्वरुणस्य कस्य। इदं सोमस्य सरस्वत्याः। इन्द्राग्निभ्यां जुष्टमधिवपामि वरुणाय जुष्टमधिवपामि धान्यमसि धिनुहि देवान्। एवं संवापे च संवपामीति। इदं सोमस्य सरस्वत्या इदं वरुणस्येदं कस्येति द्वितीयविभागे। अधिश्रयणात्पूर्वम्।

[करम्भादीनां सर्वेषामपि पत्नीकर्तृकत्वपक्षः, चरूणां देवतानिर्देशश्च]

पूर्वेद्युः- —पत्न्या कर्तव्यः। मेषयोः पत्नीकर्तृत्वे ?

पूषन्-क्षस्व —मरुतो हव्यमिति प्रतिप्रस्थाता। अध्वर्युरितरान्। प्रागधिवपनात् विभागे एवं देवतानिर्देशः कर्तव्यः।

इदं-स्वत्याः—इत्यध्वर्योः। पूष्णे जुष्टमधिवपामीत्युक्त्वा।

इन्द्रा-देवान्—इति चर्वोः।

[मेषमेष्योरधिश्रयणे कालादिविधिः]

(सू) [1]इन्द्राग्निपर्यन्तानधिश्रित्यैकादशसु कपालेषु मेषीमधिश्रयति। अष्टासु मेषम्॥५॥४८॥१९१६॥

[2]कुम्भीपाक्यौ वा भवतः ६ ॥॥ ४९ ॥ ॥ १९१७ ॥

[मेषमेष्यधिश्रयणानन्तरमेव सायंदोहानयनदध्यानयने]

(भा) अधिश्रित्य मेषौ सायंदोहानयनम्।

अधिश्रि-यनम्—तप्ते प्रातर्दोहे। यद्यपि पुरोडाशमधिश्रित्यामिक्षावदिति दर्शनात् ऐन्द्राग्नाधिश्रयणानन्तरं दध्यानयनं[3] प्राप्तम्; तथाऽपि मेषयोरप्यामिक्षादैवतत्वात् पुरोडाशरूपत्वात् तत्क्रमेण तावधिश्रित्य दध्यानयनम्।

---

[1] ऐन्द्राग्नमधिश्रित्य पयसो दधिनी चानीय ततः प्रतिप्रस्थाता मेषीमधिश्रयति ततोऽध्वर्युर्मेषम्। न त्वेतौ प्रथयत: आकृतिनाशप्रसङ्गात् (रु). [2] कुम्भी-स्थाली। कपालधर्मयोः स्थाल्योरधिश्रयत इत्यर्थः। केचित्तु स्थालीपाकधर्मं कुम्भीपाकमिच्छन्ति (रु). [3] न प्राप्त-ख.

(सू) [1]कायमेककपालमधिश्रित्याप्येभ्यो निनीयाग्नी प्रणयत इति वाजसनेयकम् ॥ ७ ॥ ५० ॥ ॥ १९१८ ॥

[कायाधिश्रयणानन्तरकालिकमग्निप्रणयनादिकम्]

(भा) अधिश्रित्य कायमा[2]प्येभ्यश्च निनीयाग्नेः प्रणयनम्। केचिद्विकल्पः। अधिश्रित्य वा कायमाप्येभ्यो निनीय वेति। वेद्युत्तरवेदी कृत्वा [3]द्वयोरन्वाधानम्। अग्निहोत्रार्थोऽन्यः प्रणीयते यदि न सद्य[4]स्कालाः। व्रतोपायनमासन्नेषु हविष्षु क्रियते। उलपराज्य आहवनीय[5]देशात् आहवनीयस्योत्तरतो दर्भास्तरणादि। [6]वैश्वानरं ज्योतिरिति गार्हपत्यस्थमाहवनीयं प्रेक्षते। अनेन प्रकारेण [7]सर्वम्। प्रणीतयोरग्न्योरन्वाधानम्। अन्तराऽग्नी जपोऽन्वाहितजपश्चात्र परिस्तरणमग्न्योः। उत्तरपरिग्रहादि।

[अग्निप्रणयनादिविधिः तत्र पक्षभेदश्च]

(वृ) अधिश्रि–णयनम् – [8]कायमेककपालमधिश्रित्येति वचनमध्वर्योराप्यलेपनिनयनानन्तरमग्निप्रणयनं यथा स्यात् न प्रतिप्रस्थातुरित्येवमर्थम्।

केचिद्विकल्पः—वाजसनेयिपक्षे विकल्पः प्रतिपाद्यत [9]इत्याहुः।

अधिश्रि–निनीय वेति—अवधिद्वयोपादानात्।

---

[1] ततः कायाधिश्रयणादि प्रतिपद्याप्येभ्य एकतादिभ्यो देवताभ्य उदकं निनीयानन्तरं वाऽग्नी प्रणयत इत्यर्थः। तत्रान्वाधानादीनामाहवनीयसंयोगिनामुत्कर्ष उलपराज्यादीनां चानुत्कर्षो देशलक्षणादिति द्रष्टव्यम् (र). [2] प्येभ्यो नियमाग्ने–ख. [3] द्वयोर्नान्वाधानम्–क. [4] सालः–ङ. [5] देशस्योत्तरतो–ङ. [6] वैश्वदेवं ज्यो–न. [7] सर्वो विधिः–ङ. विधिरसर्वः–क. [8] इति वाजसनेयिनः कायमेकक–छ. [9] इत्याह–घ.

**वेद्युत्तर-नम्**—इति वाजसनेयिपक्षे प्रयोगः । वेदिद्वयमुत्तर-वेदिं च कृत्वा दक्षिणाग्निं प्रणीय गार्हपत्यदक्षि[1]णाग्न्योरन्वाधानम् ।

**अग्निहो-यते**—उत्तरस्यां वेद्याम् ।

**यदि न-लाः**—वरुणप्रघासाः ।

**व्रतोपाय-ते**—न वत्सापाकरणानन्तरम् । आहवनीयाभावात् ।

**उलपरा-शात्**—उलपराज्यः स्तरितव्याः । गार्हपत्यात्प्रक्रम्या-हवनीयादिति स्तरणदेशविधिमात्रत्वादग्न्यभावेऽपि देशस्य विद्यमान-त्वात ।

**आहवनीय-स्तरणादि**—पात्राणां प्रयोगः ।

**वैश्वानरं-क्षते**—निर्वापकाले ।

**अनेनप्र-र्वम्**—कर्तव्यम् । आहवनीयसम्बन्धिनामुत्कर्षः । अन्येषां स्वस्वक्रमानुष्ठानमिति ।

**प्रणीतयो-ग्रहादि**—एवं वाजसनेयिपक्षे प्रयोगप्रकारः ।

(सू) **पशुवत्सं[2]प्रैषः । तथाऽऽज्यानि ॥ ८ ॥ ५१ ॥ ॥ १९१९ ॥**

(भा) विकारविवक्षया पशुवत्संप्रैषवचनम् ।

[अतिदेशादेव प्राप्तस्य संप्रैषस्य विधाने पक्षभेदेन फलाभिधानम्]

(वृ) **विकारवि-चनम्**—वैश्वदेववत्कल्प इत्युक्तत्वात् पशुवत्संप्रैषे प्राप्तेऽपि पुनर्वचनं सकृदाज्यं द्विर्दधीत्यादिवैश्वदेवाद्विलक्षणं संसृज्य-ग्रहणं च विधातुमनुवादः । अथवा विकारविवक्षयेति पशुवदेव संप्रैषा-र्थं वा ।

---

1 णाग्न्यन्वा-ख. 2 तन्त्रेध्माबर्हिषी उपसादय स्रुवौ चेत्यादि संप्रैषस्य कैश्चिदिष्टत्वात् तन्निरासार्थमुत्तरविधानार्थं च पुनर्वचनम् (रु).

(सू) पृषदाज्ये विकारः । महीनां पयोऽसीति पृषदाज्यधान्यां सकृदाज्यं गृह्णाति द्विर्दधि द्विराज्यम् ॥ ९ ॥ ५२ ॥ १९२० ॥

यद्युवै [1]श्रवणायां संसृज्य गृह्णीयात् ॥ १० ॥ ॥ ५३ ॥ १९२१ ॥

[श्रवणायां चेद्वरुणप्रघासास्तदा आज्यादिग्रहणे विशेषः]

(भा) श्रवणायां चेत्पशुवदुभयोः ।

(वृ) श्रव–योः—विहारद्वये पशुवदुभयोस्संसृज्य पृषदाज्यग्रहणम् ।

(सू) [2]उद्वासनकाले अनैडकीभिरूर्णाभिर्मेषप्रतिकृती लोमशौ कुरुतः ॥ ११ ॥ ५४ ॥ ११२२ ॥

[मेषीमेषयोरुद्वासने समन्त्रकत्वामन्त्रकत्वपक्षौ मेषीमेषप्रतिकृत्योर्लोमशत्वकरणक्रमश्च]

(भा) वाजिनैकदेशेनोपसिच्यामिक्षां[3] मेषयोरुद्वासनम् । आर्द्रा भुवनस्य गोप्त्री श्रृतोत्स्नाति जनित्री मतीनामिति [4]मेष्याश्च वारुण्यां मेषस्य । उभयोस्तूष्णीमुपदेशः । उद्वास्य लोमशकरणम् शशादीनां प्राणिनामूर्णाभिः, एडकाः मेषाः तेषामूर्णास्तुका नेष्यतेऽनैडकीभिरूर्णाभिरिति । केचित्त्वाहुः—छागा [5]मेषाश्चैडकाः । तेषामूर्णा नेष्यन्त इति ।

---

[1] श्रवणायां चेद्वरुणप्रघासाः तदा पशुबन्धवद्दध्न्याज्यमानीयैव गृह्णीयादित्यर्थः (रु). [2] उद्वासनकाले आमिक्षयोरुद्वासितयोः आर्द्रा भुवनस्य गोप्त्री श्रृतोत्स्नाति जनित्री मतीनामिति मेषीं आर्द्रो भुवनस्येति मेषं चोद्वास्य अनैडकीभिः अमेषजाभिरूर्णाभिः मेषयोर्लोमानि संपादयतः । (रु). [3] क्षायां–ख. [4] मेष्या वरुणवन्मेषस्य–ङ. मेष्याः चरुवन्मेषस्य–छ. ज. मेष्या वारुणवन्मेषस्य–च. [5] मेषाः, ते चैलका–ङ.

(वृ) उभयोस्तु–पदेशः—अष्टावुत्तरस्यां वेद्यां हवींष्यासादयतीति वक्ष्यमाणहेतुना आमिक्षयोरेव प्रधानं हविष्ट्वम्; तदुपचायकत्वमेव मेषयोरिति स्वातन्त्र्येण हविष्ट्वाभावान्नोद्वा[1]सनं मन्त्रेण मेषयोरित्युपदेशः।

(सू) [2]तदभावे कुशोर्णां निश्लेष्य मारुत्यां मेषमव-
दधाति वारुण्यां मेषीम् ॥ १२ ॥ ५५ ॥ १९२३ ॥

[प्राण्यूर्णाभावे कुशोर्णाश्लिलोमशाकरणं, मेषमेष्योः
पात्रक्षेपे कर्तृभेदतदभावपक्षौ च]

(भा) [3]प्राण्यूर्णानामभावे कुशोर्णा निश्लेषणं लङ्कनम्; तत्कृत्वा मारुत्यामामिक्षायामेकस्मिन् पात्रे मेषं क्षिपत्यध्वर्युः। वारुण्यां प्रतिप्रस्थाता मेषीम्; व्यतिहरत इत्युत्तरत्र वचनात्, विपरिवृत्तिर्व्यतिहारः। इह द्विवचनेनावचनात उभयोरवधानमध्वर्युरेव करोतीत्यन्ये।

(वृ) एकस्मिन्–ध्वर्युः—एकस्मिन्नुद्धरणपात्रयोरन्यतरस्मिन्।

वारुण्यां–चनात्—अत्रापि भिन्नकर्तृकत्वम्; अतस्तत्कर्त्रा निधानम्।

इह द्विव–तीत्यन्ये–मेषमवदधाति मेषीमवदधातीत्येकवचनात्।

(सू) अथाभ्यां [4]शमीपर्णकरीराण्युपवपति पर-
श्शतानि परस्सहस्राणि वा ॥ १३ ॥ ५६ ॥
॥ १९२४ ॥

---

[1] सनमन्त्रौ मेषयोः–छ. सनमन्त्रो मे–ख. ग. [2] तदभावे कुशान्मर्दयित्वा तच्छिखास्तयोः संश्लेष्य स्वां स्वां प्रतिकृतिमन्योन्यस्यामिक्षयोरेकैकस्मिन् पात्रेऽन्योन्यमवधत्त इत्यर्थः, व्यतिहरत इत्युत्तरत्र वचनात् (रु). [3] शशोर्णादीनामभावे–घ. [4] शम्याः पर्णानि करीरस्य फलानि च तत्तत्पात्रे स स क्षिपति। द्वयोरप्यध्वर्युरित्येके। आभ्यामित्युभयोर्भक्षणार्थः बासमेवाभ्यामपियच्छतीति श्रुतेः। (रु).

[मेषमेष्योः शमीपर्णकरीराणामुपवपने कालकर्तृसङ्ख्यादिकम्
तत्रोपदेशपक्षश्च]

(भा) तत्कृत्वा कायोद्वासनम् । क्रमेणालङ्कृत्याभिपूर्यैककपालं शमीपर्णकरीराणामुपवपनम् । उपदेशोऽवधानानन्तरमुपवपनम् । ततः कायोद्वासनाद्यभिपूर्यासादनान्तमेवेति पञ्चानामाग्नेयवत् सह कायेन सर्वं काय जुष्टमभिघारयामीत्यभिघारणादि । एककपालधर्माश्च य आग्रयण आम्नायन्ते प्रातर्दोहधर्माश्चामिक्षाणां व्युद्धरणवाजिनेज्यादयो वैश्वदेवधर्माः प्रत्यक्षविहिताः । शमीवृक्षस्य पर्णानि । यत्परश्शतानि शमीपर्णानि भवन्तीति । करीराणि सोमाकृतेर्वृक्षस्य फलानि । न तेषां संख्यानियमः । तान्युपवपति क्षिपति मेषमेष्योर्भक्षणाय । अथाभ्यामिति कायस्याभिपूरणादनन्तरं करम्भपात्रेषु शमीपर्णकरीराण्यध्वर्युरेव करोति क्षिपति मेषस्य मेष्याश्च ।

उपदे--पनम्—अथाभ्यामित्यवधानानन्तरमुक्तत्वात् ।

शमीवृ—शतं सहस्रं वा पराणीति परश्शतानि, परस्सहस्राणि चेति परसंख्या शतं सहस्रं वा त्रिप्रभृतीनि ।

यत्पर-तीति—दर्शनात् ।

करीराणि-नियमः—यद्यपि सूत्रकारेणोभयोः समासनिर्देशः कृतः तथाऽपि श्रुतौ करीरसंख्याभावादनियमः ।

तान्युप-णाय—धासमेवाभ्यामपियच्छतीति लिङ्गात् ।

अथाभ्या-ष्याश्च—उभयकर्तृकत्वे अथशब्दोऽनर्थकः पाठक्रमादेव सिद्धेः । करम्भपात्रेष्वपि शमीपर्णसंख्या ।

(सू) [1]करम्भपात्रेषु चान्वोप्याष्टावुत्तरस्यां वेद्यां हवींष्यासादयति ॥ १४ ॥ ५७ ॥ १९२५ ॥

---

[1] ततोऽध्वर्युः करम्भपात्रेषु च तानि क्षिप्त्वा ततः कायोद्वासनाद्यासादनात्कृत्वा मारुतीवर्जमष्टौ हवींषि प्रियेण नाम्नेत्युत्तरस्यां वेद्यामासादयति । व्याहृतीभिरित्यन्ये, तदयुक्तम्—चातुर्मास्यान्यालभमान इति श्रुतेः । स चायं कर्मक्रमः कल्पान्तरेषु क्रमोक्तौ वेदितव्यः । (क)

**एकां मारुतीं प्रतिप्रस्थाता दक्षिणस्यां [1]करम्भ-पात्राणि च ॥ १५ ॥ ५८ ॥ १९२६ ॥**

[हविषां सङ्ख्या, तदासादने मन्त्रः, आमिक्षयोरेवासन्नाभिमर्शनादि-संस्कारा न मेषमेष्योः, सर्वत्र व्याहृतिभिरित्युपदेशपक्षश्च]

(भा) अष्टावुत्तरस्यां एकां मारुतीमिति संख्यावचनात्, आसन्नाभिमर्शनादिसंस्कारा आमिक्षयोरेव । न मेषमेष्योः । आमिक्षान्तर्भावात् । प्रियेणेत्यासादनमुभयोः । वैश्वदेवशुनासीरीययोरेव व्याहृतिभिः चातुर्मास्यान्यालभमान इति श्रुतेः । सर्वत्र व्याहृतीभिरित्युपदेशः ।

(वृ) सङ्ख्यावचनात्—अष्टौ एकामिति संख्यानिर्देशात् । आमिक्षयोरेवासन्नाभिमर्शनादि न मेषमेष्योः तयोरामिक्षान्तर्भावात् आमिक्षाधर्मा एव नौषधधर्मा यज्ञोऽसीत्यादयः ।

[हविरासादनं प्रियेणेत्यनेन मन्त्रेण न तु व्याहृतिभिः]

**उभयोः**—अध्वर्युप्रतिप्रस्थात्रोः । यद्यपि चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिरिति हविरासादनं प्राप्तम्, तथाऽपि वैश्वदेवे व्याहृतिभिर्हवींष्यासादयतीति वचनात् शुनासीरीये वैश्वदेववदिति पुनर्वचनात् उभयत्र व्याहृतिभिर्हविरासादनम् । इह प्रियेणेत्यस्यापि विकृतिपूपदिष्टत्वात्तेनासादनम् । इह वैश्वदेववचनं दक्षिणविहारे तन्त्रप्राप्त्यर्थम् । एवं साकमेधे प्रियेणेत्येव ।

**वैश्व–तिभिः**—दर्शपूर्णमासौ चातुर्मास्यान्यालभमान इत्यविशेषश्रुतेः ।

**(सू) अत्र मेषप्रतिकृती [2]व्यातिहरतः ॥ १६ ॥ ५९ ॥ ॥ १९२७ ॥**

---

[1] करम्भपात्राणि च तूष्णीमासादयति (रु). [2] विनिमयेन हरतः (रु).

[1] मारुत्यां मेषीमन्वदधाति वारुण्यां मेषम् ॥ ॥ १७ ॥ ६० ॥ १९२८ ॥

[मेषीमेषयोरध्वर्युप्रतिप्रस्थातृभ्यां मारुतीवारुण्योरामिक्षयोः प्रक्षेपः आसन्नाभिमर्शनं च]

(भा) मेषीमवदधात्यध्वर्युर्मारुत्यां मेषं वारुण्यां प्रतिप्रस्थाता। तत आसन्नाभिमर्शनं पञ्चहोत्रा[2]।

(वृ) मेषी–र्शनम्—व्यतिहारवचनात् कर्त्रन्तरमाधारान्तरं च प्राप्यते। तत आसन्नाभिमर्शनम्।

(सू) [3] पशुवन्निर्मन्थ्यौ सामिधेन्यश्च नव प्रयाजानूयाजाः ॥ १८ ॥ ६१ ॥ १९२९ ॥

[वेदनिधानहुतसमिद्धानुमन्त्रणादिकम्]

(भा) निर्मन्थ्यौ वेदनिधानादि[4]। [5]वाजिनद्वयमुत्करे। न च [6]मन्थने ऊहः संसर्गि[7]त्वात्। नवत्वविधानात् पुन[8]रेकं हुतानुमन्त्रणं [9]प्रयाजानामनूयाजानां सामिधेनीनां[10] च समिद्धानुमन्त्रणम्। [11] अध्वर्युरेव दैवं च मानुषं च होतारौ वृणीते साधारणत्वात्। सामिधेन्यनुज्ञानं प्रवरानुज्ञानं न द्विवद्ब्रह्म अभिधेयैकत्वात्। अध्व[12]र्युसंमार्गैः कृते परिधिसंमार्गे[13] स्वैः परिधीनां करोति।

---

[1] स्वां स्वां प्रतिकृतिं स्वस्यां स्वस्यामामिक्षायां स स क्षिपतीत्यर्थः (रु). [2] त्रादि क. ङ. [3] विस्पष्टमेषां पुनर्वचनम्। निर्मन्थ्यस्य तु कैश्चिद्द्वितीयस्यानिष्टत्वाच्चद्विधानार्थं च। यथाऽऽह भरद्वाजः उभौ निर्मन्थ्याभ्यां चरत इत्येकमध्वर्युरित्यपरमिति। तत्राग्नेय मथ्यमानायेत्यादौ एकवत्संप्रैषोऽनुसंधातव्यः (रु). [4] नादि वैश्वदेववत्–क. ङ. च. वेदासादनादि–ज. [5] वाजिनमुत्करे–ङ. [6] मन्थनमनूहः ?–ज. [7] त्वादग्निशब्दस्य नव–ज. [8] रेके हुता–ङ. [9] 'प्रयाजाना–नां च' इति क-कोशे न दृश्यते. [10] नीनां समिद्धा–ङ. [11] न्त्रणान्ते कृत अध्व–ज. [12] र्युस्संमा–क. ग. ज. [13] र्गे दक्षिणस्यामपि स्वै–क. ङ. र्गे दक्षिणस्यामपि विहारस्य स्वै–ख. ङ.

(वृ) **न च मन्थ–र्गित्वात्**—अग्निद्वित्वेऽपि ।

[पुनर्नवप्रयाजादिविधानफलं भाष्यानुक्तपूरणं च]

**नवत्वचि–जानाम्**—वैश्वदेववदिति सिद्धेऽपि पुनर्नवप्रयाजा इति वचनात् कृतानुकारित्वेऽपि पश्चात्तन्त्रेण हुतानुमन्त्रणम् ।

**सामिधे–न्त्रणम्**—सामिधेनीयाजमानेषु अनूच्यमानासु दशहोतारमित्येतत्तन्त्रेण उच्छुष्मो अग्न इति वर्तमानकालभेदादावृत्तिः । समिद्धो अग्निरित्यस्याः प्रतिप्रस्थातुस्समिदाधानादूर्ध्वं तन्त्रेण प्रयोगार्थम् । पशुवन्निर्मन्थ्यौ सामिधेन्यश्चेति पुनरुपादानमनूहार्थम् ।

**अध्वर्यु–णत्वात्**—हेतुः ।

**सामिधेन्य–कत्वात्**—[1] होतुरेकत्वादध्वर्योश्च वरणकर्तुरेकत्वात् ।

**अध्वर्यु सं–करोति**—स्वैस्संमार्गैः [2] परिधीनां संमार्गं करोत्याग्नीध्रः ।

(सू) **[3] प्रघास्यान् हवामह इति प्रतिप्रस्थाता पत्नीमुदानयत्येतच्च वाचयति ॥ १९ ॥ ६२ ॥ ॥ १९३० ॥**

[पत्न्युदानयनं तत्कालश्च]

(भा) तत उत्तरस्याग्नेः कृते संमार्गे स्वैस्संनहनैः प्रघास्यानिति प्रतिप्रस्थाता करोति । [4]एतच्च यजुर्वाचयति प्रघास्यानिति प्रतिप्रस्थाता ।

(वृ) **तत उत्तर–रोति**—यद्यपि जारानिर्देशोत्तरकालं संमृष्ट उत्तरोऽग्निरिति सूत्रकारेण कालविधानं करम्भपात्रस्य, तथाऽपि पत्न्युदा-

---

[1] ख-कोशे होतुरेकत्वादित्यंशो न दृश्यते. [2] गैरिध्मसंनहनैः कृतपरिधिसंमार्ग–ख. [3] अथ परिधिसंमार्गान्ते कर्मण्युभयत्र कृते स्वायतनात्पत्नीं वेदिसमीपं नयति प्रघास्यानिति यजुषा । तामेतच्च वाचयति (ख). [4] इदं वाक्यं–ख. पुस्तके न दृश्यते.

नयनादेः करम्भपात्रहोमार्थत्वादुदानयनप्रभृति होमकाल एव कर्तव्यम् ।

(सू) तां पृच्छति पत्नि[1]कति ते जारा इति ॥ २० ॥
॥ ६३ ॥ १९३१ ॥

[जारसम्भवे कर्ममध्ये पत्न्याः तदाख्यानादेव शुद्धिः]

(भा) कतरास्ते जारा इति [2]पृच्छति प्रतिप्रस्थाता । पत्न्या त्वाख्यातव्यमेतावन्तो [3]जारा इति । सत्याख्यानादेव तस्याश्शुद्धिः । [4] न च प्रवृत्ते कर्मणि प्रायश्चित्तार्थ[5]मपनीयते । कर्मवैगुण्यात् ।

(वृ) शुद्धिः—कर्मयोग्या भवति ।

[कर्मणः पूर्वं जारसम्भवे न शुद्धिः]

कर्मवैगुण्यात्—पत्नीकर्मवैगुण्यात् । अत एव प्रवृत्ते कर्मणि जारसम्भवे एतत्प्रश्नादि । न तु पूर्वं जारवत्याः, कृतप्रायश्चित्ताया एवाधिकारात् ।

[6] यानाचष्टे तान्वरुणो गृह्णात्विति निर्दिशति
॥ २१ ॥ ६४ ॥ १९३२ ॥

[पत्न्या जारसत्त्वे मन्त्रप्रवृत्तिर्न जाराभावे]

(भा) तान् वरुणो गृह्णात्विति निवृत्तिः यस्या न सन्ति जाराः ।

(वृ) यस्या–राः—[7] तस्या निर्देशाभावात् ।

---

[1] संख्याप्रश्नादेव स्वरूपप्रश्नोऽर्थसिद्धः (रु). [2] च्छति । पत्न्या त्वा-च. [3] न्तो मम जा-ङ. च. [4] न च अप्रवृत्ते-ख. ग. [5] र्थं क्रियते-ख. ग. [6] सा चेत्कांश्चिदाचष्ट, तान्निर्दिशति देवदत्तादीन् वरुणो गृह्णात्विति । एवं च तद्दोषात्कर्मणो वैगुण्यं न भवतीति भावः । स्वयमपि कृतप्रायश्चित्ता भवतीत्यन्ये (रु). [7] अस्या नि-ख. ग.

[1] यज्जारꣳसन्तं न प्रब्रूयात्प्रियं ज्ञातिꣳ रुन्ध्यात् असौ मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयति ॥ २२ ॥ ६५ ॥ १९३३ ॥

[पत्न्या सतो जारस्यानाख्याने दोषः]

(भा) [2] यः प्रियो ज्ञातिः तस्य निरोधनं [3] स्रोतसा भवति यदि जारान्नाचष्टे ।

संमृष्ट [4] उत्तरोऽग्निर्भवत्यसंमृष्टो दक्षिणः । अथान्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेणोत्तरां वेदिमैषीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधिनिधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणेऽग्नौ शूर्पेण जुहुतः ॥ २३ ॥ ६६ ॥ १९३४ ॥

[यजमानतत्पत्नीभ्यां कर्तव्यम्]

(भा) असं[5]मृष्टोऽग्निर्भवति दक्षिणः । [6] तत्परिधयस्संमृष्टाः । [7] अथैतत्कर्माणि क्रियन्ते प्रघास्यानित्येवमादि निर्देशान्तम् । ततोऽन्तरा वेदी गच्छतः । उत्तरेण वोत्तरां वेदिम् । ऐषीके — [8] इषीकतृणशलाकाभिः कृते शूर्पे करम्भपात्राण्योप्य द्वयोश्शिरसोः स्थाप्यते ।

(वृ) इदानीं सूत्रयोजना--

---

[1] यदि सत्येव जारे तमनुक्त्वाऽपब्रुवीत आत्मनः प्रियं बन्धुं रुन्ध्यात् बाधेत । ततोऽवश्यं जारमुक्त्वा वरुणेन ग्राहयेत् । तेन कर्मणो वैगुण्यं परिहृतं भवतीति भावः । (रु). [2] पत्न्या यः प्रि–ज. [3] स्रोतआदिना भवति–क. च. स्रोतसां भवति–ङ. [4] अथोत्तरोऽग्निरसंमृष्टो भवति न त्वितरः । अत्रान्तरे यजमानः पत्नी च करम्भपात्राणि सह जुहुतः (रु). [5] मृष्टो दक्षिणोऽग्निर्भवति ।–क. मृष्टो दक्षिणाग्निर्भवति ।–च. [6] तस्य परि–छ. तस्यापि परि–ख. ग. च. ञ. [7] अथैतत्कर्म क्रियते–घ. [8] इषीकाभिः तृणशलाकाभिः–छ.

गच्छतः—[1] ततोऽनन्तरं पत्नीयजमानौ ।

[अथान्तरेति सूत्रस्य क्रमनियमार्थता नवप्रयाजेत्यादेस्तु याजमानतन्त्रतार्थता च]

उत्त—दिम्—अथान्तरा वेदी गत्वेत्यथशब्दः पूर्वोक्तस्यापि क्रमनियमार्थः ; प्रघास्यानित्यादेः जारनिर्देशान्तस्य करम्भपात्रहोमाङ्गत्वात् । प्रघास्यानित्यादि विपरायन्तौ जपत[2] इत्येवमन्त संमृष्ट उत्तरोऽग्निरित्यस्मिन् काले । नव प्रयाजानूयाजा इति निर्देशो न क्रमार्थः ; किं तु पशुतन्त्रिर्मन्थ्यौ सामिधेन्यश्चेति याजमानतन्त्रत्वार्थमुक्तत्वात् प्रसङ्गान्नवप्रयाजत्वस्यापि याजमानतन्त्रतार्थमुपदेशः ।

ऐषीके—स्थाप्यते—अत्रैषीकत्वनियमादन्यत्रैषीकमन्यद्वा शूर्पम् ।

[3] मोषूण इन्द्रेति यजमानः पुरोऽनुवाक्यामन्वाह यद्ग्राम इत्युभौ याज्याम् ॥ २४ ॥ ६७ ॥ १९३५ ॥

[यजमानतत्पत्नीकर्तृकहोमे पुरोनुवाक्यायाज्ये]

(भा) पुरोऽनुवाक्या त्र्यवसाना, याज्याऽपि त्र्यवसाना स्वाहाकारान्ता[4]।

अक्रन् कर्म कर्मकृत इति [5] विपरायन्तौ जपतः ॥ २५ ॥ ६८ ॥ १९३६ ॥

[यजमानतत्पत्न्योः पृथग्गमनविधानान्नोत्तरविहारेऽन्यत्कर्म]

(भा) तयोः पृथग्गमनं स्वस्थानगमनार्थम् । संमृष्ट उत्तर इति वचना-[6]दुत्तरविहारेऽप्यन्यत्कर्म न क्रियते ।

---

[1] तदनन्तरं-छ. [2] इत्यन्तं-छ. [3] मो षू ण इति यजमानेनानुद्रुते यद्ग्राम इत्युभावुक्त्वा जुहुत इत्यर्थः । अत्राह बोधायनः किंदेवत्यानि खलु करम्भपात्राणीति ? वारुणानि भवन्तीत्येव ब्रूयादिति (रु). [4] कारान्ताम्-छ. [5] विपरावर्तमानौ (रु). [6] दुत्तरेऽप्य-ज. दुत्तरत्राप्य-क. ङ. च. छ. दुत्तरेऽप्यन्यत् क्रियते ? -क. दुत्तरेऽप्यन्यत्कर्मण ? क्रियते-छ. दुत्तरेऽप्यन्यन्न क्रियते च. ज.

(वृ) विपरायन्तौ—इति विविधं गच्छन्तौ ।

संमृ–यते—यद्यपि दक्षिणाग्नौ होमः । संमृष्ट [1] उत्तरो भवत्य-संमृष्टो दक्षिणोऽथान्तरा वेदी इत्यवधिनिर्देशात् उत्तरत्राप्यग्निसंमार्गा-दूर्ध्वं न किञ्चित्कर्तव्यम् ।

[अध्वर्युः प्रतिप्रस्थाता वा जुहुयादिति पक्षान्तरेऽपि ताभ्यां जपः]

[2] अपि वाऽध्वर्युः प्रतिप्रस्थाता वा जुहुयात् ।
अन्वारभेयातामितरौ ॥२६॥ ६९ ॥ १९३७ ॥

(भा) यदाऽप्यन्वारम्भो [3] यजमानयोः [4] तदाऽप्यक्कान्निति जपः ।

(वृ) यदा–जपः—तस्य स्वस्थानगमनार्थत्वात् ।

अत्र दक्षिणमग्निं [5] संमार्ष्टि ॥ २७ ॥ ७० ॥
॥ १९३८ ॥

[दक्षिणाग्निसंमार्गादिविधिः तत्रोपदेशपक्षश्च]

(भा) संमृष्टे दक्षिणेऽञ्जलिकरणादि [6] क्रमेणैव । उभयत्र याजमानं च । आज्यभागयोरप्येवम्; वषट्कर्तुरेकत्वा [7] द्विभुत्वाच्च । तथा स्विष्ट-कृतः । आवृत्तिरुपदेशः [8] ।

(वृ) संमृष्टे–भुत्वाच्च—वषट्कारस्यैकत्वात् होमयोर्निरन्तरत्वात् हुतानुमन्त्रणस्य च [9] निर्वृत्ते होमे कर्तव्यतया विभुत्वात्तन्त्रेण ।

तथा–देशः—कृतानुकारित्वात् [10] ।

---

[1] उत्तरोऽथान्तरा–ख. ग. च. [2] तावेव तस्यापि होममन्त्रौ (ह). [3] यजमानपत्नयोः–क. [4] ततोऽप्यमूनिति ?–क. [5] आग्नीध्र इति शेषः (ह). [6] क्रमेण चोभयत्र–क. [7] त्वाद्विभवित्वा–क. ङ. ज. त्वाद्विभवत्वा–ख. ग. त्वाद्विभवाच्च–ज. [8] देशेन–ज. [9] निर्वृत्ते–घ. छ. [10] रित्वात्प्रतिप्रस्थातुः-छ.

(मू) [1]ऐन्द्राग्नपर्यन्तैः प्रचर्यारमत्यध्वर्युः ॥ २८ ॥ ॥ ७१ ॥ १९३९ ॥

[2]अथ प्रतिप्रस्थाता पूर्वेण सहावदानेन मारुत्याः सर्वां मेषीमवद्यति । उत्तरेण शमीपर्णकरीराणि ॥ २९ ॥ ७२ ॥ १९४० ॥

[3]अथ प्रचर्यारमति ॥ ३० ॥ ७३ ॥ १९४१ ॥

[4]अथाध्वर्युः पूर्वेण सहावदानेन वारुण्याः सर्वं मेषमवद्यति । उत्तरेण शमीपर्णकरीराणि । अथ प्रचरति ॥ ३१ ॥ ७४ ॥ १९४२ ॥

॥ षष्ठी खण्डिका ॥

---

[5]कायानुब्रूहिकं यजेत्येककपाले संप्रैषौ ॥ ॥ १ ॥ ७५ ॥ १९४३ ॥

---

1 अथ स्रुच्याघारादि समानमा प्रवरात् । तत्राध्वर्योरेव प्रवरनिगदस्स्यात्; होतृवरणार्थत्वात् युगपत्कालनिगदत्वाच्च । तथाऽध्वर्युरेव प्रवरं प्रवृणीतेति भारद्वाज-बोधायनौ । द्वावपि च स्फ्यौ संमार्गौश्चाग्नीध्रो धारयति । प्रत्याश्रावण वषट्कारेणाध्वर्युर्जुहोति । वषट्कृते प्रतिप्रस्थाता । तन्त्रं हुतानुमन्त्रणम् । ऐन्द्राग्नान्तैर्हविर्भिः प्रचर्य क्षणं विरमति तूष्णीमास्तेऽध्वर्युः (रु). 2 मारुत्या आमिक्षायाः प्रथमावदानेन सह तस्यां मेषीं सर्वामादत्ते । न चावदानमन्त्रस्योहः; मेष्याः कृत्स्नावदानेऽमन्त्रत्वात् । उत्तरेण सह शमीपर्णकरीराणि (रु). 3 ततः प्रचर्यासौ विरमति । तत्र सान्नाय्यवदनुमन्त्रणमामिक्षायाः । मेष्यास्त्वैन्द्राग्नवत् भारद्वाजमतात्; यथाऽऽशिषां समुच्चयं प्रकृत्याह संसृष्टे च नानाद्रव्यत्वाद्वरुणप्रघासेषु मेषयोश्चेति (रु). 4 व्याख्यातः पूर्वेण । मेषस्य त्वाग्नेयवदनुमन्त्रणम् (रु). 5 तत एककपालधर्मेण कायप्रचारः । आग्नेयवच्चानुमन्त्रणम् (रु).

  

**नभश्च नभस्यश्चेति चतुर्भिर्मासनामभिरेकक-पालमभिजुहोति ॥२॥ ७६ ॥ १९४४ ॥**

**(सू.) [1]तदुहैके पृथगिडे समवद्यन्ति तदु तथा न कुर्यात्। सप्तानां हविषां समवदायाध्वर्युः प्रतिप्रस्थात्रे प्रयच्छति। तस्मिन् प्रतिप्रस्थाता मारुत्या अन्ववदधाति ॥ ३ ॥ ७७ ॥ ॥ १९४५ ॥**

[अध्वर्युप्रतिप्रस्थातृभ्यामत्र कर्तव्यं कर्मजातं]

(भा) अध्वर्युर्वषट्कारेण जुहोति वषट्कृते प्रतिप्रस्थाता चेति। इष्ट्वाऽऽज्यभागौ प्रतिप्रस्थाता विरमति। तत अग्नेयादिभिरैन्द्राग्नपर्यन्तैः प्रचर्य विरमत्यध्वर्युः। मारुत्यामिक्षाया यदवदानं पूर्वं तेन सह मेषमवद्यति। [2]न चोहः; मेषयोः खण्डनाभावात्। द्विती[3]येन शमीपर्णकरीराणि। द्वितीयाच्च पात्रादवदानद्वयम्। ततो मरुद्भ्योऽनुब्रूहीति सान्नाय्यवदनुमन्त्रणम्। आ[4]मिक्षायाः इन्द्रयाजिन इन्द्रि[5]यावी भूयासम्। महेन्द्रयाजिनो जेमानं महिमानं गमेयमिति, विशेष[6]धर्मा एव वैश्वदे[7]व्यामिक्षासु [8]व्युद्धरणवाजिने[9]ज्यादयः। अनुमन्त्रणं [10]तु देवताश्र[11]यम्, नामि[12]क्षाया विशेषधर्मः। चरुपुरोडाशाज्यसान्नाय्यपशू[13]नां

---

[1] पृथक् सौविष्टकृतेन प्रचर्य सहेडामवद्यतः। तत्र खलु केचिदिडामप्यवद्यन्ति; तत्तथा न कुर्यात्। एकस्मिन्नेव तु पात्रे उपस्तीर्याध्वर्युः स्वीयेभ्यो हविर्भ्यस्समवदाय प्रतिप्रस्थात्रे प्रयच्छति। तस्मिन्नेव पात्रे मारुत्या अवदाय प्रतिप्रयच्छति। तत्र सप्तानां हविषां समवदायेति यत्नात्पश्चाद्भाविन्या अपि वारुण्याः पूर्वमवदानं स्यात्। पश्चान्मारुत्याः। ततोऽन्वारम्भ उभयोः (रु). [2] न चोभौ मेष-**च.** [3] येन सहावदानेन श-**ख. ग. घ.** [4] क्षायां इन्द्र-**ज. ञ.** [5] यावी जेमानमिति महे-**क.** [6] धर्म एव वैश्व-**क.** [7] व्यां आमिक्षायां-**ज.** [8] उद्धरण-**क.** व्युद्धरण-**ख. ग.** [9] ज्यादि. [10] तु नामिक्षाधर्मः चरु-**क.** [11] श्रयत्वाद्देवतायामामिक्षाया-**ज.** [12] क्षाविशेष-**च. ञ.** [13] नां तु त-**छ.**

तत्क्रियते। [1]अतो नै [2]तस्य प्राप्तिः। एवमेककपालस्या[3]पि विशेषधर्माः [4]पूरणादयः। त एवैककपालानाम्। नानुमन्त्रणम्। अतः कस्याहं देवयज्ययाऽन्नादो भूयास[5]मित्येव [6]समुच्चयार्थ आशिषाम्। मरुतामहं देवयज्यया जेमानं महिमानं[8] गमेय [9]मिन्द्रियाव्यन्नादो भूया[10]सम् वरुणस्याहं देवयज्यया जेमानं महिमानं[11] गमेयमन्नादो भूयासमिति[12] सान्नाय्यवदुपदेशः; मुख्यत्वात्। उभयो[13]रिध्मसंनहनयोरन्वारम्भ आग्नी[14]ध्रस्य धूननं च होतुरुभयस्य [15]कर्माङ्गत्वात्। प्रत्या[16]श्रावणे [17]स्फ्यसंमार्गस्योभयस्य धारणम्। होतृसंस्का[18]रत्वाद्वैकस्यैवेध्मसंनहनस्य धूननम्। [19]नामिक्षाणां प्राशित्रं सान्नाय्यविकारत्वात॥

[इडायाः पृथगवदानपक्षे विशेषः]

यदा [20]पृथगिडे निरव[21]द्यन्ति तदाऽपि सहोपहवोऽनूहश्चडा-शब्दस्य देवताभिधानात्। प्रतिप्रस्था[22]ता स्वामिडामारभते। होतोभयं धारयति उभयत्रावान्तरेडा [23]यद्यपि सहोपहवः अन्वार[24]म्भश्चोभयोः उपहूत इति जपश्च। अध्वर्योः पर्वाञ्जनं उपस्तरणाभिघारणे च।

---

[1] ततो नै-घ. [2] तस्याः प्राप्तिः-क. ञ. तस्याप्राप्तिः-च. [3] स्यापि ये विशे-क. च. ञ. [4] पूर्णादयः-छ. [5] त्यस्य इ-ग. [6] समुच्चयमिआशिषां भ ए-क. [7] नामिन्द्रियावी वाजा-ङ. क. [8] महिमनमन्नादमिति पूर्ववत्-क. [9] मिति इन्द्रि-ञ. [10] समिति-ञ. [11] मानमन्नाद इति-ञ. [12] पूर्ववत् सान्ना-ङ. ञ.च. [13] रिध्मस्य स-ञ. [14] ध्रस्य च धू-ञ. च. [15] कार्मणत्वात्-ङ. [16] श्रवणस्फय सं-ङ. श्रावणे च स्फ्य· ञ. [17] स्फ्यस्य चोभयस्य संयार्गस्य वोभ-च. [18] राद्वैक-ङ. ञ. रत्वाचैकस्य संन-क. [19] धूननम् यदा पृ-ञ. [20] यदा पृथगिध्मे-क. [21] द्यति-ङ. [22] ता इडा-क. ता स्वामन्वा-ञ. क. च. ता डामन्वारभते-क. [23] यदा सहोप-ग. यदापि स-क. ङ. [24] म्भणीया चोभयोः-क.

(सू) अध्वर्यु–चेति—वषट्कृते वषट्कारेण वाऽऽहुतिषु सन्निपातयेदित्युभयोर्होमकालत्वात् । प्रतिप्रस्थातुः कृतानुकारित्वे सत्युभयो[1]र्होमकालयोर्होमः ॥

इष्ट्वाऽऽज्य–मत्यध्वर्युः—यागोत्पत्तिक्रमेणानुष्ठानार्थम् ।

न चोहः—अवदानमन्त्रस्य ।

मेषयोः–वादिति—आमिक्षामेषयोस्सहावदानेऽपि न मेषार्थो मन्त्र इति न द्वि[2]वचनोहः । यत्रावखण्ड्यावदानं तत्रैव मन्त्र इति ॥

द्वितीया—द्वयम्—द्वितीयादप्युद्धरणपात्रादामिक्षाया अवदानद्वयम् ।

ततो मरु—गमेयमिति—न तु प्राणैस्सायुज्यं गमेयमिति वैश्वदेविकम् ॥

विशेष—क्षासु—प्रवर्तन्ते ।

तत्क्रियते–तत्—हुतानुमन्त्रणम् । 'प्राणैस्सायुज्यं गमेयम्' इति नामिक्षाया एव ।

अतो नैतस्य—प्राप्तिः—आमिक्षामेषयोः[3] सवनीयेषु भरद्वाजोक्तत्वात् ।

मरुतामहं–समिति—आमिक्षामेषयोर्हविष्ट्वात् तन्निबन्धनमाशीर्द्वयं[4] भवति । अत्र निर्गुणमरुतामैन्द्राग्नविकारत्वादिन्द्रियाव्यन्नाद इति । वरुणस्याग्नेयविकारत्वा[5]दन्नादो भूयासमिति ।

सान्नाय्य–त्वात्—मेषयोरधर्मकत्वस्याप्युक्तत्वात् आमिक्षयोर्मुख्यत्वाच्च तन्निबन्धनाशी[6]रेव भवति ।

---

[1] योः कालद्वये होमः–ख. ग. छ. [2] वचनेनोहः–छ. [3] योश्च स–छ.
[4] भवतीति।–घ. [5] दन्नाद इति छ. ज. [6] शीरेवेति–छ.

उभयो-ङ्कत्वात्--धूननेन संनहनस्यापि संस्कारासिद्धेरुभाभ्यां संनहनाभ्यां धूननम् ।

प्रत्याश्रा-धारणम् —तच्चद्विहारकर्माङ्गभूतौ स्फ्यौ संमार्गौ च धारयता प्रत्याश्रावणं कर्तव्यमित्युभयवैहारिकं धारयितव्यम् । प्रत्याश्रावणे उभयोरिध्मसंनहनयोरित्याग्नीध्र[1]होतृधर्माणां पूर्वमाज्यभागादेवानुष्ठेयानामप्यत्र दक्षिणमग्निमित्याध्वर्यवधर्मोपदेशस्य सूत्रकारेण प्रस्तुतत्वात् तत्समाप्त्यानन्तरं निर्देशः । इडायां होतृधर्मोपदेशात् पूर्वमपि ।

होतृसं-ननम्—इध्मसंनहनानि मुखं प्रति[2] धूनुते इति होतृसंस्कारत्वाद्धूननस्य तत्संस्कार एतेनापि सिध्यतीत्येकस्य धारणमिति ।

यदा पृथ-धानादिति—वृष्ट्यादेर्देवताया अभिधानात् तस्याश्चैकत्वादिडाशब्दस्यानूहः ।

प्रतिप्र-रभते —स्वामिडाम् । पृथगवदानपक्षे ।

होतो-यति-ह्वः —यदा [3]सहावदायोपह्वः तदाऽप्युभयवैहारिकसंस्कारा[4]र्थमुभयत्रावान्तरेडा ।

अन्वा-भयोः—अध्वर्युप्रतिप्रस्थात्रोः ।

उपहू-श्च —उभयोरुपहूतः पशुमानसानीति जपः । अत्र च तदु हैके पृथगिडे निरवद्यन्तीत्येकः पक्षः । तदु तथा न कुर्यादिति तस्य नात्यन्तिक[5]निषेधः । किन्तु वक्ष्यमाणार्थ[6]विवक्षया । अत उभयं विकल्पते[7] ।

अध्वर्यो-रणे च—लेपात् सहावदान[8]पक्षेऽध्वर्युरेव ।

(सू.) [9]उपहूतां प्राश्नन्ति ॥ ४ ॥ ७८ ॥ १९४६ ॥

---

[1] हौत्रध–छ. [2] धून्वत इति–छ. [3] सहावदानोप–छ. सहापहायोप–ख. ग. [4] रार्थोभय–छ. [5] कः प्रतिषेधः–छ. [6] विधित्सया–ख. ग. छ. [7] विकल्प्यते–ख. ग. [8] पक्षेप्यध्व–छ. [9] प्रतिप्रस्थातुरपूर्वत्वात् तत्प्रापणार्थं वचनम्. (रु).

[अध्वर्य्वादिभिश्शेषप्राशनविधिः]

(भा) [1]उपहूतयोः[2] स्वांस्वामध्वर्यू प्राश्नीतः । इतरे [3]सर्वे कृते चतुर्धाकरणे अग्नेयविकाराणाम् ।

(वृ) प्राश्नीतः—सहावदानपक्षेऽपि । इतरे सर्वे संसृज्य प्राश्नन्ति ।

(सू) यः [4]प्रवया इवर्षभः सा दाक्षिणा ॥ ५ ॥ ७९ ॥
॥ १९४७ ॥

[प्रवयसः ऋषभस्य दक्षिणात्वम्]

(भा) यः प्रवयाः प्रवृद्धवया इवर्षभः सेचनसमर्थः[5] वृद्धाण्डकस्तरुण [6] इति वचनात्[7] । केचित् प्रवयाः — प्रथमवया इति ।

(वृ) इति वचनात् —[8]निरुक्तकारवचनात् ।
वृषभ इव— वृषभ इत्यर्थः । अतस्सेचनसमर्थः ।

(सू) [9]कामं तु ततो भूयो दद्यात् ॥ ६ ॥ ८० ॥
॥ १९४८ ॥

[इच्छया ऋषभादन्यस्यापि दाक्षिणात्वम्]

(भा) [10]कामं इच्छन् ऋषभादन्यदपिदीयते ।

---

[1] उपहृतयो ?-ञ. [2] स्वामध्वर्यू-ङ. स्वां स्वामध्वर्युः प्राश्नीत तत इतरं-ञ. [3] सर्वं कृते-च. छ. ज. सर्वं कृते प्रकृते चतु-ञ. [4] प्रवयाः—प्रकृष्टवयाः — सेचनसमर्थ इति यावत् (रु). [5] र्थः । अप्रवृद्धोऽणकस्तरुण इति-घ.च. ञ. र्थो वृद्धोरुकस्तरुण इति-छ. र्थो वृद्धमुष्कस्तरुणः--ङ. र्थः वृद्धोणुकस्तरुणः-क. [6] इत्यृषभार्थः ?-ख. ग. [7]नात् ।प्रवयाः--क. [8] निरुक्ते नैघण्टुके काण्डे 'प्रत्नं प्रदिवः प्रवयाः' इत्यादीनि षट्पदानि संगृह्यन्ते। नैगमकाण्डे च १९ शे खण्डे 'पुराणनामान्युत्तराणि षट्' इति तान्येव विवरणेनावतारितानि। 'पुराणं कस्मात्' इति पुराणपदार्थमापृच्छय 'पुरा नवम्' इति विवव्रे यास्कः। दुर्गाचार्यश्च प्रवया इति पदं प्रकृष्टवया इति व्यवृणोत्। न तु प्रवृद्धवया इति। अतोऽत्र भाष्ये वृत्तौ गृहीतो निरुक्तकारोऽन्य एव भवितुमर्हति. [9] शक्तिश्रद्धाभ्यां ततो भूयिष्ठं दातुमिच्छन् कामं दद्यात्; तदपि नानुशास्त इत्यर्थः (रु). [10] काममन्विच्छन्-ग. ज. कामामिच्छातः--ज.

(वृ) दीयते—इच्छया ।

(सू) धेनुर्दक्षिणेत्येके ॥ ७ ॥ ८१ ॥ १९४९ ॥

[दक्षिणासादनस्थानं तत्प्रतिग्रहपरिध्यग्निसंमार्गसमिदाधानादि]

(भा) अन्वाहा[1]र्यधर्मो दर्शपूर्णमासविकाराणां तु दक्षिणानाम् । न तूपदेशः । उत्तरस्यां वेद्यां दक्षिणास्साद्यन्ते । सर्वे प्रतिगृह्णन्ति । पूर्ववत्संमार्गः । क्रमेण समिदाधानमाग्नीध्रस्य । पर्यायेण च याज[2]मानम् । [3] तन्त्रेणानूयाजानाम् । [4] व्यूहनादि पर्यायेण । एको मन्त्र उपभृत्पृषदाज्यधान्योः । क्रमेणाग्नीध्रस्योद्यमनम्[5]।

(वृ) अन्वाहार्य–देशः—[6] इति वैश्वदेवे व्याख्यातम् ।

उत्तरस्यां–ह्णन्ति—सह प्रतिप्रस्थात्रा ।

पूर्व–र्गः—विहारद्वये क्रमेण परिधिसंमार्गे कृतेऽग्न्योः क्रमेण संमार्गः ।

पर्या–नम्—एषा ते अग्ने इति ।

तन्त्रेणा–नाम्—हुतानुमन्त्रणम् ।

व्यूहनादि–ण—याजमानमपि । उभौ वाजवत्यौ जपत इति साहचर्यात् ।

एको मन्त्र–न्योः—अथासपत्नानित्यादि ।

क्रमेणा–नम्—रोहितेनेत्यादिभिः प्रस्तरोद्यमनं क्रमेण ।

(सू) [7] परिवत्सरीणां स्वस्तिमाशास्ते दिव्यं धामा-

---

[1] र्यदर्शपू–ञ. [2] मानं । व्यूहनादि–क. [3] तन्त्रेण चा–ख. ग. [4] न्त्रेण याजमानं व्यूहनादि ?–ञ. [5] द्यतनम्–क. [6] कर्मणां तत्वैश्व–छ. [7] अथ हविश्शेषोद्वासनादि समानमा शंयुवाकात् । तत्र वारुणग्राश्शेषं प्रज्ञातं विदधात्यवभृथार्थम् । समिदाधानाद्याग्नीध्रः पर्यायेण करोति । याजमानानां चावृत्तिस्संभवताम् । संवादे च ये विशेषाः तेऽपि प्रागेव दर्शिताः । परिवत्सरीणामित्यादिग्रन्थश्च संवत्सरीणामित्यादिना व्याख्यातः (रु).

शास्ते इति सूक्तवाकस्याशीःषु होताऽनुमन्त्रयते । एवं यजमानो जपति । आशास इति मन्त्रं संनमति ॥ ८ ॥ ८२ ॥ १९५० ॥

[परिवत्सरीणामिति स्वस्त्याशासनकालः]

(भा) परिवत्सरीणां स्वस्तिमाशास्त इति रोहितेनेत्यस्य परस्तात्, नाभिक्षाणाम् ।

(वृ) परिव–स्तात्— आशिषामुपरिष्टादाग्नीध्रस्योद्यमनम् । प्रस्तरं प्रह्वियमाणं इति यजमानस्योपदेशात् यजमानस्य च सा मे सत्याशीर्देवानित्याद्या[1]शीष्षु रोहितेनेत्युपदेशात् ।

(सू) उभौ वाजिनाभ्यां प्रचरतः ॥ ९ ॥ ८३ ॥ १९५१ ॥

[2] शेषौ समवनीयोत्तरे विहारे पूर्ववद्भक्षयन्त्या मा विशन्त्विन्दव आगल्गा धवनीनां रसेन मे रसंपृण । तस्य ते वाजिभिर्भक्षंकृतस्येति समानम् ॥ ॥ १० ॥ ८४ ॥ १९५२ ॥

[वाजिनावनयनशेषभक्षणतन्मन्त्रतदधिकार्यादिकम्]

(भा) प्राशित्रं सान्नाय्यवदध्वर्युर्वाजि[3]नमवनयति । [4]शेषं प्रतिप्रस्थाता । ततो [5]भक्षयन्ति ।

(वृ) शेषम् —दिग्यागशेषम् ।

ततो भक्षयन्ति–पूर्ववत् समुपहूय प्रतिप्रस्थाताऽन्ये च । आ मा विशन्त्विन्दव इत्यादि रसं पृणेत्यन्तमुक्त्वा तस्य ते वाजिभिरित्यादि समानो भक्षमन्त्रः ।

---

[1] शीष्षु विधाय रो–घ. [2] अध्वर्योः पात्रेऽन्यच्छेषमवनीयोत्तरस्यां वेद्यां सादयित्वा वैश्वदेववद्भक्षयन्ति । भक्षणमन्त्रयोस्तु वाजिनां भक्ष इत्यस्या ऋचः स्थाने आ मा विशन्त्वित्येषा भवति । तस्य ते वाजिभिरित्यादि तु यजुस्समानमेव ॥ (र).
[3] जिनेऽवनयति–ख. ग. [4] शेषःप्र–क. [5] भक्षयति–क. ङ.

(सू) [1] पूर्णपात्रवर्जं पूर्ववदिष्टिं संस्थापयति ॥ ११ ॥ ॥ ८५ ॥ १९५३ ॥

[इष्टिसंस्थापनविधौ उभयाधिकारिकत्वैकाधिकारिकत्वपक्षौ, संस्थापनप्रकारविशेषाः अवभृथः तत्कालादि च]

[2] पूर्णपात्रस्य स्थाने सौमिकोऽवभृथः ॥ १२ ॥ ॥ ८६ ॥ १९५४ ॥

(भा) पूर्णपात्रवर्जं यजमानपत्न्योरुभयोरिष्टिमुभौ [3] संस्थापयतः। सहापराग्निहोमैरुभयत्र कृत्स्नं तन्त्रमिति वचनात्। यजमानमार्जनकाले [4] ऽवभृथः। कृतेऽवभृथे [5] ऽनन्तरमुभयोरेकस्य वाऽपराग्नि-

---

[1] अथ पत्नीसंयाजप्रभृति आसंस्थायास्तत्तद्विहारसंयुक्तं कर्म समानमुभयो वैश्वदेवेन। पूर्णपात्रे त्वस्ति विशेषः स वक्ष्यत इत्यर्थः। संस्थापयतीत्येकवचनमविवक्षितम्। इतरथोभयत्र कृत्स्नं तन्त्रमित्येनेन विरोधात्। तत्र तस्यां तस्यां वेद्यां तं तं वेदं निधायाभिमृशति यजमानः। तथैव च स्तृणाति होता। न योक्त्रविमोकादि पत्न्याः; तस्योत्तरत्र वचनात्। केवलं तु पुष्टिमतीत्युत्तिष्ठति। होतृपदनैर्विभक्तैरासिस्तृणीतो वेदी। सर्वैरेवोत्तरामध्वर्युरित्यपरम्। तन्त्रेण प्राशनमामिक्षायजमानभागयोः। (रु). [2] यत्प्रणीतामार्जनपर्यायं यजमानस्य पूर्णपात्रं यत्पूर्णपात्रमन्तर्वेदिनिनयतीति यच्च पत्न्याः पूर्णपात्रमञ्जलौ पूर्णपात्रं निनयतीति तदुभयमपि ग्राह्यमविशेषादवभृथसंस्तवाविशेषाच्च; यथा एष वै दर्शपूर्णमासयोरवभृथ इति। तथा अवभृथस्यैव रूपं कृत्वोत्तिष्ठतीति च। तेनोभयप्रत्याम्नायोऽवभृथः। स च पूर्णपात्रस्थान इति वचनात् प्रणीतासु विमुक्तासु अनन्तरमवेष्यते; पूर्ववदिष्टिं संस्थापयतीति वचनात्। संस्थाप्येष्टिमवभृथ इत्यन्ये; तदयुक्तम्। तत्र पूर्ववदिष्टिं संस्थाप्य अतः परमन्यो विशेष इत्येतावन्मात्रस्य विवक्षितत्वात्। तत्र च लिङ्गं महाहविष्यवभृथस्थाने तुषाणामप्सु प्रतिपादनमुक्त्वा ततास्सिद्धमिष्टिस्संतिष्ठत इति संस्थावचनम्। बोधायनश्च पूर्णपात्रविष्णुक्रमैश्चरित्वा न विसृजते व्रतमिति प्रकृत्याह—प्रसिद्धोऽवभृथ इति। तस्माद्यथोक्त एव काले युक्तोऽवभृथः। अपरे पुनराध्वर्यवं संस्थाप्य अवभृथं कुर्वन्त्यविरोधाय॥ (रु)

[3] मुभौ स्थापयतः-क. [4] काले प्राप्तेऽवभृ-ग. [5] थे उत्तर-क.ख. ग.

होमा[1] भवन्ति ; पत्नीसंयाजा अपि भवन्तीति [2]व्याख्यानात् । उपदेशः संस्थापयतीत्येकवचनात् पत्नीसंयाजादि वैश्वदेववदध्वर्युरेव करोति । पूर्वेणोभौ[3] । पुरस्ताद्यज्ञशंचमाच्चावभृथः[4] । वषट्कारैकत्वात्पत्नीसं[5]याजानां तन्त्रेण याजमानं न्याय्यम् । आज्येडाद्वयं चोभावाज्यबिन्दू[6]निति । अन्वारम्भश्च पूर्ववद्दक्षिणा[7]ग्निहोमाश्च । वेदयोरूहेन प्राशनम् । उभयसंस्कारात्[8] । [9]विन्देत प्रजामित्येकस्य वा पत्नीसंस्का(रा)रत्वात् । अनूहो वा [10]यजमानस्स्वस्ववेद्योर्निधाय वेदौ पर्यायेणाभिमृशति । न योक्त्रविमोकादि पत्न्याः ; उत्तरत्र [11]विमोकविधानात् । [12]उद्यते चोत्थानमन्त्रः ; अनङ्गत्वात् । वेदस्तरणं पर्यायेण । स्वस्व[13]वेद्याः प्रायश्चित्तानि समिष्टयजूंषि च । [14]वेद्योरभिस्तरणे कृते विमोके च प्रणीतानाम् । एष वै दर्शपूर्णमासयोरवभृथ इति मार्जनप्रत्याम्नायः । अविमुक्तत्वाद्यज्ञस्य वरुणप्रघासार्थं [15]कृतमस्याप्यर्थं साधयति । कपाला[16]नि चाविमुक्तान्येककपालमपि[17] । आयज्ञविमोकाद्द्रव्य[18]संस्कारा नापयान्ति । [19]एषामपि विमोको यथाऽग्नेः वि ते मुञ्चामि रशना वि रश्मीनित्यहिष वा अग्नेर्विमोक इति । तथा कस्त[20]म्भीसादनं च । भरद्वाजेन स्रुचो विमोक उक्तः । [21]तेषामप्यासादनम् । प्रोक्षणादयश्च[22] संस्कारा अग्निसंस्काराश्च नापयान्ति; [23]विमुक्तानामुत्तरत्र कर्माङ्गत्वात् । योगमात्रमपां [24]स्रुचां च क्रियते युनज्मि[25]वो ब्रह्मणा दैव्येनेति ।

1 होमाः, पत्नी–क. होमा अपि भवन्ति पत्नी–ख. । 2 ख्याता–क. 3 पूर्वेणैवोभौ–क. 4 यज्ञशंचमात्पुरस्ताच्चाव–क. 5 याजानां तन्त्रेण याजमानन्यायः–क. 6 बिन्दूनन्वार–क. बिन्दूनवद्यतः–घ. 7 णाभिहो–क. 8संस्कारत्वात्–ख. संस्थात्वात्–छ. 9 विन्दते प्रजामित्येतस्मात्पत्नी–ख. ग. 10 यजमानश्च यथास्व–ख. ग. 11 विमोकात्–क. 12 विद्यते चो–ख. ग. 13 वेद्योः–क. 14 वेद्योरस्तरणे–क. 15 कृतमन्यस्या–क. 16 नि विमुक्तान्येक-कपा–क. 17 कापालमपि–घ. 18 संस्था नाप–क. 19 येष्वपि–ग. 20 कस्तंभ्यां सा–ख. ग. 21 तासाम–ख. ग. 22 यस्संस्काराश्च नाप–ख. ग. 23 विमुक्तानामप्युत्त 24 मात्रं त्वपां स्रु–क. 25 ज्मि त्वा ब्र–क.

[1] एता असदन्निति स्रुचाम् , संविशन्ता[2]मिति वा। इष्टेन्धनेन वा योगः ; इन्धानास्त्वा सुप्रजस इति लिङ्गात् । न चेन्धनमपामिति निवृत्तिः । संस्कार एव वा कस्तम्भीसादनम् । [3]न विमोकः । न पुनस्संस्कारस्स्रुचोरपि । असिदादानादि बर्हिराहृत्य [4]नाग्नयन्वाधानम्; परिगृहीतत्वात् । वेदिपक्षे । ततो वेदो यदि स्तीर्णः[5]। यद्यस्तीर्णः स एवादीयते [6]समूहनोपलेपनादि कृत्वा सादनमेव वेदस्य प्रणीतापात्रस्य[7] च विमुक्तत्वात् प्रणीतानां प्रणयनादि एककपालपक्षे प्रणीय [8]प्रणीताः कृत्वा पवित्रे संविशन्तामिति वेदाभिमर्शनमनूहेन प्रकृतावप्यसंभवे बहूनां वैलिङ्ग्यात् । ततः स्रुगादानादि निर्वपणान्तं कृत्वा हविः प्रोक्ष्य वेदप्रोक्षणमनूहेन संमर्शनवत् अध्यूहनाद्येककपालस्योपहितत्वात् । तप्यस्वेति चोहः । तत [9]आप्यलेपनिनयने कृते प्रोक्षणिरासादय बर्हिरासादयाज्येनोदेहीति । निष्कासपक्षे वेदमासाद्य सपवित्रेण संमृश्य प्रोक्ष्य प्रैष एव प्रोक्षणीरासादयेति । न यज्ञयोगः ; सर्वपक्षेषु कृतत्वात् ॥

(वृ) **पूर्णपात्र–पयतः**—यजमानपत्न्योः पूर्णपात्रवर्जमिति यजमानस्य पूर्णपात्रं यत्पूर्णपात्रमन्तर्वेदि निनयतीत्यन्तर्वेदि प्रणीतामार्जनम् , [10]पत्न्यास्तु सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयतीति एतद्द्वयवर्जमुभयोर्विहारयोरिष्टिमुभावध्वर्युप्रतिप्रस्थातारौ संस्थापयतः ।

**यजमान–भृथः**—एष वै दर्शपूर्णमासयोरवभृथ इति तस्यावभृथसंस्तवात् ।

1 एतानि अस-क. 2 मिति भृष्टेन्ध–क. 3 न विमोक इति । **ख. ग.** 4 नान्वाधानम्–ख. ग. 5 स्तीर्णस्स एवानी –क. 6 समूहनालेपनादि–**क.** समूहलेपनादि–**ख. ग.** 7 स्य विमुक्ता-**क.** 8 प्रणीतां कृत्वा–**क.** 9 आप्यनिनयने–**क.** 10 पत्न्यास्सयो–**घ.**

**पत्नीसंया–ख्यानात्**––पत्नीसंयाजा अपि भवन्तीति न भवन्त्यपि पत्नीसंयाजा उभयत्र ; न वोभयत्र भवन्तीति व्याख्यानादेकस्य वा ।

उभयत्र कृत्स्नं तन्त्रमिति कथम्? तत्राह ;––

**पूर्वेण चोभाविति**—पूर्वेण हविश्शेषभक्षणान्तेन तन्त्रेणोभौ कुरुतः । तदन्तस्योभाभ्यामनुष्ठानादुभयत्र कृत्स्नं तन्त्रमिति वचनोपपत्तिः । अपि पत्नीसंयाजा इति किं पुनः पूर्वतन्त्रस्येति तस्यावश्यंभावि चास्मिन्पक्षे ।

**पुरस्ताद्यज्ञ–भृथः**—पूर्ववदिष्टिं संस्थापयतीत्युक्त्वाऽवभृथविधानाद्यज्ञश्श्रम इत्यस्यापीष्ट्वा जपतीति विधानात्ततः प्रागवभृथ इत्युपदेशपक्षः ।

**वषट्का–न्दृन्**—अवद्यत आग्नीध्रहोतृहस्तयोः ।

**अन्वारम्भश्च**—उभयोः ।

**पूर्ववद्दक्षिणाग्नि-होमाश्च**—उभयोः ।

**वेदयो–रत्वात्**—कृतप्रयोजनत्वाद्वेदस्य पत्नया उपस्थे प्रासनं तत्प्रतिपत्तिः ।

**विन्दते प्र–रत्वात्**—विन्दते प्रजामिति लिङ्गात् पत्नीसंस्कारोऽपि । अत उभयोरूहेन प्रासनं वेदसंस्कारार्थम् ।

**अनूहो वा**—विन्दते प्रजामिति पत्नीसंस्कारत्वाद्वेदस्य तत्प्रासनं न प्रतिपत्तिः । इदमपि वेदस्य कार्यमिति कृतप्रयोजनत्वाभावात् । पत्नीसंस्कारश्चैकेनापि सिध्यतीत्येकस्य वेदस्य प्रासनं वा ।

**यजमान–मृशति**—तत्तद्वेदं तत्तद्वेद्यां निधाय पर्यायेणाभिमृशति यजमानः, वेद्या अपि संस्कारत्वात् ।

**वेदस्तरणं–पि च**—[1] उभयोः ।

---

[1] उभयत्र–घ.

**वेद्योरभि-कृते**—होतृपदनैः।

**विमोकं च प्रणीतानाम्**—अन्तर्वेदिकृते।

**एष वै दर्श—म्नायः**—एष वै दर्शपूर्णमासयोरवभृथ इति प्रणीतामार्जनस्यावभृथसंस्तवान्मार्जनप्रत्याम्नायोऽवभृथः।

**अविमुक्त-साधयति**—अङ्गजातम्।

**कपाला-मपि**—अविमुक्तम्।

**प्रोक्षणा-ङ्गत्वात्**—अतोऽग्न्यादीनामपि प्रसङ्गः।

**योगमात्रं त्वपां स्रुचां च क्रियते**—अग्निसंस्कार[1]निवृत्तावप्याहवनीयकार्यकरत्वादपां तद्धर्मप्राप्तेः।

**युनज्मि वो-व्येनेति**—योगमात्रं मन्त्रोच्चारणेन क्रियते।

**एता असदन्निति-मिति वा**—अभिमर्शनेन पात्रयोगः तस्य विमोकः कस्तम्भ्यां सादनम्।

**दृष्टेन्ध-गः**—अग्नेः।

**इन्धाना-लिङ्गात्**—अग्निं कल्पयतीन्धनेनाग्निं बलवत्करणे अध्वर्युणा क्रियमाणे युनज्मि त्वेति योगोऽध्वर्युणा क्रियमाणस्य इन्धनस्य इन्धानास्त्वा इत्यनुवादात् दृष्टरूपेन्धनेन वा योगः।

[2] अतः—

**नचेन्धनमपामिति निवृत्तिः**—युनज्मि व इत्यस्य।

**संस्कार-दनम्**—आपस्तम्बपक्षेण।

**न विमोकः**—[3] स्रुचोरदर्शनात्। विमोकपक्षे ध्रुवाया अन्यत्र स्थापनं स्यात्, सर्वासां सहयोगात्।

अतः—**न पुनः स्रुचोरपि**।

एवं न्यायप्राप्तिरुक्ता इदानीं प्रयोगरचना।

---

[1] रानिवृ-घ. [2] इदं घ-कोशे न दृश्यते. [3] स्रुचोरेव वचनात्-ख. ग.

आसिदानादि-वेदिपक्षे—बर्हिराहरणं वेदिपक्षे इति संबन्धः। अन्वाधानक्रमव्यत्यासः। नान्वाधानम्, परिगृहीतत्वाद्देवतानाम्।

ततो वेदो-र्णः—पत्न्या निरसनोत्तरकालम्। अत्र वेदस्तरणमिति पक्षे स्तरणस्योत्कर्षात्।

संविशन्तामिति-वैलिङ्ग्याद्—बहूनां युगपत्संमर्शनासंभवेनैकस्य द्वयोर्वाऽभिमर्शनेऽप्यस्मिन् मन्त्रे बहुवचनस्यासमवेताभिधायित्वादिति।

(सू.) [1]चतुर्गृही[2]तान्याज्यानि ॥ १४ ॥ ८७ ॥
॥ १९५५ ॥

[अनूयाजतदभावपक्षयोराज्यग्रहणविधिः]

(भा) प्रैषोक्तेषु[3] कर्मसु चतुर्गृहीतान्याज्यानि पञ्चावत्तिनोऽपि। [4]यद्यनूयाजाः तदा पञ्चानां त्वेति द्वाभ्यां चरोस्त्वेति द्वाभ्याम्। यदा नानूयाजाः, तदा आद्यैरेव पञ्चानां त्वा दिशामित्यादिभिः। इह न प्रो[5]क्षणाभिमन्त्रणादि। [6]आज्य[7]ग्रहणेभ्यः पुरोडाशादङ्गारापोहनादि।

[भाष्योक्तांशे प्रमाणप्रदर्शनम्]

(वृ) प्रैषोक्ते-त्तिनोऽपि—चतुर्गृहीतवचनात्।

इह—णादि—वेदिकरणानन्तरकर्तव्यत्वात्।

आज्यग्रहणेभ्यः—ऊर्ध्वम्।

---

[1] अथापेक्षितविधित्वादत्रवानभृथप्रयोगमाह (रु). [2] प्रसङ्गित्वादवभृथो वरुणप्रघासेष्वविमुक्तत्वाद्यज्ञस्य। तत्र सौमिकवत्परिस्तरणपाणिप्रक्षालनपात्रप्रयोगादेरवचनात् सर्वोपरतिरेव। प्रयोगस्तावत्—वेदस्तु क्रियेत यदि स्तीर्णः। वेदिपक्षे बर्हिश्च। ततो वेदं प्रयुज्य पवित्रे कृत्वोहेन संमृश्य प्रोक्ष्य च संप्रेष्यत्याज्येनोदेहीति वेदिपक्षे प्रोक्षणीरासादय बर्हिरुपसादयेति च। उपभृत्यपि वचनाच्चतुर्गृहीतमेव भवत्यनूयाजपक्षेऽपि। तत्र तु प्रयाजानूयाजार्थयोर्मन्त्रपञ्चकयोरादितो द्वाभ्यां द्वाभ्यां ग्रहणं भवेत्। यदा तु नानूयाजास्तदाऽऽदित एव चतुर्भिः (रु). [3] क्तेषु कृतेषु कर्म-ङ. च. छ. [4] यदानूयाजौ—च. [5] प्रोक्षण्यभिमन्त्र-ख. ङ. छ. [6] आज्यभागग्र—ख. [7] ग्रहणादूर्ध्वं पुरो-छ.

(सू) [1] वारुण्यै निष्कासेन तुषैश्चावभृथमवयन्ति ॥ १४ ॥ ८८ ॥ १९५६ ॥

[2] तुषा ऋजीषधर्मं लभन्ते ॥ १५ ॥ ८९ ॥ ॥ १९५७ ॥

[3] वारुणमेककपालमेके समामनन्ति ॥ १६ ॥ ॥ ९० ॥ १९५८ ॥

[अवभृथे निष्कासपक्षे विशेषाभिधानम्]

(भा) वरुणाय जुष्टमभिघारयामीत्यभिघारणम् । अलंकृत्योदकसमीपगमनमेव । निष्कासपक्षे गृहीत्वाऽऽज्यानि गमनमेव । तुषान् हविराज्यानि च गृहीत्वा ।

(सू) [4] नायुर्दां नाभिप्रव्रजनमन्त्रं न साम गायति ॥ १७ ॥ ९१ ॥ १९५९ ॥

[5] सर्वा दिशोऽवभृथगमनमाम्नातम् ॥ १८ ॥ ॥ ९२ ॥ १९६० ॥

[अवभृथे निवर्त्याः क्रियाः]

(भा) आयुर्दाग्रहणेन प्रयास्यतो होमानां प्रतिषेधः । निर्गमनमन्त्र [6] उरुं हि राजेति ।

(वृ) आयुर्दा–षेधः—यदेनयोश्शृतं कृत्वाऽथान्यत्रावभृथमवैतीति होमविधिवाक्यशेषदर्शनात् हविश्श्रपणाभावात्तेषां निवृत्तिर्निष्कास-

---

[1] आज्यानि गृहीत्वा वारुण्याश्शेषेण तुषैश्च सहावभृथं गच्छन्ति । अवभृथं कर्म । तत्संयोगात्तदर्थमुदकमत्रावभृथ इत्युच्यते (रु). [2] सोमर्जीषधर्मं दध्ना प्रोक्षणादिकं तुषा लभन्ते । निष्कासस्तु हविर्भविष्यति (रु). [3] अस्मिंस्तु पक्षे सर्वमपि पुरोडाशसंयुक्तं कर्मालङ्करणान्तं क्रियते ॥ (रु). [4] आयुर्दाग्रहणेन अवभृथमवैष्यतो होमो लक्ष्यते । तं न जुहोति । न चोरुं हि राजेति प्रयान्तो वदन्ति । न च साम गातव्यमित्यर्थः (रु). [5] सर्वा दिशः प्रति (रु). [6] गमनमन्त्र–च. न गमनमन्त्र–ङ. छ.

पक्षे। वाचनिकत्वेन पुरोडाशपक्षेऽपि निवृत्तिः। नायुर्दा इति बहुवचननिर्देशात् होमत्रयनिवृत्तिः, तुल्यकालत्वात्। प्रस्तोतुरभावात्सामनिवृत्तिः, तत्साहचर्यात्।

**(सू)** [1]**नोदीचीरभ्यवेत्या इत्येके ॥ १९ ॥ ९३ ॥ ॥ १९६१ ॥**

उदीचीरापः—उदीच्यां भवाः।

**(सू)** [2]**यां दिशं गच्छेयुस्तथामुखाः प्रचरेयुरित्येके ॥ २० ॥ ९४ ॥ १९६२ ॥**

[अवभृथगमने न प्रकृतिवद्दिङ्नियमः, तद्दृष्टा आपश्च]

(भा) यां दिशं प्रति गच्छन्ति सा प्राची।

(वृ) **सा प्राची**—तन्मुखप्रचारपक्षे सा प्राचीति तत्स्थानापन्ना भवतीति तन्मुख[3]प्रचारः।

**(सू)** [4]**वहन्तीनां स्थावरा अभ्यवेत्याः ॥ २१ ॥ ॥ ९५ ॥ १९६३ ॥**

[5]**तदभावे याथाकामम् ॥ २२ ॥ ९६ ॥ ॥ १९६४ ॥**

[6]**उदकान्ते स्तरणान्तां वेदिं कृत्वा तस्यां हवींषि सादयति ॥ २३ ॥ ९७ ॥ १९६५ ॥**

---

1 उदीच्यां भवा आपो न गन्तव्या इत्येके शाखिनः (रु). 2 यां दिशं प्रत्यृत्विजो गच्छन्ति तां दिशमभिमुखाः प्रचरेयुः, न तु यथाप्रकृति प्रागादिमुखा इत्यर्थः। तथा च भारद्वाजः, यां दिशं गच्छन्ति सा प्राची दिगिति (रु). 3 न्मुखः प्र–ग. 4 या वहन्तीनां प्रदेशेषु स्थावरा ह्रदादिस्था आपस्ता अभिगन्तव्याः (रु). 5 तदभावे याथाकाम्यं, याः काश्चिदेवाभ्यवेत्याः (रु). 6 उदकसमीपे स्फ्यादानादिविधिना वेदिं कृत्वा स्तीर्त्वा च बर्हिषा तस्यामाज्यानि

[सति ह्रदेऽवभृथे तस्यैवाभिगन्तव्यता उदक्रान्ते कर्तव्यानि च]

(भा) वहन्तीनामपां ह्रदोऽभिगन्तव्यः । शतं ते राजन्निति कृत्वा जपं ह्रदं [1]प्राप्य स्फ्यादानादि । वेदिकरणम् । कृते उत्तरपरिग्राहे धा असि स्वधा असीत्येवमाद्यनुवीक्षणान्तं प्रोक्षण्यभिमन्त्रणादि [2] उदकं प्रत्युपादीयते प्रस्तरः । तस्य चाभिमन्त्रणं सूर्यो वः पुरस्तात्पात्विति । न वा परिध्यर्थत्वात् । आदित्यो ह्येवोद्य[2]न्निति युनज्मि वो ब्रह्मणा दैव्येनेत्यपां योगः । निवृत्तिर्वा, इन्धनस्य लोपात् । ततस्स्तीर्णायां [3]विधृत्याद्येव । आज्यान्यभिमन्त्र्य हविस्सादनम् । आग्नेय[4]वदासन्नाभिमर्शनम् । वारुणस्य निष्कासस्य च सान्नाय्यवत् । आमिक्षा मां धिनोत्विति च । उभयविकारत्वे एकदेशस्यापि । मध्येसन्नततरेत्यन्तं कृत्वा—

[वेदिपक्षे कर्तव्यविशेषः]

(वृ) कृते-णापि—वेदिरसि बर्हिषे बर्हिरसि स्रुग्भ्यः । अन्तर्वेदि पुरोग्रन्थीत्यादि प्राञ्चमुदूहमित्यन्तम् ।

[उदकस्यैवाहवनीयस्थानापन्नता]

**उदकं प्र-स्तरः**—विष्णोस्तपोऽसीति । आहवनीयस्थानापन्नत्वादुदकस्य । बर्हिषा वेद्यां स्तीर्णायाम् ।

**तस्य चा-त्विति**—तस्य—उदकस्य ।

---

निष्कासं च सादयति । तत्र परिध्यादयोऽग्निसंस्कारा अर्थलुप्ता निवर्तन्ते परिध्यभावादेव परिध्यङ्गयोः सूर्यस्त्वा पुरस्ताद्युनज्मि त्वेत्यभिमन्त्रणयोरपि निवृत्तिः । परिध्यङ्गत्वं च तयोः प्रकृतावेव दर्शितम् (रु). [1] प्राप्यो-दकं स्फ्यादानादिवेदिकरणं मध्ये सन्नतरेत्यन्तं कृत्वा कृते-ग. [2] न्निति जपः युनज्मि-ङ. [3] यां वेद्यां विधृत्यासादनादि । एवमाज्यान्यभिमन्त्र्य हविरासादनं प्रियेणेति च. [4] यस्यासन्ना-ग.

[अभिमन्त्रणस्य उपदेशमताभिप्रायकता]

आदित्यो ह्येवोद्यन्—इति उपदेश[1]मत उक्तम् ।

युनज्मि वो—तत्र सूर्यो वो युनज्मीत्युभयोर्नि[2]वृत्तिः पक्षे ।

वारु-वत्—प्रातर्दोहविकारत्वे इदमिन्द्रियमिति ।

आमि-स्यापि—पूर्वमभिमृष्टामि[3]क्षैकदेशत्वेऽपि अस्यामिक्षार्थत्वेन स्वातन्त्र्येण हविष्ट्वादुभयविकारत्वे सान्नाय्यमन्त्राभ्यामभिमर्शनम् ।

ततस्ती-द्येव-दर्भैर्वेदिमन्तर्धाय दक्षिणतः सन्नहनमित्यादिना स्तीर्णायां वेद्यां विधृत्योद्यव ।

(सू) अपि वा न वेदिः ॥ २४ ॥ ९८ ॥ १९६६ ॥

शतं ते राजन् भिषजस्सहस्रमित्यपो [4]दृष्ट्वा जपति ॥ २५ ॥ ९९ ॥ १९६७ ॥

अभिष्ठितो वरुणस्य पाश इत्युद[5]क्रान्तमभितिष्ठन्ते ॥ २६ ॥ १०० ॥ १९६८ ॥

(भा) परिस्तीर्य वेद्यन्तानुदकान्तमारोहत्यभिष्ठितो वरुणस्य पाश इति ।

[अवेदिपक्षे विशेषः]

अवेदिपक्षे [6]न वेद्यर्थं [7]बर्हिरासादनम्, नापि प्रोक्षण्यासादनम् । तुल्यमन्यदुभयोरपि पक्षयोः । अपो दृष्ट्वा जप उदकान्तमेवाभितिष्ठन्ते ॥

[भाष्योक्तस्याब्दर्शनस्य जपानन्तरकालिकत्वम्]

(वृ) परिस्तीर्य—अपो दृष्ट्वा जपानन्तरम् ।

(सू) अपः [8]प्रागह्य तिष्ठन्तोऽवभृथेन चरन्ति ॥ २७ ॥ ॥ १०१ ॥ १९६९ ॥

---

[1] शत उक्तम्—छ. [2] निवृत्तिपक्षे—ग. [3] ष्टमिहैक—छ. [4] दृष्टास्वप्सु जपत्यध्वर्युः । अतो वेदिपक्षेऽपि प्राग्वोदिकरणाज्जपति ॥ (रु). [5] तारादुदकसमीपमभिक्रामन्ति बहुवचनात्सर्वेषां मन्त्रः (रु). [6] न वेद्यभिमन्त्रणप्रोक्षण्यासादनं—ग. [7] बर्हिराहरणं—क. [8] प्रगाह्य अन्तः प्रविश्य तिष्ठन्तोऽवभृथेन कर्मणा चरन्ति । तेनाक्रमणप्रत्याक्रमणयोर्निवृत्तिराघारादौ ॥ (रु).

(भा) अपः प्रगाह्य—प्रविश्योदकं सर्वे तिष्ठन्त उत्थिताः। अवभृथ इति कर्मनाम। तेन साङ्गेन प्रचरन्त्युत्थिताः।

[भाष्योक्तसर्वशब्दार्थः]

(वृ) अपः-त्थिताः—सर्वे एवर्त्विजः पत्नी यजमानश्च। ब्रह्मादयोऽपि।

(सू) तृणं प्रहृत्य स्रौवमाघा[1]रयति ॥ २८ ॥ १०२ ॥ ॥ १९७० ॥

यदि वा पुरा तृणं स्यात्तस्मिन् जुहुयात्॥ ॥ २९ ॥ १०३ ॥ १९७१ ॥

[तृणाधिकरणकहोमे प्रमाणम्, अर्थलोपादन्येषां लोपश्च]

(भा) तृणस्योपरिष्टात्सर्वे होमाः। आहुतीनां प्रतिष्ठित्या इति श्रुतेः। नोप[2]वाजनमिन्धनार्थत्वात्। दशहोत्रादेः समिद्धानुमन्त्रणान्तस्य लोपः। प्रकृतिवद[3]न्यदनर्थलुप्तम्॥

सप्तमी खण्डिका ॥

---

(सू) अग्नी[1]दपास्त्रिस्संमृड्ढीति संप्रैष्यति ॥ १ ॥ ॥ १०४ ॥ १९७२ ॥

[संनहनाभावादुदकस्य स्फ्येन संमार्जनम्, दर्भैस्संमार्जनमित्युपदेशपक्षश्च]

(भा) कृते आप्यायने अग्नीदप इति प्रैषः। स्फ्येनैव केवलेनोदकं संमार्ष्टि। [5]संनहनाभावात्। संमार्जनं [6]दर्भैर्लौकिकैरित्युपदेशः।

---

[1] वेदेनापः प्रथममुपवाज्य तत आघारयति। यथा चैवं कार्यं तथा दर्शितमेव प्रकृतौ। तथोदकमुपवाज्येत्येव सत्याषाढः। तृणप्रहारस्सर्वाहुत्यर्थः, आहुतीनां प्रतिष्ठित्या इति श्रुतेः (रु). [2] स्रौव एव नोप—ङ. तथा स्रौवं नोप—ग. [3] न्यदनर्थ—छ. [4] अपामाहवनीयविकारत्वादिति भावः (रु). [5] संनहनं द—ख. छ. [6] जुनं सह दर्भैः—च.

[दर्भैरुदकसंमार्जनपक्षोपपत्तिप्रदर्शनम्]

(वृ) **स्फ्येनैव–पदेशः**—इध्मसंनहनैस्सह स्फ्यैरिति स्फ्यस्य सहकारिमात्रत्वादिध्माभावेऽपि पौर्णमास्यामुपवेषवदिध्मबन्धनलक्षणगुणलोपेऽपि प्रधानभूतदर्भाणां संभवादर्थकर्मत्वात्तैस्संमार्ग इति । सन्नहनदर्भैरिति पाठेऽर्थश्चिन्त्यः ॥

(सू) **[1] आपो वाजजितो वाजं वस्सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यपो अन्नादा अन्नाद्यायेति मन्त्रं सन्नमयति ॥ २ ॥**
**॥ १०५ ॥ १९७३ ॥**

[मन्त्रोहोपदेशे हेतुकथनम्]

(भा) वाजजिदादयो गुणा आपां स्युर्न वेति[2] प्राप्त ऊहोपदेशः ।

(वृ) ऊहोपदेशः—आपो वाजजित इति[3] बहुवचनमिति ।

(सू) **अग्नेरनीकमप आविवेशेति स्रुच्यमाधारयति ॥**
**॥ ३ ॥ १०६ ॥ १९७४ ॥**

**वागस्याग्नेयीत्यनुमन्त्रयते यजमानः ॥ ४ ॥**
**॥ १०७ ॥ १९७५ ॥**

[मन्त्रोहानूहपक्षाभिधानं, अवेदिपक्षे केषां चित्कर्मणां निवृत्तिराधारदेवता च]

(भा) भुवन[4]मिति यज्ञाभिधानम् । भुवनं लोकस्थानम् । तत् त्वमसीति यज्ञ उच्यते । विविधं प्रथस्वेति यज्ञमानमाह । अस्मिन् यज्ञे विप्रथस्वेति यजमानस्य यज्ञो वै भुवनं स्थानमित्यतोऽनूहः ।

---

[1] आग्नीध्रइति शेषः । तत्रेध्मसंनहनाभावात् सह स्फ्यलौकिकदर्भैः केवलेन वा स्फ्येन संमार्गः (रु). [2] ति संशये प्रा–क. ङ. [3] इत्यन्तमात्रं दृश्यते–छ. कोशे
[4] मसीति यज्ञाभि–ज.

आपो यष्टव्य इत्येतावानूहः । [1]अविकृत उपदेशः । देवताग्नेरभिधानान्नाहवनीयस्येति । आक्रमणावस्थानप्रत्याक्रमणानां निवृत्तिरवेदिपक्षे । प्रतीते जिह्वावृतमुच्चरण्येत्स्वा[2]हेति मन्त्रान्तः । आग्नेय आघारः । गुणभूता अन्या देवताः ।

(वृ) **अतोऽनूहः**—इति प्रकृतौ व्याख्यातम् ।

**नाहवनीयस्य**—तस्यैव यष्टत्वात् ।

**आक्रमणा-क्षे**—तदन्तत्वात्त्रिष्टुभः ऋचः । समुद्रे ते इत्यस्यान्यत्र विनियोगाच्च । अतो वागस्याग्नेयीत्यनुमन्त्रणम् ।

(सू) [3] **लुप्यते प्रवरः ॥ ५ ॥ १०८ ॥ १९७६ ॥**

[प्रवरस्यैव लोपात्तदर्थावस्थानादेरपि लोपः]

(भा) अवस्थानादेर्मानुषान्तस्य प्रवरलोपे लोपः ।

(वृ) **प्रवरस्य लोपः**—प्रवरायावतिष्ठत इति [4]प्रवरार्थत्वादवस्थानादेः ।

(सू) **अपबर्हिषः प्रयाजानिष्ट्वा अप्सुमन्तावाज्यभागौ यजति ॥ ६ ॥ १०९ ॥ १९७७ ॥**

[अनूयाजाननूजपक्षभेदेन अर्धस्य सर्वस्य वौपभृतस्य समानयनं [अप्सुमन्तशब्दार्थश्च]

(भा) [5]बर्हिर्वर्जान् प्रया[6]जांस्त्रीनिष्ट्वा अर्धमौपभृतस्य समान[7]यति यद्यनूयाजौ । सर्वस्येतरथा । अप्सुशब्दो [8]ययोस्तावप्सुमन्तौ । वृषण्वानपि लभ्यते, सोमस्य परिपाठात् । पुरोऽनुवाक्यामात्रस्य विकारः ।

---

[1] अविकार—च. छ. [2] हेत्याघारमन्त्रान्तः—ङ. च. छ. [3] स्रुचौ सादयित्वा पुनर्घृतवतिशब्देऽन्वादत्त सर्वमन्यल्लुप्यते (ङ). [4] प्रवरादित्वादव—घ. [5] बर्हिर्वर्जाः प्रया—ङ. [6] जाः त्रीनिष्ट्वा—घ. ङ. [7] यनं यद्य—ङ. च. छ. [8] ययोर्विद्यते ताव—च.

(वृ) **सर्वस्येतरथा**—सर्वस्यौपभृतस्य समानयनमननूयाजपक्षे ।

[वृषण्वतोऽपि लाभे हेतुप्रदर्शनम्]

**सोमस्य परिपाठात्**—याज्यानुवाक्ययोः पाठक्रमे अप्स्वग्ने सधिरिति पठित्वा वृषा सोम द्युमानिति पाठात् ।

**पुरो–कारः**—जुषाण याज्यात्वमुभयोः ?

(सू) अप्स्वग्न इत्येषा । अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीरित्यप्सुमन्तौ ॥ ७ ॥ ११० ॥ १९७८ ॥

निष्कासस्यावदाय वरुणमिष्ट्वा कृत्स्नं निष्कासमवदायाग्नीवरुणौ स्विष्टकृदर्थे यजति ॥ ॥ ८ ॥ १११ ॥ १९७९ ॥

[निष्कासशब्दार्थः, निष्कासेन वारुणेष्टिः, स्विष्टकृदर्थो यागश्च]

(भा) कुम्भीस्थो वारुण्याश्शेषो निष्कासः । तस्यावदानं, [1] वारुणस्य । प्रकृतिवदिष्ट्वा [2] वारुणं नारिष्ठाः । कृत्स्नमव[3]दाय वारुणमपि । अग्नीवरुणाभ्यामनुब्रूहि अग्नीवरुणौ यजेति वाजसनेयिमतात् । अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि अग्नीवरुणौ स्विष्टकृतौ यजेति बोधायनमतात् । वरुणस्याहं देवयज्ययाऽन्नादो भूयासमग्नीवरुणयोरहं देवयज्यया युष्मान् यज्ञेन प्रतिष्ठां गमेयमिति नैककपालधर्मास्साधारणाः ।

[अत्र साधारणधर्माणां पृषदाज्यस्य च निवृत्तिः]

नापि वैशेषिकः [4] हरणादिः ; वारुणमलङ्कृत्येति दर्शनात् । आज्यान्येव चतुर्गृहीतानि न पृषदाज्यमिति ; चतुरः प्रयाजान् यजतीति लिङ्गात् । विशेषधर्मा एककपालेषु प्रवर्तन्ते, ये बद्धा आग्रयणे । इतरथा हि षट् स्युः [5] प्रतिषेधाद्बार्हिर्विकाराणाम् ।

---

[1] वरुणस्य–घ. [2] वरुणं ना–ग. घ. ङ. छ. [3] दायैककपालमपि अग्नी–च.
[4] काः पूरणादयः–छ. [5] स्युः अप्रति–च.

[निष्कासः पुरोडाशसम्बन्धी]

(वृ) कुम्भी--वारुणस्य—पुरोडाशस्य [1]।

[भाष्योक्तार्थे हेतुप्रदर्शनम् ]

कृत्स्नम-णमपि—निष्काससमानधर्मकत्वात् ।

अग्नीवरु-सनेयिम[2]तात्—न स्विष्टकृच्छब्दकौ ।

[अभिपूरणपृषदाज्यग्रहणादिनिवृत्तौ हेतुः, भाष्यस्थबोधायनग्रहणस्य संवादार्थत्वम् ]

नैकक-र्शनात्—सौमिकेऽवभृ[3]थे चालङ्कृत्येत्युत्तरवेद्यंस आसादयति इति सिद्धवदलङ्करणानुवादात् अभिपूरणादय एककपालधर्माश्च वैशेषिका न भवन्ति ।

अत्र बोधायनग्रहणं संवादार्थम्; न तु मतान्तर[4]त्वात्तथा ।

आज्यान्येव-ज्यमिति—चतुर्गृहीतान्याज्यानीति सूत्रकारेणाज्यानां[5] ग्रहणमुक्त्वा पृषदा[6]ज्यानुपदेशादवगम्यते साधारणधर्मा न प्रवर्तन्त इति ।

तथा—

चतुरः- [7]ज्ञात्—[8]साधारणा[9]नामप्रवृत्तिः ।

विशेष-र्तन्ते—अन्येष्वपि ।

ये बद्धा आग्रयणे—सर्वहुतादयः ।

इतर-स्युः—षट् प्रयाजाः ।

प्रतिषेधात्—बर्हिषः । पूर्वं चतुर्गृहीतान्याज्यानीति सूत्रं चतुस्संख्यानियमार्थं [10]व्याख्येयम् । इदानीमाज्यग्रहणविधानं पृषदाज्यनिवृत्त्यर्थमुक्तम् ।

---

1 स्य वा–घ. 2 तात्-स्विष्टकृ–ख. ग. छ. 3 थे वारुणं चा–ग घ.छ. 4 रत्वेन त–छ. 5 चतुर्ग्रहणमु–घ. 6 पृथक् ग्रहणानुप–ग. घ. पृषदाज्यग्रहणानुप–ग. घ.–छ 7 ज्ञाच–ख. ग. छ. 8 साधारणधर्माणाम–घ. साधारणानां धर्माणाम–छ. 9 नां प्र–क. ग. 10 व्याख्यातम् –क. ग. च.

(सू) नोत्तरं क्रियते ॥ ९ ॥ ११२ ॥ १९८० ॥

अपि वौपभृतं जुह्वामानीयापबर्हिषावनूयाजौ यजति ॥ १० ॥ ११३ ॥ १९८१ ॥

देवौ यजेति प्रथमं संप्रेष्यति यजेत्युत्तरम् ॥ ॥ ११ ॥ ११४ ॥ १९८२ ॥

[स्विष्टकृदुत्तरकर्तव्यम्]

(भा) निनयनाद्युत्तरं स्विष्टकृतः स्विष्टकृतोऽनन्तरं वैश्वानर इत्यादेर्निवृत्तिः । अपि वा अनूयाजावेव ।

(वृ) **निनय—निवृत्तिः**—स्विष्टकृतोऽनन्तरं वैश्वानरे हविरित्यादेर्निवृत्तिः, नोत्तरं क्रियत इति वचनात् ।

[भाष्यस्थानूयाजपदगतद्विवचनफलम्]

**अपि वा–वेव—**बर्हिर्वर्जौ । तत्र द्विवचनेन नवानूयाजनिवृत्तिः ।

तुषाणां स्थालीं पूरयित्वाऽप्सूपपूरयति ॥ ॥ १२ ॥ ११५ ॥ १९८३ ॥

[तुषधर्मास्तूष्णींप्रोक्षणादयः, तत्र केषांचित्पक्षश्च]

(भा) तूष्णीं दध्नोदुम्बरशाखया [1]प्रोक्षणं तुषाणाम् । तुषा ऋजीषधर्मं लभन्त इति देवतात्वस्याभावात् व्रीहेर्यवस्य वा[2]केचित्संस्कारं कुर्वन्ति यव राजन् व्रीहि राजन् इत्यूहित्वा । पश्चात् स्थालीं पूरयन्ति तुषाणाम् । यदाऽप्येककपालः तदा [3]निष्कासेऽप्यृजीषधर्मः । तुषैश्च निष्कासेन चावभृथमवैतीति । उपपूरयति—प्रवेशयत्युदकं स्थालीम् । [4]न चोत्प्लुतभक्षणम् तुषाणां, [5]अवचनात् अरसत्वाच्च ।

---

[1] याऽवोक्षणं–घ. च. [2] केचित्संस्कार इति कुर्वन्ति–ग. च. [3] निष्कासस्यैव ऋ–ख. निष्कासोऽप्यृ घ: छ. [4] न चोत्प्लुतस्य भ–च. [5] अनाम्नानात्–घ. अबन्धनात्–च.

[भाष्योक्ते तूष्णींप्रोक्षणे हेतुप्रदर्शनम्]

(वृ) तूष्णीं द—वस्य वा—अस्यार्थः—यत्ते ग्रा० इत्यनुवाके निष्टयाय तां देव सोमेति लिङ्गात् देवतारूपसोमलतावयनप्रतिपादनपरत्वात्तस्यानुवाकस्य; तथा प्रजापतिर्मनसान्दोच्छेत; इति होमेषु तत्तदवस्थापन्नसोमात्मना यज्ञदेवतात्वात् सोमस्य देवतारूपता। व्रीहियवयोस्तथाविधत्वाभावान्न मन्त्रेण प्रोक्षणम्।

[समन्त्रकप्रोक्षणपक्षोपपत्तिप्रदर्शनम्]

केचित्सं-हित्वा—ऋजीषसंस्कारत्वात्प्रोक्षणस्य तदर्थत्वाच्च मन्त्रस्य, तुषाणामृजीषधर्म[1]त्वात्। सोमराजन्नित्यत्र व्रीहिराजन् यवराजन् इत्यूहितेन[2] कर्तव्यमिति वदन्ति केचित्।

[तुषाणामृजीषधर्मवत्त्वे प्रमाणम्]

यदाऽप्ये-ष धर्मः-निष्कासेन यागाभावेऽपि तुषैश्च निष्कासेन चावभृथमवैति वयन्तीति निष्कासस्य चावभृथे प्रक्षेपार्थं तुषसमानधर्मकत्वादृजीषधर्मः।

[तुषाभक्षणे हेतुकथनम्]

न चोत्लुत-त्वाच्च—अप्सु धौतस्य सोमदेवत इति मन्त्रार्थस्य तत्राभावादरसे तुषे। भक्षणस्य रसास्वादार्थत्वात्[3]।

(सू) अपि वा न सौमिकोऽवभृथः। तूष्णीं तुषनिष्कासमप्सूपवपेत् ॥ १३ ॥ ११६ ॥ १९८४ ॥

[तुषनिष्कासक्षेपकालः]

(भा) असौमिकेऽवभृथे मार्जनकाले[4] निष्कासस्य क्षेपः।

(वृ) असौमिके-क्षेपः—प्रणीतामार्जनकाले।

---

[1] धर्मवत्त्वात्-च. धर्मभाक्त्वात्-घ. [2] तेन मन्त्रेण कर्त-छ. [3] दनार्थत्वात्-छ. [4] काले तुषनि-ख. घ. काले तुषस्येव क्षे-च. काले तुषनिष्कासस्यैव क्षे-छ. ङ.

(सू) इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते ॥
॥ १४ ॥ ११७ ॥ १९८५ ॥

[चातुर्मास्यावभृथस्य सौमिकावभृथप्रकृतिकत्वपक्षः असौमिकत्व-पक्षेऽपि योक्त्रविमोकादेः कर्तव्यता च]

(भा) योक्त्रविमोकादि सर्वत्र समानम् । प्रतियुतादेः प्रत्यक्षाम्नानादसौमिकेऽपि । [1] श्रुत्यन्तरविहितयाज्याम्नानादस्माकं सौमिकप्रकृतित्वमवभृथानाम् । यत्त्वनिष्टं तदिहावद्धम् ।

(वृ) योक्त्र–नम्—तुषैश्च निष्कासेन चावभृथमित्यसौमिकपक्षेऽपि । प्रतियु-केऽपि—प्रतियुतो वरुणस्य पाश इत्याम्नानात्तत्रापि कर्तव्यम् ।

तस्मात्—

[भाष्योक्तसौमिकावभृथप्रकृतिकत्वसमर्थनम्]

श्रुत्यन्तर–थानाम्—इदं वरुणप्रघासे अप्स्वग्ने सधिष्टवेत्यादि-याज्याम्नानादिष्टिविकारत्वात्सौमिकावभृथप्रकृतित्वमवभृथानामिति सौत्रामण्यादिष्वपि सौमिकप्रकृतित्वमेवावभृथानाम् ।

[अत्रावभृथे सामगानादेरननुमतिः)

यत्त्वनिष्टम्—[2] सामगायनादि ।

तदिहावद्धम्—सूत्रकारेण ।

(सू) देवीराप इत्यवभृथं यजमानोऽभिमन्त्र्य सुमित्रा न अप ओषधय इत्यपः प्रगाह्य सशिरस्कावनुपमक्षन्तौ स्नातः पत्नी यजमानश्च ॥ १५ ॥
॥ ११८ ॥ १९८६ ॥

---

[1] श्रुत्यन्तरे याज्या--ङ. [2] यत्त्ववभृथे साम--घ.

[अवभृथस्नानविधिः]

(भा) अवभृथमित्युद[1]काख्या, तस्याभिमन्त्रणं यजमानस्य ब्रूतादित्येवमन्तेन। सुमित्रा न इति स्नानमन्त्र उभयोः। अपः प्रगाह्य प्रविश्य। यत्र होमः कृतः। सशिरस्कौ अनुपमक्षन्तौ—अशोधयन्तौ [2](मलम्); अतीव शुद्ध्यर्थम्।

[सूत्रस्थावभृथपदस्योदकार्थकत्वम्]

(वृ) अभिमन्त्रणम्—देवीराप इत्यादिना। अवभृथं यजमानोऽभिमन्त्रयेत्यवभृथशब्द उदकपरः।

[स्नान एव मन्त्रो न प्रगाहे]

सुमि–योः—[3] न प्रगाहनस्य आम्नानस्य प्रधानार्थत्वात्।

[अवभृथस्नानस्थानविशेषकथनम्]

अपः प्र–कृतः—वरुणपाशमोचनार्थत्वादवभृथस्य। यस्मिन् देशे होमेन वरुण[4]यजनं कृतं तत्रैव स्नानं युक्तम्।

सशिर—सहशिरसौ।

अशोध–मलम्।

(सू) अन्योन्यस्य पृष्ठे प्रधावतः ॥ १६ ॥ ११९ ॥ ॥ १९८७ ॥

(भा) [5]पृष्ठं प्रधावतः शोधयतः परस्परस्य।

(सू) काममेते वाससी यस्मै कामयेतां तस्मै दद्याताम् ॥ १७ ॥ १२० ॥ १९८८ ॥

[वासोदानस्यैच्छिकत्वं दत्तस्य धारणेऽप्रतिषेधश्च]

(भा) यस्मै कामयेतामृत्विजे तस्मै वाससोर्दानम्। कामवचनाददान-

---

[1] के समाख्या–छ. [2] मलं अमज्जन्तः शुद्ध्यर्थम्–च. [3] न प्रगाहनार्थः, आम्नानस्य प्रधानत्वात्–ग. घ. [4] णस्य यज–छ. [5] पृष्ठे धावतः–ग. घ. च. छ.

मपि [1]न हि दीक्षितवसनं परिदधीतेति दीक्षितवसनस्य परिधानप्रतिषे-[2]धात। स इह नास्तीति दीयेत। नूनं श्रुति[3]प्रतिषेधः यतो न [4]बद्धमहतवसनादेः।

(वृ) काम-मपि—वाससो[5]धारणस्य शास्त्रान्तर[6]सिद्धत्वात् कामवचनादनिच्छतोर्दानाभावः। न ह्येतद्दानमृत्विजामन्यतमाय यस्मै दानेच्छा तस्मै दानपरम्। तथा सति यस्मै कामयेतामित्येतावताऽपि सिध्यति। अतः [7]काममेते इति निर्देशाद्दानस्वरूपमपि इच्छात [8]इत्यवगम्यते।

[सत्यत्र वस्त्रदाने तस्य प्रतिग्रहीत्रा धारणे दीक्षितवासोधारणनिषेधासंस्पर्शः]

न दीक्षि-वसनादेः—दीक्षितत्वाभावादतो दीयते प्रतिग्रहीतुः परिधानयोग्यत्वात्। तदेत[9]दुक्तं नहि दीक्षितवसने भवत इति वाजसनेयकमिति। हिशब्दो हेतौ, यस्मादे[10]ते वसने अदीक्षितवसने अतो देये इति। नूनं [11]श्रुतेः प्रतिषेधः—श्रुतिसिद्धस्य विहितस्य वाससः प्रतिषेधः, न हि दीक्षितवसने इति न लौकिकस्य। तस्मादिह न प्रतिषेधः, यतः सूत्रकारेण कृतम्। अथास्मै क्षौममहतामत्यादिव-[12]देतन्न विहितम्। तस्मादिह न प्रतिषेधः।

(सू) **उद्वयं तमसस्परीत्यादित्यमुपस्थाय प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रत्यासित्वा समिधः कृत्वा अप्रतीक्षास्तूष्णीमेत्यैधोऽस्यैधिषीमहीत्या-**

---

[1] न हि दी—ग. [2] षेधः—घ च. छ. [3] तिविप्रतिषेधः—च. [4] बन्धनम —घ. [5] दानस्य—ग. घ. [6] रासि—घ. [7] काममेते वाससो इति—घ. [8] इति ज्ञायते—ग. [9] तदुक्तम्—घ. [10] देव न दीक्षितवसने अतो—घ. [11] श्रुतिप्रतिषेधः —ग. घ. [12] देते न विहिते।—घ.

**हवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते ॥ १८ ॥ १२१ ॥ १९८९ ॥**

[आदित्योपस्थानादयः स्नानोत्तरकालिकाः, अत्र उपदेशपक्षश्च]

(भा) आदित्योपस्थानमुभयोः । उदकस्यान्तः उदकान्तः तस्य प्रत्यसनं पुनःप्रक्षेपः, यदुत्तरतो वेगाद्बहिर्भवति । समिधः कृत्वा हस्ते ऋत्विजो [1] यजमानश्च । अप्रतीक्षाः—[2] नेक्षमाणा उदकम्, यत्र यागः कृतः । तूष्णीं वाग्यताः । उपस्थानान्ते कृते अपो अन्वचारिषमिति सर्वैः एकस्मिन् उत्करे उभयोरुपवेषयोरुद्वासनं क्रमेण, कपालविमोचनं च । [3] प्राश्य निष्क्रामति ब्रह्मोपस्थाय [4] उत्तरवेदिविहारे विष्णुक्रमा[5]दि, अवेदिसंस्कारत्वात् । पर्यायेणोपसमिन्धनमुभयोराहवनीययोः । शेषमुत्तरे विहारे । एकस्यैव वेदस्योपस्थ आधानम्, यजमानसंस्कारत्वात् । उपदेश उभौ [6] वेदौ । युगपद्यजमानभागप्राशनमामिक्षयो:[7] यज्ञविमोकादि[8]तर्पणा[9]न्तम् । उपदेशः, पुरस्ताद्यज्ञशञ्चमादवभृथः । विमुक्तत्वाद्यज्ञस्य । अग्नयन्वाधानवर्जं [10] सर्वमनर्थलुप्तं क्रियते । कृतेऽवभृथे समिदाधानोपस्थानान्ते निष्क्रान्ते ब्रह्माणि यज्ञशंचमादि ब्राह्मणभोजनान्तम् । केचित्तु वृष्टयन्ते कुर्वन्त्यवभृथम् । तेषां पुनः सर्वं विहरणादि ॥

[पत्नीयजमानयोरुभयोरप्यादित्योपस्थातृत्वम्]

**आदि-योः**— पत्नीयजमान[11]योः । वरुणपाशादेव निर्मुच्यते

---

1 यजमानौ–घ. च. छ. 2 अनीक्षमाणाः–ग. च, 3 प्रविश्य–च. प्राश्यन्निष्क्रामति–क. घ. 4 य चोत्त–क. ख. 5 मादिसंस्कार–क. 6 वेदौ विधायेति ।–घ. 7 योर्विमो=क. ङ. च. 8 दि ब्राह्मणभोजनान्तम्=घ. 9 समित्युपदेशः–ङ. 10 वर्जमनर्थलुप्तं सर्वं पुनः पुनः क्रियते । अवभृथे समिदाधानोपस्थानान्ते कृते निष्क्रान्ते–च. 11 नयोः प्रत्यसनं च–ग.

इत्युदकान्तप्रत्यसनस्य स्वामिकर्तृकत्वादादित्योपस्थानस्य तेन समानकर्तृकत्वादुभयोरेवोपस्थानम् ।

[सौत्रप्रत्यसनशब्दार्थः]

यदुक्त-भवति—उदकादुत्ता[1]रणं कुर्वतो यजमानस्य वेगात्तीरं गतस्योदकस्य प्रतिनिवर्तनं प्रत्यसनम् ।

[समिदाधानाद्यग्न्युपस्थानान्तस्य सर्वकर्तृकता]

समिधः-नौ च—एतदाद्युपस्थानान्तं[2] सर्वे ।

[सौत्रतूष्णींग्रहणस्य वाग्यमनार्थकत्वं न त्वमन्त्रकत्वपरत्वम्]

अप्रती-ग्यताः—अपाम सोममित्यादेरिष्ट्यनङ्गत्वात् सौमिक[3]-धर्मकत्वपेक्षेऽपि प्राप्त्यभावात् मन्त्रनि[4]वृत्त्यर्थम् तूष्णींग्रहणं न भवति । अतो वाग्यमनार्थम् ।

उपस्थानान्ते कृते—उपस्थाने कृते ।

[कपालविमोचनादेः क्रमिकत्वं समिदाधानस्यैककालिकत्वं च]

एकस्मिन् उ-सनं—क्रमेण । युगपत्सम्भवेऽपि कृतानुकारित्वाय । समिधः कृत्वेत्यादि युगपत्, सर्वेषां सहविधानात् ।

[उत्तरवेद्यामेव विष्णुक्रमाः]

प्राश्य नि-रत्वात्—सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्त इत्यादिना यजमानार्थत्वात् वेदिसंस्कारार्थत्वाभावात् अन्यतरस्यामुत्तरस्यामेव । अत एव वेदिसंस्कारप्राप्तिमाशङ्क्य निवृत्तिप्रदर्शनाद्वेद्यामेव दक्षिणेन्ते विष्णुक्रमा न बहिर्वेदीति सिद्धम् ।

पर्या-ययोः—समिद्धो अग्न इति ।

[उपस्थे वेदाधाने उपदेशपक्षः]

उपदेश उभौ वेदौ—कृतप्रयोजनस्य वेद[5]स्यापि प्रतिप्रत्त्यर्हत्वात् पत्न्युपस्थे प्रासनवत् ।

---

[1] त्तरणं–घ. [2] न्तानि सर्वे–ख. [3] कपक्षे–घ. [4] निवृत्त्या तू–घ.
[5] वेद यस्यापि–घ.

युगप-क्षयोः—संसृज्य ।

[उपदेशतदितरपक्षयोरवभृथकालकथनम्]

उपदे—णान्तम्—इत्युपदेशपक्षः । भाष्यकारपक्षे तु[1] यज्ञशंचमाभावान्नैष पक्षः ।

केचि-भृथं—यस्य यज्ञे प्रतत इति लिङ्गात् । सर्वान्तेऽवभृथः ।

(सू) अत्र पौर्णमास्येष्टा उन्दनादि पूर्ववन्निवर्तनम् ॥ ॥ १९ ॥ १२२ ॥ १९९० ॥

[वरुणप्रघासस्थान एव पौर्णमासेष्ट्युन्दनादिकम्]

(भा) अत्र—अस्मिन् वरुणप्रघासस्था[2]ने पौर्णमास्या यागः उन्दनादि उन्दनप्रभृति, पूर्ववत् ।

(सू) सर्वं वा वापयेत् ॥ २० ॥ १२३ ॥ १९९१ ॥

[केशस्य सर्वस्य वापनं निवर्तनं वा]

(भा) वापनं वा शिरसः केशानां निवर्तनं वा ॥

(सू) मन्त्रादिर्विक्रियते यद्धर्मः पर्यवर्तयदन्तान् पृथिव्या दिवः । अग्निरीशान ओजसा वरुणो-धीतिभिस्सह । इन्द्रो मरुद्भिस्सखिभिस्सह अग्नि-स्तिग्मेनेति समानम् ॥ २१ ॥ १२४ ॥ १९९२ ॥

अपि वा स्नात्वोप्त्वा केशश्मश्रूण्यरण्योरग्नीन् समारोप्योदवसाय निर्मथ्य पौर्णमासेन यजते ॥ ॥ २२ ॥ १२५ ॥ १९९३ ॥

[अरण्योर्धार्याग्निसमारोपणम्, ततः पौर्णमासयागाय पुनर्मन्थनं च]

(भा) अपि वा स्नात्वाऽव[3]भृथं परिसमा[4]प्य वपनमुन्दनादि । अरण्यो-

---

[1] तु विकृतिषु यज्ञ—छ. [2] स्थाने अध्वर्योः पौ—घ. [3] भृथे परिसमाप्य—घ. च. छ. [4] ाप्य वरुणप्रघासान् वपन—च. ङ.

[1] द्वयोर्द्वयोरग्नीन् समारोप्य धार्यान्। केचित् द्वयोरेव समारोपणमिच्छान्ति सर्वेषाम्। उदव[2]साय वरुणप्रघासदेशात् पुनरग्न्यगारं गत्वा। निर्मन्थ्य पैर्णमासयागः। पुनर्वचनात् वपनं मन्थनविधिश्चेह नित्यः। उपदेशः प्रदर्शनार्थ इति।

[धार्याग्निसमारोपणस्यारणिद्वयाधिकरणकत्वम्]

(वृ) केचित्–षाम्—द्वयो[3]ररण्योर्धार्याणां समारोपणम्; अरण्योरग्नीन् समारोप्ये[4]ति वचनात्। इतरथा अरणिष्वित्येवावक्ष्यत्।

[पुनर्मन्थनविधानान्नात्मसमारोपणम्]

पुन–त्यः—वपनं नित्यं, पुनर्मन्थनाविधानात् नित्यं मन्थनम्; नात्मसमारोपणम् उप्त्वा केशश्मश्रु इति पुनर्वचनात्, अग्नीन् समारोप्ये-[5]ति सिद्धे परिमन्थ्येति पुनर्वचनान्मन्थनं वपनं च नित्यम्। मन्थनविधिर्मन्थनप्रयोगः।

[आत्मसमारोपणं वेत्युद्देशपक्षः]

अप–र्थः—अतो [6] निवर्तनं केशानामात्मसमारोपणमिति [7]॥

(सू.) **यज्ञो ह वा एष यद्वरुणप्रघासा न ह्यवकल्पेत यदुत्तरवेद्यामग्निहोत्रं जुहुयादिति वाजसनेयकम्॥ ॥२३॥ १२६॥ १९९४॥**

॥ अष्टमी खण्डिका ॥

---

[वरुणप्रघासस्य सोमयागतुल्यता, तस्य सद्यस्कालत्वप्रशंसा च]

(भा) यज्ञो ह वा एष यद्वरुणप्रघासाः अवभृथदर्शनात् [8] उदकाभ्यवायश्च केषां चित्प्रसिद्धः[9]। न च तत्राग्निहोत्रं हूयते। इहाप्येवं नावकल्पते न [10]सुरुचितं यदुत्तरवेद्यामग्निहोत्रं हूयते। तस्मा[11]न्न होतव्यमिति

---

[1] द्वयोरग्नी–क. ग. [2] साय पुनर–ङ. [3] रेवारण्यो–छ. [4] ति निर्देशात्–घ.छ. [5] ति सिद्धे निर्मन्थ्य-घ.छ. [6] उभयोर्निर्देशः। अतो–घ. [7] णमपीति–छ. [8] उदका-भ्युपायश्च–क. घ. ङ. [9] प्रतिषिद्धः–क. ग. ङ. छ. च. [10] सुरचितं–घ. [11] न्न हूयत इति–च.

निन्द्यते वाजसनेयके। आप्येभ्यो निनीयाग्नी प्रण[1]यत इति [2] तत्र ह्युत्तरवेद्यामग्निहोत्रं [3] हूयत इत्यस्य विधेः प्रशं[4]सार्था निन्दा। सद्यस्काल[5]ता वा प्रशस्यते। [6] तत्रापि न हूयते उत्तरवेद्यामग्निहोत्रमित्येवमर्थम्।

इति धूर्तस्वामिभाष्ये अष्टमे प्रश्ने द्वितीयः पटलः

---

(वृ) यज्ञो ह वा–दर्शनात्—सोमयागतुल्यता।

उदका—द्धः—अपि वा न सैमिकोऽवभृथ इत्यस्मिन् पक्षे सौमिकाव[7]भृथ उदके नास्ति।

नच—ते—सोमयागे।

इह—ल्पते—अतो वरुणप्रघासावभृथस्य पक्षे विद्यमानत्वात् मध्येऽग्निहोत्राकरणाच्च सोमयागतुल्यता [8] स्यात्। न ह्यवकल्पत इत्यस्यार्थः ;—[9] इहाप्येवं नावकल्पते सोमयागवैषम्याय यज्ञो ह वा एष इति श्रुतेः।

न सुरुचितं—न शोभनः प्रयोगः।

यदुत्तरवेद्यामग्निहोत्र[10]करणे सोमयागवैषम्यम्—

तस्मान्न–द्यते–नेयके—अस्मत्सूत्रोक्तः पक्षः। सा च निन्दा स्वकीयाविध्यन्तरप्रशंसार्था।

आप्येभ्यो–स्यत इति—विधिः प्रशस्यते।

[वरुणप्रघासस्य द्व्यहकालिकत्वेऽपि सोमयागावैषम्यकथनम्]

तत्र ह्यु–निन्दा—अतश्च सोमयागतुल्य इति प्रशंसा[11] तस्य तुल्यपक्षस्येत्यस्य विधेः प्रशंसार्था निन्दा। आप्येभ्यो निनीयेत्यस्मिन्

---

1 यतः तत्र–ङ.चं.छ. 2 इति न तत्र ह्यु–घ. इति न तर्ह्यु–क. इति तत्र तर्ह्यु–ङ. 3 त्रं न हूय–ङ. च. 4 सार्थ न नि–च. 5 लतयाप्र–ग. 6 तत्रापि हूयते–ङ. 7 भृथयाग उद–घ. 8 ता न स्यात्–ख. 9 इहाप्येतन्नावकल्पते सोमयागैावषम्यात् य–ग. घ. 10 करणे न सोम–ग घ. 11सार्था निन्दा–घ.

पक्षे त्र्यहकालत्वेऽग्निहोत्रार्थमन्यस्याहवनीयस्य प्रणयनेऽप्यौत्तरवेदिके होमाभावान्न सोमवैषम्यमिति ।

**सद्यस्का-स्यते**— नह्यवकल्पत इत्यादिना । ( तत्रापि हूयत उत्तरवेद्यामग्निहोत्र[1]मिति ; अतो यागतुल्य इत्येवमर्थं वा )

इति धूर्तस्वामिभाष्यवृत्तौ कौशिकेन रामाग्निचिता कृतायां अष्टमप्रश्ने द्वितीयः पटलः ॥

---

**(सू.) ततश्चतुर्षु मासेषु पूर्वस्मिन्पर्वण्युपक्रम्य त्र्यहं साकमेधैर्यजते ॥ १ ॥ १ ॥ १९९५ ॥**

**[अधिमासे चातुर्मास्यानारम्भः साकमेधानां त्र्यहकालिकता च]**

(भा.) पुनर्मासचतुष्टयवि[2]धिः । यत्राधिकमासस्तत्र नेष्यते चातुर्मास्यानामारम्भः । इह पूर्वं पर्व चतुर्दशी । साकमेधेषु पञ्चदशी महाहविषः[3]। चतुर्दश्यां शुनासीरीयेणेष्ट्वा पञ्चदश्यां [4]वैश्वदेवेन यजत इति पञ्चदशी वैश्वदेवकालः । पूर्वं तु पर्व चतुर्दशी । [5]तत्र चतुर्होताऽन्वारम्भणीया चेति सिद्धम् । त्र्यहविधानं त्र्यहप्रतिषेधार्थम् । महाहविषोऽप्युत्तरेण विहारेण[6]कल्प इति [7]त्र्यहकालत्वमपि स्यादिति तत्प्रतिषिध्यते ।

**[साकमेधशब्दार्थः]**

साकं सहेत्यर्थः । [8]सह वर्धनं यस्मात् सोमस्य छन्दसां चास्मिन् कर्मणि अतः साकमेधाः ॥

**[अधिकमासे ऋतुयाजिनोऽपि वा चातुर्मास्यनिषेधः]**

(वृ) **पुनर्मा-रम्भः**—पूर्वं मध्येऽधि[9]कमासेऽनारम्भ उक्तः ;

---

[1] त्रम् । अतो-छ. [2] विधेयत्राधि-क. ग. घ. [3] षः कालः । चतु-च. [4] वैश्ववेनेति पञ्च-ख. ङ. छ. [5] तस्मिन्पञ्चहोता-ग. घ. ङ. च. तत्र पञ्चहोता-क. ख. ङ. च. छ. [6] रेण विकल्प-ग. [7] त्र्यहेति स्यात् [8] सहबन्धनं-च. [9] कमासपक्षे ना-क.

इदानीं संवत्सरे यत्र क्वाप्यधिकमासेऽनारम्भ इति ; संवत्सरमाप्नोतीति वचनात् । अथवा ऋतुयाजिनोऽप्यधिकमासेऽनारम्भार्थं वा ।

इह पूर्वं–दर्शी—यस्मात् ।

[वैश्वदेवप्रकृतेर्महाहविषः पर्वकालिकता]

साकमेधेषु–विषः—अत्र हेतुः ।

चतुर्द–देवकालः—पुनरारम्भे चतुर्दश्यां शुनासीरीयविधानात् वैश्वदेवस्य [1] पञ्चदशी स्वतः प्राप्तेति सिद्धवदनुवादात् सर्वथा वैश्वदेवस्य स एव कालः ; तत्प्रकृतित्वान्महाहविषोऽपि स एव कालः ।

पूर्वं तु–सिद्धम्—तत्र वैश्वदेवेऽपि । साकमेधेषु पौर्णमास्या विप्रकर्षस्स्यादिति वैश्वदेव उक्तम् ।

त्र्यहवि–र्थम्—त्र्यहशङ्का तु ;—

महाहवि–षिष्यते

[साकमेधशब्दनिरुक्तिः]

साकं–साकमेधाः—साकमेधशब्दनिर्वचनम् । यत्सोमश्च राजा छन्दांसि च समैधन्त तत्साकमेधानां साकमेधत्वम् इति श्रुतेः ॥

(सू.) अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति

[2] साकं सूर्येणोद्यता ॥ २ ॥ २ ॥ १९९६ ॥

[3] साकं वा रश्मिभिः प्रचरन्ति ॥ ३ ॥ ३ ॥ १९९७ ॥

---

[1] पञ्चदश्याः स्वतः प्राप्तेऽपि सिद्ध–छ. [2] कार्तिक्यां मार्गशीर्ष्यां वा चतुर्दश्यां प्रागुदयादुदवसायारम्भः । महाहविष्पूदवसाननियमात् । तदङ्गत्वाचान्यासामिष्टीनाम् । अङ्गाङ्गिनोरेकदेशित्वाच्च । पृथगग्नयस्तु कालभेदात्, बहिस्तन्त्रवर्तित्वाच्च । साकं सूर्येणोद्यता निरुप्योदवसानान्ते कृते तेष्वग्निहोत्रं हुत्वा ततः प्रोक्षणादि प्रतिपद्यते । (रु).

[3] इज्या वा सहोद्यतो रश्मिभिर्भवति । साकं सूर्येणोद्यता निर्वपतीति श्रुत्यर्थस्य विशयित्वात् । शाखान्तरीयो वाऽयं विधिः (रु).

[निर्वापकालः]

(भा) साकं सह सूर्योदयन निर्वापो यागे वा [1] उद्यद्भी रश्मिभिः सह। यज्यर्थत्वान्निर्वपतेः। अग्नयेऽनीकवते, अग्नेऽनीकवन्, अग्निमनीकवन्तम्, अग्नेरनीकवतः, अग्निरनीकवानिदमन्नादो भूयासम्। मध्यन्दिने [2] निर्वपतीति निर्वापो यागो वा॥

(वृ) साकं-सूर्येणेति-अथवा-

उद्यद्भी रश्मिभिः सह-यागो वा।

श्रुत्या विधीयते॥

(सू) सिद्धमिष्टिः सन्तिष्ठते॥ ४॥ ४॥ १९९८॥

मरुद्भ्यः [3] सान्तपनेभ्यो मध्यन्दिने चरुम्। ॥५॥५॥१९९९॥

[4] न बर्हिरनुप्रहरति॥ ६॥ ६॥ २०००॥

सिद्धमिष्टिः सन्तिष्ठते॥ ७॥ ७॥ २००१॥

[5] मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्॥ ८॥ ८॥ २००२॥

[6] यत्सान्तपनस्य बर्हिस्तद्गृहमेधीयस्य॥ ९॥ ॥९॥२००३॥

---

[1] वा उद्यता सूर्येण उद्यद्भी--घ. [2] ने निर्वापः--च. [3] बहुदेवत वा-द्बह्वक्षरत्वाच्चाग्नीषोमीयविकारश्चरुः। त्र्यक्षरत्र्यक्षरा ऐन्द्राग्नविकाराः। चतुरक्षरप्रभृतयोऽग्नीषोमीयविकारा इति भारद्वाजः। नच मारुतत्वात् त्र्यक्षर इति शङ्कनीयम्, सगुणस्य बह्वक्षरत्वात्। अक्षरसंख्यायां सगुणो देवताशब्दः सङ्ख्यायेत इति भरद्वाजः। लिङ्गं चात्र भविष्यति गृहमेधीयेन (रु). [4] अनुप्रहरत्येव तु गृहमेधीयस्याबर्हिष्ट्वे। नित्यस्तु प्रस्तरप्रहरः (रु). [5] सर्वासां यजमानगवीनामिति शेषः (रु). [6] प्रस्तरस्त्वाहर्तव्यः प्रहृतत्वात्तत्र। (रु).

[1] अपि वा नेध्माबर्हिर्भवति । न सामिधेनीरन्वाह । न प्रयाजा इज्यन्ते नानूयाजाः ॥ १० ॥ १० ॥ २००४ ॥

[बर्हिःप्रहरणतदभावपक्षौ, तत्र विशेषाश्च]

(भा) यदा सान्तपनस्य बर्हिर्गृहमेधीयस्य तदा बर्हिषः प्रहरणम् । समिष्टयजुस्तु हूयते । प्रह्रियेत च प्रस्तरः सूक्तवाके । यदा त्वबर्हिः-पक्षो गृहमेधीये [2] तदा तु प्रह्रियते बर्हिः । मरुद्भ्यः सान्तपनेभ्यः, मरुतः सान्तपनाः, मरुतः सान्तपनान्, मरुतां सान्तपनानामिदं हविर्मरुतां सान्तपनानामहं देवयज्यया वृत्रहा भूयासम् । सर्वासां यजमानगवां दुग्धे गृहमेधीयः । [3] यदा बर्हिःपक्षस्तदा गृहमेधीयो ब्राह्मणतर्पणान्तः । [4] एतावांश्च विशेषः—प्रातर्दोहधर्मेण वा संस्कृते पयसि श्रपणं चरोः अधर्मके वेति । सूत्रकारस्तु [5] बर्हिःपक्षे संस्कारवच्च पयोऽनुक्रामति, अपि वेत्यादिवचनात् । पूर्वस्मिन् विधौ यथाप्रकृत्येव संस्था, प्रकृतिवच्चेध्माबर्हिरनुमर्यते । अबर्हिःपक्षे सामिधेनीनां प्रतिषेधोऽनुवादः । ब्राह्म[6]णेन विहितत्वात् ।

[भाष्यप्रदर्शितबर्हिरबर्हिःपक्षयोः प्रमाणविवेचनम्]

(वृ) यदा सान्त-रणम्—सान्तपनीये गृहमेधीयस्य बर्हिःपक्षे सान्तपनीयबर्हिषो धार्यत्वात् ।

समिष्ट-क्तवाके—यत्सान्तपनस्य बर्हिस्तद्गृहमेधीयस्येत्यत्र बर्हिर्ग्रहणेन प्रस्तर[7]स्याग्रहणात् । तदुक्तं प्रसूमयं बर्हिः प्रस्तरश्चेत्यत्र ।

---

1 अपि वेति शब्दात् सर्वमिध्माबर्हिराद्यविकृतमिति सिद्धं भवति । तत्रेध्माभावादेव सिद्धेन सामिधेनीरन्वाहेत्यनुवादो ब्राह्मणानुसारात् (उ). 2 तदेह–प्र. च.
3 यदा गृहमेधीये बर्हिः पक्षस्तदा ब्राह्म–घ. 4 एतावांस्तु वि–घ. च. छ.
5 स्त्वबर्हिःपक्षे–ख. ग. च. स्तु बर्हिःपक्षे–क. ग. च. स्त्वबर्हिःपक्षे-घ.
6 णेऽभिहितत्वात्–ख. च. छ. 7 स्य प्र–छ.

  

यदा त्वत्र-ये—अपि वां नेध्माबर्हिर्भवतीति।

सूत्रकार-क्रामति—अत्र गृहमेधीये सबर्हिःपक्षश्च । तथा पयसोऽपि सधर्मकत्वमधर्मकत्वं च । तत्राबर्हिःपक्षं पयसश्च सधर्मकत्वमङ्गीकृत्य सूत्रकारो वदति–स वै खलु पर्णशाखयेत्यादिना ॥

अपि वे-यते—अवगम्यते ॥

अबर्हिः—तस्यात—यन्नेध्माबर्हिर्भवतीति इध्माबर्हिःप्रतिषेधेऽपि सामिधेनीप्राप्त्यभावान्न सामिधेनीरिति प्रतिषेधो नित्यानुवादः । ब्राह्मणे तथाऽभिहितत्वात् ॥

(सू) [1] अयजुष्केण वत्सानपाकृत्यापवित्रेण गा दोहयति ॥ ११ ॥ ११ ॥ २००५ ॥

[वत्सापाकरणगोदोहनादीतिकर्तव्यता]

(भा) अयजुष्केण–मन्त्रवर्जितेन लौकिकेनोपायेन वत्सापाकरणम् । अपवित्रे कपालधर्मिणि चरौ गा दोहयत्यध्वर्युर्दोग्धा[2]रम् । प्रणीताव[3]त्पश्चात्पवित्राभ्यामुत्पुनाति क्षीरं "देवस्त्वा सवितोत्पुनातु" इति प्रणीताधर्मेण वा[4] प्रणीते पयसि श्रपणम् । सर्वत्रैवं घृतादिषु नपुंसकेषु । केचित्त्वाहुः—शाखयैवापाकरणं, मन्त्रवर्जि[5]तायां तस्यां चा[6]पवित्रवत्यां दोहनमिति ॥

(वृ) अयजु–दोग्धारम्–अपवित्रे—शाखापवित्ररहिते कपालधर्मिणि चराविति चरुश[7]ब्दः स्थालीवचनः ॥

---

[1] अयजुष्कमित्यनेन लौकिकं लक्ष्यते। शाखादिरहितेन लौकिकप्रकारेण वत्सानपाकृत्य शाखापवित्रे कपालधर्मेणोपहिते चरावधर्मकं गा दोहयति। चरुश्रपणार्थमित्यर्थः। तथोत्तरकल्पे वक्ष्यति (रु). [2] रम् । न प्रणयति क्षीरम् । प्रणी–**च.** [3] त्पश्चात् द्वाभ्यामुत्पु–**च.** त्पश्चात् द्वाभ्यां पवित्राभ्यामुत्पु–**ङ.** [4] वा संस्कृते प–**घ.** [5] तया तस्यां त्वप–**क.ख.घ.च.** [6] च प–**च.** [7] शब्द इह स्था–**ग.घ.**

प्रणीता–नात्विति—पवित्रवत्याज्ये कर्णानावपतीति पवित्रसंस्कृते चरुश्रपणदर्शनात् ॥

प्रणातीध–केपु–नपुंसकलिङ्गैकवचनेनोहं कृत्वा ॥

[1] केचि–हनम् –इति पक्षान्तरम् ॥

(सू.) [2] स वै खलु पर्णशाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य यथैतदमावास्यायां क्रियते तं चरुं श्रपयतीत्येके ॥ १२ ॥ १२ ॥ २००६ ॥

[वत्सापाकरणादीतिकर्तव्यतायां पक्षान्तराणि]

(भा) स वै खल्विति ब्राह्मणम् । पर्णशाखा च नित्यापवित्र[3]वति लम्भितशाखावति चरौ सन्दोहनम् । यथैतत्पयोऽमावास्यायां क्रियते तथा संस्कृते पयसि तं गृहमेधीयचरुं श्रपयति । तमेव पक्षं[4] पठति सूत्रकारः ।

(वृ) पर्ण–दोहनम्—पवित्ररहितया शाखया [5] वत्सानां तूष्णीमपाकरणं कृत्वा तद्वत्यां स्थाल्यां तूष्णीं दोहनम् । पवित्रवति सन्दोह्येति पक्षान्तरम् । पवित्रशाखया वत्सापाकरणादि कृत्वा तद्वत्यां स्थाल्यां मन्त्रवद्दोहनम् ।

यथै–कारः ।—इति त्रयः पक्षाः । तृतीयं पक्षं पठति सूत्रकारः ।

---

1 अयं ग्रन्थः छ–पुस्तकमात्रे. 2 स वै खल्विति पक्षान्तरं ब्राह्मणानुसारेण । प्रकृतिवदेव वा पर्णशाखादिधर्मेण वत्सानपाकृत्य शाखापवित्रवत्येव चरौ यथैतत्पयोऽमावास्यायां क्रियते तथा सधर्मकं सन्दोह्य तस्मिन् दुग्धे चरुं श्रपयेदित्यर्थः । (रु).
3 वति तमेव लम्भितशा–च. 4 तृतीयं पक्षं–छ. 5 वत्सापाकरणं तूष्णीं कृत्वा–च.

(सू) [1]अग्नीनन्वाधाय वेदं कृत्वाऽग्नीन् परिस्तीर्य पाणिप्रक्षालनादिकर्म प्रतिपद्यते । यथार्थं पात्राणि प्रयुनक्ति ॥ १३ ॥ १३ ॥ २००७ ॥

[मारुतस्याग्नीषोमीयविकारता पौर्णमासतन्त्रता च]

(भा) अग्नीनन्वाधाय शाखाछेदनं परिस्तरणादिवेदः । पलाशप्रशातनाद्यलंकरणान्ते निधानं पवित्रस्य, परिस्तरणादिविधानात् । अग्नीषोमीयविकारस्सगुणो मारुतः । वेदानन्तरं परिस्तरणविधानात् । ऐन्द्राग्नविकारे तु वेदानन्तरं[2] वेदिस्स्यात् । अपरतो दृषदुपलाशम्यावर्जं पुरतः प्राशित्रहर[3]णप्रणीताप्रणयनान्वाहा[4]र्यस्थाल्यश्मवर्जं कुम्भीवर्जानि च यानि प्रातर्दोहपात्राणि । असंस्कारपक्षे चरुतन्त्रवत् । पवित्रकरणादि प्रकृतिवत् ।

(वृ) अग्नी–त्रस्य—इमौ पर्णमिति । निधाय च वत्सापाकरणम् ।

परिस्त–नात्—पौर्णमास[5]तन्त्रम् । वेदं कृत्वाऽग्नीन् परिस्तीर्येति विधानात् । वेदान[6]न्तरं वेदिरिति पौर्णमासतन्त्रत्वे हेतुः ।

अग्नी–मारुतः—द्व्यक्षरत्र्यक्षरा ऐन्द्राग्नविकाराः ।

वेदानन्त–विधानात् । इह तु पौर्णमासीविकारत्वादग्नीषोमीय विकारत्वम् ।

---

1 अनिध्माबर्हिःपक्षं सधर्मकदोहपक्षं चाश्रित्य प्रयोग उच्यते सूत्रकृता। अग्नीनन्वाधाय शाखाहरणादिविधिना वत्सानपाकरोति, प्रातर्दोहवद्दोहयित्वेति वक्ष्यमाणत्वात् । वेदानन्तरं परिस्तरणनियमेन पौर्णमासतन्त्रतामस्य दर्शयति । मा भूत्प्रातर्दोहसंयोगादमावास्यात्वभ्रम इति । ततश्चावगच्छामोऽग्नीषोमीयविकारः सगुणो मारुत इति । प्रात्रप्रयोगे चरुदोहयोर्येन येनार्थस्तानि प्रयुनक्ति-(ङ).
2 रं वेदिरेव स्यात–ख. ङ. 3 णं प्र. ख. 4 र्याश्मवर्जं–ख. ङ. 5 तन्त्रत्वम्–छ.
6 न्तरं न वेदि–घ. छ.

ऐन्द्राग्न-दिस्स्यात्—अग्नीषोमीयवि[1]कारे तु पौर्णमासी-तन्त्रत्वाद्वेदानन्तरं पलाशशाखाशातनादि, न वेदिः।

अपर-हपात्राणि—संस्कारपक्षे।

(सू) [2]स्थाली कपालानां स्थाने ॥ १४ ॥ १४ ॥
॥ २००८ ॥

[स्थाल्याः कुम्भीधर्माः]

(भा) पुनः कपालस्थानविधानात् कुम्भीस्थाने स्थाली [3]सत्युभय-धर्मत्वे[4]।

(वृ) पुनःक-र्मत्वे—चरुश्रपणार्थत्वात् स्थाल्यां प्राप्तायां पुनः स्थाली कपालानां स्थान इति विधानात् पयोधारणार्थत्वे सत्यपि[5] कुम्भीधर्माः।

नवमी खण्डिका

---

(सू) [6]निर्वपणकाले चतुरो मुष्टीन्निरुप्य बह्वन्वाव-पति ॥ १ ॥ १५ ॥ २००९ ॥

[ऋत्विगादिभोजनपर्याप्तस्यान्वावापः]

(भा) अन्वावापोऽमात्यब्राह्मणपरिमाणम्। पुनश्चरुधर्मबलीयस्त्वार्थ-मनुक्रमणम्।

---

1 कारतया पौर्ण—घ. 2 परिभाषासिद्धाया अपि स्थाल्याः पुनर्वचनं दोहचर्वो-धारत्वेनोभयधर्मत्वोपप्लवे कपालस्थान एव यथा स्यान्मा भूत्कुम्भीस्थान इति (रु). 3 सत्यप्युभ—क. 4 त्वेन—ङ. च. 5 पि न कुम्भी—घ. छ. 6 ऋत्विग-मात्यप्राशनपर्याप्तं यथा स्यात्तथा बह्वन्वावपति (रु) निर्वपणकाले इत्येतावदन्ते खण्ड-समाप्तीरुद्रदत्तवृत्तिमुद्रापकेन प्रदर्श्यमाना सूत्रच्छेदेनाम्नानसम्प्रदायावलम्बिनी चेत् श्रद्धेया भविष्यति। न च रुद्रदत्तवचस्तत्रावलम्ब्यायास्ति।

(वृ) अन्वा–णम्—तेषां यावद्भोजनं तावत्परिमाणं द्रव्यमन्वावपति।
पुनः–णम्—कपालानामुपधानकाल इत्यादिपरिभाषासिद्ध-
याप्यनुक्रमणम्।

(सू) [1] कपालानामुपधानकाले प्रथमेन कपालमन्त्रेण चरुमुपदधाति। ध्रुवोऽसीति मन्त्रं सन्नमति। पिष्टानामुत्पवनकाले तण्डुलानुत्पुनाति ॥ २ ॥ १६ ॥ ॥ २०१० ॥

[2] अधिश्रयणकाले प्रातर्दोहवत्सर्वा यजमानस्य गा दोहयित्वा तस्मिन् श्रपयति ॥ ३ ॥ १७ ॥ ॥ २०११ ॥

[चरुधर्माः तत्रोपदेशपक्षश्च]

(भा) अधिश्रयणकाले एता आचरन्तीत्येवमादि संक्षालननिनयनान्तम्। उपवेषमादाय भृगूणामित्येतत्, अधिश्रितत्वात्। संक्षालनमानीयाधिश्रयणादि चरुधर्मः। असंस्कारे केवलचरुधर्म एवोपदेशः।

(वृ) अधि—न्तम्—प्रातर्दोहवत्।
उप–त्येतत्—अङ्गारपर्यूहणम्। न निरूहणाधिश्रयणे।
अधिश्रितत्वात्—स्थाल्याः।
संक्षा–देशः—पवित्राभ्यां पयस [3] उत्पवनम्। समापो अद्भिरित्याद्यपि न भवति। केवलं चरुधर्मा एव। अयजुष्केणेत्यादिना सर्वपयोधर्मनिषेधात्।

---

[1] विस्पष्टार्थं पुनर्वचनम् (रु). [2] अधिश्रयणकाले प्राप्ते प्रातर्दोहधर्मेण कपालधर्मिकायां स्थाल्यामेव सर्वा गा दोहयित्वा तस्मिन्नधिश्रयणमन्त्रेण तण्डुलानोप्य चरुधर्मेण श्रपयतीत्यर्थः। अधर्मकदोहपक्षे तु यजुरुत्पूते पयसि चरुधर्मेणैव श्रपणम्। (रु). [3] उत्पवनं पयः पयोभिरित्याद्यपि–छ. उत्पवनं संपयोऽद्भिरित्याद्यपि–घ

(सू) सम्प्रैषकाले यदन्यदिध्माबर्हिर्षस्तत्सम्प्रेष्याति।
आज्यग्रहणकाले ध्रुवायामेव गृह्णाति ॥ ४ ॥ १८ ॥
॥ २०१२ ॥

[सम्प्रैषविधिः]

(भा) नियतः सम्प्रैषः ।

(वृ) निय–षः । अबर्हिःपक्षमाश्रित्य [1]सूत्रकारोपदेशात् । इध्माबर्हिरुपसादयेत्यस्य प्राप्त्यभावात् । यदन्यदिध्माबर्हिषस्तत्सम्प्रेष्यतीति [2]वचनानर्थक्यात् । इध्माबर्हिर्वर्जं सम्प्रेष्यतीति सम्प्रैषनियमार्थम् । अपि वा सम्प्रैष इत्ययं पक्षो न भवतीति ।

(सू) [3]प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य वेदिं प्रोक्ष्य
प्रोक्षणीशेषं निनीय पवित्रे अपिसृज्यान्तर्वेदि
विधृती निधाय ध्रुवां स्रुवं च सादयति ॥ ५ ॥
॥ १९ ॥ २०१३ ॥

(सू) [4]एतावसदतामिति मन्त्रं संनमति ॥ ६ ॥ २० ॥
॥ २०१४ ॥

[प्रोक्षणपवित्रातिसर्गौ अभिमन्त्रणे पक्षभेदाश्च]

(भा) अभावाद्बर्हिःपक्षः । वेदिरसि स्वाहेति प्रोक्षणम् । प्रकृतिवदुपदेशः, वेद्यां मन्त्रेण पवित्रातिसर्गः । नाभिमन्त्रणं सूर्यस्त्वेति । परि-

---

[1] सूत्रकारेणोपदेशात्–ख.घ. [2] वचनात्–ख. [3] उक्तेतरपरिसंख्यार्थमनुक्रमणम् । तेन यावदुक्तमेव कर्म क्रियते । तत्र वेद्यां पवित्रातिसर्गो मन्त्रेण । आज्यस्थाल्यपि साद्या कार्यवत्त्वात् । सूर्यस्त्वा युनज्मि त्वष्ट्राध्वर्युयजमानयोरपि निवृत्तिः, अननुक्रमणात् परिध्यङ्गत्वाच्च । परिधिशेषत्वं च तयोः प्रकृतावेव दर्शितम् (रु).
[4] एतावसदतां तौ विष्णो पाहीति स्रुवध्रुवयोर्मन्त्रसंनामः । तथा विष्णूसि वैष्णवं धामासि प्राजापत्यमित्याज्याभिमन्त्रणे जुहूपभृतोराज्याभावात् । तथैव पेठतुस्सत्याषाढभरद्वाजौ । केचित्तु प्रकृतावाज्यस्थाल्याज्यस्याप्यनेनाभिमन्त्रणमिच्छन्तोऽत्रापि विष्णुनी स्थो वैष्णवे धामनी स्थः प्राजापत्ये इत्यूहन्ते (रु).

ध्यत्वात् केचित्कुर्वन्ति अग्निकल्पनं च यावदुक्तं कर्मोपदेशः। "विष्ण्वसि वैष्णवम्" इत्यभिमन्त्रणम्।

(वृ) अभा–क्षणम्—प्रजा वै बर्हिः पृथिवी वेदिरित्युभयोर्विवक्षितत्वात्। बर्हिर्धारणाभावेऽपि तत्पदलोपेन प्रोक्षणं मन्त्रेण।

प्रकृ–देशः—वेदिरसीति त्रिर्वेदिमिति वेद्यर्थत्वात् बर्हिश्शब्दस्यासमवेतार्थत्वात्, अविकारेण [1] मन्त्रप्रयोग इति।

वेद्यां–सर्गः—प्रस्तराभावात् स्तरणदेशे [2] पवित्रातिसर्गः।

नाभि–त्वात्—इध्माभावात् परिध्यभावात्।

केचि–न्ति—अभिमन्त्रणम्। आहवनीयमभिमन्त्रेयत्याहवनीयार्थत्वात्।

अग्नि–नं च—कुर्वन्ति। होमधारण[3] प्रकल्प[4]नात्।

[विधृत्योः प्रस्तरस्रुगुभयधारणम्]

याव–देशः—गृहमेधीये केषां चित् प्रकृतानामनुक्रमणादपूर्वत्वाद्यावदुक्तमेव कर्तव्यमिति। अन्तर्वेदि विधृती निधायेति वचनान्न विधृत्योः प्रस्तरधारणमेव कार्यम्। अपि तु स्रुग्धारणमपि।

(सू) [5] उद्वासनकाले शरं निधाय यावन्तो यजमानस्यामात्यास्तावत ओदनानुद्धरति ॥ ७ ॥ २१ ॥ ॥ २०१५ ॥

---

[1] मन्त्रेण प्र–छ. [2] पवित्रापिसर्गः–ग. छ. [3] प्रधानत्वात्–ग. [4] नत्वात्–छ.
[5] फेनमिश्रश्चरोरग्रिमोंऽशः शरः, तमुद्वासिताच्चरोरादाय प्रज्ञातं निदधाति। यावन्तो यजमानस्यामात्या इत्यविशेषनिर्देशेऽपि प्राशनविधौ ये यजमानस्यामात्या हविरुच्छिष्टाशा इति सङ्कोचनात् तावन्त एव ग्राह्याः। अस्त्रीकाश्च सस्त्रीका इत्यवचनात्। तावत ओदनान् पृथक्पात्रेषु दर्व्योद्धरति। स्थाल्यां चावशिनष्टि। तथाचोत्तरत्र व्यक्तं भविष्यति। (रु).

[शराख्यस्य चर्वग्रभागस्योद्धरणादिः]

(भा) सूर्यज्योतिरित्यभिमन्त्र्योद्वास्य चरुम् । [1] अग्रं शरः । तस्य निधानम् । उदायुवनेनोद्ध[2]रणम् । उत्तरत्र विधानम् । चटुकाकृतिना [3] घट्टयति । अस्त्रीका अमात्या इहानाम्नानात् । यत्पत्नी गृहमेधीयस्याश्नीयादिति वा पत्न्याः प्रतिषेधात् । [4] इहापि वा सस्त्रीकाः स्युः । तत्र तु प्रतिपुरुषवचनान्न स्यात् स्त्रीणाम् । अतो विधानात् ।

(वृ) अग्रं–धानम्—पक्के चरौ उपरि यः फेनानिचयस्तस्य घनीभूतस्य निधानम् ।

[शरभागप्राशने यजमानपत्नीव्यतिरिक्तस्त्रीणामपि प्राप्तिः]

उदायु–यति । अप्रमृष्टं दर्व्युदायुवनमित्युत्तरत्र विधानात् ।

अस्त्री–नात् । स्त्रीणाम् ।

यत्पत्नी–स्युः—अत्रापि स्त्रीणां प्राप्तिमङ्गीकृत्य पत्न्याः प्रतिषेधात् स्त्रीणा[5]मपि प्राप्तिरिति ।

तत्र तु–धानात् । तत्र करम्भपात्रेषु प्रतिपुरुषमिति [6] वचनात् स्त्रीणां न स्यात् । अतो विधानात् स्त्रीणां प्राप्तिः ।

(सू) [7] अतो भूयसो यदि बहुरोदनो भवति ॥ ८ ॥

॥ २२ ॥ २०१६ ॥

[ओदनबाहुल्ये ऋत्विगादिभिन्नब्राह्मणानामपि]

(भा) अमात्येभ्योऽपि [8] बहव उद्ध्रियन्ते यद्योदनम् । स्थाप्यते [9] चरुशेषः स्थाल्याम् । प्राश्नन्ति ब्राह्मणा ओदनम्, [10] यत्स्थाल्यामिति ।

---

1 अग्रतस्तस्य–ग. 2 रणं तूत्तरत्र–क. 3 नाऽदर्व्या–घ. क. ङ. छ. 4 इहापि सस्त्री–क. घ. 5 णां प्राप्तिः–ग. 6 पुरुषवचनं तु–ग. 7 यदि प्रभूत ओदनः स्यात्तदा अतो भूयसोऽप्युद्धरति । उत्तरत्र विनियोगः (रु). 8 बहूद्धियते–ङ. 9 च शेषः–छ. 10 यः स्था–छ.

(वृ) अमा–स्त्वम्—अतो भूयस इत्यादिसूत्रव्याख्या। ओदनभूयस्त्वेऽमात्यव्यतिरिक्तब्राह्मणेभ्योऽप्युद्ध्रियते।

स्थाप्य–मिति—वक्ष्यमाणत्वात्।

(सू) [1]उद्धृतानुत्पूतानलङ्कृतानभिधारितानासादयति ॥९॥२३॥२०१७॥

[ओदनोत्पवनालङ्करणादिकम्]

(भा) उत्पवनं तूष्णीं दर्भाभ्याम्। अलङ्करणं मन्त्रेण। अभिघारणं पुनस्तूष्णीम्।

[उत्पवनाभिघारणयोरमन्त्रकत्वं अलङ्करणस्य समन्त्रकत्वं च]

(वृ) उत्प–भ्याम्—अविकम्; अप्राकृतो[2]त्पवनत्वात्तूष्णीम्।

अलङ्क–ण—[3]देवस्य त्वेति।

अभि–ष्णीम्—अग्नीषोमीयविकारत्वात्।

(सू) [4]दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति ॥१०॥२४॥२०१८॥

[पत्नीभागप्रतिवेशौदनस्य पाकादि]

(भा) प्रतिवेशः [5]पत्न्यर्थे; प्रतिवेशशब्दचोदितमोदनं दक्षिणाग्नौ पचति। तत्र हि पच्यमानो गृहमेधीयस्य भवति प्रतिवे[6]श्यः।

---

[1] दर्भाभ्यां तूष्णीमुत्पूय प्रकृतिवदलंकृत्य पुनस्तूष्णीमभिघार्य प्रियेणेत्यासादयति (रु). [2] त्पन्नत्वा–ग. [3] देवस्त्वा सवितेति–ग. घ. ङ. [4] गृहस्य यदग्रतो गृहान्तरं स प्रतिवेशः, तत्सादृश्यात् गार्हपत्यस्याहवनीयस्य च दक्षिणाग्निप्रदेशः प्रतिवेशः, तात्स्थ्याच्च तत्र पच्यमान ओदनो गृहमेधीयस्य प्रतिवेश इत्युपचर्यते-(रु). [5] पत्न्या अर्थे–क. ख. ग. ङ. [6] वेशः–ख. घ. वेशस्य–क. ङ.

[दक्षिणाग्निपचनीयौदनस्य प्रतिवेशशब्दार्थत्वम्]

(वृ) प्रतिवे-दनम्—([1] प्रतिवेश इत्योदननाम) प्रतिवेशं पचेयुरित्योदनमेवोच्यते ।

दक्षिणा-वेश्यः—तत्र प्रतिवेश[2]शब्दोऽनन्तरगृहे मुख्यः [3] सामर्थ्यलक्षणया तद्योगादन्यत्र वृत्तिः ।

(सू) तं नाभिघारयति ॥ ११ ॥ २५ ॥ २०१९ ॥

[4] द्वयोरुद्धरणं वाजसनेयिनः समामनन्ति । दाक्षिणादेव मरुतो गृहमेधिनो यजति ॥ १२ ॥ २६ ॥ ॥ २०२० ॥

दशमी खण्डिका.

———

[द्वयोरुद्धरणे पूर्वोत्तराज्यभागौ तत्रोपदेशपक्षश्च]

(भा) द्वयोरुद्धरणे पूर्व आज्यभागो दक्षिणस्मात् द्वितीय उत्तरस्मादिति वाजसनेयिमतात् । उपदेशो दक्षिणस्मादेवाज्यभागौ ।

(वृ) द्वयो-भागौ—वाजसनेयिपक्षेण यावदमात्यं द्वयोः पात्रयोः उद्धरणम् । ते च दक्षिणोत्तरे स्थाप्येते । तत्र पूर्वोद्धृतादाज्यभाग उत्तरो द्वितीयादिति स्वपक्षः । उपदेशः प्रथमादेव द्वयमिति । तत आज्यार्थानीति वक्ष्यमाणत्वात् ।

(सू) उत्तरस्मात्स्विष्टकृतम् ॥ १ ॥ २७ ॥ २०२१ ॥

[5] ओदनयोर्निम्ने कृत्वा तत्राज्यमानीय तत

---

[1] कुण्डलितं घ पुस्तके न दृश्यते. [2] शब्दः समीपवर्त्यनन्तरगृहेषु मुख्यः । सामीप्यलक्षणाय तद्यो–घ. छ. [3] समीपलक्षणया–ग. [4] सर्वार्थ द्वयोरेवौदनयोः पात्रद्वये गृहमेधीयादुद्धरणमित्यर्थः । तदा तु, दक्षिणात्–दक्षिणत आसादितात्–(रु).
[5] निम्ने अवटौ (रु).

आज्यार्थान् कुरुत आज्यस्थाल्या वेति वाजसनेयकम् ॥ २ ॥ २८ ॥ २०२२ ॥

[1] एवं कुर्वन्न ध्रुवायां गृह्णीयात् ॥ ३ ॥ २९ ॥ ॥ २०२३ ॥

[2] आज्यभागाभ्यां प्रचर्य जुह्वामुपस्तीर्य सर्वतस्समवदाय मरुतो गृहमेधिनो यजति ॥ ४ ॥ ३० ॥ ॥ २०२४ ॥

[कृतनिम्नस्यौदनस्य आज्यस्थाल्या वा होमार्थाज्याधारतेति पक्षद्वयं, अभिमर्शनादिकं, आज्यभागकालविषये पक्षभेदश्च]

(भा) निम्ने अवटौ कृत्वा आज्यस्थाल्या आज्यमानयेति तूष्णीं यावताऽर्थः सिध्यति । न चाप्यायनं चर्वोः । आज्यस्थाल्या वा आज्यार्थाः । आसाद्यानूहेन प्रियेणेति । अयं यज्ञो ममाग्न इत्यभिमृष्टे [3] वेदसादनादि होतृष[4]दनान्तम् । तत उपवाजनं वेदेन । लोपोऽग्निसम्मार्गस्य । सन्नहनसाध्यत्वात् । यदा चोभयसाध्यस्तदा स्फ्येनैव । अग्नीदग्नींस्त्रिस्सम्मृड्ढीति च प्रैषः । ततः प्रवरो विना

---

[1] ध्रुवायां गृहीतस्य निम्नयोरानयननिरासार्थं पुनर्वचनम् (रु). [2] अथ वेदनिधानादि होतृषदनान्तं कृत्वा वेदेनोपवाज्याग्नीदग्नि त्रिःसंमृड्ढीति संप्रैषः । संमार्जनं च स्फ्येन केवलेन सस्फ्यैर्वा लौकिकैर्दर्भैः । यथोक्तं भारद्वाजेन– चोद्यमाने कर्मणि द्रव्यमुत्पादयेत् यथा गृहमेधीयेऽग्निसंमार्जनानीति । प्रवरस्तु विनेध्मसंनहनवेदितृणाभ्यां स्यात्, अतत्साध्यत्वात् । ततश्चाज्यभागाभ्यां स्विष्टकृतश्चान्याः प्रागूर्ध्वं च प्रधानादङ्गाहुतयो निवर्तन्ते, कस्मात् ? आज्यभागौ यजति अग्निं स्विष्टकृतं यजतीत्युभयविधानेनेतरासामपि परिसंख्यानात् । सर्वतः सर्वेभ्य ओदनेभ्यः । सर्वेषु चावदानधर्माः प्रकृतिवत् । स चायं प्रयोगक्रमः स्वयमेव व्यक्तमनुक्रान्तो भारद्वाजेनेति द्रष्टव्यम्–(रु). [3] वेदासादनादि–ख. घ. ङ. च. [4] दनकल्पनान्तम्–घ.

तृणेन सन्नहनेन च। तत्र आज्यभागौ। उपदेशो होतृषदनकल्पना दूर्ध्वमाज्यभागावे[1]वेति। [2]इष्ट्वा गृहमेधिनः स्विष्टकृदेव न नारिष्ठाः। अननुक्रमणात्। अङ्गानां च परिसंख्यानात्। आज्यभागौ यजतीति, मरुद्भ्यो गृहमेधिभ्यः मरुतो गृहमेधिनः मरुतां गृहमेधिनामहं देवयज्यया वृत्रहा, मरुतो गृहमेधिन इदम्।

(वृ) निम्ने–चर्वोः—ध्रुवामाप्यायय्तीति वचनादिति प्रकृतावुक्तम्।

आज्य–णेति—यद्यपि बहव ओदनाः, विकृत्युत्पन्नत्वात्प्रियेणेत्यस्यानूहः, (ऊहो वा।)

अयं–नान्तम्—चतुर्होतुः पाक्षिकत्वात् तस्यानिर्देशः। आसन्नाभिम[3]र्शोत्तरकालं वेदविधानादिति [4]सर्वम्।

[सम्मार्गलोपे हेतुप्रदर्शनम्]

तत उप–ध्यत्वात्—[5]इध्माभावात्तत्साध्यसम्मार्गलोपः। ऋते च स्फ्यैरित्यस्मिन् पक्षे।

यदा–नैव—तस्य विद्यमानत्वात्।

अग्नी–ग्रैपः—सम्मार्गपक्षे परिध्यभा[6]वात् परिधिशब्दलोपः।

ततः–नेन च—बर्हिरभावात्तृणाभावः।

[उपवाजनाघारसम्मार्गप्रवराणां निवृत्तौ हेतुः]

तत आ–वेवेति —[7]समिन्धनाभावादुपवाजनस्य निवृत्तिः। आज्यभागौ यजतीत्यङ्गान्तरपरिसंख्यानादाघारनिवृत्तिः। समिन्धना-

---

[1] वेति। प्रचारनिवृत्तिर्वा तस्याभावात्। इ–ख. ग. [2] इष्ट्वा गृहमेधीयेन स्विष्टकृतं ना–ख. ग. [3] मर्शनोत्त–घ. छ. [4] सर्वत्र–ग. घ. [5] इध्माभावात्संनहनसाध्य–च. इध्माभावात्सन्नहनाभावात्तत्साध्य–घ. [6] वात्तदर्थलोपः–च. [7] संनहना–घ. छ.

भावात्सम्मार्गनिवृत्तिः । आज्यपानामभावेनावाहना[1]भावेनावाहनीयाभावात् प्रवर[2]निवृत्तिश्चेति तस्य तस्याभवादित्युपदेशपक्षः ।

[गृहमेधीये आज्यभागौ यजतीति विधेः परिसंख्यात्वापूर्वत्वपक्षयोः प्रदर्शनम्]

इष्ट्वा गृ—यजतीति—अस्यार्थः—गृहमेधीये आज्यभागौ यजतीति चोदकप्राप्तिसम्भवेऽपि पुनर्वचनादपूर्वार्थता। परिसङ्ख्यात्वं मीमांसकैरुक्तम् । सा चैवमुपपद्यते । प्राकृतकरणोपकारस्याज्यभागविशिष्टस्य विधानादङ्गान्तरनिवृत्तिः, यावदुक्ताङ्गमात्रसाध्यः करणोपकार इति। तस्य च साक्षाज्जनका आरादुपकारका इति तेष्वाज्यभागमात्रविशेषावगमादारादुपकारकान्तरनिवृत्तिः । सन्निपत्योपकारकाणां तु लुप्तार्थानामेव निवृत्तिः। अत एव नेध्माबर्हिर्भवतीति निषेधोपपत्तिः अपूर्वतापक्षे। अत्र च न सामिधेनीर्न प्रयाजा इत्यादिन्यायप्राप्तानुवादः । अयमेव सूत्रकारपक्ष इति दर्शयति ॥

(सू) [3]सर्वेषामुत्तरार्धात्सकृत्सकृदवदायाग्निं स्विष्टकृतम् ॥ ५ ॥ ३१ ॥ २०२५ ॥

[4]न प्राशित्रं न यजमानभागम् ॥ ६ ॥ ३२ ॥ ॥२०२६ ॥

[प्राशित्रयजमानभागनिषेधोपपादनम्]

(भा) इडान्तपक्ष एव प्राशित्रयजमानभागप्रतिषेधः । अर्वागिडाया ग्रहण[5]मिति गृह्यते ।

---

[1] भावः आवाहनाभावात्प्रवर–ग. [2] निवृत्तिः वेदितव्याभावादित्युप–घ. निवृत्तिर्वेति तस्याभावादित्युप–ग. घ. [3] यजतीत्यन्वयः । नारिष्ठनिवृत्तिर्व्याख्याता (रु). [4] अवद्यतीत्यध्याहारः । सामर्थ्यादिडान्तत्वात्तन्त्रस्य । तयोः प्रागशनाभावादिति भावः । प्राशित्रपूर्वत्वे त्ववदानद्वारा तत्प्राशनस्यैव वाचनिको निषेधः (रु). [5] मितीह गृह्यते–ङ.

(वृ) **इडा-पेधः**—([1] इडान्तपक्ष [2] एव प्राशित्रयजमानभागप्रतिषेध:) न सर्वसंस्थापक्षसूचकः । कथं [3] तयोः प्राप्ति ?

**अर्वागि-ह्यते**—प्राशित्रयजमानभागौ यद्यपीडायाः पूर्वं गृह्यते, तथापि सर्वेषामिडान्त[4]संस्थानाद्भक्षणकालाभावाद्यजमान-[5]भागनिवृत्तिः । प्राशित्रनिषेधो वाचनिकः ।

(सू) **इडान्तस्सन्तिष्ठते ॥ ७ ॥ ३३ ॥ २०२७ ॥**

**[6] ये यजमानस्यामात्या हविरुच्छिष्टाशास्त ओदनशेषान् प्राश्नन्ति ऋत्विजोऽन्ये वा ब्राह्मणाः ॥ ८ ॥ ३४ ॥ २०२८ ॥**

[ऋत्विग्ब्राह्मणादीनां हविश्शेषप्राशनम्]

(भा) मार्जनान्ते यजमानस्यामात्याः स्वानोदनानश्नन्ति हविरुच्छिष्टमाशो येषां ते हविरुच्छिष्टाशाः । नान्यदश्नन्ति ओदनशेषानश्नन्ति कृते मार्जने । यदाऽपि द्वयोरुद्धरणं ऋत्विजां नान्यनिवृत्तिः ।

[हविश्शेषप्राशनस्य मार्जनोत्तरकालिकत्वं सूत्रस्थवाशब्दस्य समुच्चयार्थकता च]

(वृ) **मार्ज-जने**—वाजसनेयिमत्या, [7]तथापि मार्जनादूर्ध्वमोदनशेषप्राशनमेव । वाशब्दस्समुच्चये । ऋत्विजोऽन्ये च ब्राह्मणा ओदनशेषान् प्राश्नन्ति ।

---

1 कुण्डलितः पाठोऽधिक इति भाति. 2 क्षे प्रतिषेधः. 3 इडान्तपक्षे कथं–छ. 4 संस्थासत्त्वाद्भक्ष–ख. 5 भागावदाननि–ख. छ. 6 हविरुच्छिष्टाशाः–वैश्वदेवशिष्टाशिनः यजमानभाण्डोपजीविनः पुत्रपौत्रादय इति यावत् । तथा यजमानस्य गृह्या हविरुच्छिष्टाशा इत्येव कात्यायनः । ते सयजमानाः प्राश्नन्ति । यदि प्रभूत ओदनः स्यादृत्विजोऽन्ये वा ब्राह्मणाः प्राश्नीयुरित्यर्थः । स्पष्टं चैतद्भारद्वाजीये—यथाऽमात्येभ्य ओदनानुद्धरन्ति यावन्तो हविरुच्छिष्टाशा भवन्ति ततोऽन्योऽपि प्राश्नीयुर्यदि प्रभूत ओदनः स्यादिति । पत्न्यप्यत्र प्रातिवेशात्प्राश्नीयात् । (रु).
7 तदाऽपि–घ. छ.

(सू) [1] प्राश्नन्ति ब्राह्मणा यः स्थाल्याम् ॥ ९ ॥
॥ ३५ ॥ २०२९ ॥

[ओदनभूयस्त्वे द्वयोरुद्धरणपक्षे ऋत्विग्व्यतिरिक्तानामपि प्राशनविधिः]

(भा) अश[2]नविधिस्तेषामन्येषां च ब्राह्मणा[3]नाम्। यदा भूयांस उद्धृताः इतरथा तु स्थालीगतस्याशनमृत्विजामन्येषां च ब्राह्म[4]णानाम्।

(वृ) अशन-णानाम्—ओदनशेषाशनमेव।
यदा भू-ताः—स्थाली[5]गतं त्वन्ये ब्राह्मणा अश्नन्ति।
इतर-णानाम्—इतरथा द्वयोरुद्धरणपक्षे।

(सू) [6] सुहिता एतां रात्रिं वसन्ति प्रतीता अनवर्ति-
मुखिनः ॥ १० ॥ ३६ ॥ २०३० ॥

[ऋत्विगादिभिस्तृप्तैर्गृहमेधीयरात्ररतिवाहनम्]

(भा) सुहिताः–[7] तृप्ताः। एतां रात्रिं गृहमेधीयो यस्यामित्यध्याहारः। प्रतीताः–तुष्टाः। अवर्तिमुखिनः–अवर्तिर्दारिद्र्यम्। तदेषां [8] वाचि न भवति। दरिद्राणां हि [9] भोजनकथाः प्रियाः। ता एषामतितृप्तानां न भवन्ति। यथा न रो[10]चन्ते तथा [11] कार्याः।

(वृ) सुहिताः—[12] सर्वेऽमात्याः।

---

[1] प्राश्नन्ति ब्राह्मणा ओदनमित्यस्य महौदनवद्व्याख्या। स्थालीस्थं हविश्शेषं ऋत्विज एव प्राश्नन्तीत्यर्थः। (रु). [2] नसिद्धिस्त–च. [3] णादीनाम्–ङ. [4] णादीनाम्–क. ङ. छ. [5] गतं चान्ये–ग. [6] सुहिताः—मृष्टाशनेन तृप्ताः। प्रतीताः मिथः सङ्गताः। अनवर्तिमुखिनः अवर्तिर्दारिद्र्यं क्षुद्वा, यथा "अवर्त्या शुन आन्त्राणि पेच" इत्यादौ। मुखशब्देन तत्कार्यं लक्ष्यते। अवर्तिवचनरहिताः कर्मण्यवादानकुर्वन्त इत्यर्थः (रु). [7] सुतृप्ताः–ख. घ. च. छ. [8] षां मुखे न–ख. ग. ङ. च. छ. [9] हि या भो ख. [10] रोचते–क. ख. ङ. [11] कार्यः–क. [12] सर्वे सामात्याः–च.

यथा–कार्याः—अमात्यादयः । [1] भोजनेऽत्यन्तरुचिर्यथा भवति ।

(सू.) [2] प्रतिवेशा अपि पचन्ते ॥ ११ ॥ ३७ ॥ ॥ २०३१ ॥

[ओदनशेषस्यापर्याप्तौ महानसपक्केनापि सर्वेषामशन-विधानम्]

(भा) प्रतिवेशा अपि पचन्ते यजमानस्य व्रतनिर्वापकाः ।

(वृ) प्रति–पकाः—यजमानभोज[3]नार्थनिर्वापकाः [4] पाचकाः समीपे ओदनान्तराणि पचन्ते यद्यमात्यादीनामपर्याप्ता [5] ओदनशेषाः ।

(सू.) [6] गा अभिघ्नते ॥ १२ ॥ ३८ ॥ २०३२ ॥

[व्यञ्जनार्थगवाभिहननम्]

(भा) गोघातश्च क्रियते । व्यञ्जनार्थमांसार्थम् । न चामात्यानामप्य-[7]न्याशननिवृत्तिः । आपर्याप्तत्वाच्छेषाशनस्य । गृहमेधीयेनेष्ट्वा अशिता [8] भवन्तीत्यविशेषेण [9] सामात्यानामुक्तम् ।

(सू.) [10] आञ्जते अभ्यञ्जते ॥ १३ ॥ ३९ ॥ २०३३ ॥

[भुक्तवतामक्ष्यञ्जनपादाभ्यञ्जनविधिः]

(भा) सर्वमञ्जनमक्ष्णोः । अभ्यञ्जनं पादयोः । न हि भुक्तवन्तो लोकेऽभ्यञ्जते ।

---

[1] तथा पुनर्भोजनेऽत्यन्त–छ. तथा पुनर्भोजनेनात्यन्त–ग. [2] महानस-पाचकास्त्विह प्रतिवेशा विवक्षिताः, विहारप्रतिवेशभूतमहानसवर्तित्वात् । तेऽप्योदनान् पचन्ते सर्वेषां मृष्टाशनार्थम् (रु). [3] नार्थं नि–छ. [4] पाचकाः सर्वे समीपे–छ. [5] प्र ओदनशेषः–छ. [6] गाश्च तेऽभिघ्नन्ति व्यञ्जनार्थम् (रु). [7] न्याशनस्य नि–ङ. [8] ता एवात्र भ–ख. ता एवास्य भ–ग. [9] सामान्यानामुक्तम्–ग. सामान्यादुक्तम्–क. [10] अमात्या इति शेषः (रु).

[अञ्जनद्रव्यम् ]

(वृ) सर्व-दयो । त्रैककुदमन्यद्वा ।

(सू) [1]अनुवत्सान् वासयन्ति ॥ १४ ॥ ४० ॥ ॥ २०३४ ॥

[प्रातः पानाय रात्रौ मातृभिः सह वत्सानां संवासनम्]

(भा) अनुवास्यन्ते च मातृभिः सह वत्साः पानाय प्रातः ।

(वृ) अनुवा-तः— रात्रौ सहवसनमात्रम् । प्रातःकाले पानमिति ।

(सू) [2]अनिष्कासितां स्थालीं निदधाति ॥ १५ ॥ ॥ ४१ ॥ २०३५ ॥

[रात्रौ अनपनीतशेषायाः स्थाल्या निधानम् ]

(भा) अनिष्कासिता—शेषोऽस्या नापनीयते लग्नः ।

(सू) [3]अप्रमृष्टं दर्व्युदायुवनमन्ववदधाति ॥ १६ ॥ ॥ ४२ ॥ २०३६ ॥

[अमृष्टलेपानां दर्व्यादीनां स्थाल्यां निधानम्]

(भा) दर्वी चोदायुवनं च दर्व्युदायुवनम् । एकस्मिन् प्रदेशे दर्वी, [4]एकस्मिन् प्रदेशे [5]चटकाकृतिः, वियुते वा भवतः । तयोरपि लेपो [6] नापनीयते । स्थाप्यते स्थाल्याम् । दर्व्युदायुवनमन्ववदधाति ।

---

[1] सर्वामेतां रात्रिं यजमानस्य वत्सान् मातृभिरनुवासयन्ति । ते पयः पायं पायं मातृभिः सह वत्सा वसन्तीत्यर्थः । (रु). [2] निष्कासनं निष्कषणम् । बिलजठरलग्नमोदनशेषमनिष्कृष्टं भवतीत्यर्थः (रु). [3] दर्व्या उदायुवनं दर्व्युदायुवनं, येन प्रदेशेन तण्डुलाः पक्तिसाम्यार्थं विक्रियामाना उदायूयन्ते । सर्वं दर्व्यन्तमित्यर्थः । तदप्यमृष्टलेपनमेव स्थाल्यामवदधाति (रु). [4] एकत्र चटुकाकृतिः—च. [5] चटुकाकृतिः—ख. घ. छ. [6] लेपमनपनीय स्थापनं स्थाल्यां दर्व्यु—ख. घ. छ. लेपौ नापनीय स्थापनं स्थाल्यां दर्व्यु—ङ. लेपनाय स्थापनं स्थाल्यां वा ।—च.

(वृ) एकस्मिन्—वा भवतः—दर्वी चोदायुवनं च भिन्ने भवतः, नैकस्य प्रदेशभेदेन ।

(सू.) [1] पराचीनरात्रेऽभिवान्यायां अग्निहोत्र्यै च वत्सौ बध्नाति ॥ १७ ॥ ४३ ॥ २०३७ ॥

[मृतवत्सादोहनौपयिकवत्सान्तरस्य आग्निहोत्रिकधेनुवत्सस्य च रात्रौ बन्धनविधिः]

(भा) पराचीन[2]रात्रे-अर्धरात्रात्परतः । अभिवान्या-मृतवत्सा । या अन्येन दुह्यते । तस्या वत्सं बध्नाति[3] । अग्निहोत्रीवत्सं च, यदि पयसा होमः । अन्ये च वयन्ति ।

(सू.) [4] व्युष्टायां पुराऽग्निहोत्रात् पूर्णदर्व्येण चरन्ति हुते वा ॥ १८ ॥ ४४ ॥ २०३८ ॥

[प्रभातायां रात्रौ अग्निहोत्रात्पूर्वं पूर्णदर्व्यनामककर्मानुष्ठानम्]

(भा) व्युष्टायां-प्रभातायां-पुराऽग्निहोत्रात्-पूर्वमग्निहोत्रहोमात् पूर्णदर्व्यमिति कर्मनाम । कृ[5]ते वाऽग्निहोत्रे उदायुवन[6]निष्कासस्य स्थाल्याश्च पूर्यते दर्वी [7] ।

---

[1] पराचीनरात्रे अपररात्रे । अभिवान्यमभिवननीयं वत्सान्तरं यस्याः साभिवान्यवत्सा, या मृतवत्सा वत्सान्तरेण दुह्यत इति यावत् । तस्या वत्सं मातृसमीपादपकृष्य बध्नाति पितृयज्ञहविरर्थम् । तथाऽग्निहोत्र्या वत्सं यदि पयसाऽग्निहोत्रं भवति (रु). [2] रात्रे–ख. घ. छ. [3] ति मन्थार्थमग्नी वत्सं-छ. ति मन्थार्थम्—च. [4] पूर्णदर्विसंबन्धात् पूर्णदर्व्यमिति कर्मनाम । पुराऽग्निहोत्राद्धुते वेल्यनुदितहोमविषय, व्युष्टायां चरन्तीति वचनात् साकं सूर्येणोद्यतेत्युत्तरस्य कर्मणः कालवचनात् (रु). [5] हुते वाग्नि–ख. ग. छ. हुतेऽग्नि–ख. ग. छ. [6] निष्कासस्स्थाल्या च–क. ख [7] दर्विः—च.

  

(सू.) [1] शरनिष्कासस्य दर्वीं पूरयित्वा ऋषभमाहूय तस्य रवते पूर्णां दर्विं परापतेत्यनुद्रुत्योत्तरया गार्हपत्ये जुहुयात् ॥ १९ ॥ ४५ ॥ २०३९ ॥

यदृषभो न रूयात् ब्रह्मा ब्रूयाज्जुहुधीति ॥ ॥ २० ॥ ४६ ॥ २०४० ॥

[2] यस्य रवते जुहोति तां दक्षिणां ददाति ॥ ॥ २१ ॥ ४७ ॥ २०४१ ॥

[नाम्ना ऋषभमाहूय गार्हपत्ये दर्व्या स्थाल्यादिगतनिष्कासेन होमः]

(भा) ऋषभः सेचनसमर्थः । स आहूयते [3] येनागच्छति नाम्ना, नाहवनीयप्रणयनमर्थाभावात् । एकामुक्त्वा द्वितीयया होमः । रवे-रवणे । यदा शब्दं करोति तदा होमः । वषट्कार एवास्य स इति ।

[यदि ऋषभो रूयात्तदा तं दद्यात्]

यस्मिन् रवति होमः सा दक्षिणा, यदा ब्रह्मा [4]तदा न दक्षिणा । विहृत्य पू[5]र्णदर्वमुपदेशः ।

(वृ) वष–सः इति ।—वषट्कारेणाहुतिसन्नि[6]पाताय ।

यस्मिन्–क्षिणा ।— "यस्मिन् रवते तां दक्षिणां" इति वचनात् ।

---

[1] स्थाल्या दर्व्युदायुवनस्य च लेपो निष्कासः । तेन शरेण च दर्वीं पूरयित्वा यजमानस्य ऋषभं स्वनाम्नाऽऽहूय तस्य रवते रवे सति गार्हपत्ये जुहुयात् । नाहवनीयप्रणयनं अर्थाभावात् । ऐन्द्री ह्याहुतिः, इन्द्रस्य निष्कासं निदध्यादिति श्रुतेः (रु). [2] यस्य रवते जुहोतीति वचनात् यदा न रूयात्तदा न ददाति । [3] येन नाम्नाऽऽगच्छति-ङ. च. छ. [4] तदा द–ख. [5] र्णदर्वीमित्युपदेशः-छ. दर्वीमुप–क. [6] पातात्.

विहृत्य–देशः—असंसृष्टे केवलगार्हपत्ये होमः कर्तव्य इति ।

(सू) [1] मरुद्भ्यः क्रीडिभ्यः स्वतवद्भ्यो वा पुरोडाशं सप्तकपालं निर्वपति । साकं सूर्येणोद्यता साकं वा रश्मिभिः प्रचरन्ति सिद्धमिष्टिः सन्तिष्ठते ॥ ॥ २२ ॥ ४८ ॥ २०४२ ॥

एकादशी खण्डिका

—-—

[क्रीडिस्वतवदन्यतरदेवताकस्य सप्तकपालपुरोडाशस्य निर्वापः]

(भा) क्रीडिनः स्वतवसश्च विकल्पन्ते । यद्यप्यश्वमेधे समुच्चयः । अस्माकं क्रीडिनामेवा[2]म्नानात् । मरुद्भ्यः क्रीडिभ्यः मरुतः क्रीडिनो हव्यं रक्षध्वम् । मरुतः क्रीडिनो यज । मरुतां क्रीडिनामहं वृत्रहा मरुतः क्रीडिन इदं हविः । मरुद्भ्यः स्वतवद्भ्यः मरुतः स्वतवद्भ्यो हव्यम् । मरुतः स्वतवसो यज । मरुतां स्वतवसामहम् । मरुतः स्वतवस इदं हविः ।

(वृ) क्रीडिनः–ल्पन्ते—देवताः ।

[अश्वमेधे पुरोडाशद्वयसमुच्चयदर्शनेऽप्यत्र वैकल्पिकत्वमेव]

यद्य–च्चयः—अश्वमेधे चातुर्मास्याः पशव इति चातुर्मास्यदेवताकेषु पशुषु मरुद्भ्यः क्रीडिभ्यः संसृष्टान् मरुद्भ्यः स्वतवद्भ्योऽ[3]नुसंसृष्टानिति समुच्चयो दृश्यते, तथापीह विकल्प [4]एव ।

---

1 ग्रन्थोऽयमानीकवतेन व्याख्यातः (रु). 2 म्नानात् स्वतवसः शाखान्तरोक्तत्वाद्विकल्प एव । मरुद्भ्यः-ख. घ. 3 नुसृष्टा-घ. 4 एव स्वतवसां शाखान्तरोक्तत्वाद्विकल्प एव–छ.

(सू) ततो महाहविषस्तन्त्रं प्रक्रमयति ॥ १ ॥ ४९ ॥ ॥ २०४३ ॥

[साकमेधे महाहविरिष्टेः प्राधान्यम्]

(भा) महान्ति हवींषि यस्मिन् तत् महाहविः, [2]तच्च प्रधानं साकमेधानाम् । अङ्ग[3]मन्या इष्टयः । महाहविष्येव इदावत्सरीणां स्वस्तिमाशास्त [4]इत्याशिषो बन्धनात् ।

[महाहविषः प्राधान्ये हेतूपपादनम्]

(वृ) तच्चप्र-न्धनात्—अस्यार्थः—तस्माद्वैश्वदेवेन यजमानः इति[5] प्रक्रम्य तस्मात्साकमेधैर्यजमान इतीदावत्सरीणामिति प्रधानप्रयोगसम्बन्धित्वादाशिषः, [6]तस्या महाहविषि सूत्रकारेण बद्धत्वात्तस्यैव प्रधानत्वम् ।

(सू) [7]तस्य वारुणप्रघासिकेनोत्तरेण विहारेण कल्पो व्याख्यातः ॥ २ ॥ ५० ॥ २०४४ ॥

[साकमेधप्रधानेष्टर्महाहविषः प्रयोगः]

(भा) [8]तत्रोत्तरेण [9]विहारेणास्य विधिर्व्याख्यातो महाहविषः । अत उदवसाय क्रियेत । अनीकवदादीनामपि तदङ्गत्वात्स एव देशः । कालभेदात्कर्मणि कर्मण्यन्योऽन्योऽग्निः । क्रीडिन्या ब्राह्मणभोजनान्ते

---

[1] महाहविर्नाम साकमेधानां प्रधानेष्टिः । तत्रैव पञ्चसंचराणामुपदेशात् मासनामादिधर्माणामुपदेशाच्च । तत्र महाहविरिति पुनः समाख्यानात् साकमेधीयं हविरिदमेषाम् । महाहविषं हविरिदमिति विकल्पते (रु). [2] तत्र प्रधानं—छ. तस्य कर्म । तच्च प्रधानम्—ग. [3] अङ्गमिष्टयः—क. मान्या इ—च. [4] शिषां ब—च. [5] इतिवत्तस्मात्—ख. घ. [6] तस्य म—छ. [7] एतद्ब्राह्मण ऐन्द्राग्न इति श्रुतेरिति भावः । वक्ष्यति च ऐन्द्राग्नतुषानप्सु प्रतिपादयतीति । तत्र वरुणप्रघासकल्पातिदेशान्नित्यमुदवसानम् । तच्च दर्शितमेवानीकवते । तथोत्तरविहारग्रहणान्नित्योत्तरवेदिः । नित्यं च पाशुकं प्रणयनम् (रु). [8] वरुणप्रघासेषु भवो वारुणप्रघासिकः, तेनोत्त—च. [9] ण तस्य—च.

परित्यज्याग्निं महाहविषा यक्ष्य इत्यु[1]क्त्वा वेदो वेदिः । प्रागुत्तरात्परिग्रहात्कृत्वोत्तरवेदिः । पशुबन्धवदुत्तर[2]विहारतुल्यं प्रणयनम् । अग्न्यन्वाधानम् । साकमेधं हविरिदमेषां मयीति [3]सर्वास्विष्टिषु । इह द्विनामत्वात् साकमेधं (साकमेघ) महाहविषं हविरिदमेषां मयीति सान्नाय्यवर्जमुक्तविहारतुल्यं सर्वम् । द्वित्वाभावान्न चोहो ब्रह्मणः ।

(वृ) तेनोत्त–न्योऽग्निः—देशाभेदेऽपि कालभेदेन प्रयोगभेदात् प्रतिप्रयोगमग्निप्रणयनम् ।

क्रीडिन्या–स्विष्टिषु–ब्रह्मणः—अर्थ [4]द्वित्वाभावात् ।

(सू) [5]निर्वपणकाल आग्नेयमष्टाकपालमित्यष्टावुत्तराणि हवींषि निर्वपति ॥ ३ ॥ ५१ ॥ २०४५ ॥

[6]ऐन्द्रस्य चरोः स्थान इन्द्राय वृत्रघ्ने चरुमेके समामनन्ति । अग्ने वेहोत्रं वेर्दूत्यमूर्ध्वो अध्वरे स्यात् । अवतां त्वा द्यावापृथिवी अव त्वं द्यावापृथिवी स्विष्टकृदिन्द्राय देवेभ्यो भव जुषाणो अस्य हविषो घृतस्य वीहि स्वाहेति स्रुच्यमाघारयति । वागस्याग्नेयीत्यनुमन्त्रयते यजमानः ॥ ४ ॥ ५२ ॥ २०४६ ॥

[अत्रोहेनाग्नेयानामष्टानां हविषां निर्वापः]

(भा) इन्द्राय वृत्रघ्ने इन्द्र वृत्रहन् इन्द्रं वृत्रहणं इन्द्रस्य वृत्रघ्नः इन्द्रो वृत्रहेदं हविः । विश्वकर्मणे विश्वकर्मन् विश्वकर्माणं विश्वकर्मणः विश्वकर्मेदं हविः । [7]स्रुच्यमन्त्रे बह्व्यो देवताः । अत आग्नेयीत्यूहो बद्धः ॥

---

[1] क्त्वा विद्युदसि नेत्युपदेशः वे—च.  [2] रवेदितु—क. रवेदिविहारतु ख.
[3] र्याति सान्नाय्यवर्जमुत्तरविहारतुल्यं सर्वा—च. [4] इह तु द्वित्वा—घ. [5] पलासंचरेभ्य ऊर्ध्वमैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालं निर्वपति । तत्र नानाबीजधर्मैन्द्राग्नं पृथङ्निरुप्यावहत्य तुषान् प्रज्ञातान्निदधाति । तेषां पृथक्प्रतिपाद्यत्वात्प्रेषणादयस्तु संमृज्यैव क्रियन्ते (र). [6] गताः—(र). [7] सूच्यम—क.

[ऊहप्रमाणप्रदर्शनम्]

(वृ) इन्द्रा-देवताः— अग्ने वेर्होत्रमित्यत्र ।
अत आ-वद्धः—वागस्याग्नेयीति । अग्नेर्मुख्यत्वात् ।

[बहुदेवतानिर्देशस्थले देवतानिर्णयः]

अत्र सूत्रलिङ्गादन्यत्रापि मान्त्रवर्णिकदेवताकल्पने बहुदेवता-निर्देशे प्रथमस्यैव देवतात्वम् । यत्र तु विशेषणविशेष्यभावस्तत्र समुच्चयः । यत्र वा तन्त्रेण फलदातृत्वनिर्देशस्तत्रापि समुच्चयः ॥

(सू) सहश्च सहस्यश्चेति चतुर्भिर्मासनामभिरेक-कपालमभिजुहोति । धेनुर्दक्षिणर्षभो वा प्रवयाः । इदावत्सरीणां स्वस्तिमाशास्ते । दिव्यं धामाशास्ते इति सूक्तवाकस्याशिष्षु होतानुवर्तयते । एवं यजमानो जपति । आशास इति मन्त्रं सन्नमति ॥ ५ ॥ ५३ ॥ २०४७ ॥

[2] ऐन्द्राग्नतुषानप्सु प्रतिपादयति ॥ ६ ॥ ५४ ॥ ॥ २०४८ ॥

[3] सिद्धामिष्टिः सन्तिष्ठते ॥ ७ ॥ ५५ ॥ २०४९ ॥

द्वादशी खण्डिका

---

[प्रणीतामोक्षणानन्तरं ऐन्द्राग्नतुषाणामप्सु क्षेपः प्रतिपत्तिः]

(भा) नानाबीजधर्मेणैन्द्राग्नस्य तुषाः पृथक्क्रियन्ते । अदब्धेन वश्चक्षुषे-त्येवमादि पुनस्सह । इन्द्राग्नी रोचना दिवः । श्नथद्वृत्रमित्यैन्द्राग्नादीनामा-दिष्टाः । तमिन्द्रं वाजयामसि युजे रथमिति वृत्रघ्नः । वारुणप्रघासिक-

---

[1] व्याख्यातं प्राक् (रु). [2] अवभृथस्य तु काले तूष्णीमैन्द्राग्नतुषानप्सु क्षिपति (रु). [3] ततः कृतान्तादाराभ्येष्टिं संस्थापयेत् (रु).

स्विष्टकृत् । अग्ने नया देवानामिति न वैश्वदेविकः । प्रणीताविमोके कृते ऐन्द्राग्नतुषा अप्सु क्षिप्यन्ते एतद्ब्राह्मण ऐन्द्राग्न इति ।

ततः [1] प्रणीतामार्जनादिब्राह्मणभोजनान्तम् । सिद्धं यत्प्र[2]कृतौ कपालविमोकान्तं तेन संस्थापनम् । [3] न खण्डसंस्था ।

[ऐन्द्राग्नतुषाणां न कपालेनोपवापः]

(वृ) नाम-यन्ते—ऐन्द्राग्नतुषानप्सु प्रतिपादयन्तीति विधानात् भेदेन तुषप्रतिपत्त्यर्थमैन्द्राग्नस्य निर्वपणादि [4] प्रबद्धम् । रक्ष इत्यनुमन्त्राणान्तं नानाबीजधर्मः । नचैन्द्राग्नतुषाणां कपालेनोपवापः । अप्सु प्रतिपत्तेर्विधानात् ।

[अवभृथकालेऽप्सु तुषैश्चेत्युक्त्याऽप्सु तेषां क्षेपः]

इन्द्राग्नी-न्द्राग्न इति—उत्तरवैहारिकैन्द्राग्नस्य प्रणीताविमोकानन्तरं वारुण्या निष्कासेन तुषैश्चेत्यवभृथ[5]निर्देशादत्रापि तस्मिन्नेव काले तुषप्रतिपादनम् । ततः सिद्धमिष्टिः सन्तिष्ठत इति ॥

इति कौशिकेन रामाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ अष्टमे प्रश्ने तृतीयः पटलः

———

## अथ पितृयज्ञः

(सू) [6] तदानीमेव पितृयज्ञस्य तन्त्रं प्रक्रमयति ॥

॥ १ ॥ ५६ ॥ २०५० ॥

---

[1] प्रणीतानां मा—च. [2] कृतौ कर्म कपाल—च. [3] खण्डसंस्था—ग. छ. [4] प्रसिद्धम् . [5] निवेदनादन्यत्रापि—ग. [6] यदैव महाहविः सन्तिष्ठते तदानीमेव प्रक्रमयति (रु).

[महाहविरुत्तरकालिकः पितृयज्ञः]

(भा) तदानीमेव तस्मिन्नेव काले, समाप्ते महाहविषि पितृयज्ञेन यक्ष्य इत्युक्त्वा विद्युदसि, आहवनीयस्य प्रणयनम्, यथा वेदिः सम्भवति। ततो वेदः।

(सू) [1]वेदं कृत्वाग्रेणान्वाहार्यपचनं यजमानमात्रीं चतुस्स्रक्ति वेदिं करोति ॥ २ ॥ ५७ ॥ ॥ २०५१ ॥

[तत्र वेदिकरणादिविधिः]

(भा) अग्रेणान्वाहार्यपचनं यजमानमात्रीं चतुस्स्रक्तिम्।

(वृ) यज–क्तिम्—तया यथाहवनीयाय[2]तनं न भिद्यते। अतोऽष्टासु द्विपदक्रमेषु आहवनीयः।

(सू) [3]प्रतिदिनं स्रक्त्योऽवान्तरदेशान् प्रति मध्यानि ॥ ३ ॥ ५८ ॥ २०५२ ॥

(भा) स्रक्त्यः कोणाः ते भवन्ति प्रतिदिशम्। [4]अवान्तरदेशाः [5]कोणाः। तान् प्रति मध्यानि भवन्ति।

(सू) [6]उद्धताऽखाता भवति ॥ ४ ॥ ५९ ॥ २०५३ ॥

(भा) क्रियत उद्धननम्[7]। न खननम्। "देवस्य सवितुः सव" इति। नापीमां नरा इति तदर्थं प्रैषः।

(वृ) उद्धननम्- स्फ्येनोत्तमां त्वचमिति तदर्थं[8] प्रैषः, खननार्थः।

---

[1] अग्नान् विहृत्य वेदं कृत्वा शौल्वेन विधिना विस्तारत आयामतश्च यजमानमात्रीं चतुरश्रां वेदिं करोति–रु. [2] तनमुपमीयते अतो–ग. [3] स्रक्त्यः कोणाः। ते महादिक्षु भवन्ति। कोणदिक्षु मध्यानि–रु. [4] अवान्तरदेशान् कोणान्तान् मध्यानि–ग. [5] दिक्कोणाः–छ. [6] अपारहामित्युद्धन्ति। न देवस्य सवितुः सव इति खनति–रु. [7] ननम्। देवस्य–च. [8] र्थः प्रैषः–ग. घ. ङ. छ.

(सू) [1]न प्राची वेदिरुद्धत्या । पितृयज्ञो हि । न दक्षिणा । यज्ञो हि । उभे दिशावन्तरोद्धत्या । उभये हि देवाश्च पितरश्चेज्यन्त इति विज्ञायते ॥ ॥५॥६०॥२०५४॥

[तत्र प्राग्दक्षिणयोरन्तरैव वेद्युद्धननं वेदिसम्मार्गनिषेधश्च]

(भा) प्राची प्रागपवर्गमुद्धननं न कर्तव्यम् । तच्च प्रदर्शनार्थम् । नापि वेदिसम्मार्गादि । न प्राची । यस्मात्पितृयज्ञः । नापि दक्षिणा, यस्माद्यज्ञः । [2]देवाश्च पितरश्चेज्यन्ते । अत उभे दिशौ प्राचीं च दक्षिणां चान्त[3]रा उद्धननं कर्तव्यम् । यस्मादुभय इज्यन्ते देवाश्च पितरश्च ।

(वृ) नापि–र्गादि—[4]प्राचीनं कर्तव्यम् । अत्र यज्ञशब्दो देवयागपरः ।

(सू) [5]ये के च देवसंयुक्ता मन्त्रा देवेभ्यः पितृभ्य इति तान् सन्नमति । यथा भवति पृथिवि देवपितृयजनीति ॥ ६ ॥ ६१ ॥ २०५५ ॥

---

[1] वेदिः प्रागपवर्गा नोद्धननीया । कुतः पितृणां यज्ञो ह्ययम् । न च दक्षिणोद्धत्या, कुतः । यज्ञो ह्ययं न केवलं पित्र्यः । कथं तर्ह्युद्धननीया । प्राचीं च दक्षिणां चान्तरा कोणदिशं प्रत्युद्धत्या उभयात्मकत्वात् । कथमस्य उभयात्मकत्वमिति चेत् तच्छ्रुतिरेव ब्रूते उभये हि देवाश्च पितरश्चेज्यन्त इति । के देवा इज्याः केच पितर इति चेत् । प्रयाजादिभिरिज्या देवाः, प्रधानहविर्भिः पितर इति केचित् । तन्मन्दं, प्रधानविषयतयैवोभयत्र श्रुतेः । यथा उत्तरत एवोपवीय निर्वपेदुभये हि देवाश्च पितरश्चेज्यन्त इति । अतो य एव प्रधाना इज्यास्त एव पितृरूपा देवरूपाश्चेति संगिरामहे । तत्रोद्धननेनैव वेदिसम्मार्गादयोऽपि व्याख्याता भवन्ति–(रु). [2]देवा अप्यत्रेज्यते–क. घ. ङ. [3]न्तरेणोद्धननं–घ. [4]प्राचीन कर्तव्यम्–घ. [5]यतश्चैवमुभयविधा इज्यास्ततश्च मन्त्रेषु ये देवशब्दा देवतापराः ते देवपितृशब्दविकारयुक्ताः प्रयोक्तव्याः । यथा पृथिवि देवपितृयजनि देवानां पितृणां

[तत्र मन्त्रेषूहप्रकारः, पक्षभेदेन देवापितॄनिर्देशः निर्वापादिष्वप्यूहश्च]

(भा) ये केच देवसंयुक्ता मन्त्रा नार्थवादाः देवेभ्यः पितृभ्यः इति तेषामेव कर्तव्य ऊहः कर्मणे वां देवेभ्यः पितृभ्यः शकेयं इत्येवं प्रकाराणाम्। देवेभ्यः पितृभ्यो जुष्टं सदनाय [1]बर्हिः। यत्रैव चतुर्थी तत्रैव स्यादूहः। अतोऽन्यदप्यत्रोदाहरणं [2]भवात पृथिवि देवपितृयजनीति। [3]अत[4]स्सर्वत्र तत्परस्य वाक्यस्य समासे चासमासे चोहः। इदं देवानां पितॄणां देवान् पितॄन् गममसीति।

के पुनर्देवाः के च पुनः पितर इति? अत्रोच्यते—प्रयाजानूयाजदेवता देवाः, सोमादयः पितर इति केचित्। तदा तु निरुप्ताभिम[5]र्शन ऊहो न प्राप्नोति। इदं देवानामित्येवंप्रकाराणामन्येषां च। उत्तरत एवोपवीय निर्वपेत्, उभये हि देवाश्च पितरश्चेज्यन्ते इति श्रुतेः।

प्रधानेष्वपि सन्ति देवाः, सोमः पितृमान् देवः, इतरे पितर इति केचित्, तच्च न। लिङ्गविरोधात्। प्राचीनावीती सोमं यजति पितृदेवत्या हि एषा[6]हुतिः, अतः पितृष्वेवोभयम्। मासा[7] वै पितरो-बर्हिषदः ये वै यज्वानो मनुष्या माससमानलोकाः पितरः त एव बर्हिषदः

---

परिपूतमसि कर्मणे वां देवेभ्यः पितृभ्यः शकेयमित्यादि। तत्रैतल्लिङ्गतयैवोदाहृतं देवेभ्यः पितृभ्य इतीति। यथा अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति श्रुत्या प्रदर्शितं तथा सन्नमतीत्यर्थः। ये त्वदेवतापराः देवशब्दास्तान्न सन्नमति यथा बधान देव सवितरित्यादि। ये चाङ्गदेवतापरास्तानपि न सन्नमति देवानामेव तत्रेज्यत्वात् देवौ यजेति लिङ्गाच्च। (रु)

[1] बर्हिरित्यदि—ग घ. [2] भवति यथा पृ—क ङ. यथाभवति पृ·· घ. च. छ. [3] अतस्तत्परस्य—घ. [4] सर्वस्य वा तत्परस्य [5] मर्शनादूहो—ङ. [6] हुतिरिति—ग. [7] वै देवाः पितरो—ग. च. छ.

अर्धमासा वै देवा अग्निष्वात्ताः अयज्वानो गृहमेधिनो मनुष्या अर्ध-मासस्थाने पितर एव ते । अतो निर्वापादिष्वप्यूहः इदं देवानामिदं पितृणामिति ।

(वृ) यत्रैव-दोहः—तस्या निर्देशात् ।

अतोऽन्य-णम्—उच्यते ।

तत्परस्य—देवतानिर्देशपरस्य ।

[निर्वापादावप्यूहे हेतुप्रदर्शनम्]

इदं दे-राणामन्येषां च—अस्यार्थः—सोमपितृमदादीनां देवतात्वाभावे ये के च देवसंयुक्ता मन्त्रा इत्यस्याविषयत्वादिदं देवानामित्यादिनिरुप्ताभिमर्शन[1] ऊहो न प्राप्नोति ।

(सू) [2]अविकारो वा परवाक्यश्रवणात् ॥ ७ ॥

॥ ६२ ॥ २०५६ ॥

---

[1] र्शनादिपूहो-छ. [2] अविकारो वा सर्वमन्त्रेषु । कुतः । परार्थेऽत्र ह परे वाक्ये तस्योभये हि देवाश्चेत्यादिवाक्यस्य श्रवणात् । इमां दिशं वेदिमुद्धन्ति उत्तरत एवोपवीय निर्वपेदित्यादेर्वेद्युद्धननादिविधिपरवाक्यस्य हि शेषतया श्रुतमेव तद्वाक्यम् । अतस्त-च्छ्रुतिपरत्वान्नोहे प्रमाणम् । नचानूहे मन्त्रवर्णविरोधः, पितॄणामपि दैवतत्वादिति । अथापरा व्याख्या । परार्थे अपूर्वप्रैषविधिपरेऽग्नये देवेभ्यः इत्यादिवाक्ये पितृशब्द-श्रवणात् न ह्येतद्देवशब्दसंयुक्तमन्त्रविकारे प्रमाणमवकल्पते, प्राकृतेऽस्मिन्मन्त्रे देव-शब्दस्याभावात् । तस्मादविकार इति । यस्तु ब्रूयात् पृथिवि देवयजनीत्यादौ परार्थे वेदिस्तुतिपरे वाक्ये श्रवणात् असमवेताभिधायिनो देवशब्दस्याविकार इति कस्मान्न व्याख्यातामिति । प्रतिब्रूयादेनं देवानां परिषूतमसीत्यादिषु समवेता-भिधायिषु विकारप्रसङ्गात् सर्वमन्त्रविकारप्रतिज्ञाचवनाच्चेति । न च द्रव्यदेवता-संबन्धप्रतिपादनादन्यार्थत्वं परवाक्यत्वमिति वाच्यम् । तथापीदं देवाना-मिदमु नः सहामुष्याहं देवयज्ययेत्यादौ प्रसङ्गात् । तस्मादुक्त एवार्थः साधीयान् (रु).

[अनूहपक्षान्तरप्रदर्शनम्]

(भा) अविकारो वा परवाक्यश्रवणात् । न विकारोऽविकारः । नान्यथाभावः । अविकारो वा भवति सर्वमन्त्राणाम् । यथाप्रकृत्यैव भवति । कस्मात्? परवाक्यश्रवणात् । परार्थं वाक्यं परवाक्यम् । [1]परवाक्ये श्रवणं परवाक्यश्रवणम् । तस्मात् परवाक्यश्रवणात् । अनूहः सर्वमन्त्राणाम् । वेद्युद्धननसामिधे[2]नीप्रैषादिविधायके वाक्ये उभये हि देवाश्च पितरश्चेज्यन्त इति [3]श्रूयते । नै[4]तदूहस्य विधायकं वाक्यम् । अतोऽविकारः सर्वत्र । अदृष्ट[5]विकल्पनाद्देवत्वस्य पितृ-ष्व[6]पि देवत्वमस्ति । अतश्चाविकारः, यथा राक्षसे पशौ रक्षो यजनीति[7] न भवति । सर्वेष्टौ सर्वयजनीति । तेषां दे[8]वत्वात् । एव-मिहापि ।

[क्वचिदूहः क्वचिदनूह इति केषांचित्पक्षः तत्खण्डनं च]

केचित्त्वाहुः—देवपितृयजनीत्ये[9]वंविधानामविकारः । वेदिपरे हि वाक्ये देवाः श्रूयन्ते । [10]न हविः परस[11]म्बन्धिनि । यथेदं देवाना-मिति । देवास्त्विज्यन्ते नान्या जातिरिति स्तूयते वेदिः । अतो ये स्वार्था इदं देवानामित्येवमादयः [12]तेषामूह इति सिद्धम् । न त्वेतदेवम् । इदं दवानामित्येतदपि न हविःपरम् । अतः पूर्वोक्त एवार्थः ।

(सू) [13]प्रागुत्तरात्परिग्राहात्कृत्वा दक्षिणाग्नेरग्नि-माहृत्य मध्ये वेद्या उपसमादधाति ॥८॥
॥६३॥२०५७॥

---

[1] परवाक्यस्य श्र—ग. [2] नीप्रतिषेधादि—च. [3] श्रुतेः—क. [4] नैतदूहार्थे व्यवधायकं—क. ङ. [5] विकल्पितत्वाद्देवत्वस्य—क. ग. विकल्पत्वाद्देवत्वस्य—घ. [6] पि सम्भवाद्देवे—घ. [7] ति भवति—घ. [8] देवतात्वात्—घ. [9] त्येवं प्रकाराणाम—घ. [10] नह्येवं परसंम्बन्धेनेदं देवानामिति यथा देवा—क. [11] सम्बन्धेन—घ. च. [12] तेषामनूह—क. ग. [13] गतः (६).

[1] एतस्मिन् पितृयज्ञे आहवनीयकर्माणि क्रियन्ते ॥ ९ ॥ ६४ ॥ २०५८ ॥

(भा) समुद्ध[2]तमुत्करे न्युप्य दक्षिणाग्नेरग्निमाहृत्य मध्ये वेद्याः स्थापयित्वा बलवन्तं करोति।

[आहवनीय एवाग्निहोत्रादीन्यप्यन्तरापतितान्यपि कार्याणि]

पितृयज्ञे यान्याहवनीयकर्माणि तान्यस्मिन् क्रियन्ते। अग्निहोत्रहोमस्त्वाहवनीय एव। अग्न्यन्वाधानादि सर्वम्। साकमेधं पैतृयज्ञं हविरिदमेषां मयीति, चतुर्दशीं ये प्रविष्टा इति चतुर्दश्याम्।

(वृ) उपसमाधानम्—बलवत्करणम्।

अग्निहो–त्र एव—पितृय[3]ज्ञ [4]इति वचनात् आहवनीयस्य च विद्यमानत्वात्।

अग्न्य–र्वम्—पैतृयज्ञस्याग्नेराहवनीयवदेव [5]तत्कार्यापत्तेः। प्राकृताहवनीयस्याप्यन्वाधानमिष्यते। उप[6]स्थानदर्शनात्।

चतुर्दशीं–श्याम्—इमामूर्जं चतुर्दशी[7]मिति। याश्चतुर्दश्यामिति प्रसङ्गादिदमुच्यते चतुर्दश्यामनीकवदादिषु चतुर्दशीं ये प्रविष्टा इत्यूहः।

(सू) [8]अग्नीनन्वाधायेध्माबर्हिराहरति ॥ १० ॥ ॥ ६५ ॥ २०५९ ॥

[9]समूलं बर्हिर्दाति ॥ ११ ॥ ६६ ॥ २०६० ॥

[10]उपमूललूनं वा ॥ १२ ॥ ६७ ॥ २०६१ ॥

---

1 पितृयज्ञे यान्याहवनीयानि कर्माणि तान्येतस्मिन्नग्नौ क्रियन्ते। यत्त्वन्यदग्निहोत्राद्यन्तरापतितं तदाहवनीय एव क्रियते–रु. 2 त उत्करे–क. 3 ज्ञे क्रियन्ते इति–छ. 4 इत्यादिव–ग. 5 तत्कार्यतापत्तेः–ग. 6 स्थानार्थम्: छ. स्थानदर्शनार्थम्–ग. 7 मिति साकमेधानामुपक्रम। चतुर्दश्या–छ. 8 गतः–रु. 9 खात्वापि भुवं मूल एव लुनाति न चोत्पाटयति दातीति वचनात्। तत्र मूलं ते राध्यासमिति मन्त्रं विकुर्वन्ति। नात्र प्रस्तरो ग्राह्यः, तस्योत्तरत्र वचनात्–रु. 10 बर्हिर्भवतीति शेषः–रु.

[प्रस्तरव्यतिरिक्तस्य बर्हिषः समूलमुपमूलं वा लवनम्]

(भा) प्रस्तरवर्जं बर्हिस्तु लूयते। खात्वा लूयते समूलम्। [1] मूलेषु यानि पर्वाणि तत्रासिदस्य निधानम्। दातीति वचनात्।

[तत्र केषाञ्चित्पक्षः तत्खण्डनं च]

केचित् मूलं ते राध्यासमिति[2] मूलेषु गृहीत्वा उत्पाटिता ते मारिषमित्युत्पाटयन्ति। तदनुपपन्नम्। दातीति चोदितत्वात्। समीपे मूलानां वा लवनम्।

(वृ) **प्रस्तर-यते**—औद्धवः प्रस्तर इति वक्ष्यमाणत्वात्।

**खात्वा-धानम्**—पर्वते राध्यासमिति लिङ्गात्।

**दाती-नात्**—समूलं बर्हिर्दातीति वचनान्मूले लवनम्।

(सू) [3] **वर्षीयानर्थादिध्मो द्राघीयांश्च ॥ १३ ॥**

॥ ६८ ॥ २०६२ ॥

[इध्मप्रमाणादिकम्]

(भा) प्रकृतावर्थल[4]क्षण इध्मस्थौल्येन इह वर्षीयान् दीर्घश्चार्थात्। एकविंशतिधे[5]त्यग्न्याभिधानादनूहः। बहुयाजिनो वैलिङ्ग्याच्च द्वौ परिधी तिस्रस्समिधो यज्ञायुरनुसञ्चरा[6]निति।

(वृ) **अर्थात्**—हविर्भूयस्त्वात्।

**एक-हः**—[7] अस्यार्थः—बहुयाजिनः सामिधेनीविवृद्धेः। काष्ठविवृद्धौ च समानविधानात्। एकविंशतिधे[8]त्यसमवेताभिधायित्वाच्च। प्रथमस्य विकृतिष्वनूहः।

---

[1] मूले तु यानि—क. [2] मूले गृ—क. [3] अर्थः इत्यर्थलक्षणपरिमाणः प्राकृत इध्मो लक्ष्यते। तद्व्यवस्था च तत्रैव दर्शिता। तदयमर्थः—प्राकृतादिध्मादयं प्रकृष्टः स्थौल्यायामाभ्यां भवतीति। यथाच द्राघीयः प्राकृतादिति सत्याषाढः। श्रुतिश्च भवति। वर्षीयानिध्म इध्माद्भवति व्यावृत्त्या इति। तत्र परिधिद्वित्वकल्पे विंशतिधा द्वौ परिधी इति मन्त्रसंनामः (रु). [4] लक्ष्येण—छ. [5] त्यभिधानात्—ग. त्यनभिधानात्—क. ङ. [6] राविति—ङ. च. [7] अयं ग्रन्थः घ कोशे न दृश्यते। [8] त्यस्य स—ख.

[भाष्यस्थानुसञ्जरपदगतबहुवचनोपपत्तिः]

द्वौ परि–रान् इति––यद्यपि परिधिबहुत्वं नास्ति तथापि पुमांस्त्रियेति पुंलिङ्गैकशेषत्वादनुसञ्ज[1]रानित्यूहः ।

(सू) [2]अग्नीन् परिस्तीर्य पाणिप्रक्षालनादिकर्म प्रतिपद्यते यथार्थं पात्रप्रयोगः ॥ १४ ॥ ६९ ॥ ॥ २०६३ ॥

[अग्निपरिस्तरणादिकं विशेषानुक्तौ यथाप्रकृति पात्राणि]

( भा ) निधायेध्मब्रश्चनानि समूहनाद्यलङ्कर[3]णान्ते परिस्तरणम्, षट्कपा[4]लानि भर्जना[5]र्थं चाग्निहोत्रहवण्यु[6]दकुम्भश्च । तुल्यमन्यत् । पात्रत्रयं च एकैकश आसा[7]दनात् शरावस्तृतीयः । नेडापात्रम् ।

(वृ) आसादनात्—हविषाम् ।
शरावस्तृतीयः । अर्धशरावे सक्तूनामावपनात् ।
नेडापात्रम् । [8]मन्थ इडावदानात् ।

(सू) [9]निर्वपणकाले सर्वतो वेदिं परिश्रित्योत्तरेण द्वारं कृत्वा दक्षिणतः प्राचीनावीती हवींषि निर्व-

---

1 रानित्यूहः–छ. 2 तत्राग्निहोत्रहवण्या सह कुम्भः प्रयोज्यः षड्भिः कपालैः सह भर्जनार्थं कपालं पात्रीस्थाने द्वे पात्र्यौ शरावश्चेति विशेषः । यावदुक्तमेव परकर्मणि पित्र्यधर्मकमिष्टम् । ततोऽन्यत् सर्वं प्रकृतिवदेवेति द्रष्टव्यम् (रु). 3 णांतं परि–च. 4 लादिभ–च. 5 र्थं चैकमग्नि–ग. छ. 6 वणीमुदकुम्भं च–क. ग. घ. 7 दनाविधानात्–च. 8 इदं वाक्यं घ कोशे न दृश्यते । 9 उत्तरस्यां स्रक्त्यां द्वारं कृत्वा परितो वेदिं कटादिभिर्वेष्टयित्वा ततोऽपरेण गार्हपत्यमवस्थिताच्छकटात्पात्र्या वा तयोरेव दक्षिणतो निर्वपति । दक्षिणार्धाच्छकटस्येत्यपरम् । तथोत्तरत इति । यथासमाम्नातं सोमाय पितृमते षट्कपालं पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्यो मन्थं चेति त्रीणि । यवमयाः सर्वे यवान् संयुत्येत्युरत्रानुवादात् अग्नीषोमीयविकाराश्च । तेन पौर्णमासतन्त्रं भवति–रु.

पति । उत्तरतो वा । यज्ञोपवीती सोमाय पितृमत इति यथा समाम्नातम् ॥ १५ ॥ ७० ॥ २०६४ ॥

[वेदिपरिश्रयणादिनिर्वापान्तविधिः]

(भा) उपवेषान्तानि प्रयुज्य निर्वपणकाले वेद्याः परिश्रयणं वेष्टनं कट्यादिभिर्द्रव्यैः । स्रक्त्यामुत्तरस्यां [1]द्वारम् । शकटमारुह्य दक्षिणतः शकटस्यावस्थितः पात्र्या वा प्राचीनावीत्युपसादनान्तं निर्वपणाङ्गत्वात् । निरुप्येति चोदिता अज्यान्य उपसादनान्ते बद्धा इति तदन्तस्य निर्वपणाङ्ग[2]तेति ।

(निर्वापविधौ पक्षान्तरप्रदर्शनम्)

केचिन्निर्वपणमात्रम् । यदात्तूत्तरतः शकटस्य पात्र्या वा निर्वापः तदा प्रकृतिवत्सर्वम् । यवानां सर्वाणि ।

(वृ) निर्वपणाङ्गत्वात् । तदन्तस्य । कथं तदन्तस्य निर्वपणाङ्गत्वमिति चेत् ;—निरुप्येति—ङ्गतेति । आग्रयणं निरुप्यैता आहुतीरिति चोदितानामज्यानीनां सूत्रकारेण निरुप्य हविरुप[3]सन्नमित्युक्त्वा अथ [4]पञ्चाहुतीर्जुहोतीति विधानात् ।

केचिन्नि—त्रम्—[5]प्राचीनावीती तत्राप्युपसादनात्प्रागज्यानीनामेकः काल इत्युक्तत्वात् । दक्षिणतः प्राचीनवीती निर्वपतीति निर्वपणमात्रस्य चोदितत्वात् ।

यदा—र्वम्—यज्ञोपवीती ।

यवा—णि—यवा उत्तरत्र वक्ष्यन्ते ।

---

[1] द्वारमारभ्य दक्षिणतः—क. घ. ङ. द्वारमारुह्य शकट—घ. [2] ङ्गत्वात्—ङ. छ. [3] सन्नमप्रोक्षितं अवत्सथ—छ. [4] पञ्चाज्यानीर्जु—ग. घ. छ. [5] घ. पुस्तके—"प्राचीनावीती दक्षिणतः . . . चोदितत्वात् । तत्राप्यु . . इत्युक्तत्वात्" इति दृश्यते ।

(सू) [1]अथैकेषाम्। सोमाय पितृमत आज्यं, पितृभ्यो बर्हिषद्भ्यष्षट्कपालं, पितृभ्योऽग्निष्वात्तेभ्यो धानाः, अग्नये कव्यवाहनाय यमाय वा मन्थं यमायाङ्गिरस्वते पितृमते ॥ १६ ॥ ७१ ॥ २०६५ ॥

(भा) सोमाय पितृमते पितृभ्यो बर्हिषद्भ्यः पितृभ्योऽग्निष्वात्तेभ्य आज्यमुपांशुयाजधर्मेण अग्नये कव्यवाहनाय (यमाय वा) यमायाङ्गिरस्वते पितृमते[2] चेति देवता[3]त्रयं मन्थस्यैव विकल्पेन भवति। द्वितीयः कव्यवाहनः स्विष्टकृ[4]दर्थे विद्यते। एकेषां मतात्। सोम पितृमन् पितरो बर्हिषदः पितरोऽग्निष्वात्ताः अग्ने कव्यवाहन यमाङ्गिरस्वन् पितृमन्।

(वृ) देवता–ल्पेन भवति।––अग्नये कव्यवाहनायेति [5]मन्थदेवतायाः [6]प्रथमत्वात्।

द्वितीयः––मतात्––अग्निं कव्यवाहनं यजतीत्यत्र अथ यथाग्निङ्स्विष्टकृतं यजति इति वाक्यशेषात्।

(सू) [7]उदकुम्भः प्रोक्षणीभाजनं भवति ॥ १७ ॥ ॥ ७२ ॥ २०६६ ॥

[उदकुम्भस्यैव प्रोक्षणीपात्रता तत्रोपदेशपक्षश्च]

(भा) [8]सर्वं प्रोक्षणमुदकुम्भात्। उपदेशो हविःपात्रप्रोक्षणे कृतेऽग्निहोत्रहवण्यामेव प्रोक्षण्य [9] आनीयन्ते। तयोत्तराणि प्रोक्षणानीति।

---

1 आज्यमुपांशुयाजधर्मकम्। मन्थस्त्वाग्नेयविकारः। समानमन्यत्। मन्थदेवतास्तिस्रो विकल्पन्त अग्निः कव्यवाहनो यमः केवलः सगुणश्चेति। (ङ)
2 ते वेति–ग. घ. 3 त्रयमेकस्यैव–ग. 4 दर्थो विद्य–क. 5 मन्त्रेण मन्त्रदेवतायाः प्रधानत्वात्–ग. 6 प्रधानत्वात्–छ. 7 कुम्भ एव प्रोक्षण्यः संस्क्रियन्ते स्थाप्यन्ते च। (ङ) 8 सर्वप्रोक्षणमुद–क. घ. 9 आनीय तेन चोत्तराणि–क. ङ.

(वृ) सर्वे—प्रोक्षण्युद्रेकेण संयुत्य फलीकरणनिर्देशः हविःपात्रप्रोक्षणं कृत्वा इध्मादिप्रोक्षणार्थं हवण्यामानीय कुम्भस्थशेषेण संवपनमिति । स्वपक्षेऽपि तु संवपनार्थमुत्तरत्र प्रोक्षणार्थं चोदकुम्भस्थमेवेति ।

(सू) [1]प्रोक्षण्युद्रेकेण यवान् संयुत्य त्रिष्फलीकृतांस्तण्डुलान् विभागमन्त्रेण विभज्य धानार्थान्निधायेतरान् पिष्टानि कृत्वा दक्षिणार्धे गार्हपत्यस्य षट्कपालान्युपधाय दक्षिणाग्नौ प्रथमेन कपालमन्त्रेण धानार्थं कपालमधिश्रयति ॥ १८ ॥
॥ ७३ ॥ २०६७ ॥

[तत्र हविषां यवमिश्रतण्डुलैर्निष्पादनादि]

(भा) उद्रेकः शेषः, तेनावहननकाले यवा मिश्रयन्ते, अतश्च [2]सर्वे [3]यवाः । प्रक्षाल्य विभागः [4]पेषणार्थत्वात्कृष्णाजिना[5]दीनाम् । कृष्णाजिनादानात् प्राक् इदं सोमस्य पितृमतः, इदं पितॄणां बर्हिषदाम् । पितॄणामग्निष्वात्तानां[6], अग्नेः कव्यवाहनस्य यमस्य वा, यमस्य अङ्गिरस्वतः पितृ[7]मतो वा, षट्कपालस्य वा पेषणादि । आद्यैर्मन्त्रैः षट्कपा[8]लानि दक्षिणे भागे धानार्थस्याधिश्रयणम्, [9]प्रक्षाल्योपवेषं धानार्थानामप्युत्प्लवनम् । घर्मौ स्थो विश्वायुषाविति धानार्थानामधिश्रय[10]णम् । अनूह उपदेशः ।

---

[1] उद्रेकः शेषजलम् । तेन यवान् मिश्रयित्वावहन्ति । ततः प्राक्कृष्णाजिनादानात्कृत्वा विभागस्यावृता पुरोडाशार्थान्विभज्य पिनष्टि । कपालमधिश्रयति उपदधातीत्यर्थः (रु). [2] सर्वयवानां प्रक्षाल्य–च. [3] यवा एव–ग. [4] गः प्रोक्षणार्थत्वात्–क. [5] नादानस्य–ग. च. [6] नाम् । एकेषां मते त्विदं पितॄणां बर्हिषदाम्, इदं पितॄणामग्निष्वात्तानां अग्नेः–ग.घ.ङ. [7] मतः । षट्कपा–क.ग. [8] लान्युपधाय द–च. [9] प्रक्षालनम्–घ. [10] णम् । हविर्द्वित्वात्–ग. क. घ.

(वृ) **उद्रे--यवाः** । निर्वपणकाले यवोपदेशाभावेऽपि यवान् संयुत्येति विशेषवचनात्सर्वे [1]यवा एव । सर्वाणि हवींषि यवमयानि ।

**प्रक्षा--भागः** । तण्डुलान् प्रक्षाल्योत्करे निनीय विभागः कृतः —

**पेषणा--दीनाम्** । धानानां पेषणार्थत्वात् पेषणार्थकृष्णाजिनादानात् प्रागेव विभागः । व्यावर्तध्वमित्यादिना विभज्योपलक्षयति ।

**इदं– मतो वा** । अस्मिन् पक्षे सोमस्याज्यहविष्ट्वान्न विभागनिर्देशौ ।

**षट्कपालानि—गार्हपत्यस्य** आचैरिति अन्ताल्लोपपरिभाषया ।

**धाना--णम्** ।—दक्षिणाग्नौ धानाभर्जनार्थस्य कपालस्याधिश्रयणम् । उत्तानस्योपधानम् ।

**प्रक्षा--वेपं** । गार्हपत्यसंसर्गप्राप्तौष्ण्यस्य दक्षिणाग्नौ संसर्गभया[2]त्प्रक्षालनं धानार्थानामप्यूहेन ।

**धाना--णम्** । भर्जनावस्थायां हविर्द्वया[3]वस्थस्य संसर्गित्वात् ।

(सू.) **[4]अधिश्रयणकालेऽधिश्रयणमन्त्रेण तण्डुलानोप्य बहुरूपा धानाः करोति ॥ १९ ॥ ७४ ॥**

**॥ २०६८ ॥**

---

[1] यवाः स–छ. [2] त्क्षालनम्–घ.छ. [3] यावस्य–घ. [4] बहुवदूहोऽधिश्रयणमन्त्रस्य बहुवदुत्तत्त्वेर्धानानां मन्त्रसमवायेऽपि बहुत्वाविशेषाच्च । किंच तण्डुलानोप्येति वचनात् तेषां बहुत्वाच्च । बहुवदेवोहश्च धानासु न्याय्यः । अन्ये तु हविर्द्वित्वाद्द्विवदूहन्ति । तत्र प्रथनादीन्यर्थलुप्तानि निवर्तन्ते । पर्यग्निकरणं तु स्वेनाग्निना क्रियते । पाकविशेषेण शुक्लकृष्णादिभावात् बहुरूपा भवन्तीत्यर्थः, अहोरात्राणामभिजित्या इति लिङ्गात् । (र)

(भा) बहुरूपा धा[1]नाः— नानारूपाः दग्धा अदग्धा ईषद्दग्धा इति।

(सू) [2]विदह्यमानाः परिशेरत इति विज्ञायते ॥ २० ॥

॥ ७५ ॥ २०६९ ॥

त्रयोदशी खण्डिका

---

[ईषद्दह्यमानानामूष्मणैव पाकाय यावदुद्वासनमवस्थानं, इति-कर्तव्यतायामुपदेशपक्षश्च]

(भा) परिशेरते--तिष्ठन्ति। विदह्यमानाः–विविधं दह्यमा[3]नाः। [4]न घट्यन्ते न सन्नह्यन्ते। स्वेन स्वेनाग्निना पर्यग्निकरणम्, [5]धानार्थक-पालस्याप्यध्यूहनमङ्गाराधिवर्तनं च। तद्गतेनोष्मणा पाकात्। नोपदे[6]शः। न प्रथनादीनि पर्यग्निकरणवर्जानि धानानाम्। आप्यनि-नय[7]नान्ते उत्तरपरिग्रहादि।

[षट्कपालहविषो धानानां च पर्यग्निकरणार्हाग्निकथनम्]

(वृ) स्वेन–करणम्—षट्कपालस्य गार्हपत्याग्निना। धानानां दाक्षिणाग्निना।

[ऊष्मणैव पाको नाङ्गारक्षेपेण]

**धाना–नं च**—उदकाहरणाभावात्कपालगतोष्मणा पाक-[8]निर्वृत्तेः।

**नोपदेशः**—चरुवदधोगतेनोष्मणा पाकसिद्धेरङ्गारेण [9]सह-भर्जनस्यानुचितत्वात्।

---

[1] नाः विदग्धा ईषद्दग्धा इति क–ङ. [2] ताः प्रथममीषत्पक्वाः सत्योऽ-त्रैवोद्वासनाद्दह्यमानाः परिशेरते न तु विदाहभयात्तदानीमेवोद्वासयेदित्यर्थः। तथा च भारद्वाजः ता अत्रैव विदह्यमानाः परिशेरत आ हविषामुद्वासनादिति। (रु). [3] नाः घट्यन्ते स्वेन–क. [4] नावघट्यन्ते–घ. [5] धानाकपा–घ. च. [6] शः प्रधानानि. पर्य–क. [7] नादुत्तर–क. नाद्युत्तर–ग. [8] निर्वृत्तिः–ग. [9] सह हविर्भर्ज–घ.

(वृ) न प्र–ग्रहादि–पट्कपालस्याप्यलेपनियनादूर्ध्वमुत्तरपरिग्रहाद्येव ।

(सू) [1]सम्प्रैषकाले पत्नीवर्जं सम्प्रेष्यति ॥ १ ॥ ॥ ७६ ॥ २०७० ॥

[पत्नीव्यातिरिक्तानां सम्प्रैषः]

(भा) "नान्वास्ते पत्नी" इति श्रुतेः । असन्नद्धाऽपि ।

[पत्न्यन्वासननिषेधे प्रमाणप्रदर्शनम्]

(वृ) नान्वा—तेः । यद्यपि सूत्रकारेणान्वासननिषेधो न कृतः । तथापि न पत्न्यन्वास्ते इति श्रुतेर्नान्वासनम् ।

असन्नद्धापि । पत्नीवर्जं संप्रेष्यतीति वचनात् असन्नद्धाऽपि भवति ।

(सू) [2]आज्यग्रहणकाल उत्तरेण गार्हपत्यं चतुर्गृहीतान्याज्यानि गृह्णाति ॥ २ ॥ ७७ ॥ २०७१ ॥

प्रोक्षणीनामभिमन्त्रणादि कर्म प्रतिपद्यते ॥ ॥ ३ ॥ ७८ ॥ २०७२ ॥

[होमार्थमाज्यग्रहणकालस्थानादिकम्]

(भा) [3]आज्ये प्रोक्षणीपु चोत्पूयमानासु अभिमन्त्रितासूत्तरेण गार्हपत्यमाज्यग्रहणम् । उपभृति द्वाभ्यां प्रयाजार्थाभ्यां द्वाभ्यामनूयाजार्थाभ्यां [4] च । ग्रन्थिविस्रंसने [5] कृते दर्भैरन्तर्धानादि ।

(वृ) ग्रन्थि–ते––पूषा ते ग्रन्थिमिति ।

---

1 पत्नीकार्यं सर्वमपि निवर्तते न पत्न्यन्वास्त इति श्रुतेः । गृहेष्वासीनाऽऽज्यमवेक्षत इति सत्याषाढः । (रु). 2 चतुर्गृहीतान्याज्यानीत्ययमवभृथे व्याख्यातः । उत्तरेण गार्हपत्यमाज्यं प्रत्याहृत्य गृह्णाति । (रु). 3 आज्यप्रो–क. ङ. छ. 4 भ्याम्–ङ. छ. 5 कृते स्तरणकाले दर्भैर–ग. घ.

(सू) [1]स्तरणकाले बर्हिषा त्रिः प्रसव्यं वेदिं स्तृणन् पर्येति ॥ ४ ॥ ७९ ॥ २०७३ ॥

(भा) सर्वमादाय बर्हिः प्रसव्यं[2] स्तृणन् गच्छति । [3]यथा सर्वे वेदिः स्तीर्यते । त्रिरावृत्तिर्मन्त्रस्य ।

[भाष्ये मन्त्रस्य त्रिरावृत्तिकथनं पक्षान्तरे पञ्चधावृत्तेरपि प्रदर्शनार्थम्]

(वृ) त्रिरावृत्तिर्मन्त्रस्य–यद्यपि धातुभेदेन स्तरणं नास्ति । तथापि प्रकृतौ मन्त्रस्य त्रिरावृत्तेर(वगतत्वा)ङ्गत्वात् त्रिरिति प्रदर्शनं पञ्चधातुपक्षे पञ्चधावृत्तिः ।

(सू) [4]औद्धवान् धारयमाणास्त्रिरस्तृणन् प्रतिपर्येति ॥ ५ ॥ ८० ॥ २०७४ ॥

[5]औद्धवः प्रस्तरः ॥ ६ ॥ ८१ ॥ २०७५ ॥

[6]प्रस्तरस्य ग्रहणसादने तूष्णीम् ॥ ७ ॥ ८२ ॥ ॥ २०७६ ॥

[7]न विधृती ॥ ८ ॥ ८३ ॥ २०७७ ॥

[8]द्वौ परिधी परिदधाति ॥ ९ ॥ ८४ ॥ २०७८ ॥

[9]मध्यमोत्तरौ ॥ १० ॥ ८५ ॥ २०७९ ॥

सर्वान् वा ॥ ११ ॥ ८६ ॥ २०८० ॥

---

[1] प्रस्तरकर्मवर्जमा स्तरणात्कृत्वा सर्वं बर्हिरादाय सर्वां वेदिं त्रिर्मन्त्रेण संस्तृणन् प्रसव्यं पर्येति । अवशिनष्टि च मुष्टिम् (रु). [2] व्यं वेदिं स्तृ–च. [3] यदा सर्वे वेदिः त्रिरा–क. यदा सर्वा–ग. [4] स्तरणार्थमुद्धूयमाने बर्हिषि येऽवशिष्टास्त औद्धवाः । (रु). [5] औद्धवमय एव प्रस्तरो भवेत् ॥ (रु). [6] तमेव प्रस्तरमस्मिन् काले तूष्णीं गृहीत्वा तस्मिन् पवित्रे अपिसृज्य सादनकाले तूष्णीमिवासादयति । (रु). [7] गतः (रु). [8] कौ द्वौ (रु). [9] तेन द्वौ परिधी परिदधातीति ब्राह्मणव्याख्येयमिति द्रष्टव्यम् । याजमाने तु परिधी दधामीत्यूहः । तथाऽग्नेःपरिधी यज्ञस्य पाथ उपसमिद्धि यजमानं प्रथतमित्यूह्यानि ॥ (रु).

[औद्धवप्रस्तरपरिधिपरिधानादिकम्]

(भा) औद्धवाः स्तरणं कुर्वतः कतिपयाशिष्टा हस्ते । तान् धारयमाणः प्रतिनिवर्तते पुनः । स प्रस्तरः । तस्मिन् पवित्रे अपि सृज्य प्राणापानाभ्यां त्वेति प्रदाय पुनरुपादाय परिधी परिदधाति मध्यमोत्तरौ । अभिमन्त्रणाद्याघारसमिदन्ते[1] स्तरणं प्रस्तरस्य तूष्णीमेव । न विष्णोः स्तूपोऽसीत्याहवनीयं [2]प्रतिग्रहणम् । केचित् सञ्ज्ञानार्थामित्यपादानं तूष्णीमाहुः । अविक्षोभाय परिधी दधामीत्यूहः । यदा तु सर्वे परिधयस्तदा निवित्सूक्तासु[3] दक्षिणो मध्यमेन परिधिना सह स्थाप्यते ।

[औद्धवपदार्थः]

(घृ) ओद्धवाः—स्तीर्णावशिष्टा हस्तस्था दर्भा औद्धवा इत्युच्यन्ते ।

तान् धा–स्तरः—स्तरणाशिष्टानामौद्धवानां प्रस्तरत्वम्, अतो न पूर्वं प्रस्तराहरणम् । अत्र चावशेषणं प्रस्तरप्रमाणस्य कुश्म्यादि-[4]मात्रस्य ।

[तूष्णीमेव स्तरणादिकम्]

तस्मिन्–रस्य—सूर्यस्त्वेत्यभिमन्त्रणम् । [5]तूष्णीमेव तत्स्तरणम् । तूष्णीमेवापादानम् । तूष्णीमे[6]वापादानमाहवनीयं प्रति ।

न वि–यं प्रतिग्रहणम्—यत्प्रस्तरं यजुषा गृह्णीयादिति [7]निन्दित्वा तूष्णीमेव न्यस्येदिति वचनात् । न च विष्णोः

---

[1] न्ते प्रस्तरस्य स्तरणं तूष्णीमेव–ग. [2] प्रतिप्रस्तरस्य–ग. च. [3] सु परिधीनां मध्यमां स्थाप्यते–क. [4] मात्रस्य साधारणम्–ग. छ. [5] तूष्णीमेव न्यस्येदिति वचनात् तत्स्त–छ. [6] मेव ग्रहणमापा–घ. [7] निन्दितत्वात्–छ.

(वृ) स्तृपोऽसीत्यस्मिन् काले प्रस्तरापादानम् । पुरस्तात्प्रस्तरग्रहणाभावात् ।

[पक्षान्तराशयः]

**केचि–हुः**—स्तरणशेषत्वात्प्रस्तरस्य ; पृथगपादानाभावात् कर्षन्निवाहवनीयमित्यस्य प्राप्त्यभावात् सञ्ज्ञानार्थामिति विधृतीभ्यामपादानं तूष्णीमित्याहुः ।

(सू) [1] **यदि सर्वानावाहनकाले परिधी स्रपोर्ण्विति वाऽभिज्ञाय दक्षिणं मध्यमे परिधावुपसमस्येत् ॥ ॥ १२ ॥ ८७ ॥ २०८१ ॥**

(भा) द्वितीयया वा पुरोऽनुवाक्यया सह सोमस्य पितृमतः परिधी स्रपोर्ण्विति वाऽभिज्ञाय प्रस्तरसादनादि ।

(वृ) **द्वितियया वा–क्यया**—सोमस्य पितृमतः [2] पुरोनुवाक्योच्चारणकाले प्रथमप्राप्तत्वात् ।

(सू) [3] **उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति ॥ १३ ॥ ८८ ॥ ॥ २०८२ ॥**

---

1 सर्वपक्षे त्वावाहनकाले वा सोमस्य पितृमतः पुरोनुवाक्यायां परधी स्रपोर्ण्विति शब्दं श्रुत्वा वा दक्षिणमपि मध्यमेन सह निदध्यात् ॥ (रु). 2 तः प्रस्तरसादनादि पु–क. 3 धानास्वभिमन्त्रणादिमन्त्राणां बहुवदूहः पूर्ववत् तथा धाना उद्वास्येति वचनाच्च । तत्रोद्वासनमन्त्रस्याद्ययोः पदयोर्लिङ्गविरोधाल्लोपः न वा प्रथमलुपदस्य चोदितप्रयत्नाभावेऽपि पच्यमानानां प्रथमलुत्वसंभवात् । तथा चरुपरिवापयोरपि द्रष्टव्यम् । धानास्तूद्वास्य विभज्य याः पितृणां बर्हिषदां ता द्वितीयस्यां पात्र्यां तूष्णीं प्रतिष्ठाप्याज्येन मिश्रयति ॥ (रु)

(भा) षट्कपालोद्वासनान्ते धानाः कपालादुद्वास्यन्ते[1] शृतावुत्स्नातौ जरितारौ मतीनामिति । [2]केचित्तु बहुवचनेन, [3]सर्वधानानां बहुवच[4]नचोदितत्वात् । [5]न त्वेवम् । यद्येकवचनेन चोदयेरन् एकैव धाना हविः स्यात् । सर्वाण्यग्नीषोमीयविकाराणि । [6]सोमस्यापि प्रकृतिदेवतात्वात् । यदाज्यं सोमस्य पितृमतः तदोपांशुयाजविकारत्वम् । मन्थदेवता[7]श्चाग्नेयविकारा एकेषां मतेन । [8]सकपालानां तूष्णी-मुद्वासनमुपदेशः यथाभागं व्यावर्तेथामिति विभज्य स्वस्यां निधाय पात्र्यामाज्येनार्धं तूष्णीं मिश्रयति ॥

(वृ) षट्कपा–स्यन्ते—पात्रान्तरेण ।
यद्येक–स्स्यात्[9]—पुरोडाशादिवत् ।
सर्वा–राणि—अक्षरसङ्ख्यावशात् ।
सोम–त्वात्—प्रकृतिदेवतात्वादेवाग्नीषोमीय[10]विकारत्वात् ।
तूष्णीमुद्वासनम्—सौकर्यप्राप्तम् ।

(सू.) [11]अर्धाः पिष्टानामावृता सक्तून् कृत्वाऽभिवान्यायै दुग्धस्यार्धशरावे सक्तूनोप्यैकयेक्षुशलाकयेक्षुकाण्डेन वा दक्षिणामुखास्त्रिः प्रसव्य-मनारभ्योपमन्थति ॥ १४ ॥ ८९ ॥ २०८३ ॥

---

1 न्ते भुवनस्य गोपौ शृता–क. ग. ङ. च. छ. 2 केचिद्बहु–क. 3 सर्वासां धानानां चोदि–च. 4 वचनेन चोदि–छ. 5 नन्वेवं य–क. 6 सोमस्य प्रकृ–घ. 7 ता। त्वाग्नेय–घ. 8 सह कपा–घ. षट्कपा–च. 9 इदं–घ. कोशे न दृश्यते. 10 विकारत्वम्–घ. च. 11 अभिवान्या व्याख्याता काण्डशलाके च । तस्या दुग्धस्यार्धशरावे शरावार्धपरिमिते दुग्धे सक्तूनोप्य तस्मिन्निक्षुकाण्डं शलाकां वा रज्ज्वा बद्धाऽवधाय साक्षादनन्वारभमाणो रज्ज्वा मन्थति (रु).

[दुग्धे सक्तुमिश्रणमन्थनादि]

(भा) [1]अर्धांश्च सक्तून् करोति । प्रिष्टानां [2]क्रियया कृष्णाजिनादानाद्यणूकरणान्तेन [3]चतुर्थ्याधिवापः । अर्ध[4]पूर्णे मल्लके पात्रीस्थानीये सक्तून् क्षिपति । बद्धाऽन्येन मन्थति अनारभ्य ।

[अर्धशरावपदार्थः]

(वृ) अर्धशराव इति मध्यमपदलोपी समासः । अर्धपूर्णः शरावोऽर्धशरावः । मृतवत्सायाः [5]परवत्सेन दुह्यमानायाः पयसाऽर्धपूर्णे शरावे सक्तून् क्षिपति ।

बद्धा—[6]अन्वारम्भनिवृत्तिः ।

(सू) [7]शलाकास्थं मन्थं कृत्वैकैकशो हवींष्यासादयति ॥ १५ ॥ ९० ॥ २०८४ ॥

[हविरासादनविधिः]

(भा) शलाका तिष्ठति यस्मिन् मन्थे स शलाकास्थः । एतत्कृत्वालङ्कृ[8]त्यासादयति । आसादनमन्त्रस्यावृत्तिः प्रियेणेत्यस्य ।

(वृ) मन्थशब्दः सक्तुवाची ।

आसा–त्यस्य—एकैकश आसादनात्[9] ।

(सू) [10]दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसाद्य निधाय सामिधेनीभ्यः प्रतिपद्यते ॥ १६ ॥ ९१ ॥ २०८५ ॥

---

[1] अर्घांश्च–क. ङ. च. [2] क्रिया कृष्णाजिनान्तेन–ग. ङ. क्रियया कृष्णाजिनान्तम्–घ. च. [3] चतुर्थ्याधिवापः सक्तून् येन मन्थति–च. [4] पूर्णके म–क. च. [5] वा परवत्सेन दुह्यमाना तस्याः पय–छ. [6] अयं छ-कोशे न दृश्यते । [7] अथ धानालङ्करणे देवो वः सविता तृप्तयः स्थेत्यूहः । शलाकास्थं मन्थं कृत्वा यथा शलाकायां मन्थस्तिष्ठति तथा शलाकां शरावे क्षिपेदित्यर्थः । हविषामासादने प्रियेणेत्यावृत्तिः (रु). [8] कृत्य सादनं मन्त्रस्य चावृत्तिः प्रियेणेति–क. ङ. [9] नात् कशिप्वादीनामपठितत्वात्–ग. [10] कशिप्वादि व्याख्यातं पिण्डपितृयज्ञे (रु)

[कशिपूपबर्हणासादनादिकम्]

(भा) अयं यज्ञो ममाग्ने इति कृते आसन्नाभिमर्शने ततः कशिप्वा[1]द्या-सादनम्। [2]केषांचिन्मतेनाग्नेयवन्मन्थस्य, [3]एवमेकैकशः।

(वृ) अयं-मर्शने—चतुर्होतुरपि प्रदर्शनम्।

[कशिप्वाद्यासादने क्रमप्रदर्शनम्]

ततः-दनम्—उदकुम्भमित्येकैकश आसाद्य वेदं निधायेति क्रमनिर्देशात्, कृत आसन्नाभिमर्शने वेदनिधानादेः पुरस्तात्कशिप्वादीनामासादनम्।

केषां-न्थस्य—यज्ञोऽसीत्यादि एकदेवतत्वात् [3]एकमेकमेकैकशः।

(सू) [4]अग्नये देवेभ्यः पितृभ्यः समिध्यमाना-यानुब्रूहीति सम्प्रेष्यति ॥ १७ ॥ ९२ ॥ २०८६ ॥

[प्रैषे नोहः]

(भा) अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति [5]नित्ये नोहः।

(वृ) अविकारपक्षेऽप्येवमेव पाठितत्वात्।

(सू) [6]एकां सामिधेनीं त्रिरन्वाह उशन्तस्त्वा हवामह इत्येताम् ॥ १८ ॥ ९३ ॥ २०८७ ॥

[7]एकामनूयाजसामिधमवशिष्य समश इध्मं त्रैधं विभज्य त्रिरादधाति ॥ १९ ॥ ९४ ॥ ॥ २०८८ ॥

[8]समानमाप्रवरात् ॥ २० ॥ ९५ ॥ २०८९ ॥

---

1 प्वादीनामासा–घ. 2 एकेषां मंत–क. घ. च. छ. 3 एकमेकैकशः–च. छ. 4 प्राकृतस्यायं संप्रैषस्य प्रत्याम्नायः न तूहः (रु). 5 नित्यो नोहः–क. ङ. छ. 6 होतेति शेषः (रु). 7 त्रैधमिति विस्पष्टार्थम् (रु). 8 गतः (रु).

[सामिधेन्यास्त्रिवारता, इध्माधानक्रमश्च]

(भा) उशन्तस्त्वेत्येषैवैका बहुयाज्यादीनामपि। नापरिमितमुच्यते। त्रिरेव। नैमित्तिकस्यापि प्रत्याम्नायः प्रत्यक्षविधिः सर्वत्र। समशः–समविभागेन। त्रेधम्–त्रिभिर्भागैः।

(वृ) उशन्त–स्सर्वत्र—एकां सामिधेनीमिति प्रत्यक्षविधानात् वैश्यादीनामपि।

समशः—अविशेषात्।

(सू) [1]नार्षेयं वृणीते न होतारम् ॥ २१ ॥ ९६ ॥ ॥ २०९० ॥

[2]अथाप्याह सीद होतरिति। एतावान् प्रवरः ॥ २२ ॥ ९७ ॥ २०९१ ॥

[आर्षेयवरणनिषेधः, तत्र पक्षान्तरकथनं च]

(भा) आर्षेयवरणप्र[3]तिषेधे होतुरध्वर्योश्च प्रतिषेधः प्रवरस्य। केचिदध्वर्योरेव। न होतुः, वेदान्तरकारित्वात्। अग्निरार्षेयो देवो होता, मानुषो होतैव। आर्षेयवरणप्र[4]तिषेधे देवाः पितर इत्यस्यापि [5]निवृत्तिरिति। केचिदन्यवरणशङ्कासमाध्यर्थोऽयमिति।

(वृ) आर्षेय–रस्य—अविशेषात्।

[होतृवरणप्रतिषेधाभावपक्षसमर्थनम्]

केचित्–त्वात्—बह्वृचवेदोक्तकारित्वाद्धोतुः। अस्मदीय-[6]हौत्रस्यापि तच्छेषत्वात्। ऋग्वेदे चार्षेयवरणप्रतिषेधाभावात् न होतृ[7]वरणप्रतिषेध इति।

---

[1] अग्निर्देवो होतेत्यादि मानुषान्तं निवर्तते (रु). [2] क इदमित्यध्वर्युरवस्थायाश्राव्यार्षेयस्थाने सीद होतरित्येतावदाह। तत्रार्षेयाभावात् देवाः पितर इत्यस्य निवृत्तिर्याजमान एव दर्शिता (रु). [3] षेधो हो–ङ. छ. षेधेन हो–घ. [4] षेधात् देवाः–च. [5] निवृत्तिः–च. [6] शङ्कया स–च. [6] हौत्रविधेरपि–घ. [7] तृप्रवर-प्रतिषेध–घ. छ.

(वृ) अग्निरार्षे-ता—त्रयो वा अग्नय इत्युपक्रम्य य एव देवानां होता तं वृणीत इति निर्देशात् अग्नेश्च यजमानोत्पन्नतया तदार्षेयत्वात् अग्निर्देवो होता।

मानुषो-होतेव—[1] उभयवरणस्य निवृत्तिः।

[देवाः पितर इत्यस्यानिवृत्तिरेवेति भाष्यकृन्मतकथनम्]

आर्षेय-र्थोऽयमिति--स्वमते तु "सीद होतः" इत्यस्यापि प्रवरस्थानापन्नत्वात् देवाः पितर इत्यस्यानिवृत्तिः ॥ १२ ॥ ॥ ९७ ॥ २०९१ ॥

(सू.) [2]अपबर्हिषः प्रयाजानिष्ट्वा जीववन्तावाज्यभागौ यजति ॥ २३ ॥ ९८ ॥ २०९२ ॥

[3]आ नो अग्ने सुकेतुना रयिं विश्वायुपोषसम्। मार्डीकं धेहि जीवसे। त्वं सोम महे भगं त्वं यून ऋतायते। दक्षं दधासि जीवसे इति जीववन्तौ ॥ २४ ॥ ९९ ॥ २०९३ ॥

[4]अत्र वेद्याः परिश्रयणमेके समामनन्ति ॥ ॥ २५ ॥ १०० ॥ २०९४ ॥

चतुर्दशी खण्डिका

---

1 उभयोर्वरणस्य-घ. छ. [2] त्रीनिष्ट्वा पञ्चमार्थमर्धमौपभृतस्य समानयते (रु). [3] गत: (रु). [4] निर्वपणकालेऽन्न वा परिश्रयति (रु).

  

(सू) [1]विस्रस्य यज्ञोपवीतानि प्राचीनावीतानि कुर्वते। विपरिक्रामन्त्यृत्विजः। विपरिहरन्ति स्रुचो हवींषि परिश्रयणानीति ॥ १ ॥ १०१ ॥ ॥ २०९५ ॥

[आज्यभागोत्तरं प्राचीनावीतकरणम्]

(भा) बर्हिर्वर्जाः प्रयाजाः, पञ्चमार्थं समानयनम्। [2]पशौ च पञ्चमविकारेऽपि समानयनदर्शनात्। [3]शक्या [4]येषां काले विमोक्तुं ग्रन्थयः तेषां वाससां सूत्राणां वा पूर्वं क्रियते। आज्यभागाविष्टा तान् [5]विस्रस्य विमुच्य ग्रन्थीन् प्राचीनावीतानि कुर्वन्ति। पुनश्च ग्रन्थयः क्रियन्ते शक्या विमोकाय।

[ब्रह्मादीनां स्रुगादीनां च स्थानव्यत्ययकरणम्]

विपरिक्रामन्त्यृत्विजः–विविधं परिक्रामन्ति। ब्रह्मोत्तरतो गच्छति। होताऽऽग्नीध्रश्च दक्षिणतः। अध्वर्यु[6]श्च। विपरिक्रमणं स्थानपरिवर्तनम्। वि[7]परिहरणं च परिक्रयणानां पूर्वापरयोश्च दक्षिणोत्तरयो[8]श्च विपरिवर्तनं वचनकृतम्। स्रुचां हविषां च।

(वृ) **शक्या विमोकाय**–पुनर्विमोक्तुं शक्याः शिथिलाः।

**विपरि**–स्थानव्यत्ययः।

---

1 अथ सर्वे यज्ञोपवीतकृतानां वाससां सूत्राणां वा ग्रन्थीन् विस्रस्य प्राचीनावीतानि कृत्वा प्रक्रामेयुः। व्यत्ययेन परिक्रामन्ति च। ये दक्षिणतस्त उत्तरतो गच्छन्ति ये तूत्तरतस्ते दक्षिणत इत्यर्थः। तत्राग्रेणाहवनीयं पितृयज्ञस्य सञ्चरो भवतीति भारद्वाजः। ऋत्विग्ग्रहणं यजमानस्याप्युपलक्षणं, ब्रह्मयजमानावित्येक इति लिङ्गात्। तथा स्रुगादीन्यपि व्यत्ययेन हरन्ति। तत्र स्रुग्घविषोर्विपरिहरणमेव दर्शयति (रु). 2 अपशौ च–च. 3 शक्या ये विमोक्तुं ग्रन्थयस्ते वाससा सूत्रेण वा क्रियन्ते–च. 4 ये विमोक्तुं ग्रन्थयस्ते वाससा सूत्रणां च क्रियन्ते–घ. 5 विसृज्य–छ. 6 यौश्च–क. ङ. योश्च परि–च. 7 परिहारश्च–क. 8 श्च परि–क. च.

(सू.) [1] दक्षिणेन जुहूमुपभृतं सादयति। दक्षिणेनोपभृतं ध्रुवां दक्षिणेन पुरोडाशं धानास्ता दक्षिणेन मन्थम् ॥ २ ॥ १०२ ॥ २०९६ ॥

[2] समानत्र जुहूषट्कपालौ ॥ ३ ॥ १०३ ॥ ॥ २०९७ ॥

[जुहूपुरोडाशयोर्न स्थानव्यत्ययः]

(भा) जुहूश्च षट्कपालश्च [3] जुहूषट्कपालौ ।

(वृ) समानत्र—समानस्थाने[4] । अचलिता जुहूः षट्कपालश्च ।

(सू.) [5] ब्रह्मयजमानावित्येके ॥ ४ ॥ १०४ ॥ ॥ २०९८ ॥

[पक्षभेदेन ब्रह्मयजमानयोरपि न स्थानव्यत्ययः]

(भा) ब्रह्मयजमानौ [6] वा ।

(सू.) [7] षडवत्तः पञ्चावत्तिनां पञ्चावत्तश्चतुरवत्तिनाम् ॥ ॥ ५ ॥ १०५ ॥ २०९९ ॥

[यागेऽपि वैलक्षण्यम्]

(भा) षडवत्तहोमो भवति पञ्चावत्तिनां यजमानानाम् । पञ्चावत्तश्चतुरवत्तिनाम् ।

(सू) [8] सम्भिन्दन् पुरोडाशस्यावद्यति ॥ ६ ॥ ॥ १०६ ॥ २१०० ॥

---

[1] एवं कृत्वा परिश्रयणेषु पौरस्त्यं पश्चाद्धरति पाश्चात्यं च पुरस्तात् । एवं दाक्षिणात्योदीच्ययोर्मिथः (रु). [2] जुहूः पुरोडाशश्च सर्वकालमेकत्रैव स्थाने भवतः-(रु). [3] जुहूः षट्कपालश्च समानत्र-क. [4] ने पूर्वस्थाने अ-घ. [5] ब्रह्मयजमानौ वा समानत्र भवतः, जुहूषट्कपालौ तु विपरिहरन्त्येवेत्यर्थः (रु). [6] नौ च-घ. छ. नौ च वा-ग. [7] याग इति शेषः (रु). [8] सम्भेदः. संकरः । प्रकृतिवदवदानदेशानां नासंकरो भवतीत्यर्थः (रु).

[हविरवदानदेशसाङ्कर्यं तत्र पक्षान्तरं च]

(भा) सम्भेदः सङ्गमोऽवदानानां यथा भिद्यते तथाऽवदानं ग्रहीतव्यमिति। केचित् सम्भिन्दन्निति सम्यग्भेदाभिप्रायमिति।

(सू) [1]द्विः प्रथमस्यावद्येत्पञ्चावत्तिनः ॥ ७ ॥
॥ १०७ ॥ २१०१ ॥

[हविरवदानक्रमः]

(भा) प्रथमस्य हविषो द्विरवदानं पञ्चावत्तिनः। इतरयोः [2]सकृत् सकृत्, सन्ततश्रुतेः।

(वृ) प्रथ-त्तिनः--उपस्तरणाभिघारणाभ्यां पञ्चवत्तम्।
इतर-तेः--सन्ततमवद्यतीति श्रुतेः।

(सू) [3]जुह्वामुपस्तीर्य सोमाय पितृमतेऽनु स्वधेति सम्प्रेष्यति ॥ ८ ॥ १०८ ॥ २१०२ ॥
[4]सकृत्पुरोडाशस्यावद्यति सकृद्धानानां सकृन्मन्थस्य ॥ ९ ॥ १०९ ॥ २९०३ ॥

[सम्प्रैषावदानक्रमौ]

(भा) यागे यागे सर्वहविषां ग्रहणं प्रकृतिवत्प्लुतयः। स्वधाकारपक्षेऽपि अनु[5]स्व[6]धा इति।

---

[1] त्रिष्वपि वक्ष्यमाणेषु यागेषु प्रथमाद्धविषो द्विरवदेत्पञ्चावत्तिनः पञ्चवत्तत्वाय (रु).  [2] सकृत् सन्तत-क.  [3] अनु स्वधेत्यनुवाक्यां संप्रेष्यति (रु).  [4] त्रिभिरेतैरवदानैरुपस्तरणाभिघारणाभ्यां च चतुरवत्तिनः पञ्चावत्तं सम्पद्यते। पञ्चावत्तिनः पञ्चवत्तत्वं प्रथमस्य द्विरवदानादिति द्रष्टव्यम्। तत्र मध्यादेव सकृत्सकृदवदानं यागत्रयेऽपि। प्रत्यभिघारणं त्वन्तयाग एव भवति। धानासु तु मा भेः संविक्थाः मा ते हिंसारिति पदानां बहुवदूहः यथा मा भेष्ट संविजिध्वं मा वो हिंसिष्टेति। केचित्तु भरतमुद्धरेमनुषिञ्चतेति च कुर्वन्ति (रु). [5] स्व ३ धा-छ. [6] धाम्य इति-क.

(वृ) **प्रकृतिवत्**—[1] यस्मिन् स्वरे प्रकृतौ प्लु[2]तिः ।

(सू) [3] **दक्षिणतोऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखास्तिष्ठन् आ स्वधेत्याश्रावयति ॥ १० ॥ ॥ ११० ॥ २१०४ ॥**

[4] **अस्तु स्वधेति प्रतिश्रावयति। सोमं पितृमन्तं स्वधेति सम्प्रेष्यति। ये स्वधामहे इति यजति। स्वधा नम इति वषट्करोति॥ ११ ॥ ॥ १११ ॥ २१०५॥**

[आश्रावणप्रत्याश्रावणवषट्काराः]

(भा) आ स्वधेत्याश्रावणम् । अस्तु स्वधेति प्रत्याश्रावणम् । सोमाय पितृमतेऽनु स्वधा इति पुरोऽनुवाक्याप्रैषः । दक्षिणतोऽवस्थितो हविषां गृहीत्यवदानं मध्यादेवोदग्गत्वा । [5]आ३ स्वधा। अस्तु स्वा३धा। स्वा३धा नमः । आश्रुतप्रत्याश्रुतानि वा प्रकृतिवत् ।

(वृ) **दक्षि–ग्गत्वा**—दक्षिणामुखास्तिष्ठन् आ स्वा इत्याश्रावणप्रकारः । अस्तु इति प्रत्याश्रावणम् । स्वधा नम इति वषट्करणम् ।

[आश्रावणादिविधौ पक्षान्तरम्]

**आश्रु–वत्**—[6] अस्यार्थः-- [7] ‘उत्तमाक्षरस्याविकारमेक आहुरधिकस्स्यादित्यपरम्’ इत्यत्र अनयोरधिकपक्ष एव युक्तः, ऋचमुक्त्वा प्रणौतीति वचनात् ।

---

[1] यस्मिन् वर्णे प्र–**घ.** [2] प्लुतिः तत्र तत्रेति–**घ. छ.** [3] दक्षिणतोऽवदाय दक्षिणतः स्थित इत्यर्थः। तत्राश्रावयेत्यस्य स्थाने स्वधाकारः। तेन ओ श्रावयेति पक्षे ओ स्वधेति भवति (रु). [4] गताः (रु). [5] आस्वा३धा–**छ.** [6] घः–पुस्तकानुसारेणेयं वृत्तिः उत्तरसूत्रस्थस्य अधिकः प्रणव इति भाष्यस्यानन्तरं स्यादिति प्रतिभाति । [7] उत्तमस्याक्षरस्य विकारमाधिकं स्यादित्यनयोः पक्षयोरधिकपक्ष एवात्र नियतः प्र–**घ.**

(सू) स्वधाकारं तु प्रतिषिध्य बह्वृचवाजसनेयिनामाश्रुतप्रत्याश्रुतान्येव विदधाति[1] ॥ १२ ॥ ११२ ॥ ॥ २१०६ ॥

[2]द्वे पुरोऽनुवाक्ये अन्वाह ॥ १३ ॥ ११३ ॥ ॥ २१०७ ॥

(भा) अनुवाक्यामुक्त्वाऽधिकः प्रणवः बह्वृचवाजसनेयिनां विहितत्वात् ।

(सू) [3]ऋचमुक्त्वा प्रणौति । अपरामुक्त्वा प्रणौति ॥ ॥ १४ ॥ ११४ ॥ २१०८ ॥

[4]त्वं सोम प्रचिकित इत्येता आम्नाता भवन्ति ॥ १५ ॥ ११५ ॥ २१०९ ॥

[5]एका याज्या ॥ १६ ॥ ११६ ॥ २११० ॥

अग्निष्वात्ताः पितर इत्येषा । ये आग्निष्वात्ता येऽनग्निष्वात्ता अंहोमुचः पितरः सोम्यासः । परेऽवरे मृतासो भवन्तोऽधिब्रुवन्तु ते अवन्त्वस्मान् । वान्यायै दुग्धे जुषमाणाः करम्भमुदीराणा अवरे परे च । अग्निष्वात्ता ऋतुभिः संविदाना इन्द्रवन्तो हविरिदं जुषन्तामिति पितृभ्योऽग्निष्वात्तेभ्यः ॥ १७ ॥ ११७ ॥ २१११ ॥

[पुरोऽनुवाक्याविधिः]

(वृ) त्वं सोम प्रचिकित इत्येता आम्नाता भवन्तीति । सोमस्य पितृमतः पुरोऽनुवाक्याद्वयम् । त्वं सोम पितृभिरित्येका याज्या ।

---

1 श्रुतिरिति शेषः (रु). 2 सर्वेषु यागेषु द्वे द्वे अन्वाह (रु). 3 द्वयोरप्यनुवाक्ययोः प्रणवः कार्य इत्यर्थः (रु). 4 याज्यानुवाक्या इति शेषः (रु). 5 याज्यास्त्वेकैका भवन्ति (रु).

बर्हिषदः पितरः, आहं पितॄनिति बर्हिषद्भ्यः पुरोऽनुवाक्ये । उपहूताः पितर इति याज्या । अग्निष्वात्ताः पितर एह गच्छते[1]त्येकानुवाक्या । ये अग्निष्वात्ता इति द्वितीया सूत्रपठिता । वान्यायै दुग्धे इति सूत्रपठिता याज्या ।

(सू) [2]उपांशु परिश्रिते पितृयज्ञेन चरन्ति ॥ १८ ॥ ॥ ११८ ॥ २११२ ॥

[3]एतेनैव कल्पेन पितॄन् बर्हिषदौ यजत्यग्निष्वात्तान् ॥ १९ ॥ ११९ ॥ २११३ ॥

[4]अग्निं कव्यवाहनं स्विष्टकृदर्थे यजति ॥ २० ॥ ॥ १२० ॥ २११४ ॥

[बर्हिषदामग्निष्वात्तानां च पितॄणां स्विष्टकृतश्च यागविधिः]

(भा) उपांशु प्रचरन्ति पितृयज्ञेन । पुनः परिश्रितवचनात् स्विष्टकृत्कव्यवाहने [5] उपांशु । एष विधिरुत्तरेषां यः सोमस्य । यदा कव्यवाहनाय मन्थस्तदाऽपि स्विष्टकृदर्थो द्वितीयः कव्यवाहनः । सोमं पितृमन्तं यज पितॄन् बर्हिषदः । पितॄनग्निष्वात्तान् । अग्निं कव्यवाहनं यमं वा । यममङ्गिरस्वन्तं पितृमन्तं वा । यदा सोमस्य आज्यं तदा[6]ऽपि ध्रौवादीनां [7]सकृदवदायाभिघारणमेव ध्रुवायाः ।

---

1 तेत्यग्निष्वात्तानामेका–घ. 2 पुनः परिश्रितवचनमादरार्थम् (रु). 3 योऽयं सोमस्य पितृमतो याग उक्तः स्वधाकारोद्गतिक्रमणादिरेतेनैव पितॄन् बर्हिषदो यजति पितॄनग्निष्वात्तांश्चेत्यर्थः (रु). 4 एतेनैव कल्पेनेत्येव, तस्यापि पितृत्वाविशेषात् । तत्राग्नये कव्यवाहनाय स्विष्टकृतेऽनु स्वधेति तु कल्पान्तरकाराः । यदा त्वग्नये कव्यवाहनाय मन्थः तदाऽपि स्विष्टकृदर्थे द्वितीयोऽग्निः कव्यवाहनो भवत्येव (रु). 5 नेप्युपांशुत्वमेव, एष–ग. घ. च. 6 दा ध्रुवादीनां–क. ङ. च. 7 सकृत्सकृद–घ. च.

पञ्चावत्तश्चतुरवत्ति[1]नामिति पक्षे द्विः प्रथमं ध्रुवायाः । षडवत्तः पञ्चावत्ति[2]नामिति पक्षे । नोपस्तरणं सोऽप्ययाज्ये ।

[स्विष्टकृतोऽप्युपांशुत्वविधिः]

(वृ) स्विष्ट--शु—अस्यार्थः—परिश्रितवचनमन्येषामसंप्रज्ञानार्थम् । यथा परोक्षं गुहावने याजयेदिति । अतः स्विष्टकृतोऽप्युपांशुत्वम् ।

एष वि–स्य—द्वे पुरोऽनुवाक्ये इत्यादि । एतेनैव कल्पेनेति वचनादग्निः कव्यवाहनः स्विष्टकृतोऽपि ।

यदा क--हनः—एकेषां मतेन ।

सोमं पि--याज्ये—अवदीयमाने उपांशुयाजधर्मकत्वात् । अभिघारणं तु बर्हिषदादीनाम् । सह विद्यमानत्वात् पञ्चावत्तसम्पत्त्यर्थं चाभिघारणम् ।

(सू) [3]यां देवतां यजेत्तद्धविषः प्रथममवदानमवद्यति ॥ २१ ॥ १२१ ॥ २११५ ॥

[4]स चावदानकल्पः ॥ २२ ॥ १२२ ॥ २११६॥

[इज्यमानदेवतोद्देशेन अवदाय पुनः प्रथमादवदानम्]

(भा) या देवतेज्यते तद्धविषोऽवदाय पुनः प्रथमादेव गृह्णाति स चावदानकल्प इति वचनात् । हुत्वा नारिष्ठान् स्विष्टकृदर्थेऽग्नये कव्यवाहनायानुब्रूहीति । कव्यवाहनत्वं स्विष्टकृद्गुणस्य निवर्तकम् । अग्नये कव्यवाहनाय स्विष्टकृत इति बोधायनः ।

(वृ) या देव--ह्णाति—क्रमेण ।

---

[1] नामिति द्विः—च. [2] नामिति । नो–च. [3] इज्यमानाया देवताया हविषः प्रथममवदाय तत इतराभ्यामुत्पत्तिक्रमेणावद्यति (रु). [4] पुरोडाशेज्यायामुक्तस्त्रिभ्योऽवदानकल्पः स एवोत्तरयोरपि हविषोरित्यर्थः । यदा तु सोमाय पितृमत आज्यं तदा पञ्चगृहीतेन षड्गृहीतेन वा ध्रौवेण सोमं पितृमन्तमिष्ट्वा ततोऽनयैवावृता हविर्भिर्यजति (रु).

स चाव--नात्—प्रथमं यष्टव्यदेवतावदानम् । अन्येषां हविरुत्पत्तिक्रमेण । पञ्चावत्तिनां प्रथमस्य द्विरवदानमिति ।

[नारिष्ठयागः कव्यवाहनस्य स्विष्टकृद्गुणकता च]

हुत्वा नारिष्ठान्—स्विष्टकृत्स्थानत्वात् ।

अग्नये--तकम्—अथो यथाऽग्निं स्विष्टकृतं यजतीति स्विष्टकृत्स्थान[1]त्वात्कव्यवाहनः स्विष्टकृद्गुणकः । पितॄणां कव्यवाहनः[2] गुणेन गुणान्तरस्य प्राकृतस्य निवृत्तेः ।

अग्नये-यनः—[3]कव्यवाहनेनेष्टं स्विष्टत्वं करोतीति स्विष्टकृद्गुणसम्पत्तेः ॥

(सू) [4]मन्थ इडामवद्याति मन्थं वैव ॥ २३ ॥

॥ १२३ ॥ २११७ ॥

[इडाया अवदानं तस्यानुपस्तरणं च]

(भा) वैश्वानरे हविरिरिति कृत्वा प्राशित्रं ततो मन्थ [5]इडामनुपस्तीर्य गृह्यते हविषोरितरयोः[6]। केवलो वा मन्थ इडा । तदाऽवदानमन्त्रस्य याजमानस्य[7] च निवृत्तिरर्थलोपात् ।

[तत्र भाष्यकाराशयवर्णनम्]

(वृ) वैश्वानरे—पात्रासंसर्गार्थत्वादुपस्तरणस्य मन्थे हविश्शेषे हविर[8]वदानान्नोपस्तरणम् । येषां चतुरवदानसम्पत्त्यर्थमुपस्तरणाभिघारणे

---

1 त्वादग्नेः स्विष्टकृत्त्वं गुणः--घ. 2 इन गुणेन–घ. 3 कव्यवाहनगुणेन स्विष्टं करोतीत्यस्य गुणस्य सम्पत्तेः–घ. 4 इडावदानकाले मन्थे किञ्चिदिडामवद्यति सर्वमेव वा मन्थमित्यर्थः । यथा इडाद्यानीडामवद्यति षड्भ्यो वेत्यादि तथा मन्थादिडामवद्यति । मन्थं वेत्येव कल्पान्तरकाराः । तत्रैव मन्थे इतराभ्यां हविर्भ्यामिडामवद्यति । मन्थमेव वा केवलं नेतरे हविषी इत्यपरे । तत्र त्वितरयोर्हविषोरिडाभ्रंशनेन दोषः (रु). 5 इडामुपस्ती–क. ङ. 6 रितरेतरयोः–च. 7 नस्य यजमानभागस्य च–च. 8 रन्तराव–घ.

यागेष्विति पक्षः तेषामपि पात्रासंसर्गः प्रधानकार्यम्। अर्थाच्चतुस्सङ्ख्या-सम्पत्तिरिति भाष्यकाराभिप्रायः।

[इडावदानमन्त्रनिवृत्तौ हेतुकथनम्]

केच–पात्—पात्रान्तरेऽवदानाभावादवदानमन्त्रस्य निवृत्तिः। अवदानाभावादेव सुरूपवर्षवर्ण इत्यस्यापि निवृत्तिः।

(सू) [1]मन्थं होत्र आदधाति ॥ २४ ॥ १२४ ॥
॥ २११८ ॥

(भा) अवघ्रेण [2]भक्षिते प्राशित्रे मन्त्रेण, या अप्स्वन्तरिति निवृत्तिरर्थलोपात्। केचिदभिमर्शनस्यापि [3]नाभ्यादेः।

[मन्थाघ्राणस्य समन्त्रकत्वामन्त्रकत्वपक्षौ]

(वृ) अव—अवघ्रेण सर्वभक्षा इति वक्ष्यति। अवघ्राणस्यापि भक्षणप्रकारत्वान्मन्त्रानिवृत्तिः।

या–लोपात्—आस्यगतप्राशित्रद्रव्यस्यान्तःप्रवेशार्थत्वादभ्यवनयनस्य अवघ्राणे च तत्कार्याभावान्निवृत्तिः।

केचिदभि–देः—निवृत्तिः। ऊर्ध्वं मे नाभेस्सीदेति भक्ष्यमाणद्रव्यनिर्देशात्तदभा[4]वान्निवृत्तिः।

(सू) तं होताऽवजिघ्रति ॥ २५ ॥ १२५ ॥
॥ २११९ ॥

पञ्चदशी खण्डिका.

———

[1] अवघ्रेण सर्वभक्षा इति वक्ष्यति। तेनोपहूतामिडां मन्थवर्जं भक्षणमन्त्रेणावघ्राय ततो मन्थांशं होतृहस्त आदधाति (रु). [2] भक्षिते प्राशित्रं मन्त्रेण–घ. भक्षिते प्राशित्रमन्त्रेण–ङ. [3] नाभेः–च. [4] वाल्लोपः–छ.

[होतृहस्तस्थस्य मन्थस्य क्रमेणावघ्राणविधिः]

(भा) अवघ्रेण प्राश्यावान्तरेडामिडां च षट्कपालधानानां[1] च मन्थं होत्रेऽवघ्राणार्थं तस्यैव हस्त आदधाति। तं होत्रादयः क्रमेणावजिघ्रन्ति [2] मन्त्रेणैव। यदाऽपि [3] केवलो मन्थ इडा तदाऽपि होतुर्हस्ते स्थितामेव।

(सू) [4] ब्रह्माऽध्वर्युरग्नीद्यजमानश्च ॥ १ ॥ १२६ ॥
॥ २१२० ॥
अपि वा न यजमानः ॥ २ ॥ १२७ ॥
॥ २१२१ ॥

[यजमानस्य मन्थानवघ्राणपक्षः]

(भा) न वा मन्थेडां यजमानः।

(सू) [5] समशो वा प्रतिविभज्यावघ्रेण भक्षयित्वा बर्हिषि लेपान्निमृजन्ते ॥ ३ ॥ १२८ ॥ २१२२ ॥

[होतृहस्तस्थमन्थस्य समशो विभज्य गृहीत्वा स्वस्वांशावघ्राणादिपक्षः]

(भा) समशः समैर्भागैर्विभज्य मन्थमवघ्रेण भक्षयित्वा [6] इडामन्त्रेण लेपनिमार्गो बर्हिषि। समप्रविभागपक्ष एव लेपनिमार्ग इति केचित्।

---

1 नां मन्थं-क. छ. 2 मन्त्रेणापि यदा-क. 3 केवल इडा तदाऽपि-ङ. च. 4 तं होतृहस्तस्थितमेव यथोक्तेन क्रमेणावजिघ्रन्ति। तेनैव मन्त्रेण ततः प्रस्तरे मार्जयन्ते। अथवा प्रतिपत्त्यन्तरमेतद्वैशेषिकं मन्थस्य। न त्विडाशेषः। तथोत्कर्षमप्यस्य पक्षे वक्ष्यति—अत्रैके भक्षणेत्यादिना। सत्याषाढश्चाह—मन्थमवघ्राणार्थं परिशिष्येडामिति। तेन मार्जनान्ते तूष्णीमवजिघ्रन्ति। प्राशित्रावघ्राणे त्वभ्यवनयनमन्त्रोऽर्थलोपान्निवृत्तः। प्राशनाभ्यभिमर्शनमन्त्रावपि लिङ्गविरोधादित्येके (रु). 5 विभज्य वा मन्थं स्वमंशमादायावजिघ्रन्ति (रु). 6 इडां म-च.

(वृ) सम-केचित्—आनन्तार्यात्समशः [1] प्रविभागेन समानकर्तृ-कत्वाच्च ।

(सू) [2] उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिं परिषिञ्चन् पर्येति ॥ ४ ॥ १२९ ॥ २१२३ ॥

[मन्थावघ्राणमार्जनवेदिपरिषेकादिकं, उपदेशपक्षश्च]

(भा) अवघ्राय मन्थं मनोज्योतिरिति मार्जनम् । तत उदकुम्भा-दानादि याजमानम् । कृते मार्जने मन्थावघ्राणमधिकम् । नेडाप्रत्या-म्नाय इत्युपदेशः । धानाषट्कपालेभ्यो यजमानभागः । यदाऽपि केवलो मन्थ [3] इडा । य आसादित उदकुम्भस्तमादाय शुन्धन्तां पितर इति सकृन्मन्त्रयित्वा [4] त्रिः परिषिञ्चति ।

(वृ) अव-जनम्—अवघ्राय बर्हिषि लेपं निमृज्य । ततः—प्राप्तभक्षणाबाधाय ।

धाना-इडा—पूर्वार्धाच्च यजमानभाग[5]मिति वैशेषिकप्राप्त त्वात् । केवलमन्थेडापक्षे सर्वेभ्योऽपि यजमानभागः ।

य-आ-प्रतिपर्याणे [6] ।

(सू) [7] निधाय कुम्भमयाविष्ठा जनयन् कर्वराणीति त्रिरपरिषिञ्चन् प्रतिपर्येति ॥ ५ ॥ १३० ॥ २१२४ ॥

---

1 गेनैककर्तृकत्वाच्च—घ. 2 वेद्यां सादितमुदकुम्भमादाय परिषिञ्चति । सकृन्मन्त्रः (रु). 3 इडाया आसा-च. 4 त्रिः प्रदक्षिणं परि—च. 5 मित्य-विशेषप्रा—घ. 6 णे त्रिः—च. 7 निधायैव कुम्भमपरिषिञ्चन् प्रतिपर्येति न तु हस्तस्थकुम्भमित्यर्थः। नन्वेवमसंभवादेवापरिषेकसिद्धेरनर्थकः प्रतिषेधः । सत्यमनर्थकः। तथाऽपि लौकिक एवायमुक्तिप्रकारो वैचित्र्याय कृत इत्यलमतिनिर्बन्धेन (रु).

[निधानानन्तरं पुनः कुम्भग्रहणेन सौत्रपरिषेकप्रतिषेधविधेस्सार्थक्योपपादनं, तत्र पक्षान्तरं च]

(भा) निधाय कुम्भं पुनर्गृह्णातीति केचित् , अपरिषिञ्चन्निति परिषेचनप्रतिषेधात्। यदि कुम्भो न गृह्येत परिषेकप्रतिषेधोऽनर्थक इति। द्रव्यान्तरेण वा मा भूत्परिषेक इति प्रतिषेधः। प्रतिपर्येति—निवर्तते त्रिरेव।

[द्रव्यान्तरप्राप्तपरिषेकप्रतिषेधकतया सौत्रपरिषेधस्योपपत्तिरिति भाष्यकृत्पक्षः]

(वृ) अपरि-षेधः—अस्यार्थः—परिषेकप्रतिषेधेन पुनः कुम्भोपादानमवगम्यते। निधाय कुम्भं त्रिः पर्येतित्युक्ते परिक्रमणस्य पूर्वतुल्यत्वाद्द्रव्यान्तरेणापि परिषेकः प्राप्नोतीति तत्प्रतिषेध इति स्वपक्षः।

(सू) [1] हविश्शेषान् संप्रोम्नाय पिण्डान् कृत्वा तिसृषु स्रक्तिषु निदधाति पूर्वस्यां दक्षिणस्यामपरस्यामिति एतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम् ॥ ६ ॥ १३१ ॥ २१२५ ॥

[2] त्रीन् परान् पितॄनन्वाचष्टे। षष्ठं प्रथमे पिण्डे। पञ्चमं द्वितीये। चतुर्थं तृतीये ॥ ७ ॥ १३२ ॥ ॥ २१२६ ॥

---

1 हविश्शेषान् सर्वमन्थेडापक्षे द्वौ। इतरथा त्रीन्। संप्रोम्नाय संप्रोत्पूर्वो मनतिर्मर्दने द्रष्टव्यः। रलयोरविशेषः। नलोपश्छान्दसः। संप्रमर्द्येति यावत् (रु).

2 प्रपितामहात्परानपि त्रीन् पितॄन् प्रातिलोम्येन त्रिषु पिण्डेष्वन्वाचष्टे। पित्रादिकीर्तनानन्तरं कीर्तयति नामभिरेव तेषामपि नानामगृहीतं गच्छतीति वचनात्। तद्यथा एतत्ते तत रुद्र विष्णो ये च त्वामन्वित्यादि। केचित्तु परान् पितॄन् प्रपितामहस्य प्रपितामह प्रपितामहस्य पितामह प्रपितामहस्य ततेत्यन्वाचक्षते (रु).

[प्रपितामहात्परेभ्यः पिण्डनिधानं, तेषां नामग्रहणनिषेधश्च ]

(भा) पुरोडाशधानाशेषान् संप्लोभ्नाय [1] विलोड्य [2] उपयुक्तो मन्थ इति। [3] उदकेन संप्लोभ्नाय पिण्डाः क्रियन्ते त्रयः। वेदिकोणाः सुक्तयः पूर्वाद्याः। तास्तु स्थापयति। परे पितरः षष्ठपञ्चमचतुर्थाः। नित्यानुक्ता ताननन्वाचष्टे तान् पश्चादुच्चारयति। न तेषां नामानि गृह्यन्ते। षष्ठादारभ्य [4] ये त्रयः तस्मादातृतीयात्पुरुषान्नाम न [5] गृह्णन्ति। एतत्ते तत देवदत्तप्रपितामहस्य प्रपितामह ये च त्वामन्विति पूर्वस्याम्। एतत्ते पितामहरुद्रदत्तप्रपितामहस्य पितामह ये च त्वमन्विति दक्षिणस्याम्। एतत्तेप्रपितामहविष्णुदत्तप्रपितामहस्य तत ये च त्वामन्वित्यपरस्याम्।

(वृ) उपयु–त्रयः—उपयुक्तशेषादेव पिण्डकरणमित्यत्र हेतु[6]रुक्तः, उपयुक्तो मन्थोऽवघ्राण इति।

न तेषां–तीति—आ तृतीयात्पुरुषादित्याङ् मर्यादायाम्। षष्ठादारभ्या यावत्तृतीयपुरुषं नामग्रहणं न कर्तव्यम्। षष्ठपञ्चमचतुर्थानां षष्ठोपक्रमत्वात् आतृतीयादिति परसीमानिर्देश उपपद्यते। अथवा आ तृतीयादित्यभिविधिः। षष्ठादारभ्यान्वाख्यानक्रमेण चतुर्थस्य तृतीयत्वम्। अत एव षष्ठं प्रथमे पिण्डे पञ्चमं द्वितीये चतुर्थं तृतीय इति षष्ठपञ्चमचतुर्थानां नामग्रहणं न कर्तव्यमिति। अतः प्रपितामहस्य प्रपितामहेत्येवमादिनिर्देशः न यज्ञदत्तादिनामनिर्देशः। एतावन्तो हीज्यन्त इति तृतीयपर्यन्तानामेव प्राधान्येन [7] पिण्डैरिज्यतया देवतात्वात्। इतरेषाम[8]न्वायातनरूपनिर्देशात्।

---

[1] आलोड्य. [2] उपयुक्ते–म. क. [3] उदकेन पिण्डाः–क. च. [4] भ्य तृतीयात्पुरुषान्नामानि गृ–क. [5] गृह्णन्तीति–घ. ङ. च. [6] रुपयुक्तो–घ. छ. [7] पिण्डैः पूज्यतया–घ. [8] न्वाचक्षाणाख्याननिर्देशाद–छ.

(सू.) [1]उत्तरस्यां स्रक्त्यां रिप्तलेपं निमृज्य अत्र पितरो यथाभागं मन्दध्वमित्युक्त्वा उदञ्चो निष्क्रम्य सुसंदृशं त्वा वयमित्यैन्द्रयर्चाऽऽहवनीमुपतिष्ठन्ते ऐन्द्रीभ्यां वा ॥ ८ ॥ १३३ ॥ २१२७ ॥

[2]अतिमतोरुपस्थायाक्षन्नमी मदन्त हीति पङ्क्त्या गार्हपत्यमुपतिष्ठन्ते ॥ ९ ॥ १३४ ॥ ॥ २१२८ ॥

[हस्तलेपनिमार्जनादिकम्]

(भा) [3]रिप्तलेपं [4]रिप्तस्य [5]हस्तस्य लेपं निमृज्योत्तरस्यां स्रक्त्यां अत्र पितर इत्युक्त्वा यजमान उदङ् निष्क्रामति सहर्त्विग्भिः। आहवनीय-गार्हपत्योपस्थानं च। आतमितोराहवनीयोपस्थानम् यावच्छ्वासो जायते। उपदेशो [6]हरी इत्ये[7]तदभ्यस्यन्त आतमितोस्तिष्ठन्तीति। यदा [8]त्वैन्द्रीभ्यां तदा अक्षन्नमी मदन्त हीति पुनश्च गार्हपत्येऽपि प्रयोगः। छन्दोज्ञानं कर्माङ्गं यत्रोपदि[9]श्यते। अन्यत्राप्यृषिदेवताच्छन्दोज्ञाने कर्मणः फलोत्कर्ष इति।

[अत्र पितर इति मन्त्रोच्चारणं यजमानस्यैव, निष्क्रमणादिकं तु सर्वेषाम्]

(वृ) अत्र पितरः--स्थानं च--यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्येति समानकर्तृकत्वेऽपि यजमानस्यैव मन्त्रः। अत्र पितरो

---

1 रिप्तलेपं हस्ते लिप्तं पिण्डलेपं निमृज्यात्र पितर इत्याह यजमानः। तत उदङ्निष्क्रमणादि सर्वेषाम् (रु). 2 यावदनुच्छ्वसन्तस्ताम्यन्ति तावदैन्द्या ऐन्द्रीभ्यां वाऽभ्यासेनाहवनीयमुपस्थाय ततो गार्हपत्यमुपतिष्ठन्ते (रु). 3 लिप्त-घ. छ. 4 लिप्तशेषं निमृज्य लिप्तस्य हस्तलेप उत्तरस्यां-च. 5 हस्तं निमृज्यो-ग. 6 हविरित्येत-ग. 7 तदन्तमभ्यस्यन्त आत-घ. 8 त्वैन्द्रा स्यात्तदा-घ. 9 श्यते तत्र-घ.

यथाभागं मन्दध्वमित्याहेत्येकवचनादुदङ्खो निष्क्रामन्तीति निष्क्रमण एव बहुत्वश्रवणात्। कुम्भादानाद्यत्र पितर इत्यन्तं याजमानम्। निष्क्रमणादिपरिश्रितप्रवेशनान्तं सर्वे कुर्वन्तीति।

[प्राकृताहवनीयस्यैवोपस्थाने प्रमाणप्रदर्शनम्]

**आतमि–यत इति**—प्राकृताहवनीयस्यैवोपस्थानम्, न तत्कार्यापन्नवेदिमध्यस्थस्य। न्येवास्मै तद्ह्नुवते यत्सत्याहवनीये अथान्यत्र चरन्तीति वाक्यशेषात्। अत एव पितृयज्ञे वेदिमध्यस्थेऽग्नौ आहवनीयकार्यकरणेऽपि प्राकृताहवनीयधारणम्। तत्राग्निहोत्रहोमो नैमित्तिकेष्टयन्तरप्राप्तावपि तस्मिन्नेव। आतमितोरिति मन्त्रे समाप्तेऽपि यावदुच्छ्वा[1]सं निरोधं कृत्वा तावत्कालं मनसाऽऽहवनीय[2]मभिसन्धायोपतिष्ठते।

**उप–न्तीति**—ऐन्द्रयर्चा आतमितोराहवनीयमुपतिष्ठन्त इति वचनात् यावदुच्छ्वासोपजननं मन्त्रमावर्त[3]येदिति।

**यदा–हीति**—आहवनीयोपस्थाने द्वितीया।

**पुन–गः**—द्वितीयस्या ऋचः। उभे अपि पङ्क्ती।

[याजने ऋषिदेवताच्छन्दःपरिज्ञानावश्यकत्वम्]

**अन्यत्रा–त्कर्षः**—यत्रोपदेशो नास्ति तत्राप्यृषिदेवताच्छन्दोज्ञाने फलोत्कर्षः, अङ्गभूयस्तया फलभूयस्त्वसिद्धेः। यो ह वा अविदितार्षेयच्छन्द इत्यादि श्रुतौ याजयति वाऽध्यापयति वेति श्रवणात् [4]याजने ऋषिदेवताच्छन्दोज्ञानमङ्गम्।

(सू.) [5]**एतयैव परिश्रितं प्रविशन्ति ॥ १० ॥ १३५ ॥**

**॥ २१२९ ॥**

---

[1] सनिरोधं–घ. [2] मनुसं–ग. [3] येरन्निति–घ. [4] याजनेऽपि ऋ–घ.
[5] एतयैव पङ्क्त्या परिश्रितं वेदिदेशं प्रविशन्ति (रु).

[1] अत्रैके भक्षणपरिषेचने समामनन्ति ॥ ११ ॥ ॥ १३६ ॥ २१३० ॥

[2] अवघ्रेण सर्वभक्षाः ॥ १२ ॥ १३७ ॥ ॥ २१३१ ॥

[3] आञ्जनादि पिण्डपितृयज्ञवदापङ्क्त्याः ॥१३॥ ॥ १३८ ॥ २१३२ ॥

[4] यदन्तरिक्षमिति पङ्क्त्या पुनरेति ॥ १४ ॥ ॥ १३९ ॥ २१३३ ॥

[5] विस्रस्य प्राचीनावीतानि यज्ञोपवीतानि कुर्वते । विपरिक्रामन्त्यृत्विजः परिहरन्ति स्रुचः ॥ १५ ॥ १४० ॥ २१३४ ॥

[6] अपकर्षन्ति परिश्रयणानि ॥ १६ ॥ १४१ ॥ ॥ २१३५ ॥

[परिश्रितदेशप्रवेशादिकम्]

(भा) प्रविश्य वा परिश्रितं मन्थस्या[7]वघ्रेण भक्षणं वेदिपरिषेचनं च । [8]सर्वे भक्षा अवघ्रेण प्राशित्रावान्तरेडा यजमानभागानाम् । न हविश्शेषभक्षः, पिण्डार्थत्वात् । न चतुर्धाकरणं मन्थस्य, इडार्थत्वात् । यदाप्येकदैवत्यम् । पङ्क्त्या गार्हपत्योपस्थानं समानम्, पिण्डपितृयज्ञवत् । अपनीतेषु परिश्रयणेषु इदं यजमानस्येत्युक्त्वा परिहृत्य[9] च वेदेनान्वाहार्यदानादि ।

---

1 मन्थावघ्राणवेदिदेशपरिषेचने अत्र वा क्रियेते (रु). 2 प्राशित्रेडायजमानभागा अप्यवघ्रेणैव भक्ष्या न केवलं मन्थ इति (रु). 3 यदन्तरिक्षमिति पङ्क्त्या गार्हपत्योपस्थानान्तमित्यर्थः (रु). 4 पुनः परिश्रितमेति (रु). 5 येषां पूर्वं विपर्यासस्तानि सर्वाणि यथापूर्वमेव कुर्वन्ति (रु). 6 परिश्रयणानि त्वपनयन्त्येव । ततोऽन्वाहार्यं दत्त्वा ब्रह्मन् प्रस्थास्याम इति प्रतिपद्यते (रु). 7 वघ्राण--घ. च. 8 सर्वभक्षा अवघ्रेण प्राशित्रेडावान्तरेडा यज-च. 9 चान्वाहा-घ.

[परिश्रितप्रवेशने मन्त्रः]

(वृ) **एतयैवेति**—अक्षन्नमी मदन्तेत्यनया परिश्रितदेशं प्रविशन्ति।

[तत्र मतभेदः]

**यदाप्ये-त्यम्**—अग्नये कव्यवाहनायेत्येकेषां मतेन।

[आञ्जनप्रवाहणगार्हपत्योपस्थानादि हविश्शेषदोषे आज्येन पिण्डदानपक्षः तत्र मीमांसकमतं च]

**आञ्जनादि**—आङ्क्ष्व तत विष्णुशर्मन् प्रपितामहस्य पितामहेत्यादि यजमानः। परेत पितर इति प्रवाहण्या प्रवाहयित्वा[1] विसृज्य प्राचीनावीतं यज्ञोपवीतं कृत्वा प्रजापते न त्वदेतानीति गार्हपत्यसमीपं गत्वा यदन्तरिक्षमित्युपस्थाय पुनर्यदन्तरिक्षमिति परिश्रितं प्रविशति यजमानः। अत्र हविश्शेषेषु केशकीटादिभिर्दुष्टेषु तानप्सु क्षिप्त्वा आज्येन पिण्डनि[2]धानं केचित्कुर्वन्ति। पिण्डपितृयज्ञवत् पिण्डविधानमपि प्रधानं न शेषप्रतिपत्तिमात्रमिति।

मीमांसकानां तु परप्रयुक्तशेषविषयत्वाल्लोप एव। ऋत्विजोऽपि विस्रस्य प्राचीनावीतानि इत्यादि कुर्वन्ति।

**अप-दानादि**—चतुर्धाकरणाभावेऽपि इदं यजमानस्येति यजमानभागनिर्देशः। तं यजमानभागं वेदेन परिहृत्यान्वाहार्यदानम्।

(सू) **औपभृतं जुह्वामानीयापबर्हिषावनूयाजौ यजति।**
**देवौ यजेति प्रथमं संप्रेष्यति। यजेत्युत्तरम्॥**
**॥ १७ ॥ १४२ ॥ २१३६ ॥**

[प्रैषोहविधानम्]

(भा) देवान् यजेति सर्वार्थत्वात्। देवावित्यूहः। उत्तरयोर्द्वि[4]यजित्वा-द्यजयजेति च।

---

[1] विस्रस्य–घ. [2] धानमिति केचित्–घ. [3] व्याख्यातोऽयमवभृथे (रु).
[4] यजत्वा–घ.

(वृ) देवान्–यजेति च—अस्यार्थः–देवान् यजेति प्रैषस्य सर्वानूयाजार्थ[1]त्वात् प्रथमानूयाजाभावे देवावित्यूहः । द्वितीयस्य द्वि[2]यजित्वा द्वेवौ यजेत्युक्त्वा पुनर्यजेत्याह । [3]उत्तरस्य यजेत्येवेति ।

(सू) [4]सूक्तवाकं प्रति निवीतानि कुर्वते ॥ १८ ॥
॥ १४३ ॥ २१३७ ॥

[कर्मभेदेन यज्ञोपवीतनिवीतव्यवस्था]

(भा) [5]निवीतमवलम्बितं [6]ग्रीवायां सूक्तवाकप्रैषादि । यज्ञोपवीतं शंयुवाकादि ।

(वृ) निवीत–षादि—दिवः खीलोऽवतत इत्यन्तम् ।

यज्ञोप–कादि—सूक्तवाकं प्रति निवीतानीति तावन्मात्रे विधानात् ।

(सू) [7]न पत्नीः संयाजयन्ति ॥ १९ ॥ १४४ ॥
॥ २१३८ ॥

[गार्हपत्यदेशं प्रत्यध्वर्योर्गमने होत्राग्नीध्रयोस्तदभावे च हेतुः स्रुक्सादनप्रोहणादिकं च]

(भा) संस्रावान्ते प्रक्षाल्य लेपान् गार्हपत्यदेशं गच्छत्यध्वर्युः । पत्नीः संयाजयिष्यन्तः प्रत्यञ्चो यन्तीति तदर्थत्वाद्गमन[8]स्य होताऽऽग्नीध्रश्च न गच्छतः । स्रुचोः सादनं प्रोहणं[9] च कार्यम् । [10]संपत्नीयहोमः

---

[1] त्वात् प्रथमानूयाजार्थत्वात्–ग. [2] यजत्वा–घ. [3] उत्तमस्य–घ.
[4] सूक्तवाकप्रैषप्रभृत्या तत्समाप्तेर्निवीतानि कण्ठावलम्बितानि कुर्वन्ति । ततः परं तु यज्ञोपवीतान्येव, सूक्तवाकं प्रतीति वचनात् (रु). [5] निवीतं विलम्बितम्–घ.
[6] ग्रीवासु सू–च. [7] पत्नीसंयाजाभावेऽपि गच्छत्येवाध्वर्युः पश्चात् । स्रुचौ च स्फ्ये सादयित्वा संपत्नीयं पत्न्या विना जुहोति उपरिष्टात्पिष्टलेपफलीकरणहोमाभ्यां पत्नीसंयाजानङ्गत्वात्तेषाम् (रु). [8] स्य न होताऽऽग्नीध्रश्च ग–ङ. [9] णं वा का–छ.
[10] संपत्नीयदक्षिणाग्निहोमाश्च कर्तव्याः । अप–घ.

दक्षिणाग्निहोमश्चेति । अपत्नीसंयाजाङ्गत्वादेषाम् । पत्न्यभावात्प्रासननिवृत्तिः ।

(वृ) संस्रा-च्छतः—पत्नीसंयाजाभावात् । स्रुग्विमोकार्थत्वादध्वर्योर्गमनं कर्तव्यम् ॥

[स्रुग्विमोकनिषेधपक्षप्रदर्शनम्]

स्रुचो-षाम्—केचित् स्रुग्विमोकं न कुर्वन्ति ।

पत्न्य-त्तिः—न पत्नयन्वास्त इति पत्नीसान्निध्याभावात् ।

(सू) [1]न समिष्टयजुर्जुहोति ॥ २० ॥ १४५ ॥ ॥ २१३९ ॥

[2]सर्वमन्यत्क्रियते ॥ २१ ॥ १४६ ॥ २१४० ॥

[3]संतिष्ठते पितृयज्ञः ॥२२॥१४७॥ २१४१॥

षोडशी खण्डिका.

---

[समिष्टयजुर्होमनिषेधः बर्हिःप्रहरणादिब्राह्मणभोजनान्तकर्मविधिः, भर्जनकपालविमोकादि च]

(भा) स्तरणमेव वेदस्य । कृतेषु प्राय[4]श्चित्तेषु ध्रौवसमाप्तिः । अभावेऽपि सामष्टयजुषः काल[5]मात्रार्थत्वाद्बर्हिषः प्रहरणम् । यजमानभागप्राशनं च कार्यम् । वेद्यभिस्तर[6]णादि च ब्राह्मणभोजनान्तं प्रकृतिवत् । कपालैः सह भर्जनार्थस्याप्युद्वासनम् । [7] प्रकृतिवदन्यत्सूत्रकारवचनात् । प्राञ्चि कर्माणि । दक्षिणा[8]प्राचीत्वमिति केचिन्मतात् ।

इति श्रीधूर्तस्वामिभाष्ये अष्टमे प्रश्ने चतुर्थः पटलः.

---

1 समिष्टयजुरभावेऽपि बर्हिः प्रह्रियते, कालोपलक्षणत्वात्तस्य (रु)· 2 अतोऽन्यत्सर्वं ब्राह्मणतर्पणान्तं क्रियते । तत्र भर्जनकपालविमोके यद्धर्मे कपालं तदपि व्रते इत्यूहः (रु). 3 गतः (रु). 4 श्चित्तेषु होमेषु ध्रौ–ङ. च. छ· 5 मात्रत्वाद्बर्हिषां–च. 6 णादिब्रा-च. 7 प्रकृतिवत्सूत्र–च. 8 प्राञ्चीति केचिदन्यमतात्–ख. घ· प्राचीत्वं केचिदन्यमतात्–क. च.

[वेदेर्दक्षिणाप्राचीत्वं विष्णुक्रमादीनां प्राक्त्वं तत्र मतभेदश्च]

(वृ) वेद्यभिस्तरणादि—प्राचीत्वम् वेदेरेव दक्षिणाप्राचीत्वम्, विष्णुक्रमादि प्राच एव।

प्रकृ–नात्—सर्वमन्यात्क्रियत इति।

प्राश्चि—विष्णुक्रमादीनि।

दक्षि–तात्—सूत्रान्तरमतात् विष्णुक्रमादीनामपि प्राक्त्वमिति केचित्।

इति कौशिकेन रामाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ अष्टमे प्रश्ने चतुर्थः पटलः

---

(सू) [1]प्रतिपूरुषमेककपालान्निर्वपति यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावत एकातिरिक्तान् ॥ १ ॥ १ ॥ २१४२ ॥

[त्रयाणामेककपालानां निर्वापः, तत्र सापत्यानपत्यविषये विशेषश्च]

(भा) पुरुषं पुरुषं प्रतिपुरुषम्। प्रतिपुरुषवचनाद्यजमानपत्नीनामेककपालाः। प्रजाश्रुतेस्तदपत्यानामेवेति केचित्। बहुत्व[2]श्रुतेरनपत्यस्यापि त्रयः। विहरणादि तूष्णीम्, येन पुरोडाशासिद्धिः।

(वृ) प्रजा–केचित्—जाता एव प्रजा रुद्रान्निरवदयत इति श्रुतेः।

बहु–त्रयः—एककपाला भवन्तीति बहुत्वश्रुतेरनपत्यस्यापि त्रयः।

विह–ष्णीम्—प्राकृते विहारे आहवनीयादेः।

(सू) [3]यावन्तो गृह्यास्तेभ्यः कमकरमिति निरुप्यमाणेषु यजमानो जपति ॥ २ ॥ २ ॥ २१४३ ॥

---

1 व्याख्यातोऽयं करम्भपात्रविधौ (रु) 2 श्रुतेस्तदपत्य–च. 3 गतः (रु).

[वैदिकपुरोडाशनिष्पत्तौ हेतुः]

(भा) निरुप्यमाणेष्विति लिङ्गाद्वै[1]दिकपुरोडाशसिद्धिः । [2]लोके निर्वापाभावाद्वैदिकैः कर्मभिः पुरोडाशसिद्धिः ।

(सू) [3]तूष्णीमुपचरितानि भवन्ति ॥३॥३॥२१४४॥

[अग्न्यन्वाधानादिकार्यकलापः]

(भा) अग्न्यन्वाधानं परिस्तरणादि वेदः पाणिप्रक्षालनादि स्रुवो वेदिः, आज्यस्थालीपक्षे प्रणीताप्रणयनम्, अश्मोपवेष इति । पुरत आप्यलेपनिनयनान्ते आज्यनिर्वापः अङ्गाराभ्यूहनं वा ।

(वृ) यजुरुत्पूतस्यापि विकल्प्यमानत्वात्,

आप्य-निर्वापः—अभिघारणार्थम् ।

अङ्गाराभ्यूहनं वा—आप्यलेपनिनयनान्तेऽनभिघारणपक्ष इति प्रयोगक्रमः ।

(सू) [4]उत्तरार्धे गार्हपत्यस्याधिश्रयति ॥४॥ ॥४॥२१४५॥

[गार्हपत्योत्तरार्धे प्रागपवर्गतयाऽधिश्रयणम्]

(भा) सूत्रयोजना तु उत्तरार्धे प्रागपवर्गानधिश्रयति ।

(सू) [5]तानभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासाद्य पशूनां शर्मासीति मूते समावपति ॥५॥५॥ ॥२१४६॥

---

[1] दिकः पुरो-घ. ङ. छ, दिकः पुरोडाशः सिद्धः-च. [2] लोके पुरोडाशाभावात्-ख. ङ. [3] सर्वमेवैषां तन्त्रं तूष्णीकं भवति । तत्र यावन्तः पुरोडाशसंयोगिनः पदार्था होमाश्च तावन्त एव क्रियन्ते यथा विहृत्याग्नीन् परिस्तरणानाहृत्य वेदं कृत्वाऽग्नीन् परिस्तीर्य पाणी प्रक्षाल्य पुरोडाशार्थानि पात्राणि स्रुवाज्यस्थाल्यौ च प्रयुज्य पवित्रे कृत्वा पात्राणि संमृज्य प्रोक्षनिर्वापादीनि (रु). [4] गतः (रु). [5] आप्यलेपं निनीयाज्यं निरुप्य पुरोडाशानुद्वास्य संस्कृतायां वेद्यामासादयति । ततो मूते क्षिपति । धान्याद्यावपनार्थस्तृणपुञ्जो मूतम् (रु).

[धान्याद्यपार्थतृणपुञ्जरूपे मूते यजमानादि-
क्रमेण गार्हपत्याधिश्रितस्य निक्षेपः]

(भा) [1]प्रथमक्रमश्चोत्तरेषु पदार्थेषु क्रमः। उद्वास्यासादनमसंस्कृतायां वेद्याम्। मूतो [2]मूढकस्तृणमयः। तत्रैतान् समावपति क्षिपति अभिज्ञानं कृत्वा।

[भाष्योक्तक्रमविवरणम्]

(वृ) प्रथम-क्रमः—यजमानस्य प्रथमम्, पत्न्या द्वितीयम्, ज्येष्ठस्य पुत्रस्य तृतीयम्, तद्भार्यायाश्चतुर्थम्, इत्येवमन्तरङ्गतः। [3]प्रथमात्प्रागपवर्गान् गार्हपत्यस्योत्तरार्धेऽधिश्रयति। अधिश्रयणक्रमेणोत्तरेषां क्रमः।

उद्वास्या-द्याम्—दर्विहोमत्वादनिष्टिविकारत्वात्।

मूतो-नं कृत्वा—[4]प्रतिपुरुषं चिह्नानि कृत्वा।

(सू) [5]मूतयोर्मूतेषु वा ॥ ६॥ ६ ॥ २१४७॥

(भा) द्वयोर्बहुषु वा।

(वृ) द्वयोर्बहुषु वा—मूतेषु।

(सू) [6]कोशापिधानेन हरन्तीत्येकेषाम् ॥ ७॥ ७॥ ॥ २१४८॥

[पेटिकाप्रक्षेपहरणपक्षः]

(भा) कोशः पेटकः। तस्यापिधानं स्थगनम्। तस्मिन्वा [7]समारोप्य पशूनां शर्मासीति हरन्ति।

---

1 प्रथनक्रमश्चोत्तरेषु पुरोडाशेषु पदार्थेषु—च. 2 मूतकः—क. ख. ग. घ. च. मूटकः—छ. 3 मान्प्राग—घ. 4 पुरोडाशं चि—घ. 5 गतः (रु). 6 वस्त्रादिनिधानार्थो वेत्रादिमयः पेटकादिः कोशः। तस्मिन्वा समोप्य हरन्ति (रु). 7 समोप्य—ख.

(सू) [1]एक एव रुद्रो न द्वितीयाय तस्थ इति दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति ॥ ८ ॥ ८ ॥ ॥ २१४९ ॥

(भा) एकं च तदुल्मुकं च असंसृष्टमन्यैरेकोल्मुकम् । तदज्वलद्धूमसंयुक्तं हरति ।

(वृ) अन्यैः—उल्मुकैः ।

(सू) [2]उत्तरपूर्वमवान्तरदेशं गत्वा आखुस्ते रुद्र पशुरित्याखूत्कर एकं पुरोडाशमुपवपति ॥ ९ ॥ ॥ ९ ॥ २१५० ॥

[आखूत्करे पुरोडाशोपवापः]

(भा) उत्तर[3]पूर्वयोर्यः कोणदेशः तत्र य आखूत्करस्तत्र पुरोडाशं स्थापयति आखुस्ते रुद्र पशुरिति ॥

(सू) [4]असौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन् ॥ ॥ १० ॥ १० ॥ २१५१ ॥

[सति शत्रौ तद्ध्यानपूर्वकमुपवापः]

(भा) यस्य चास्ति द्वेष्यः देवदत्तस्ते पशुरिति, यश्शत्रुवधमिच्छाति [5]स एतं मनसा ध्यायन् स्थापयति ।

(सू) [6]यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात् ॥ ॥ ११ ॥ ११ ॥ २१५२ ॥

(भा) यस्सन्तम[7]पि न द्वेष्टि तस्याखुस्ते रुद्र पशुरिति स्थापनम् ।

---

[1] एकं अद्वितीयमुल्मुकमेकोल्मुकं, मन्त्रवर्णात् । धूपायत् धूमायमानम् (रु).
[2] सर्वे गच्छन्त्यृत्विजोऽमात्याश्च । आखुभिरवटादुत्कीर्णाः पांसव आखूत्करः (रु).
[3] पूर्वो यः—क.ख.घ. [4] यदि शत्रुमान् यजमानः स्याद्द्वेष्टि च तं तदा मनसा ध्यायन्नाम निर्दिशति देवदत्तस्ते पशुस्तं जुषस्वेति (रु). [5] स एव एतं मनसा—ख.
[6] यदि दयालुस्सन्तमपि शत्रुं न द्विष्यात्तदाऽपि पूर्वतर एव विधिराखुस्ते रुद्र पशुरिति (रु). [7] पि द्वेष्यं न—छ.

(वृ) यस्सन्त–पनम्—यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयादिति । आखुस्ते रुद्र पशुरिति पूर्वोक्तस्यैव प्रदर्शनम्, ते इति सम्बोध्यविशेषसापेक्षत्वात् ।

(सू) [1] चतुष्पथ एकोल्मुकमुपसमाधाय सम्परिस्तीर्य सर्वेषां पुरोडाशानां उत्तरार्धात्सकृदवदाय मध्यमेनान्तमेन वा पलाशपर्णेन जुहोति ॥ ॥ १२ ॥ १२ ॥ २१५३ ॥

सप्तदशी खण्डिका

———

[चतुष्पथे होमादिप्रकारः]

(भा) चतुष्पथो यत्र चत्वारः पन्थानस्संगच्छन्ते, उत्तरपूर्व एव । तत्रोल्मुकं प्रतिष्ठाप्य । उपसमाधाय-बलवन्तं कृत्वा, परिस्तीर्य सर्वतो दर्भैः, सर्वपुरोडाशानामुत्तरार्धाद्गृहीत्वा, पलाशपर्णेन जुहोति । [2]द्वित्रिपर्णो नेष्यते [3]मध्यमोत्तमानियमात् ।

(वृ) यस्य मध्यमो नास्ति तत्पर्णो नेष्यते ।

(सू) [4]एष ते रुद्र भागस्सह स्वस्राऽम्बिकया तं जुषस्व भेषजं गवे इत्येताभ्यां चातुष्पथमग्निं परिषिञ्चति । अवाम्ब रुद्र मदिमहीति यजमानो जपति ॥ १ ॥ १३ ॥ २१५४ ॥

(भा) भेषजं गव इति गायत्री त्रिपदा । स[5]भेषजमि[6]ति द्विपदा गायत्री । समन्ततोऽपां स्रव[7]णम् । समन्ततः परिस्तरणानां परिषेकः । अवाम्बेति व्यव[8]साययदित्यन्तो मन्त्रः ।

---

1 गतः (रु). 2 द्विपत्रिकापर्णो—क.ख.ग.घ, द्विपत्रपर्णो—च. 3 मध्यमान्तिम—छ. 4 गतः (रु). 5 सुभेषज–ख. 6 ति त्रिपदा–क. 7 णम् । ततः परिस्त–क. ख. ग. घ. 8 सायादित्यन्तः–क.

(वृ) भेषजं-यत्री—एताभ्यामिति स्त्रीलिङ्गनिदर्शनात् अनवसानपाठाच्च ऋग्वेदोपपादनम् ।

(सू) [1]त्र्यम्बकं यजामह इति त्रिः प्रदक्षिणमग्निं परियन्ति ॥ २ ॥ १४ ॥ २१५५ ॥

[अग्निप्रदक्षिणविधिः]

(भा) अग्निं परियन्त्यमात्यास्सयजमानपत्नीकाः ।

(सू) [2]त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेरिति यजमानस्य पतिकामा परीयात् ॥ ३ ॥ १५ ॥ ॥ २१५६ ॥

[यजमानकन्याग्निप्रदक्षिणविधौ मन्त्रक्रमः]

(भा) यजमानापत्येषु या त्वप्रत्ता पतिकामा तस्या[3] एवायं मन्त्रः ।

(वृ) तस्या-एवायं मन्त्रः—सूत्रपठितः ।

(सू) [4]उदूर्ध्वान् पुरोडाशानुदस्य प्रतिलभ्य त्र्यम्बकं यजामह इति यजमानस्याञ्जलौ समोप्य भग स्थ भगस्य वो लिप्सीयेत्यपादायैतेनैव कल्पेन त्रिः समावपेयुः ॥ ४ ॥ १६ ॥ २१५७ ॥

[पुरोडाशोर्ध्वप्रक्षेपणं, पततस्तस्य ग्रहणं, तस्य यजमानाञ्जलौ प्रक्षेपादि च]

(भा) उदसनमुत्क्षेपः । ऊर्ध्वानां पुरोडाशानाम् । प्रतिलभ्य पुन-

---

[1] परियन्त्यमात्यास्सयजमानपत्नीकाः स्त्रियश्च (रु). [2] यदि स्याद्यजमानस्य कन्या पतिकामा साऽप्यनेन मन्त्रेण परीयात् । यस्य कस्य च पतिकामा स्यादित्येकं यजमानस्येत्यपरमिति तु भारद्वाजः (रु). [3] एव मन्त्रः—क.ख.ङ.छ, एष मन्त्रः—घ. [4] सर्वे ते पर्येतारः प्रत्येकमेकैकं पुरोडाशमादाय तानूर्ध्वमाकाश उत्क्षिप्य पुनर्गृहीत्वा परिगमनमन्त्रेण यजमानस्याञ्जलौ समोप्य भग स्थ इति पुनः स्वं स्वमादत्ते । एवं त्रिः कुर्वन्ति (रु).

गृहीत्वा परिगमनमन्त्रेणैव। यजमानस्याञ्जलौ क्षिपन्ति। पुनश्च स्वान् गृह्णन्ति भग स्थेति ग्रहणमन्त्रेण। व्यवायान्मन्त्रावृत्तिः।

(वृ) **पुनर्गृहीत्वा–क्षिपन्ति।**—पुष्टिवर्धनमि[1]त्यनेन।

**पुनश्च–न्त्रावृत्तिः**—समावपनमन्त्रस्यावृत्तिः तदाहैतेनैव[2] मन्त्रेणेति।

(सू) [3] **पतिकामा या श्चैवं समावपेयुस्तथैव मन्त्रं संनमयित्वा ॥५॥१७॥२१५८॥**

(भा) पतिं कामयन्त इति पतिकामा याः कन्या यजमानापत्यं ताश्च यजमानहस्ते क्षिपेयुः पुरोडाशान्। यः परिगमनमन्त्रस्तासां तेनैव।

(वृ) **यः परि–तेनैव**—पतिवेदनमित्यनेनैव। पतिकामा याश्चैवमिति पतिकामा या एवमिति पदच्छेदः। तथैव मन्त्रं संनमयित्वा इति सूत्रपाठ[4]प्रकारेणोहयित्वा।

(सू) [5] **परीत्य परीत्य समावपन्तीत्येके ॥६॥१८॥ ॥२१५९॥**

**[परिगमनमन्त्रावृत्तौ निमित्तकथनम्]**

(भा) यदा परीत्य परीत्य क्षेपः तदा व्यवायात्परिगमनमन्त्र[6]स्यावृत्तिः।

(वृ) **यदा–वृत्तिः**—समा[7]वपनादिव्यवायात्।

---

1 त्यन्तेन–छ. 2 नैव कल्पेनेति–घ. 3 या सा यजमानस्य कन्या 'पतिकामा तस्याञ्जलावेवमेव त्रिः समावपेयुः। समावपनमन्त्रं तु सपि पूर्ववत्संनमय्य वदतीत्यर्थः। संनमयित्वा संनमय्येत्यर्थः। भारद्वाजश्चाह पतिकामा या अपि समावपेयुरिति (रु). 4 पाठक्रमेणोह–छ. 5 प्रथमपर्यायवदुत्तरयोरपि पर्याययोः परिगमनस्यायमुभयत्र विकल्पः (रु). 6 स्य निवृत्तिः–क. ख. 7 वपनव्य–घ.

(सू) [1]तान् मूते समावपति मूतयोर्मूतेषु वा ॥ ७ ॥ १९ ॥ ॥ ११६० ॥

[पेटिकापिधानेनानीतानामपि मूतक्षेपणम्]

(भा) यदाऽपि कोशापिधानेनानीताः तदाऽपि मूते क्षेपः।

(वृ) यदापि–क्षेपः—वृक्षा[2]सञ्जनकाले मूतस्यैव विधानात्।

(सू) [3]एष ते रुद्र भाग इति वृक्ष आसजति वृक्षयोर्वृक्षेषु वा ॥ ८ ॥ २० ॥ २१६१ ॥

(भा) वृक्षासञ्जनम् वृक्षे लङ्गयत्यध्वर्युः एष ते रुद्र भागस्तं [4]जुषस्वेत्यतीह्यन्तेन।

[तत्र पक्षान्तरम्]

(सू) [5]अपि वा मूतयोस्समोप्य विवधं कृत्वा शुष्के स्थाणौ वल्मीकवपायां वाऽवधाय अवततधन्वा पिनाकहस्तः कृत्तिवासोमिति त्रिरवताम्यन्ति ॥ ९ ॥ २१ ॥ २१६२ ॥

(भा) विवधः—[6]करपटी। [7]तस्या मूले बद्ध्वा शुष्कवृक्षच्छेदे[8] स्थापयित्वा आसञ्जनमन्त्रेण। वल्मीकवपा वम्रीभिरुद्धुता मृत्। तस्यां

---

[1] यदाऽपि कोशापिधानेनाहृतास्तदाऽपि मूत एव समावपत्यध्वर्युः (रु). [2] सञ्जनार्थक्षेपे मू–छ. [3] आसजति मूते स्थापयति। यदा द्वे बहूनि वा मूतानि तदाऽपि बहुष्वासजति अतीहीति मन्त्रान्तः (रु). [4] स्वातीह्यन्तेन–क. ख. घ. [5] द्वयोरेव मूतयोः क्षिप्त्वा ते च विवधलम्बिते कृत्वा विवधेनैव स्थाणौ वल्मीकवपायां वा मन्त्रेणावदधाति। विवधो नाम स्कन्धवाह्यः साधनविशेषो येन गोपालाः क्षीरभाण्डानि वहन्ति। ततस्सर्वेऽवततधन्वेत्यावर्तयन्तस्तावन्निरुच्छ्वासास्तिष्ठन्ति यावत्ताम्यन्ति। एवं त्रिः कुर्वन्ति (रु). [6] कावटी–ग. च. करावती- ख. घ. [7] तस्यान्तयोर्मूते ब–छ. तस्यां मूर्तें ब–घ. [8] दे स्थाणौ स्था–छ.

स्थापयति । अवततधन्वेत्युक्त्वाऽवताम्यन्ति निरुच्छ्वासास्तिष्ठन्ति सहर्त्वि[1]ग्भिः स्त्रियश्च । मन्त्रावृत्तिः प्रत्यक्षोपकारात् । उपदेशः प्रणवान्त [2]मभ्यस्यन्तस्तिष्ठ[3]न्ति ।

(वृ) करपटी–शिक्यद्वया[4]न्तर्दण्डः ।

तस्या–मन्त्रेण—एष ते रुद्र भागस्तं जुषस्वेति ।

वल्मीक--यति—अवततधन्वेत्युक्त्वा ।

मन्त्रावृ–रात्—प्रणवान्तमन्त्रोच्चारणस्य ग्लानिसाधनत्वात् तस्यावृत्तेर्मन्त्रावृत्तिः । अस्मिन्पक्षे प्रणवान्तं मन्त्रमुक्त्वा आ श्रमोपजननात्तिष्ठन्ति उच्छ्वासनिरोधं कृत्वा ।

उपदेशः–न्ति —एकैकस्मिंस्तमने यावत्क्लेशं मन्त्रावृत्तिः ।

(सू.) [5]अपः परिषिच्याप्रतीक्षास्तूष्णीमित्यैधोऽस्येधिषीमहीत्याहवनीये समिध आधाय अपो अन्वचारिषमित्युपतिष्ठन्ते ॥ १० ॥ २२ ॥ २१६३ ॥

अष्टादशी खण्डिका

---

[अग्निपरिषेकाद्युपस्थानान्तकर्मकलापः]

(भा) परिषेकमध्वर्युः करोति परं सामात्याः सर्वे, बहुवचनात् । [6]परिगमन[7]संवापौ त्वमात्यानामेव, पुरोडाशसंबन्धात् । केचिद्यजमानपत्नीवर्जानां तदपत्यानामेव, चातुर्मास्येषु यजमानस्यामात्या इति षष्ठीनिर्देशात् । प्रजा वरुणपाशान्मुञ्चति प्रजा रुद्रान्निरवदयते इति लिङ्गात् । अप्रतीक्षाः–[8]नेक्षन्ते यत्र होमः कृतः । [9]यत्र च

---

1 ग्भिर्भूयश्च मन्त्रावृत्तिः–ख. 2 मभ्यस्य तस्मिंस्तिष्ठन्ति–च. 3 न्तीति–क. ख. ङ. 4 न्तो दण्डः तस्मिन्मूते बद्धाऽन्तयोः–घ. 5 अपः परिषिच्य परितो मूतमवस्रावयित्वा । व्याख्यातश्शेषः (रु). 6 परिवपन–ग. 7 समावापौ–ग. छ. 8 नेक्षन्तो य–घ. नेक्षमाणा य–च. 9 यत्र वा–ख. घ. च.

स्थापिताः पुरोडाशाः। तूष्णीं वाग्यता आगच्छन्ति। एकैका समित्, एकवचनात्। न चोह[1] उपस्थाने पत्न्याः। उपदेशः सहाधानम्। पयस्वत्यग्न आगमं तां मेति चोहः।

(वृ) **परिषेक-वचनात्** — अप्रतीक्षास्तूष्णीमित्योपतिष्ठन्त इति समानकर्तृकत्वात्। परिषेकस्य त्वपः परिषिञ्चति रुद्रस्यान्तर्हित्या [2]इत्येकसङ्ख्याककर्तृकत्वावगमादध्वर्युरेव।

**परिगमन-मेव** — अमात्यशब्देन पुत्रदुहित्रादयः।

**चातुर्मास्येषु-निर्देशात्** — व्यतिरेकावगतेः। किंच प्रजा वरुण-निरवदयत इति लिङ्गात् पुत्रादीनामेव।

**अप्रतीक्षाः-डाशाः** — तदुभयम्।

**तूष्णीं-एकवचनात्** — प्रतिमन्त्रमेकैका समित्। मन्त्रे एकवचनात्।

**न चोहः-त्न्याः** — पयस्वा ऽ अग्ने इत्येव प्रकृतौ सौमिकावभृथे पुल्लिङ्गपठितत्वेन पत्न्या अपि विनियुक्तत्वात्।

**उपदेशः-सहाधानम्** — मन्त्रत्रयमुक्त्वा समित्त्रयस्य सहाधानम्। समिध आधायेति सकृदाधाने बहु[3]त्वश्रवणात्।

**पयस्व-इति चोहः** — [4] समस्ताभिधानसंभवादित्युपदेशः।

(सू) [5]**आदित्यं घृते चरुं पूर्ववन्निर्वपति॥ १॥**

॥ २३॥ २१६४॥

[तेष्वग्निष्वादित्यहविर्निर्वापविधिः]

(भा) [6]अस्यादित्यस्याग्निः पूर्ववत् सप्तदश सामि[7]धेन्यः।

---

[1] उपस्थाने। उप—च. [2] इत्येककर्तृकत्वा—घ. [3] त्वविशेषणात्—छ. [4] समवेताभि—घ. छ. [5] तेष्वग्निष्वादित्यं क्षिपति। पूर्ववदित्यग्न्याधेयादित्यवत् सप्तदशसामिधेन्यश्चतुर्धाकरणकाल इत्यादिविधिनेत्यर्थः। वरस्तु नेष्यते, दक्षिणान्तरवचनात्। तथाऽन्यत्र वरदानादित्येव भारद्वाजः (रु). [6] आद्य आ—च. [7]धेनीकः—च.

(वृ) पूर्ववत्--आधानगतादित्यवत् ।

(सू) [1] श्वेतोऽश्वो दक्षिणा ॥ २ ॥ २४ ॥ २१६५ ॥

[2] गौर्वा श्वेतः श्वेतन्यङ्गो वा । ३ ॥ २५ ॥ ॥ २१६६ ॥

[श्वेतोऽश्वो दक्षिणा बलीवर्दो वा न धेनुः]

(भा) दक्षिणापवादः श्वेतोऽश्वः बलीवर्दो वा श्वेतः । यस्यैकमङ्गं श्वेतं स श्वेतन्यङ्गः ।

(वृ) दक्षिणापवादः—धेनुदक्षिणायाः ।

(सू) [3] सिद्धमिष्टिः संतिष्ठते । ४ ॥ २६ ॥ २१६७ ॥

(भा) आदि[4]त्यस्य समाप्तौ साकमेधसमाप्तिः ।

(सू) [5] आग्नावैष्णवमेकादशकपालं निर्वपेच्चक्षुष्कामो बार्हस्पत्यं चरुं ब्रह्मवर्चसकाम ऐन्द्रं पशुकामः सारस्वतं प्रजाकामः पौष्णं प्रतिष्ठाकामः ॥ ॥ ५ ॥ २७ ॥ २१६८ ॥

[आदित्यानुनिर्वाप्यानि काम्यान्याग्नावैष्णवादीनि]

(भा) आदित्यस्यानुनिर्वाप्यान्याग्नावैष्णवादीनि सति कामे ।

(सू) [6] एतेषां यत्कामयेत तदनुनिर्वपेत् ॥ ६ ॥ ॥ २८ ॥ २९६९ ॥

(भा) कामबहुत्वेऽप्येतेषामेकमेव कर्तव्यं [7] यदिच्छति ।

(वृ) एतेषां [8] यत्कामयेतेत्यस्यार्थः--कामबहु-च्छतीति । तत्साधनं हविरनुनिर्वाप्यम् ।

---

1 गतः (रु). 2 सर्वश्वेतः श्वेतचिह्नमात्रो वा पुंगवः (रु). 3 गतः (रु). 4 त्यसमाप्तौ–क. ख. च. छ. 5 एतान्यादित्यस्यानुनिर्वाप्यानि कामानुसारेण कर्तव्यानि । किमेतानि कामबहुत्वे समुच्चीयन्ते? नेत्याह (रु). 6 एतेषां हविषां यमिच्छेत्तमेवानुनिर्वपेत् । न ततोऽधिकमित्यर्थः (रु). 7 यदीच्छति–ख. 8 सः काम–छ.

(सू) [1] सिद्धमिष्टिः संतिष्ठते ॥ ७ ॥ २९ ॥ २१७० ॥

[2] संतिष्ठन्ते साकमेधाः ॥ ८ ॥ ३० ॥ २१७१ ॥

[3] अत्र पौर्णमास्येष्ट्वोन्दनादि पूर्ववन्निवर्तनम् । सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते योऽस्याः पृथिव्यास्त्वाचि निवर्तयत्योषधीः । अग्निरीशान ओजसा वरुणो धीतिभिस्सह । इन्द्रो मरुद्भिस्सखिभिः सह । अग्निस्तिग्मेनेति समानम् ॥ ९ ॥ ॥ ३१ ॥ २१७२ ॥

एकोनविंशी खण्डिका

---

[साकमेधाख्यतृतीयपर्वसमाप्तिः]

(भा) अत्रास्मिन् कृते पौर्णमास्या यागः । ततो वपनम् ।

इति धूर्तस्वामिभाष्ये अष्टमे प्रश्ने पञ्चमः पटलः

---

(वृ) **अत्रास्मिन्–गः**—निवर्तनं वा । अत्र पौणमास्येत्यत्र । अत्रशब्द , आनन्तर्यपरः । साकमेधवद्देशान्तराभावादत्र देश इति न भवति ।

इति कौशिकेन रामाग्निचिता कृतायां धूर्तस्वामिभाष्यवृत्तौ अष्टमे प्रश्ने पञ्चमः पटलः

---

1 गतः (रु). 2 आदित्यान्ते संतिष्ठन्ते काम्यत्वादनुनिर्वाप्याणाम् (रु). 3 व्याख्यातोऽयं वरुणप्रघासेषु (रु).

(सू) [1] ततो द्व्यहे त्र्यहे चतुरहेऽर्धमासे मासि चतुर्षु मासेषु शुनासीरीयेण यजते ॥ १ ॥ १ ॥ २१७३ ॥

[तुरीयपर्वभूतशुनासीरीयाङ्गवपनकालः]

(भा) ततो वपनानन्तरं द्व्यहे द्वितीयेऽहनि द्वितीयायाम् । त्र्यहे तृतीयायाम् अर्धमासे–पर्वणि वपनं कृत्वा । अमावास्यायां वपनमुपदेशः । तथोत्तरस्याम् । शुनासीर इन्द्रो यस्मिंस्तच्छुनासीरियम् ।

[वपनकालविषये पक्षभेदः]

(वृ) ततो–कृत्वा—प्रतिपदि वपनं कृत्वा ततोऽर्धमासे पर्वण्यमावास्यायां शुनासीरीयेणेष्ट्वा वपनमिति ; द्व्यहादिपक्षेऽनन्तरं वपनम् ।

अमावा–स्याम्––अस्यार्थः—अर्धमासपक्षे अमावा[2]स्यानन्तरं साकमेधार्थं वपनम् । ततोऽर्धमासे पौर्णमास्यां शुनासीरयिणेष्ट्वा वपनमिति शुनासीरीयेऽप्यत्र पौर्णमास्येति वचनात् ।

[शुनासीरीयशब्दार्थः]

शुनासी–यम्—शुनासीर इन्द्रो यास्मिन् कर्मणि तत्कर्म शुनासीरीयम् ।

(सू) [3] तस्य वैश्वदेववत्कल्पः ॥ २ ॥ २ ॥ २१७४ ॥

[4] निर्वपणकाल आग्नेयमष्टाकपालमिति दशोत्तराणि हवींषि निर्वपति ॥ ३ ॥ ३ ॥ २१७५ ॥

---

1 ततः साकमेधकालात् पर्वण आरभ्य त्र्यहादिष्वतीतेषु पूर्ववच्चतुर्ष्वेव वा मासेषु शुनासिरीयेण यजते । शुनासीरदेवतासंबन्धाच्छुनासिरीयं पर्व (रु). 2 स्याया अन–छ. अमावास्यायामन–च. 3 परिभाषया वैश्वदेवप्रकृतिकत्वे सिद्धेऽपि कैश्चित्कल्पकारैर्महाहविःकल्पातिदेशात् तन्निरासार्थं वचनम् । सायंदोहाभावात्तु सद्यस्कालतामप्यस्येच्छन्ति (रु). 4 पञ्चसंचराणि निरुप्यैन्द्राग्नं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयस्सौर्यमेककपालमिति पञ्च निर्वपति (रु).

[1] वायव्यस्य पयसः प्रातर्दोहवत्कल्पः ॥ ४ ॥

॥ ४ ॥ २१७६ ॥

[पुनर्वैश्वदेववचसः फलम्]

(भा) पुनर्वैश्वदेववद्वचनादनूयाजेऽपि वैश्वदेववद्विधिः [2] त्रेधासंनहन-पृषदाज्यादीनि । [3] द्व्यहकालत्वं शुनासीरीयस्य वैश्वदेव[4]वत् ।

[सद्यस्कालत्वपक्षे प्रयोगः]

प्रातर्दोहविकारत्वाच्च पयसस्सद्यस्कालत्वं वा द्व्याहादौ [5]साङ्गस्य विधानात् । शाखामाहृत्य न वत्सापाकरणादि, सायं दोहार्थत्वात्तेषाम् । वेदं कृत्वा वेदिः । पलाशप्रशातनादि पर्णवल्कवर्जम् । कुम्भ्यालेपने कृते इमौ पर्णमि[6]ति निधाय वत्सापाकरणं प्रातर्दोहाय । परिस्तरणम् । देवा देवेष्विति क्रमः । पणिप्रक्षालनादि । सद्यस्काले[7]ऽपि केवले प्रातर्दोहे [8] विधिरेषः ।

[भाष्योक्तपुनर्वैश्वदेववद्वचनस्य फलोपपादनम्]

(वृ) **पुनर्वैश्व–दीनि**—एतद्ब्राह्मणानि पञ्च हवींषीति, तथा वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणाम्, इति परिभाषोक्तत्वाच्च वैश्वदेवप्रकृतित्वे सिद्धेऽपि तस्य वैश्वदेववदिति वचनात् अनूयाजेऽप्यष्टावाद्याः पाशुकाः प्रैषवर्जमित्येवमादि भवति ।

आहुतीनां त्रिंशत्संख्यातिरेकेऽपि—

**व्यहा–धानात्**—ततो [9]व्यह इत्यादिना साङ्गस्यैकस्मिन्नहनि विधानात्सद्यस्कालत्वम् ।

सद्यस्कालत्वपक्षे प्रयोगः—**शाखामाहृत्य–[10]विधिरेषः** ।

---

[1] तत्र शाखामाहृत्य निधाय रात्रावेव वत्सापाकरणं प्रातर्दोहार्थत्वात् (रु).
[2] त्रेधा संनहनं व्यहत्वं शुना–च. [3] व्यहसाध्यत्वं–ङ. च. [4] ववचनात् प्रातर्दोह–च. [5] साङ्गस्यैव वि–च. [6] ति विधाय–ख. [7] पि देवतानुवाद इति केवले–च. [8] विधिशेषः–क. ख. च. छ. [9] व्यह इति साङ्ग–ग. छ.
[10] विशेषः–क. ख.

(सू) [1]अथैकेषाम् । पञ्च संचराणि निरुप्य वायव्या यवागूः प्रतिधुग्वेन्द्राय शुनासीराय पुरोडाशो द्वादशकपालः । इन्द्राय शुनासीराय स्रुचा जुहुत नो हविः । जुषतां प्रति मेधिरः । प्रहव्यानि घृतवन्त्यस्मै हर्यश्वाय भरता सजोषाः । इन्द्रर्तुभिर्ब्रह्मणा वावृधानः शुनासीरी हविरिदं जुषस्वेति शुनासीरीयस्य याज्यानुवाक्ये । सौर्य एककपाल इति ॥ ५ ॥ ५ ॥ २१७७ ॥

[शुनासीरीयप्रयोगक्रमः]

(भा) [2]एकेषां न दश हवींषि पञ्चसंचराणि कृत्वा वायव्या यवागूः शृतपेया वा चरुवत् । प्रतिधुक् सद्योदुग्धं पयः । लौकिकं अशृतम् । एतदस्मै शृतं कुरुतेति लिङ्गात् । आसादनादि[3] सान्नाय्यवत् । सर्वं श्रपणवर्जं सान्नाय्यवत् । इन्द्राय शुनासीराय सौर्य एककपाल इत्यष्टौ । विश्वेदेवा हव्यं रक्षध्वम् । इन्द्र शुनासीर हव्यं रक्षस्व । वायो हव्यं रक्षस्व । सौर्य हव्यं रक्षस्व। इदमग्नेः सवितुः पूष्ण इन्द्राग्न्योरिन्द्रस्य शुनासीरीयस्य सूर्यस्य इदं सोमस्य सरस्वत्याः विश्वेषां देवानां वायवे हविरिन्द्रियं वायवे देवेभ्यो [4]हव्यम् ।

---

1 अथवा पञ्च संचराणि निरुप्य वायव्या यवागूः । तस्याश्चरुवत्कल्पः । वायव्या प्रतिधुग्वा । प्रतिधुगिति सद्योदुग्धं पयः समाख्यायते । तथा च भरद्वाजः--प्रतिधुगिति दुग्धमात्रस्य वाद इति । प्रतिधुषा प्रातस्सवने शृतेन माध्यन्दिन इति लिङ्गात्। एतदस्मै शृतं कुरुतेति लिङ्गाच्च । तत्र पञ्चसंचरानन्तरं दुग्धमात्रं लौकिकं पयो गृहीत्वा निधेयम् । आसादनप्रभृति तु सान्नाय्यधर्मान् लभते । तथा च कात्यायनः—वायव्यं पयो लौकिकं प्रतिधुक्छ्रुतेरिति । श्रपणवर्जं सर्वेऽपि संस्कारास्सान्नाय्यवदित्यन्ये । तत इन्द्राय शुनासीराय द्वादशकपालः ततः सौर्य एककपाल इत्यष्टौ च हवींषि (रु).
2 एतेषां तु दश–च. 3 सादनादि–ख. 4 हव्यमाप्यायताम् पुनः पञ्चप्रयाजेऽपि वैश्वदेवविधिः–च.

(वृ) **एकेषां–चरुवत्**—सद्यश्शृतपेया च व्रीह्या[1]दीनां शृताशुयुक्ते ? अतो निर्वपणादि श्रपणान्तं कर्तव्यम् ।

[सौत्रप्रतिधुक्छब्दार्थः]

**प्रतिधुक्–लिङ्गात्**—अस्यार्थः—समनैषुः प्रत्यधुक्षन्निति प्रतिधुक्तां दुग्धमात्रमुक्त्वा एतदस्मै शृतं कुरुतेति पश्चाच्छ्रपणविधानात् अशृतस्यैव प्रतिधुक्त्वम् ।

[प्रतिदुहो धर्माः]

अस्य च लौकिकत्वं, निर्वपणकाले दुग्धस्यैव विधानात् । अतो न दोहधर्माः ।

**आसाद–वत्**—उपात्तस्य यावत्संभवं वैधिकधर्माः कर्तव्या इति ।

**सर्व–वत्**—सद्योदुग्धस्यापि वैदिकधर्मसंभवे तद्बाधो न युक्त इति ।

**इन्द्राय–ष्टौ**—एकेषां मतेन ।

स्वपक्षे—विश्वे देवा–ध्वम्—इन्द्र रक्षस्व, वायो रक्षस्व इति यवागूपक्षे । सूर्य हव्यं–देवेभ्यो हव्यम्—इति पयःपक्ष ऊहः ।

(सू.) [2]**नव प्रयाजानूयाजाः ॥ ६ ॥ ६ ॥ २१७८ ॥**
[3]**पञ्चप्रयाजं त्र्यनूयाजमित्येके ॥ ७ ॥ ७ ॥**
**॥ २१७९ ॥**

---

[1] दीनामश्रुता–घ. दिना शुक्ता. [2] उत्तरविकल्पार्थोऽनुवादः (रु).
[3] प्रकृतिवद्देवोभयमित्यर्थः (रु).

संसर्पोऽस्यंहस्पत्याय त्वेति [1]मासनाम्नैक-
कपालमभिजुहोति ॥ ८ ॥ ८ ॥ २१८० ॥

[2]द्वादशगवं सीरं दक्षिणा ॥ ९ ॥ ९ ॥
॥ २१८१ ॥

[सीरदक्षिणाप्रतिग्रहमन्त्रः]

(भा) सीरं—लाङ्गलम् । द्वादशभिर्बलीवर्दैर्युक्तम् । तस्य प्रतिग्रह उत्तानस्त्वेति ।

[सीरे द्वादशबलीवर्दयोगकथनस्य भूतपूर्वतद्योगतात्पर्यकत्वेन दीर्घस्य केवलस्यैव सीरस्य दक्षिणात्वम्]

(वृ) सीरं—स्त्वेति—केवलं सीरस्यैव दक्षिणात्वात् द्वादशभिर्युक्त-मिति भूतपूर्वगत्या । द्वादशगवां योजनसमर्थं दीर्घम् । न तु [3]गोयुक्तस्य गोभिः सह दानम् । अतः सीरमात्रस्याप्राणित्वादुत्तानस्त्वेति प्रतिग्रहः ।

(सू) [4]षड्योगं वा ॥ १० ॥ १० ॥ २१८२ ॥

[षड्बलीवर्दयोगयोग्यं वा सीरं दक्षिणा]

(भा) षड्योगं षड्भिर्युक्तम् ।

(वृ) षड्यो-क्तम्—तस्यापि प्रतिग्रहः पूर्ववत् ।

(सू) [5]उष्टारावित्येकेषाम् ॥ ११ ॥ ११ ॥ २१८३ ॥

[दक्षिणायां पक्षान्तरम्]

(भा) उष्टारौ—प्रासङ्गिकौ धुर्यौ वर्जयित्वा । ब्राह्मणा इदं वः सीरं अयमश्व इति संकल्पयति । एककपा[6]लस्य दक्षिणेत्युपदेशः ।

---

1 मासनाम्नेत्येकवचनात् एकैवाहुतिः । भारद्वाजस्त्वाह—मासनाम्नाऽभिजुहोति संसर्पाय स्वाहांऽहस्पत्याय त्वा स्वाहेति (रु). 2 यद्द्वादशभिर्बलीवर्दैर्युक्तं कृषति तद्द्वादशगवं सीरम् (रु). 3 गोयुक्तम् । अस्य न गोभिः सह—च. 4 षड्भिर्योगो यस्य सीरस्य तत् षड्योगम् । तस्य चोभयस्योत्तानस्त्वेति प्रतिग्रहः (रु). 5 उष्टारः प्रासङ्गवाही वाहः (रु). 6 लदक्षि—ख. च.

(वृ) उष्टा-कौ—न रथादिवाहकौ । धुर्यौ युग्यौ ।

(सू) [1] उष्टारं वा ॥ १२ ॥ १२ ॥ २१८४ ॥

[2] अश्वं श्वेतमेककपालस्य गां वा श्वेतम् ॥
॥ १३ ॥ १३ ॥ २१८५ ॥

विंशी खण्डिका

---

[दानप्रकारः]

(भा) ब्राह्मणा द्वादशगवं सीरं वो ददामि अश्वं श्वेतमेककपालस्य वो ददामि बलीवर्दं वा श्वेतम् ।

(सू) [3] अनुवत्सरीणां स्वस्तिमाशास्ते दिव्यं धामाशास्ते इति सूक्तवाकस्याशीःषु होता वर्तते । एवं यजमानो जपति । आशास इति मन्त्रं संनमति । सिद्धमिष्टिः संतिष्ठते । संतिष्ठन्ते चातुर्मास्यानि । अत्र पौर्णमास्येष्ट्योन्दनादि पूर्ववन्निवर्तनम् । सर्वं वा वापयेत् । मन्त्रादिर्विक्रियते । एकं मासमुदसृजत्परमेष्ठी प्रजाभ्यः । तेनाभ्यो मह आवहदमृतं मर्त्याभ्यः । प्रजामनु प्रजायसे तदु ते मर्त्यामृतम् । येन मासा अर्धमासा ऋतवः परिवत्सराः । येन ते ते प्रजापत ईजानस्य न्यवर्तयन् । तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे । अग्निस्तिग्मेनेति समानम् ॥ १ ॥ १४ ॥ २१८६ ॥

---

[1] ददातीत्यध्याहारः, सामर्थ्यात् (रु).   [2] ददातीत्येव शेषः (रु).
[3] पौर्णमास्येष्ट्वेति तु ब्रह्मादावसंभवान्निवर्तते (रु).

[सौत्रानुवत्सरशब्दार्थः, चातुर्मास्यसमुदायानुष्ठानप्रयुक्त-तदुत्तरानुष्ठेयस्सोमादिर्नैकस्य पर्वणः प्रयोगे भवति]

(भा) अनुवत्सरो वायुः। पौर्णमा[1]स्येति [2]प्रायिकम्। कथम्? द्व्यहादावनिष्ट्वाऽपि वपनम्। चातुर्मास्यैरिष्ट्वेति समुदाय[3]प्रयुक्तो नैकस्य पर्वणः प्रयोगे भवति वैमृधवत्।

[भाष्योक्तानुवत्सरशब्दार्थे प्रमाणं संवत्सरादेरग्न्यादिरूपेण ध्यानं च]

(वृ) अनुवत्सरो वायुरिति—वायुरनुवत्सर इति ज्ञानार्थम्। संवत्सरनामस्वनुवत्सर इत्यस्याभावेऽपि वायुरनुवत्सर इत्यादिब्राह्मणदर्शनात्। अत एवाग्निर्वाव संवत्सर इत्यादिदर्शनात्। संवत्सरीणां स्वस्तिमाशास्त इत्यादिष्वग्न्यादिरूपेण संवत्सरादेर्ध्यानं कर्तव्यम्।

पौर्णमास्येति—द्व्यहादौ—पौर्णमासीमिष्ट्वा वपनसंभवः।

अतः—

अनिष्ट्वाऽपि—नम्—पौर्णमास्याम्।

चातुर्मा—भवति—सोमः पशुर्वा।

वैमृधवत्—[4]ततो न प्रतिपर्वावृत्तिः।

(सू) [5]चातुर्मास्यैरिष्ट्वा सोमेन पशुना वा यजते॥

॥ २ ॥ १५ ॥ २१८७ ॥

---

[1] स्येष्ट्वेति—च.  [2] पाक्षिकः—क. ख. ग. घ. च. छ.  [3] प्रयुक्तो—क.

[4] अतो—ग. घ. छ.  [5] सोमोऽग्निष्टोमसंस्थः पशुश्च निरूढपशुः विकारे प्रमाणासंभवात्। तौ च नित्ययोरर्थं साधयतः चातुर्मास्याङ्गत्वात्। कात्यायनबोधायनाभ्यामन्येष्टिरप्युक्ता। कात्यायनस्तावत् सोमेन पशुनेष्ट्या वा यजेतेति। बोधायनश्च पशुसोमावुक्त्वाऽऽह सवनेष्ट्या यजेतेत्यौपमन्यव इति। केयं सवनेष्टिर्नाम? सवदेवतानामिष्टिः सवनेष्टिः सवनस्थानापन्नेति वा, यथोक्तं सूत्रकृता—तुरायणे संवत्सरं सवनविधा इष्टीर्निर्वपन्ति आग्नेयोऽष्टाकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालश्चरुरित्येक इति।

[चातुर्मास्योत्तराङ्गसोमपश्वन्यतरयागविधिः]

(भा) सोमोऽग्निष्टोमतुल्यः तत्प्रकृतित्वाच्चातुर्मास्याङ्गम्। अनेन मुच्यत ऋणात् न चाकामः। तथा पशुबन्धो निरूढतुल्यः। न निरूढार्थं साधयति।

(वृ) सोमोऽग्नि–त्वात्—एकाहानामग्निष्टोमप्रकृतित्वात्।

[सोमस्य चातुर्मास्याङ्गत्वाग्निष्टोमविकृतित्वयोस्साधनम्]

चातुर्मास्याङ्गं—सोमः।

चातुर्मास्यैरिष्ट्वेति क्त्वाप्रत्ययात्तदङ्गत्वम्। स्वतन्त्राधिकारपक्षे समानकर्तृकप्रयोगानुपपत्तेः। अतोऽङ्गत्वात्कर्मान्तरतयाऽग्निष्टोमविकृतित्वम्।

(सू) [1]फाल्गुन्या उद्दृष्टे सोमाय दीक्षते ॥ ३ ॥
॥ १६ ॥ २१८८ ॥

[चातुर्मास्योत्तराङ्गभूतसोमयागदीक्षाकालस्तत्र पक्षान्तरं च]

(भा) उद्दृष्टः शुक्लः पक्षः। फाल्गुन्याः परो यश्शुक्लः पक्षः तदादौ

---

तास्त्वत्र समानतन्त्रा इष्यन्ते, सवनेष्ट्येत्येकवचनात्। तत्रापि त्वाहाश्वलायनः—तुरायणमग्निरिन्द्रो विश्वे देवा इति पृथगिष्टयोऽनुसवनमहरहरेका वा त्रिहविरिति।

तथाऽनुग्रहान्तरमप्यत्र भारद्वाजेनोक्तम्—आ वरुणप्रघासानां कालाद्वैश्वदेवस्य कालो नातीयादा साकमेधानां कालाद्वरुणप्रघासानां कालो नातीयादा शुनासीरीयस्य कालात्साकमेधानां कालो नातीयादिति। कालातिक्रमेष्वापदि यजेतेति (रु).

[1] यदि सोमेन यक्ष्यते तदा य आगामिन्याः फाल्गुन्याः परस्ताद्व्युद्दृष्टपर्यायश्शुक्लपक्षः तत्र दीक्षित्वाऽनन्तरे पर्वणि यजेत यदि फाल्गुन्यामुपक्रमापवर्गौ। प्रदर्शनार्थं चैतत्। यदा चैत्र्यामुपक्रम्य पुनश्चैत्र्यामपवर्गः तदा चैत्र्या उद्दृष्टे सोमः। यदा ब्यहादौ शुनासीरीयं तदाऽपि फाल्गुन्या उद्दृष्ट एव सोमः। मुख्यस्यैव सोमकालस्यानतिक्रमणीयत्वात्। पशुना यक्ष्यमाणस्य शुनासीरीयादनन्तरे पर्वणि यागः। (रु).

सोमाय दीक्षते। केचित् फाल्गुन्या [1] अर्वाग्यः फाल्गुनीशुक्ल एव परसंवत्सरे [2] तदादाविति। प्रदर्शनं चैतत्, यस्य चैत्र्यां परिसमाप्तिस्तस्य चैत्र्याः परः शुक्ल इति, पशुस्त्वनन्तरमपर्वण्यपीत्युपदेशः। अनन्तरे पर्वणीति न्यायः, [3] सर्वाङ्गत्वात् यद्यपि न सम्पद्यत उद्वृष्टे।

[सोमयागस्य फाल्गुनशुक्लपक्षे दीक्षानिषेधे हेतुप्रदर्शनम्]

(वृ) फाल्गुन्याः-दीक्षते—न तु फाल्गुन[4]मासे उद्वृष्टे, फाल्गुन्या इति पौर्णमास्या निर्देशात्। अतः फाल्गुन्याः परस्मिन् उद्वृष्टे, चैत्रे।

[पक्षभेदेन फाल्गुनचैत्रयोरङ्गभूतसोमानुष्ठाने उपपत्तिकथनम्]

केचित् फाल्गुन्याः-ग्यः—[5] फाल्गुनीपौर्णमास्या अर्वाग्य उद्वृष्टः।

फाल्गुनी-दाविति—अस्यार्थः-फाल्गुन्यां वैश्वदेवे कृते तदादि चतुर्षु चतुर्षु मासेषु पर्वान्तरानुष्ठाने साकमेधेभ्य ऊर्ध्वं मासचतुष्टये शुनासीरीयपक्षे द्वितीयसंवत्सरफाल्गुन्यां शुनासीरीयः। तदा द्वितीयफाल्गुन्या [6] उद्वृष्टे पौर्णमास्याः [7] सोमसंभवः। अतो द्वितीयफाल्गुन्यां समाप्ते चातुर्मास्ये तत ऊर्ध्वं परसंवत्स[8]रफाल्गुन उद्वृष्ट इत्युक्तम्। [9] पूर्वव्याख्याने फाल्गुन्यां समाप्ते शुनासीरीये परस्मिन्नुद्वृष्टे चैत्रे [10] सोम इत्युक्तम्।

---

1 अर्वाक् फाल्गुनी–घ. 2 तदाऽपीति–छ. 3 सर्वपर्वाङ्गत्वात्–ख. ग. 4 मासोद्वृष्टे–छ. 5 फाल्गुन्याः पौ–घ. छ. 6 पौर्णमास्या उद्वृष्टे सोम–छ. 7 सोमासंभवः–घ. 8 रे फाल्गुन्युद्वृष्ट–ग. रे फाल्गुन उद्वृष्ट –ख. ग. 9 स्वमते तु सूत्रव्याख्याने–ग. छ. 10 मास इ–छ.

प्रदर्शनं–प्तिः—चैत्र्यामारम्भपक्षे ।

तस्य–शुक्ल इति—[1] वैशाखमासानन्तरशुक्लपक्षे सोमाय दीक्षेतेत्यर्थः ।

पशुस्त्व–देशः—चातुर्मास्यैरिष्ट्वा यजेतेत्यानन्तर्यात् ।

अनन्तर–न्यायः—चोदकप्राप्तकालबाधाय ।

सर्व–त्वात्—शुनासीरीयाङ्गत्वे तदनन्तरमेव स्यात् । [2] सर्वार्थत्वे तु स्वकाल एव सर्वार्थमनुष्ठानमिति ।

यद्यपि–ष्ट—समाप्त्यनन्तरशुक्लपक्षे दैवात् मानुषाद्वा यदि सोमः पशुर्वा न संपद्यते तथापि ।

(सू) [3] तं ततो नानीजानमपरा फाल्गुनी पर्यवेयात् ॥

॥ ४ ॥ १७ ॥ २१८९ ॥

[पशुसोमयोः कालातिक्रमे प्रायश्चित्तं तत्र पक्षान्तरं च]

(भा) तं–चातुर्मास्ययाजिनम् । अनीजानमनिष्टवन्तं सोमेन पशुना वा । परि[4]समाप्ते[5] यागः । आगामिनी फाल्गुनी चैत्री वा [6] द्वितीया नातिक्रामेत् । अतिक्रमे कालस्य सर्वप्रायश्चित्तम् । केचि[7]त्पशुकालातिक्रमे दर्शपूर्ण[8]मासप्रकृतित्वात् पथिकृद्वैश्वा[9]नरौ कुर्वन्ति । [10] नैतत्, अप्रकृतत्वात् प्रथमेऽपि [11] प्रसङ्गात् ।

(वृ) अनीजान–क्रामेदिति—[12] सा द्वितीया । फाल्गुन्यां चैत्र्यां वा कर्तव्यः सोमः पशुर्वेति । अपरफाल्गुन्याः पूर्वमतिक्रमणप्रायश्चित्तं नास्ति ।

---

[1] वैशाखे समाप्त्यनन्तरं शुक्ल–छ. [2] सर्वाङ्गत्वे–छ. [3] तत उद्वृष्टादुत्तरा या फाल्गुनी सा तं सोमेनानिष्टवन्तं नातिगच्छेत् । ततः पूर्वस्मिन्नेव वसन्ते यजेतेत्यर्थः (रु). [4] समाप्ते वा या–क. ख. ग. [5] या आगामिनी–ग. घ. च. छ. [6] ना सा द्वितीया–घ. छ. [7] त्पशुसोमयोः काला–ख. [8] मासज्योतिष्टोमप्र–ख. [9] नरावग्निष्टुतं च कुर्वन्ति–ख. [10] नैतदित्यादिग्रन्थः ग. घ. व्यतिरिक्तकोशे न दृश्यते । [11] प्रसङ्गाभावात्–ग. [12] सर्वथा द्वितीयफाल्गुन्यां–घ. छ.

अतिक्रमे–श्चित्तम्—तत्कालातिक्रमे सर्वप्रायश्चित्तम् । यद्यपि दर्शविकारः पशुः तथापि पथिकृद्वैश्वानरयोः [1] पुनःपुनराग्रयणादिक[2]-र्मणामनुष्ठानात् स्वकालातिपत्तिविषय[3]त्वात् । यो दर्शपूर्णमासयाजी सन्निति लिङ्गात् । अस्य च [4] सकृदनुष्ठेयत्वात् सर्वप्रायश्चित्तमेव सामान्य-विहितमिति । [5] एवं सोमस्यापि नाग्निष्टुत् ।

केचित्–कुर्वन्ति—केचित्पशुसोमयोः कालातिक्रमे दर्शपूर्ण-मासज्योतिष्टोमप्रकृतित्वात् पथिकृद्वैश्वानरावग्निष्टुतं च कुर्वन्ति ।

[6] नैतत्–अप्रकृतत्वात् । प्रथमेऽपि प्रसङ्गात्—प्रथमदर्श-पूर्णमासयोः प्रथमज्योतिष्टोमे च पथिकृदादिप्रसङ्गात् । तस्मादावृत्ति[7]-मत आरब्धस्य कर्मणः [8] स्वकालातिक्रमे पथिकृदादेः प्राप्तिः ॥

(सू) [9] इति वै खलूत्सृजमानस्य ॥ ५ ॥ १८ ॥ ॥ २१९० ॥

(भा) उत्सृजमानः—यो न पुन[10]र्यजते अन्त्यचातुर्मास्यैस्तस्य सोमः पशुर्वा ।

(वृ) नित्यपक्षे, नित्यत्वं चोक्तं प्रथमसूत्रे ।

(सू) अथ पुनरालभमानस्य फाल्गुन्याश्चतुर्दश्यां शुना-सीरीयेणेष्ट्वा ॥ ६ ॥ १९ ॥ २१९१ ॥

एकविंशी खण्डिका.

---

[1] पुनः पुनः प्रयोज्याग्रय–घ. [2] कर्मणां स्वकालातिपत्तिविषयत्वम् । यो दर्श–घ. [3] त्वात् , सत्यं यो दर्श–ग. छ. [4] सकृत्कर्तव्यत्वात्–छ. [5] एवं सोमस्यापि नाग्निष्टुत्सामान्यविहितमिति–छ. [6] इयं वृत्तिः ग-घ-व्यतिरिक्तकोशे न दृश्यते । [7] मतः प्रारब्धस्य–छ. [8] स्वकालात्यये प–छ. [9] इत्ययं पशुसोमान्तः प्रयोगश्चातुर्मास्यानि सकृत्कृत्वोत्सृजतः । यस्तु पञ्चसांवत्सरिकादिकल्पेन तान्येव पुनरारभते तस्य विधिर्वक्ष्यत इत्यर्थः (रु). [10] र्यजते चातुर्मास्यैस्तस्य–ग. ख घ. छ.

**[पञ्चसांवत्सरिकादिकल्पेन पुनश्चातुर्मास्यारम्भविधिस्तत्रोपेश-पक्षश्च]**

**(भा)** पुनर्यो[1] यजते स पुनरालभमानः पञ्चसांवत्सरिकादिभिः सकृत्कृतैर्वा कृती भवति चातुर्मास्यैः। पञ्चसांवत्सरिकादिभिर्वा स करोति फलभूयस्त्वार्थम्। कृत्वा संकल्पमादौ। उपदेशस्तु पुनरालभमानस्येति [2]वचनात् द्विरभ्यासो लभ्यते। कालान्तरेऽपि च [3]पुनः कामेन चातुर्मास्यान्वारम्भणीया[4]दीनि। न समासः।

**(वृ)** **कृती**—कृतकृत्यः।

**पञ्चसां-संकल्पमादौ**—पञ्चसांवत्सरिकादीन् कृत्वा चातुर्मास्यारम्भकालेऽन्यतरपक्षसंकल्पः। [5]वैकल्पिकप्रयोगात्फलविशेषसिद्धेश्च।

**उपदेश-भ्यते**—अस्यार्थः—अस्य पुनरालभमानस्येति [6]कामनिरपेक्षवचनात् अभ्यासो नित्यतया लभ्यत इति।

अस्य च सूत्रस्य [7]पञ्चसांवत्सरिकाभिप्रायत्वे पुनः पुनरालभमानस्येति वक्तव्यम्।

**कालान्त-यानीति**—पुनरक्षय्यसुकृ[8]तार्थं पुनरालम्भो लभ्यत इति।

**न समासः**—अस्यार्थः—पुनः पुनः कामनासिद्ध्यर्थं साधनभूतचातुर्मास्यतन्त्रता न भवति। किं तु [9]भेदेनानुष्ठेयानीति। अथ वा न समास इति फलसमासा[10]भिसन्धिना एकमनुष्ठानमिति। एवमन्त उपदेशपक्षः।

---

1 यो न यजते-छ. 2 सोऽपि ल-च. 3 पुनः पुनः का-छ. 4 दीनीति समासः-च. 5 प्रयोगभेदात्फल-घ. 6 कामनिमित्तनिरपेक्षवचनाद्विरभ्यासो-छ. 7 रिकाद्यभिप्रायत्वे-छ. 8 तत्कामार्थं-घ. 9 देनैवानु-घ. 10 भिसन्ध्या एक-घ.

(सू.) [1]पञ्चदश्यां वैश्वदेवेन यजते ॥ १ ॥ २० ॥ ॥ २१९२ ॥

(भा) पुनरालभमानस्य चतुर्दश्यां चातुर्मास्यानां शुनासीरीयम् । पञ्चदश्यां वैश्वदेवम् । विरमण एव सोमः पशुर्वा ।

(वृ) चातुर्मास्यानां शुनासीरीयमिति निर्धारणे षष्ठी । प्रक्रान्त-चातु[2]र्मास्यशुनासीरीयं चतुर्दश्यां द्वितीयप्रयोगा[3]रम्भानुरोधार्थम् ।

विरमण एवेति—[4]चातुर्मास्यानां संकल्पितप्रयोगसमाप्तिः ॥

(सू.) [5]एतेनैव पशुकामो यजेत यस्मिन्नस्यर्तौ भूयिष्ठं गोषु पयः स्यात् ॥ २ ॥ २१ ॥ २१९३ ॥

[पुनरारम्भे वैश्वदेवस्य न वसन्तकालनियमः, न वाऽन्ते सोमः पशुर्वा]

(भा) [6]एतेनैव पशुकामः, यस्मिन् ऋतावस्य गोषु बहु पयो भवति प्रावृषि वसन्ते वा । [7]एकस्यापि पर्वणः प्रयोगे वैश्वा[8]नरपार्जन्या पञ्चहोता च । न तु सोमः पशुर्वा ।

(वृ) एतेनैव- न्ते वा—तयोरन्यतरस्मिन् वैश्वदेवेन पशुकामो यजेत ।

---

1 साकमेधेभ्यः परं चतुर्षु मासेषु फाल्गुन्यां चैत्र्यां वा यच्छुनासीरीयस्य प्रायणं तेन तस्याः पूर्वद्युश्चतुर्दश्यामिष्ट्वा पञ्चदश्यां पुनर्वैश्वदेवमारभते । ततः पञ्चसांवत्सरिकायन्ते सोमः पशुर्वा । यदा तु द्व्यहादौ शुनासीरीयं तदा सामर्थ्या-च्चतुर्दश्यां शुनासीरीयेणेत्येतन्न भवति (रु). 2 र्मास्ये शु–छ. 3 रम्भार्थ–छ. 4 यदा चातुर्मास्यप्रयोग–छ. 5 पशुकाम एतेनैव वैश्वदेवेन यस्मिन्नेव प्रावृडादौ प्रभूतक्षीरा यजमानस्य गावः सम्पद्यन्ते तस्मिन्नेव काले यजेत । न वसन्तनियम इत्यर्थः वरुणप्रघासादयस्तु न भवन्ति एवकारात् । न चादौ पञ्चहोतृवैश्वानरपार्जन्ये भवतः । न च सोमः पशुर्वाऽन्ते ; समुदायप्रयुक्तत्वात्तेषाम् (रु). 6 एतेनैव वैश्वदेवेन पशु–ख. घ. च. छ. 7 एकस्यापि प्रयोगे वैश्वानरपार्जन्यपञ्चहोतारः–क. ख. 8 नरः पार्जन्यः पञ्च–च. छ.

एकस्यापि पशुर्वा—एकस्याप्यारम्भार्था नियमा भवन्ति। न तु सोमः पशुर्वा समुदायाङ्गत्वात्। अत एव सोमयाजिनोऽग्नीषोमीयरहितप्रयोगे वैमृधश्चिन्त्यः।

(सू) [1] एतेनैव प्रजाकामः पशुकामो वा यजेत ॥३॥ ॥२२॥ २१९४॥

[प्रजाकामस्य तु वसन्त एव वैश्वदेवनियमः]

(भा) प्रजाका[2]मस्य स्वकाले वैश्वदेवमेव।

(वृ) प्रजा–मेव—यस्मिन् ऋताविति पशुकामस्यैव कालविधिः। प्रजाका[2]मस्य तु वसन्त एव वैश्वदेवम्।

(सू) [3] अथैकेषां वैश्वदेवेनेतरेषां पर्वणां स्थाने पशुकामो यजेत यावत्सहस्रं पशून् प्राप्नुयात्। अथेतरैः स्वकालैर्यजेत ॥ ४ ॥ २३ ॥ २१९५ ॥

[गोसहस्रकामनया चातुर्मास्यानुष्ठाने पर्वान्तरस्थाने यावत्सहस्रपूर्ति वैश्वदेवाभ्यासः पर्वान्तरकाले गोसहस्रपूर्तौ विधिः, उपदेशपक्षश्च]

(भा) (अथैकेषाम्) पशुकामस्य वैश्वदेवाभ्यासो वरुणप्रघासादीनां स्थाने यावत्सहस्रं पूर्णमिति। पूर्णे वरुणप्रघासादीनि स्वकालानि करोति। (अथेतरैस्स्वकालैरिति)

---

[1] अस्य तु वसन्त एव कालः (रु). [2] मपशुकामस्य–**ख. घ. च.**

[3] स्वकाले वैश्वदेवेनेष्ट्वा वरुणप्रघासादीनामपि स्थाने वैश्वदेवमेवाभ्यस्येत् आगोसहस्रप्राप्तेः। पूर्णे तु सहस्रे वरुणप्रघासादिभिः स्वे स्वे काले यजेत, न पुनर्वैश्वदेवमभ्यस्येत्। तत्र यद्यपि साकमेधानां शुनासीरीयस्य वा काले सहस्रप्राप्तिः तदाऽप्यावरुणप्रघासकालं तूष्णीमासित्वा ततः क्रमशः सर्वैरपि पर्वभिः स्वकालैरिष्ट्वाऽपवर्जयेत्। अकृते पूर्वस्मिन्पर्वण्युत्तरपर्वारम्भासिद्धेः, स्वकालापेक्षत्वाच्च पूर्वस्य। पञ्चहोत्रादयश्चास्मिन्कल्पे भवन्ति सर्वापवर्गित्वात् (रु).

